# ब्रह्मवैवर्त्तपुराणम्।

## प्रथमोभागः

...तत्र [ ब्रह्मखण्डम्, प्रकृतिखण्डम्, गणपतिखण्डम् ]

श्रीमहर्षिवेदव्यासविरचितम्।

[illegible]

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतम् प्रकाशितञ्च।


कलिकाताराजधान्याम्।

सरस्वतीयन्त्रे

मुद्रितम्।

ई' १८८८।

# ब्रह्मवैवर्त्तपुराणे ब्रह्मखण्डस्य सूचीपत्रम्।

---

# ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डस्य सूचीपत्रम् ।

---

## ब्रह्मवैवर्त्तपुराणे गणपतिखण्डस्य सूचीपत्रम् ।

| विषयः | अध्यायः | पत्राङ्कः । |
|---|---|---|

सूचीपत्रम् समाप्तम्।

# ब्रह्मवैवर्त्तपुराणम् ।

## ब्रह्मखण्डम् ।

### प्रथमोऽध्यायः ।

गणेशब्रह्मेशसुरेशशेषाः
सुराश्च सर्वे मनवो मुनीन्द्राः ।
सरस्वतीश्रीगिरिजादिकाश्च
नमन्ति देवाः प्रणमामि तं विभुम् ॥

स्थूलात् स्थूलतमां तनुं दधतं विराजं
विश्वानि लोमविवरेषु महान्तमाद्यम् ।
सृष्ट्योन्मुखः स्वकलयापि ससर्ज सूक्ष्मां
नित्यां समेत्य हृदि यस्तमजं भजामि ॥

ध्यायन्ते ध्याननिष्ठाः सुरनरमनवो योगिनो योगरूढ़ाः
सन्तः स्वप्नेऽपि सन्तं कतिकतिजनिभिर्यं न पश्यन्ति तप्ता ।
ध्याये स्वेच्छामयं तं त्रिगुणपरमहो निर्विकारं निरीहं
भक्तध्यानैकहेतोर्निरुपमरुचिरश्यामरूपं दधानम् ॥

वन्दे कृष्णं गुणातीतं परं ब्रह्माच्युतं यतः ।
आविर्बभूवुः प्रकृतिब्रह्मविष्णुशिवादयः ॥

अमृतपरमपूर्वं भारतीकामधेनुं
श्रुतिगणकृतवत्सो व्यासदेवो दुदोह ।
अतिरुचिरपुराणं ब्रह्मवैवर्त्तमेतत्
पिबत पिबत मुग्धा दुग्धमव्यमिष्टम् ॥

ओं नमो भगवते वासुदेवाय ।

ओं नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
ओं भारते नैमिषारण्ये ऋषयः शौनकादयः ।
नित्यां नैमित्तिकीं कृत्वा क्रियामूषुः कुशासने ॥ १ ॥
एतस्मिन्नन्तरे सौतिमागच्छन्तं यदृच्छया ।
प्रणतं सुविनीतं तं विलोक्य ददुरासनम् ॥ २ ॥
तं सम्पूज्यातिथिं भक्त्या शौनको मुनिपुङ्गवः ।
पप्रच्छ कुशलं शान्तं शान्तः पौराणिकं मुदा ॥ ३ ॥
वर्त्मायासविनिर्मुक्तं वसन्तं सुस्थिरासने ।
सस्मितं सर्वतत्त्वज्ञं पुराणानां पुराणवित् ॥ ४ ॥
परं कृष्णकथोपेतं पुराणं श्रुतिसुन्दरम् ।
मङ्गलं मङ्गलार्हञ्च सर्वदा मङ्गलालयम् ॥ ५ ॥
सर्वमङ्गलवीजञ्च सर्वदा मङ्गलप्रदम् ।
सर्वामङ्गलविघ्नञ्च सर्वसम्पत्करं वरम् ॥ ६ ॥
हरिभक्तिप्रदं शश्वत् सुखदं मोक्षदं भवेत् ।
तत्त्वज्ञानप्रदं दारपुत्त्रपौत्त्रविवर्द्धनम् ॥ ७ ॥
पप्रच्छ सुविनीतञ्च विनीतो मुनिसंसदि ।
यथाकाशे तारकाणां द्विजराजो विराजते ॥ ८ ॥

शौनक उवाच ।

प्रस्थानं भवतः कुत्र कुत आयासि ते शिवम् ।
किमस्माकं पुण्यदिनं वत्स ! त्वद्दर्शनेन च ॥ ९ ॥
वयमेव कलौ भीता विशिष्टज्ञानवर्जिताः ।
मुमुक्षवो भवे मग्नास्तद्धेतुस्त्वमिहागतः ॥ १० ॥
भवान् साधुर्महाभागः पुराणेषु पुराणवित् ।
सर्वेषु च पुराणेषु निष्णातोऽतिकृपानिधिः ॥ ११ ॥
श्रीकृष्णे निश्चला भक्तिर्यतो भवति शाश्वती ।
तत् कथ्यतां महाभाग ! पुराणं ज्ञानवर्द्धनम् ॥ १२ ॥
गरीयसी या मोक्षाच्च कर्म्ममूलनिकृन्तनी ।
संसारसन्निबद्धानां निगड़च्छेदकृन्तनी ॥ १३ ॥
भवदावाग्निदग्धानां पीयूषवृष्टिवर्षिणी ।
सुखदानन्ददा सौते ! शश्वच्चेतसि जीविनाम् ॥ १४ ॥
यत्रादौ सर्ववीजञ्च परब्रह्मनिरूपणम् ।
तस्य सृष्ट्युन्मुखस्यापि सृष्टेरुत्कीर्त्तनं परम् ॥ १५ ॥
साकारं वा निराकारं परमात्मस्वरूपकम् ।
किमाकारञ्च तद्ब्रह्म तद्ध्यानं किञ्च भावनम् ॥ १६ ॥
ध्यायन्ति वैष्णवाः किंवा किंवा सन्तश्च योगिनः ।
मतं प्रधानं केषां वा गूढ़ं वेदे निरूपितम् ॥ १७ ॥
प्रकृतेश्च य आकारो यत्र वत्स ! निरूपितः ।
गुणानां लक्षणं यत्र महदादेश्च निर्णयः ॥ १८ ॥
गोलोकवर्णनं यत्र यत्र वैकुण्ठवर्णनम् ।
वर्णनं शिवलोकस्य यत्रान्यत् स्वर्गवर्णनम् ॥ १९ ॥
अंशानाञ्च कलानाञ्च यत्र सौते ! निरूपणम् ।

के प्राकृताः का प्रकृतिः क आत्मा प्रकृतेः परः ॥२०॥
निगूढ़ं जन्म येषां वा देवानां देवयोषिताम् ।
समुत्पत्तिः समुद्राणां शैलानां सरितामपि ॥ २१ ॥
के वांशाः प्रकृतेश्चापि कलाः का वा कलाकलाः ।
तासाञ्च चरितं ध्यानं पूजास्तोत्रादिकं शुभम् ॥ २२ ॥
दुर्गासरस्वतीलक्ष्मीसावित्रीणाञ्च वर्णनम् ।
यत्रैव राधिकाख्यानमत्यपूर्वं सुधोपमम् ॥ २३ ॥
जीवकर्मविपाकश्च नरकाणाञ्च वर्णनम् ।
कर्मणां खण्डनं यत्र यत्र तेभ्यो विमोचणम् ॥ २४ ॥
येषाञ्च जीविनां यत् यत् स्थानं यत्र शुभाशुभम् ।
जीविनां कर्मणो यस्मात् यासु यासु च योनिषु ॥ २५ ॥
जीविनां कर्मणो यस्मात् यो यो रोगो भवेदिह ।
मोचणं कर्मणो यस्मात्तेषाञ्च तन्निरूपय ॥ २६ ॥
मनसा तुलसी काली गङ्गा पृथ्वी वसुन्धरा ।
आसां यत्र शुभाख्यानमन्यासामपि यत्र वै ॥ २७ ॥
शालग्रामशिलानाञ्च दानानाञ्च निरूपणम् ।
अपूर्वं यत्र वा सौते ! धर्माधर्मनिरूपणम् ॥ २८ ॥
गणेश्वरस्य चरितं यत्र तज्जन्म कर्म च ।
कवचस्तोत्रमन्त्राणां गूढ़ानां यत्र वर्णनम् ॥ २९ ॥
यदपूर्वमुपाख्यानमश्रुतं परमाद्भुतम् ।
कृत्वा मनसि तत् सर्वं साम्प्रतं वक्तुमर्हसि ॥ ३० ॥
यत्र जन्मभ्रमो विश्वे पुण्यक्षेत्रे च भारते ।
परिपूर्णतमस्यापि कृष्णस्य परमात्मनः ॥ ३१ ॥
जन्म कस्य गृहे लब्धं पुण्ये पुण्यवतो मुने ! ।

सुतं प्रसूता का धन्या मान्या पुण्यवती सती ॥ ३२ ॥
आविर्भूय च तद्गेहे क्व गतः केन हेतुना ।
गत्वा किं कृतवांस्तत्र कथं वा पुनरागतः ॥ ३३ ॥
भारावतरणं केन प्रार्थितो गोश्चकार सः ।
विधाय किं वा सेतुञ्च गोलकं गतवान् पुनः ॥ ३४ ॥
इतीदमन्यदाख्यानं पुराणं श्रुतिदुर्लभम् ।
दुर्विज्ञेयं मुनीनाञ्च मनोनिर्मलकारणम् ॥ ३५ ॥
स्वज्ञानाद् यन्मया पृष्टमपृष्टं वा शुभाशुभम् ।
सद्यो वैराग्यजननं तन्मे व्याख्यातुमर्हसि ॥ ३६ ॥
शिष्यपृष्टमपृष्टं वा व्याख्यानं कुरुते च यः ।
स सद्गुरुः सतां श्रेष्ठो योग्यायोग्ये च यः समः ॥३७॥

सौतिरुवाच ।

सर्वं कुशलमस्माकं त्वत्पादपद्मदर्शनात् ।
सिद्धक्षेत्रादागतोऽहं यामि नारायणाश्रमम् ॥ ३८ ॥
दृष्ट्वा विप्रसमूहञ्च नमस्कर्तुमिहागतः ।
द्रष्टुञ्च नैमिषारण्यं पुण्यदञ्चापि भारते ॥ ३९ ॥
देवं विप्रं गुरुं दृष्ट्वा न नमेद् यस्तु संभ्रमात् ।
स कालसूत्रं व्रजति यावच्चन्द्रदिवाकरौ ॥ ४० ॥
हरिर्ब्राह्मणरूपेण शश्वद् भ्रमति भारते ।
सुकृती प्रणमेत् पुण्यात् ब्राह्मणं हरिरूपिणम् ॥ ४१ ॥
भगवन् ! यत्त्वया पृष्टं ज्ञातं सर्वमभीप्सितम् ।
सारभूतं पुराणेषु ब्रह्मवैवर्त्तमुत्तमम् ॥ ४२ ॥
पुराणोपपुराणानां वेदानां भ्रमभञ्जनम् ।
हरिभक्तिप्रदं सर्वतत्त्वज्ञानविवर्द्धनम् ॥ ४३ ॥

कामिनां कामदञ्चेदं मुमुक्षूणाञ्च मोक्षदम् ।
भक्तिप्रदं वैष्णवानां कल्पवृक्षस्वरूपकम् ॥ ४४ ॥
ब्रह्मखण्डे सर्ववीजपरब्रह्मनिरूपणम् ।
ध्यायन्ते योगिनः सन्तो वैष्णवा यत् परात्परम् ॥४५॥
वैष्णवा योगिनः सन्तो न च भिन्नाश्च शौनक ! ।
स्वज्ञानपरिपाकेन भवन्ति जीविनः क्रमात् ॥ ४६ ॥
सन्तो भवन्ति सत्सङ्गाद् योगिसङ्गेन योगिनः ।
वैष्णवा भक्तसङ्गेन क्रमात् सद्योगिनः पराः ॥ ४७ ॥
यतोऽद्भवश्च देवानां देवीनां सर्वजीविनाम् ।
ततः प्रकृतिखण्डे च देवीनां चरितं शुभम् ॥ ४८ ॥
जीवकर्मविपाकश्च शालग्रामनिरूपणम् ।
तासाञ्च कवचस्तोत्रमन्त्रपूजानिरूपणम् ॥ ४९ ॥
प्रकृतेर्लक्षणं तत्र कलांशानां निरूपणम् ।
कीर्त्तिस्तत्कीर्त्तनं तासां प्रभावश्च निरूपितः ॥ ५० ॥
सुकृतीनां दुष्कृतीनां यद् यत् स्थानं शुभाशुभम् ।
वर्णनं नरकाणाञ्च रोगाणां मोक्षणं ततः ॥ ५१ ॥
ततो गणेशखण्डे च तज्जन्म परिकीर्त्तितम् ।
अतीवापूर्वचरितं श्रुतिवेदसुदुर्लभम् ॥ ५२ ॥
गणेशभृगुसंवादसर्वतत्त्वनिरूपणम् ।
निगूढ़कवचस्तोत्रमन्त्रतन्त्रनिरूपणम् ॥ ५३ ॥
श्रीकृष्णजन्मखण्डञ्च कीर्त्तितञ्च ततः परम् ।
भारते पुण्यक्षेत्रे च श्रीकृष्णजन्म कर्म च ॥ ५४ ॥
भुवो भारावतरणं क्रीड़ाकौतुकमङ्गलम् ।
सतां सेतुविधानञ्च जन्मखण्डे निरूपितम् ॥ ५५ ॥

इदं ते कथितं विप्र ! पुराणप्रवरं वरम् ।
चतुःखण्डपरिमितं सर्वधर्मनिरूपितम् ॥ ५६ ॥
सर्वेषामीप्सिततमं सर्वाशापूर्णकारणम् ।
ब्रह्मवैवर्त्तकं नाम सर्वाभीष्टफलप्रदम् ॥ ५७ ॥
सारभूतं पुराणेषु केवलं वेदसम्मितम् ।
विवृतं ब्रह्मकात्स्न्यञ्च कृष्णेन यत्र शौनक ! ॥ ५८ ॥
ब्रह्मवैवर्त्तकं तेन प्रवदन्ति पुराविदः ।
इदं पुराणसूत्रञ्च पुरा दत्तञ्च ब्रह्मणे ॥ ५९ ॥
निरामये च गोलोके कृष्णेन परमात्मना ।
महातीर्थे पुष्करे च दत्तं धर्माय ब्रह्मणा ॥ ६० ॥
धर्मेण दत्तं पुत्राय प्रीत्या नारायणाय च ।
नारायणर्षिर्भगवान् प्रददौ नारदाय च ॥ ६१ ॥
नारदो व्यासदेवाय प्रददौ जाह्नवीतटे ।
व्यासः पुराणसूत्रं तत् संव्यस्य विपुलं महत् ॥ ६२ ॥
मह्यं ददौ सिद्धक्षेत्रे पुण्यदे सुमनोहरम् ।
मयेदं कथितं ब्रह्मन् ! तत् समग्रं निशामय ॥ ६३ ॥
अष्टादशसहस्रन्तु व्यासेनेदं पुराणकम् ।
पुराणकात्स्न्यश्रवणे यत् फलं लभते नरः ।
तत् फलं लभते नूनमध्यायश्रवणेन च ॥ ६४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौतिशौनकसंवादे
ब्रह्मखण्डेऽनुक्रमणिका नाम प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्यायः ।

शौनक उवाच ।

किमपूर्वं श्रुतं सौते ! परमाद्भुतमीप्सितम् ।
सर्वं कथय संव्यस्य ब्रह्मखण्डमनुत्तमम् ॥ १ ॥

सौतिरुवाच ।

वन्दे गुरोः पादपद्मं व्यासस्यामिततेजसः ।
हरिं देवान् द्विजान् नत्वा धर्मान् वक्ष्ये सनातनान् ॥२॥
यत् श्रुतं व्यासवक्त्रेण ब्रह्मखण्डमनुत्तमम् ।
अज्ञानान्धतमोध्वंसि ज्ञानवर्त्मप्रदीपकम् ॥ ३ ॥
ज्योतिःसमूहं प्रलये पुरासीत् केवलं द्विज ! ।
सूर्य्यकोटिप्रभं नित्यमसंख्यविश्वकारणम् ॥ ४ ॥
स्वेच्छामयस्य च विभोस्तज्ज्योतिरुज्ज्वलं महत् ।
ज्योतिरभ्यन्तरे लोकत्रयमेव मनोहरम् ॥ ५ ॥
तेषामुपरि गोलोकं नित्यमीश्वरवद् द्विज ! ।
त्रिकोटियोजनायामविस्तीर्णं मण्डलाकृति ॥ ६ ॥
तेजःस्वरूपं सुमहद्रत्नभूमिमयं परम् ।
अदृश्यं योगिभिः स्वप्ने दृश्यं गम्यञ्च वैष्णवैः ॥ ७ ॥
योगेन धृतमीशेन चान्तरीक्षस्थितं वरम् ।
आधिव्याधिजरामृत्युशोकभीतिविवर्जितम् ॥ ८ ॥
सद्रत्नरचितासंख्यमन्दिरैः परिशोभितम् ।
लये कृष्णयुतं सृष्टौ पापगोपीभिरावृतम् ॥ ९ ॥
तदधो दक्षिणे सव्ये पञ्चाशत्कोटियोजनात् ।

वैकुण्ठं शिवलोकञ्च तत्समं सुमनोहरम् ॥ १० ॥
कोटियोजनविस्तीर्णं वैकुण्ठं मण्डलाकृति ।
लये शून्यञ्च सृष्टौ च लक्ष्मीनारायणान्वितम् ॥ ११ ॥
चतुर्भुजैः पार्षदैश्च जरामृत्यादिवर्जितम् ।
सव्ये च शिवलोकञ्च कोटियोजनविस्तृतम् ॥ १२ ॥
लये शून्यञ्च सृष्टौ च सपार्षदशिवान्वितम् ।
गोलोकाभ्यन्तरे ज्योतिरतीवसुमनोहरम् ॥ १३ ॥
परमाह्लादकं शश्वत् परमानन्दकारणम् ।
ध्यायन्ते योगिनः शाश्वद् योगेन ज्ञानचक्षुषा ॥ १४ ॥
तदेवानन्दजनकं निराकारं परात्परम् ।
तज्ज्योतिरन्तरे रूपमतीवसुमनोहरम् ॥ १५ ॥
नवीननीरदश्यामं रक्तपङ्कजलोचनम् ।
शारदीयपार्वणेन्दुशोभातिलोचनाननम् ॥ १६ ॥
कोटिकन्दर्पलावण्यं लीलाधाम मनोरमम् ।
द्विभुजं मुरलीहस्तं सस्मितं पीतवाससम् ॥ १७ ॥
सद्रत्नभूषणौघेन भूषितं भक्तवत्सलम् ।
चन्दनोक्षितसर्वाङ्गं कस्तूरीकुङ्कुमान्वितम् ॥ १८ ॥
श्रीवत्सवक्षःसंभ्राजत्कौस्तुभेन विराजितम् ।
सद्रत्नसाररचितकिरीटमुकुटोज्ज्वलम् ॥ १९ ॥
रत्नसिंहासनस्थञ्च वनमालाविभूषितम् ।
तमेव परमं ब्रह्म भगवन्तं सनातनम् ॥ २० ॥
स्वेच्छामयं सर्वबीजं सर्वाधारं परात्परम् ।
किशोरवयसं शश्वद्गोपवेशविधायकम् ॥ २१ ॥
कोटिपूर्णेन्दुशोभाढ्यं भक्तानुग्रहकातरम् ।

निरीहं निर्विकारञ्च परिपूर्णतमं विभुम् ॥ २२ ॥
रासमण्डलमध्यस्थं शान्तं रासेश्वरं वरम् ।
माङ्गल्यं मङ्गलार्हञ्च मङ्गलं मङ्गलप्रदम् ॥ २३ ॥
परमानन्दबीजञ्च सत्यमक्षरमव्ययम् ।
सर्वसिद्धीश्वरं सर्वसिद्धिरूपञ्च सिद्धिदम् ॥ २४ ॥
प्रकृतेः परमीशानं निर्गुणं नित्यविग्रहम् ।
आद्यं पुरुषमव्यक्तं पुरुहूतं पुरुष्टुतम् ॥ २५ ॥
सत्यं स्वतन्त्रमेकञ्च परमात्मस्वरूपकम् ।
ध्यायन्ति वैष्णवाः शान्ताः शान्तं तत् परमायणम् ॥२६॥
एवं रूपं परं बिभ्रद्भगवानेक एव सः ।
दिग्भिश्च नभसा सार्द्धं शून्यं विश्वं ददर्श ह ॥ २७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौतिशौनकसंवादे
ब्रह्मखण्डे परब्रह्मनिरूपणं नाम
द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

सौतिरुवाच ।

दृष्ट्वा शून्यमयं विश्वं गोलोकञ्च भयङ्करम् ।
निर्जन्तु निर्जलं घोरं निर्वातं तमसावृतम् ॥ १ ॥
वृक्षशैलसमुद्रादिविहीनं विकृताकृतम् ।
निर्मूर्त्तिकञ्च निर्धातु निःशस्यं निस्तृणं द्विज ! ॥ २ ॥

आलोच्य मनसा सर्वमेक एवासहायवान् ।
स्वेच्छया स्रष्टुमारेभे सृष्टिं स्वेच्छामयः प्रभुः ॥ ३ ॥
आविर्बभूवुः सर्वादौ पुंसो दक्षिणपार्श्वतः ।
भवकारणरूपाश्च मूर्त्तिमन्तस्त्रयो गुणाः ॥ ४ ॥
ततो महानहङ्कारः पञ्चतन्मात्र एव च ।
रूपरसगन्धस्पर्शशब्दाश्चैवेतिसंज्ञकाः ॥ ५ ॥
आविर्बभूव तत्पश्चात् स्वयं नारायणः प्रभुः ।
श्यामो युवा पीतवासा वनमाली चतुर्भुजः ॥ ६
शङ्खचक्रगदापद्मधरः स्मेरमुखाम्बुजः ।
रत्नभूषणभूषाढ्यः शार्ङ्गी कौस्तुभभूषणः ॥ ७ ॥
श्रीवत्सवक्षाः श्रीवासः श्रीनिधिः श्रीविभावनः ।
शारदेन्दुप्रभामुष्टमुखेन्दुसुमनोहरः ॥ ८ ॥
कामदेवप्रभामुष्टरूपलावण्यसुन्दरः ।
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः ॥ ९ ॥

नारायण उवाच ।

वरं वरेण्यं वरदं वरार्हं वरकारणम् ।
कारणं कारणानाञ्च कर्म तत्कर्मकारणम् ॥ १० ॥
तपस्तत्फलदं शश्वत्तपस्विनाञ्च तापसम् ।
वन्दे नवघनश्यामं स्वात्मारामं मनोहरम् ॥ ११ ॥
निष्कामं कामरूपञ्च कामघ्नं कामकारणम् ।
सर्वं सर्वेश्वरं सर्वबीजरूपमनुत्तमम् ॥ १२ ॥
वेदरूपं वेदबीजं वेदोक्तफलदं फलम् ।
वेदज्ञं तद्विधानञ्च सर्ववेदविदां वरम् ॥ १३ ॥
इत्युक्त्वा भक्तियुक्तश्च स उवास तदाज्ञया ।

रत्नसिंहासने रम्ये पुरतः परमात्मनः ॥ १४ ॥
नारायणकृतं स्तोत्रं यः शृणोति समाहितः ।
त्रिसन्ध्यञ्च पठेन्नित्यं पापं तस्य न विद्यते ॥ १५ ॥
पुत्त्रार्थी लभते पुत्त्रं भार्य्यार्थी लभते प्रियाम् ।
भ्रष्टराज्यो लभेद्राज्यं धनं भ्रष्टधनो लभेत् ॥ १६ ॥
कारागारे विपद्ग्रस्तः स्तोत्रेण मुच्यते ध्रुवम् ।
रोगात् प्रमुच्यते रोगी वर्षं श्रुत्वा तु संयतः ॥ १७ ॥
इति ब्रह्मवैवर्त्ते नारायणकृतं श्रीकृष्णस्तोत्रम् ।

सौतिरुवाच ।

आविर्बभूव तत्पश्चादात्मनो वामपार्श्वतः ।
शुद्धस्फटिकसङ्काशः पञ्चवक्त्रो दिगम्बरः ॥ १८ ॥
तप्तकाञ्चनवर्णाभजटाभारधरो वरः ।
ईषद्धास्यप्रसन्नास्यस्त्रिनेत्रश्चन्द्रशेखरः ॥ १९ ॥
त्रिशूलपट्टिशधरो जपमालाकरः परः ।
सर्वसिद्धेश्वरः सिद्धो योगिनाञ्च गुरोर्गुरुः ॥ २० ॥
मृत्योर्मृत्युरीश्वरश्च मृत्युर्मृत्युञ्जयः शिवः ।
ज्ञानानन्दो महाज्ञानी महाज्ञानप्रदः परः ॥ २१ ॥
पूर्णचन्द्रप्रभायुष्टसुखदृश्यो मनोहरः ।
वैष्णवानाञ्च प्रवरः प्रज्वलन् ब्रह्मतेजसा ॥ २२ ॥
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः ।
पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रोऽतिगद्गदः ॥ २३ ॥

महादेव उवाच ।

जयस्वरूपं जयदं जयेशं जयकारणम् ।
प्रवरं जयदानाञ्च वन्दे तमपराजितम् ॥ २४ ॥

विज्ञं विश्वेश्वरेशञ्च विश्वेशं विश्वकारणम् ।
विश्वाधारञ्च विश्वस्तं विश्वकारणकारणम् ॥ २५ ॥
विश्वरक्षाकारणञ्च विश्वघ्नं विश्वजं परम् ।
फलवीजं फलाधारं फलञ्च तत्फलप्रदम् ॥ २६ ॥
तेजःस्वरूपं तेजोदं सर्वतेजस्विनां वरम् ।
इत्येवमुक्ता तं नत्वा रत्नसिंहासने वरे ।
नारायणञ्च संभाष्य स उवास तदाज्ञया ॥ २७ ॥
इति शम्भुकृतं स्तोत्रं यो जनः संयतः पठेत् ।
सर्वसिद्धिर्भवेत्तस्य विजयश्च पदे पदे ॥ २८ ॥
सन्ततं वर्द्धते मित्रं धनमैश्वर्य्यमेव च ।
शत्रुसैन्यं क्षयं याति दुःखानि दुरितानि च ॥ २९ ॥

इति ब्रह्मवैवर्त्ते शम्भुकृतं श्रीकृष्णस्तोत्रम् ।

सौतिरुवाच ।

आविर्बभूव तत्पश्चात् कृष्णस्य नाभिपङ्कजात् ।
महातपस्वी वृद्धश्च कमण्डलुकरो वरः ॥ ३० ॥
शुक्लवासाः शुक्लदन्तः शुक्लकेशश्चतुर्मुखः ।
योगीशः शिल्पिनामीशः सर्वेषां जनको गुरुः ॥ ३१ ॥
तपसां फलदाता च प्रदाता सर्वसम्पदाम् ।
स्रष्टा विधाता कर्त्ता च हर्त्ता च सर्वकर्मणाम् ॥ ३२ ॥
धाता चतुर्णां वेदानां ज्ञाता वेदप्रसूपतिः ।
शान्तः सरस्वतीकान्तः सुशीलश्च कृपानिधिः ॥ ३३ ॥
श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः ।
पुलकाञ्चितसर्वाङ्गो भक्तिनम्रात्मकन्धरः ॥ ३४ ॥

ब्रह्मोवाच ।

कृष्णं वन्दे गुणातीतं गोविन्दमेकमक्षरम् ।
अव्यक्तमव्ययं व्यक्तं गोपवेशविधायिनम् ॥ ३५ ॥
किशोरवयसं शान्तं गोपीकान्तं मनोहरम् ।
नवीननीरदश्यामं कोटिकन्दर्पसुन्दरम् ॥ ३६ ॥
वृन्दावनवनाभ्यर्णे रासमण्डलसंस्थितम् ।
रासेश्वरं रासवासं रासोल्लाससमुत्सुकम् ॥ ३७ ॥
इत्येवमुक्त्वा तं नत्वा रत्नसिंहासने वरे ।
नारायणेशौ संभाष्य स उवास तदाज्ञया ॥ ३८ ॥
इति ब्रह्मकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
पापानि तस्य नश्यन्ति दुःस्वप्नः सुस्वप्नो भवेत् ॥ ३९ ॥
भक्तिर्भवति गोविन्दे पुत्रपौत्रविवर्द्धनी ।
अकीर्त्तिः क्षयमाप्नोति सत्कीर्त्तिर्वर्द्धते चिरम् ॥ ४० ॥

इति ब्रह्मवैवर्त्ते ब्रह्मकृतं श्रीकृष्णस्तोत्रम् ।

सौतिरुवाच ।

आविर्बभूव तत्पश्चात् वक्षसः परमात्मनः ।
सस्मितः पुरुषः कश्चित् शुक्लवर्णो जटाधरः ॥ ४१ ॥
सर्वसाक्षी च सर्वज्ञः सर्वेषां सर्वकारणम् ।
समः सर्वत्र सदयो हिंसाकोपविवर्ज्जितः ॥ ४२ ॥
धर्मज्ञानयुतो धर्मो धर्मिष्ठो धर्मदो भवेत् ।
स एव धर्मिणां धर्मः परमात्मकलोद्भवः ॥ ४३ ॥
श्रीकृष्णपुरतः स्थित्वा प्रणम्य दण्डवद् भुवि ।
तुष्टाव परमात्मानं सर्वेशं सर्वकामदम् ॥ ४४ ॥

श्रीधर्म उवाच ।

कृष्णं विष्णुं वासुदेवं परमात्मानमीश्वरम् ।
गोविन्दं परमानन्दमेकमक्षरमच्युतम् ॥ ४५ ॥
गोपेश्वरञ्च गोपीशं गोपं गोरक्षकं विभुम् ।
गवामीशञ्च गोष्ठस्थं गोवत्सपुच्छधारिणम् ॥ ४६ ॥
गोगोपगोपीमध्यस्थं प्रधानं पुरुषोत्तमम् ।
वन्दे नवघनश्यामं रासवासं मनोहरम् ॥ ४७ ॥
इत्युच्चार्य्य समुत्तिष्ठन् रत्नसिंहासने वरे ।
ब्रह्मविष्णुमहेशांस्तान् सम्भाष्य स उवास ह ॥ ४८ ॥
चतुर्विंशति नामानि धर्मवक्त्रोद्गतानि च ।
यः पठेत् प्रातरुत्थाय स सुखी सर्वतो जयी ॥ ४९ ॥
मृत्युकाले हरेर्नाम तस्य साध्यं भवेद् ध्रुवम् ।
स यात्यन्ते हरेः स्थानं हरिदास्यं भवेत् ध्रुवम् ॥ ५० ॥
नित्यं धर्मस्तं घटते नाधर्मे तद्रतिर्भवेत् ।
चतुर्वर्गफलं तस्य शश्वत् करगतं भवेत् ॥ ५१ ॥
तं दृष्ट्वा सर्वपापानि पलायन्ते भयेन च ।
भयानि चैव दुःखानि वैनतेयमिवोरगाः ॥ ५२ ॥

इति ब्रह्मवैवर्त्ते धर्मकृतं श्रीकृष्णस्तोत्रम् ।

सौतिरुवाच ।

आविर्बभूव कन्यैका धर्मस्य वामपार्श्वतः ।
मूर्त्तिर्मूर्त्तिमती साक्षात् द्वितीयकमलालया ॥ ५३ ॥
आविर्बभूव तत्पश्चात् मुखतः परमात्मनः ।
एका देवी शुक्लवर्णा वीणापुस्तकधारिणी ॥ ५४ ॥

कोटिपूर्णेन्दुशोभाढ्या शरत्पङ्कजलोचना।
वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता ॥ ५५ ॥
सस्मिता सुदती श्यामा सुन्दरीणाञ्च सुन्दरी।
श्रेष्ठा श्रुतीनां शास्त्राणां विदुषां जननी परा ॥ ५६ ॥
वागधिष्ठातृदेवी सा कवीनामिष्टदेवता।
शुद्धसत्वस्वरूपा च शान्तरूपा सरस्वती ॥ ५७ ॥
गोविन्दपुरतः स्थित्वा जगौ प्रथमतः सुखम्।
तन्नामगुणकीर्त्तिञ्च वीणया सा ननर्त्त च ॥ ५८ ॥
कृतानि यानि कर्म्माणि जन्मे जन्मे युगे युगे।
तानि सर्व्वाणि हरिणा तुष्टाव संपुटाञ्जलिः ॥ ५९ ॥

सरस्वत्युवाच।

रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम्।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ ६० ॥
रासेश्वरं रासकरं वरं रासेश्वरीश्वरम्।
रासाधिष्ठातृदेवञ्च वन्दे रासविनोदिनम् ॥ ६१ ॥
रासायासपरिश्रान्तं रासरासविहारिणम्।
रासोत्सुकानां गोपीनां कान्तं शान्तं मनोहरम् ॥ ६२ ॥
प्रणम्य तं तानीत्युक्त्वा प्रहृष्टवदना सती।
उवास सा सकामा च रत्नसिंहासने वरे ॥ ६३ ॥
इति वाणीकृतं स्तोत्रं प्रातरुत्थाय यः पठेत्।
बुद्धिमान् धनवान् सोऽपि विद्यावान् पुत्त्रवान् सदा ॥ ६४

इति ब्रह्मवैवर्त्ते सरस्वतीकृतं श्रीकृष्णस्तोत्रम्।

सौतिरुवाच।

आविर्बभूव मनसः कृष्णस्य परमात्मनः।

एका देवी गौरवर्णा रत्नालङ्कारभूषिता ॥ ६५ ॥
पीतवस्त्रपरीधाना सस्मिता नवयौवना ।
सर्वैश्वर्य्याधिदेवी सा सर्वसम्पत्फलप्रदा ।
स्वर्गे च स्वर्गलक्ष्मीश्च राजलक्ष्मीश्च राजसु ॥ ६६ ॥
सा हरेः पुरतः स्थित्वा परमात्मानमीश्वरम् ।
तुष्टाव प्रणता साध्वी भक्तिनम्रात्मकन्धरा ॥ ६७ ॥

महालक्ष्मीरुवाच ।

सत्यस्वरूपं सत्येशं सत्यवीजं सनातनम् ।
सत्याधारञ्च सत्यज्ञं सत्यमूलं नमाम्यहम् ॥ ६८ ॥
इत्युक्त्वा श्रीहरिं नत्वा सा चोवास सुखासने ।
तप्तकाञ्चनवर्णाभा भासयन्ती दिशो दश ॥ ६९ ॥
आविर्बभूव तत्पश्चात् बुद्धेश्च परमात्मनः ।
सर्वाधिष्ठातृदेवी सा मूलप्रकृतिरीश्वरी ॥ ७० ॥
तप्तकाञ्चनवर्णाभा सूर्य्यकोटिसमप्रभा ।
ईषद्धास्यप्रसन्नास्या शरत्पङ्कजलोचना ॥ ७१ ॥
रक्तवस्त्रपरीधाना रत्नाभरणभूषिता ।
निद्रातृष्णाक्षुत्पिपासादयाश्रद्धाक्षमादिकाः ॥ ७२ ॥
तासाञ्च सर्वशक्तीनामीशाधिष्ठातृदेवता ।
भयङ्करी शतभुजा दुर्गा दुर्गतिनाशिनी ॥ ७३ ॥
आत्मनः शक्तिरूपा सा जगतां जननी परा ।
त्रिशूलशक्तिसार्ङ्गञ्च धनुःखड्गशराणि च ॥ ७४ ॥
शङ्खचक्रगदापद्ममक्षमालां कमण्डलुम् ।
वज्रमङ्कुशपाशञ्च भुशुण्डीदण्डतोमरम् ॥ ७५ ॥
नारायणास्त्रं ब्रह्मास्त्रं रौद्रं पाशुपतं तथा ।

पार्ज्जन्यं वारुणं वाङ्गं गान्धर्वं बिभ्रती सती।
कृष्णस्य पुरतः स्थित्वा तुष्टाव तं मुदान्विता॥ ७६॥

प्रकृतिरुवाच।

अहं प्रकृतिरीशानी सर्वेशा सर्वरूपिणी।
सर्वशक्तिस्वरूपा च मया च शक्तिमज्जगत्॥ ७७॥
त्वया सृष्टा न स्वतन्त्रा त्वमेव जगतां पतिः।
गतिश्च पाता स्रष्टा च संहर्त्ता च पुनर्विधिः॥ ७८॥
परमानन्दरूपं त्वां वन्दे चानन्दपूर्वकम्।
चक्षुर्निमेषकाले च ब्रह्मणः पतनं भवेत्॥ ७९॥
तस्य प्रभावमतुलं वर्णितुं कः क्षमो विभो!।
भ्रूभङ्गलीलामात्रेण विष्णुकोटिं सृजेत्तु यः॥ ८०॥
चराचरांश्च विश्वेषु देवान् ब्रह्मपुरोगमान्।
मद्विधाः कति वा देवीः स्रष्टुं शक्तश्च लीलया॥ ८१॥
परिपूर्णतमं स्वीड्यं वन्दे चानन्दपूर्वकम्।
महान् विराट् यत्कलांशो विश्वासंख्याश्रयो विभो!।
वन्दे चानन्दपूर्वं तं परमात्मानमीश्वरम्॥ ८२॥
यञ्च स्तोतुमशक्ताश्च ब्रह्मविष्णुशिवादयः।
वेदा अहञ्च वाणी च वन्दे तं प्रकृतेः परम्॥ ८३॥
वेदाश्च विदुषां श्रेष्ठाः स्तोतुं शक्ता न लक्षतः।
निर्लक्ष्यं कः क्षमः स्तोतुं तं निरीहं नमाम्यहम्॥ ८४॥
इत्येवमुक्त्वा सा दुर्गा रत्नसिंहासने वरे।
उवास नत्वा श्रीकृष्णं तुष्टुवुस्तां सुरेश्वराः॥ ८५॥
इति दुर्गाकृतं स्तोत्रं कृष्णस्य परमात्मनः।
यः पठेदर्च्चनाकाले स जयी सर्वतः सुखी॥ ८६॥

दुर्गा तस्य गृहं त्यक्त्वा नैव याति कदाचन ।
भवाब्धौ यशसा भाति यात्यन्ते श्रीहरेः पुरम् ॥ ८१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे सृष्टिनिरूपणे दुर्गास्तोत्रं नाम तृतीयोऽध्यायः ।

——

## चतुर्थोऽध्यायः ।

——०——

सौतिरुवाच ।

आविर्बभूव तत्पश्चात् कृष्णस्य रसनाग्रतः ।
शुद्धस्फटिकसङ्काशा देवी चैका मनोहरा ॥ १ ॥
शुक्लवस्त्रपरीधाना सर्वालङ्कारभूषिता ।
बिभ्रती जपमालाञ्च सा सावित्री प्रकीर्त्तिता ॥ २ ॥
सा तुष्टाव पुरः स्थित्वा परं ब्रह्म सनातनम् ।
पुटाञ्जलिपरा साध्वी भक्तिनम्रात्मकन्धरा ॥ ३ ॥

सावित्र्युवाच ।

नमामि सर्व्वबीजं त्वां ब्रह्मज्योतिः सनातनम् ।
परात्परतरं श्यामं निर्व्विकारं निरञ्जनम् ॥ ४ ॥
इत्युक्त्वा सस्मिता देवी रत्नसिंहासने वरे ।
उवास श्रीहरिं नत्वा पुनरेव श्रुतिप्रसूः ॥ ५ ॥
आविर्बभूव तत्पश्चात् कृष्णस्य परमात्मनः ।
मानसाच्च पुमानेकस्तप्तकाञ्चनसन्निभः ॥ ६ ॥
मनो मथ्नाति सर्व्वेषां पञ्चबाणेन कामिनाम् ।
तन्नाम मन्मथं तेन प्रवदन्ति मनीषिणः ॥ ७ ॥

तस्य पुंसो वामपार्श्वात् कामस्य कामिनी वरा ।
बभूवातीवललिता सर्वेषां मोहकारिणी ॥ ८ ॥
रतिर्बभूव सर्वेषां तां दृष्ट्वा सस्मितां सतीम् ।
रतीति तेन तन्नाम प्रवदन्ति मनीषिणः ॥ ९ ॥
हरिं स्तुत्वा तया सार्द्धं स उवास हरेः पुरः ।
रत्नसिंहासने रम्ये पञ्चबाणो धनुर्द्धरः ॥ १० ॥
मारणं स्तम्भनञ्चैव जृम्भनं शोषणन्तथा ।
उन्मादनं पञ्चबाणान् पञ्चबाणो बिभर्त्ति सः ॥ ११ ॥
बाणांश्चिक्षेप सर्वांश्च कामो बाणपरीक्षया ।
सद्यः सर्वे सकामाश्च बभूवुरीश्वरेच्छया ॥ १२ ॥
रतिं दृष्ट्वा ब्रह्मणश्च रेतःपातो बभूव ह ।
तत्र तस्थौ महायोगी वस्त्रेणाच्छाद्य लज्जया ॥ १३ ॥
वस्त्रं दग्ध्वा समुत्तस्थौ ज्वलदग्निः सुरेश्वरः ।
कोटितालप्रमाणश्च शिखरश्च समुज्ज्वलन् ॥ १४ ॥
कृष्णस्तद्वर्द्धनं दृष्ट्वा ससर्जापः स्वलीलया ।
निःश्वासवायुना सार्द्धं मुखविन्दुं समुद्गिरन् ॥ १५ ॥
विश्वीर्णं प्लावयामास मुखविन्दुजलं द्विज ! ।
तस्य किञ्चिज्जलकणं वह्निं शान्तं चकार ह ॥ १६ ॥
ततः प्रभृति तेनाग्निस्तोयान्निर्वाणतां व्रजेत् ।
आविर्भूतः पुमानेकस्ततस्तदधिदेवता ॥ १७ ॥
उत्तस्थौ तज्जलादेकः पुमान् स वरुणः स्मृतः ।
जलाधिष्ठातृदेवोऽसौ सर्वेषां यादसाम्पतिः ॥ १८ ॥
आविर्बभूव कन्यैका तद्वह्नेर्वामपार्श्वतः ।
सा स्वाहा वह्निपत्नीं तां प्रवदन्ति मनीषिणः ॥ १९ ॥

जलेशस्य वामपार्श्वात् कन्या चैका बभूव सा।
वरुणानीति विख्याता वरुणस्य प्रिया सती॥ २० ॥
बभूव पवनः श्रीमान् विभोर्निःश्वासवायुना।
स च प्राणश्च सर्वेषां निःश्वासस्तत्कलोद्भवः॥ २१ ॥
तस्य वायोर्वामपार्श्वात् कन्या चैका बभूव ह।
वायोः पत्नी सा च देवी वायवी परिकीर्त्तिता॥ २२ ॥
कृष्णस्य कामबाणेन रेतःपातो बभूव ह।
जले तद्रेचनं चक्रे लज्जया सुरसंसदि॥ २३ ॥
सहस्रवत्सरान्ते तद्डिम्बरूपं बभूव ह।
ततो महान् विराट् यज्ञे विश्वौघाधार एव सः॥ २४ ॥
यस्यैकलोमविवरे विश्वैकस्य व्यवस्थितिः।
स्थूलात् स्थूलतमः सोऽपि महान्नान्यस्ततः परः॥ २५ ॥
स एव षोड़शांशोऽपि कृष्णस्य परमात्मनः।
महाविष्णुः स विज्ञेयः सर्वाधारः सनातनः॥ २६ ॥
महार्णवे शयानः स पद्मपत्रं यथा जले।
बभूवतुस्तौ द्वौ दैत्यौ तस्य कर्णमलोद्भवौ॥ २७ ॥
तौ जलाच्च समुत्थाय ब्रह्माणं हन्तुमुद्यतौ।
नारायणश्च भगवान् जघने तौ जघान ह॥ २८ ॥
बभूव मेदिनी कृत्स्ना कार्त्स्न्येन मेदसा तयोः।
तत्रैव सन्ति विश्वानि सा च देवी वसुन्धरा॥ २९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौतिशौनकसंवादे सृष्टिनिरूपणे चतुर्थोऽध्यायः।

——

# पञ्चमोऽध्यायः ।

शौनक उवाच ।

गोगोपगोप्यो गोलोके किं नित्याः किं नु कल्पिताः ।
मम सन्देहभेदार्थं तन्मे व्याख्यातुमर्हसि ॥ १ ॥

सौतिरुवाच ।

सर्वादिसृष्टौ ताः क्लृप्ताः प्रलये प्रलये स्थिताः ।
सर्वादिसृष्टिकथनं यन्मया कथितं द्विज ! ॥ २ ॥
सर्वादिसृष्टौ क्लृप्तौ च नारायणमहेश्वरौ ।
प्रलये प्रलये व्यक्तौ स्थितौ तौ प्रकृतिश्च सा ॥ ३ ॥
सर्वादौ ब्रह्मकल्पस्य चरितं कथितं द्विज ! ।
वाराहपाद्मकल्पौ द्वौ कथयिष्यामि श्रोष्यसि ॥ ४ ॥
ब्राह्मवाराहपाद्माश्च कल्पाश्च त्रिविधा मुने ! ।
यथा युगानि चत्वारि क्रमेण कथितानि च ॥ ५ ॥
सत्यत्रेताद्वापरञ्च कलिश्चेति चतुर्युगम् ।
त्रिशतैश्च षष्ट्यधिकैर्युगैर्दिव्यं युगं स्मृतम् ॥ ६ ॥
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ।
चतुर्दशसु मनुषु गतेषु ब्रह्मणो दिनम् ॥ ७ ॥
त्रिशतैश्च षष्ट्यधिकैर्दिनैर्वर्षञ्च ब्रह्मणः ।
अष्टोत्तरं वर्षशतं विधेरायुर्निरूपितम् ॥ ८ ॥
एतन्निमेषकालस्तु कृष्णस्य परमात्मनः ।
ब्रह्मणश्चायुषा कल्पः कालविद्भिर्निरूपितः ॥ ९ ॥

क्षुद्रकल्पा बहुतरास्ते संवर्त्तादयः स्मृताः ।
सप्तकल्पान्तजीवी च मार्कण्डेयश्च तन्मतः ॥ १० ॥
ब्रह्मणश्च दिनेनैव स कल्पः परिकीर्त्तितः ।
विधेश्च सप्तदिवसे मुनेरायुर्निरूपितम् ॥ ११ ॥
ब्राह्मवाराहपाद्माश्च त्रयः कल्पा निरूपिताः ।
कल्पत्रये यथा सृष्टिः कथयामि निशामय ॥ १२ ॥
ब्राह्मे च मेदिनीं सृष्ट्वा स्रष्टा सृष्टिं चकार सः ।
मधुकैटभयोश्चैव मेदसा चाज्ञया प्रभोः ॥ १३ ॥
वाराहे तां समुद्धृत्य लुप्तां मग्नां रसातलात् ।
विष्णोर्वराहरूपस्य द्वारा चातिप्रयत्नतः ॥ १४ ॥
पाद्मे विष्णोर्नाभिपद्मे स्रष्टा सृष्टिं विनिर्ममे ।
त्रिलोकीं ब्रह्मलोकान्तां नित्यलोकत्रयं विना ॥ १५ ॥
एतत्तु कालसंख्यानमुक्तं सृष्टिनिरूपणे ।
किञ्चिन्निरूपणं सृष्टेः किं भूयः श्रोतुमिच्छसि ॥ १६ ॥

शौनक उवाच ।

अतःपरन्तु गोलोके गोलोकेशो महान् विभुः ।
एतान् सृष्ट्वा किञ्चकार तन्मे व्याख्यातुमर्हसि ॥ १७ ॥

सौतिरुवाच ।

एतान् सृष्ट्वा जगामासौ सुरम्यं रासमण्डलम् ।
एतैः समेतो भगवानतीवकमनीयकम् ॥ १८ ॥
रम्याणां कल्पवृक्षाणां मध्येऽतीवमनोहरम् ।
सुविस्तीर्णञ्च सुसमं सुस्निग्धं मण्डलाकृतम् ॥ १९ ॥
चन्दनागुरुकस्तूरीकुङ्कुमैश्च सुसंस्कृतम् ।
दधिलाजशुक्लधान्यदूर्वापर्णपरिप्लुतम् ॥ २० ॥

पट्टसूत्रग्रन्थियुक्तनवचन्दनपल्लवैः ।
संयुक्तरम्भास्तम्भानां समूहैः परिवेष्टितम् ॥ २१ ॥
सद्रत्नसारनिर्माणमण्डपानां त्रिकोटिभिः ।
रत्नप्रदीपज्वलितैः पुष्पधूपाधिवासितैः ॥ २२ ॥
शृङ्गारार्हभोगवस्तुसमूहपरिवेष्टितैः ।
अतीवललिताकल्पतल्पयुक्तैः सुशोभितम् ॥ २३ ॥
तत्र गत्वा च तैः सार्द्धं समुवास जगत्पतिः ।
दृष्ट्वा रासं विस्मितास्ते बभूवुर्मुनिसत्तम ! ॥ २४ ॥
आविर्बभूव कन्यैका कृष्णस्य वामपार्श्वतः ।
धावित्वा पुष्पमानीय ददावर्घ्यं प्रभोः पदे ॥ २५ ॥
रासे संभूय गोलोके सा दधाव हरेः पुरः ।
तेन राधा समाख्याता पुराविद्भिर्द्विजोत्तम ! ॥ २६ ॥
प्राणाधिष्ठात्री देवी सा कृष्णस्य परमात्मनः ।
आविर्बभूव प्राणेभ्यः प्राणेभ्योऽपि गरीयसी ॥ २७ ॥
देवी षोड़शवर्षीया नवयौवनसंयुता ।
वह्निशुद्धांशुकाधाना सस्मिता सुमनोहरा ॥ २८ ॥
सुकोमलाङ्गी ललिता सुन्दरीषु च सुन्दरी ।
वृहन्नितम्बभारार्त्ता पीनश्रोणीपयोधरा ॥ २९ ॥
बन्धुजीवजितारक्तसुन्दरोष्ठाधरा वरा ।
मुक्तापंक्तिजिता चारुदन्तपंक्तिर्मनोहरा ॥ ३० ॥
शरत्पार्वणकोटीन्दुशोभामृष्टशुभानना ।
चारुसीमन्तिनी चारुशरत्पङ्कजलोचना ॥ ३१ ॥
खगेन्द्रचञ्चुविजितचारुनासा मनोहरा ।
स्वर्णगण्डूकविजिते गण्डयुग्मे च बिभ्रती ॥ ३२ ॥

दधती चारुकर्णे च रत्नाभरणभूषिते ।
चन्दनागुरुकस्तूरीयुक्तकुङ्कुमविन्दुभिः ॥ ३३ ॥
सिन्दूरविन्दुसंयुक्तसुकपोला मनोहरा ।
सुसंस्कृत केशपाशं मालतीमाल्यभूषितम् ॥ ३४ ॥
सुगन्धकवरीभारं सुन्दरं दधती सती ।
स्थलपद्मप्रभामुष्टं पादयुग्मञ्च बिभ्रती ॥ ३५ ॥
गमनं कुर्वती सा च हंसखञ्जनगञ्जनम् ।
सद्रत्नसारनिर्माणां वनमालां मनोहराम् ॥ ३६ ॥
हारं हीरकनिर्माणं रत्नकेयूरकङ्कणम् ।
सद्रत्नसारनिर्माणं पाशकं समनोहरम् ॥ ३७ ॥
अमूल्यरत्ननिर्माणं क्वणन्मञ्जीररञ्जितम् ।
नानाप्रकारचित्राढ्यं सुन्दरं परिबिभ्रती ॥ ३८ ॥
सा च सम्भाष्य गोविन्दं रत्नसिंहासने वरे ।
उवास सस्मिता भर्त्तुः पश्यन्ती मुखपङ्कजम् ॥ ३९ ॥
तस्याश्च लोमकूपेभ्यः सद्यो गोपाङ्गनागणः ।
आविर्बभूव रूपेण वेशेनैव च तत्समः ॥ ४० ॥
लक्षकोटिपरिमितः शश्वत्सुस्थिरयौवनः ।
संख्याविद्भिश्च संख्यातो गोलोके गोपिकागणः ॥ ४१ ॥
कृष्णस्य लोमकूपेभ्यः सद्यो गोपगणो मुने ! ।
आविर्बभूव रूपेण वेशेनैव च तत्समः ॥ ४२ ॥
त्रिंशत्कोटिपरिमितः कमनीयो मनोहरः ।
संख्याविद्भिश्च संख्यातो बल्लवानां गणः श्रुतौ ॥ ४३ ॥
कृष्णस्य लोमकूपेभ्यः सद्यश्चाविर्बभूव ह ।
नानावर्णो गोगणश्च शश्वत्सुस्थिरयौवनः ॥ ४४ ॥

बलीवर्दाः सुरभ्यश्च वत्सा नानाविधाः शुभाः ।
अतीवललिताः श्यामा बह्वश्च कामधेनवः ॥ ४५ ॥
तेषामेकं बलीवर्दं कोटिसिंहसमं बले ।
शिवाय प्रददौ कृष्णो वाहनाय मनोहरम् ॥ ४६ ॥
कृष्णाङ्घ्रिनखरन्ध्रेभ्यो हंसपंक्तिर्मनोहरा ।
आविर्बभूव सहसा स्त्रीपुंवत्ससमन्विता ॥ ४७ ॥
तेषामेकं राजहंसं महाबलपराक्रमम् ।
वाहनाय ददौ कृष्णो ब्रह्मणे च तपस्विने ॥ ४८ ॥
वामकर्णस्य विवरात् कृष्णस्य परमात्मनः ।
गणः श्वेततुरङ्गानामाविर्भूतो मनोहरः ॥ ४९ ॥
तेषामेकञ्च श्वेताश्वं धर्माय वाहनाय च ।
ददौ गोपाङ्गनेशश्च संप्रीत्या सुरसंसदि ॥ ५० ॥
दक्षकर्णस्य विवरात् पुंसश्च सुरसंसदि ।
आविर्भूता सिंहपंक्तिर्महाबलपराक्रमा ॥ ५१ ॥
तेषामेकं ददौ कृष्णः प्रकृत्यै परमादरम् ।
अमूल्यवरमाल्यञ्च वरं यदभिवाञ्छितम् ॥ ५२ ॥
कृष्णो योगेन योगीन्द्रश्चकार रथपञ्चकम् ।
शुद्धरत्नेन्द्रनिर्माणं मनोयायि मनोहरम् ॥ ५३ ॥
लक्षयोजनमूर्द्धं च प्रस्थे च शतयोजनम् ।
लक्षचक्रं वायुरहं लक्षक्रीड़ागृहान्वितम् ॥ ५४ ॥
शृङ्गारार्हभोगवस्तुतल्पासंख्यसमन्वितम् ।
रत्नप्रदीपलक्षाणां राजिभिश्च विराजितम् ॥ ५५ ॥
नानाचित्रविचित्राढ्यं सद्रत्नकलसोज्ज्वलम् ।
रत्नदर्पणभूषाढ्यं शोभितं श्वेतचामरैः ॥ ५६ ॥

वह्निशुद्धांशुकैश्चैवै र्मालाजालैर्विभूषितम् ।
मणीन्द्रमुक्तामाणिक्यहीराहारविराजितम् ॥ ५७ ॥
आरक्तवर्णरत्नेन्द्रसारनिर्माणकृत्रिमैः ।
पङ्कजानामसंख्यैश्च सुन्दरैश्च सुशोभितम् ॥ ५८ ॥
ददौ नारायणायैकं तेषां मध्ये द्विजोत्तम ! ।
एकं दत्त्वा राधिकायै ररक्ष शेषमात्मने ॥ ५९ ॥
आविर्बभूव कृष्णस्य गुह्यदेशात्ततः परम् ।
पिङ्गलश्च पुमानेकः पिङ्गलैश्च गणैः सह ॥ ६० ॥
आविर्भूता यतो गुह्यात्तेन ते गुह्यकाः स्मृताः ।
यः पुमान् स कुवेरश्च धनेशो गुह्यकेश्वरः ॥ ६१ ॥
बभूव कन्यका चैका कुवेरवामपार्श्वतः ।
कुवेरपत्नी सा देवी सुन्दरीणां मनोरमा ॥ ६२ ॥
भूतप्रेतपिशाचाश्च कुष्माण्डब्रह्मराक्षसाः ।
वेताला विकृतास्तस्याविर्भूता गुह्यदेशतः ॥ ६३ ॥
शङ्खचक्रगदापद्मधारिणो वनमालिनः ।
पीतवस्त्रपरीधानाः सर्वे श्यामचतुर्भुजाः ॥ ६४ ॥
किरीटिनः कुण्डलिनो रत्नभूषणभूषिताः ।
आविर्भूताः पार्श्वदाश्च कृष्णस्य मुखतो मुने ! ॥ ६५ ॥
चतुर्भुजान् पार्श्वदांश्च ददौ नारायणाय च ।
गुह्यकान् गुह्यकेशाय भूतादीन् शङ्कराय च ॥ ६६ ॥
द्विभुजाः श्यामवर्णाश्च जपमालाकरा वराः ।
ध्यायन्तश्चरणाम्भोजं कृष्णस्य सन्ततं मुदा ॥ ६७ ॥
दास्ये नियुक्ता दासाश्चैवाघ्यैमादाय यत्नतः ।
आविर्भूता वैष्णवाश्च सर्वे कृष्णपरायणाः ॥ ६८ ॥

पुलकाङ्कितसर्वाङ्गाः साश्रुनेत्राः सगद्गदाः ।
आविर्भूताः पादपद्मात् पादपद्मैकमानसाः ॥ ६९ ॥
आविर्बभूवुः कृष्णस्य दक्षनेत्राद्भयङ्कराः ।
त्रिशूलपट्टिशधरास्त्रिनेत्राश्चन्द्रशेखराः ॥ ७० ॥
दिगम्बरा महाकाया ज्वलदग्निशिखोपमाः ।
ते भैरवा महाभागाः शिवतुल्याश्च तेजसा ॥ ७१ ॥
रुरुसंहारकालाख्या असितक्रोधभीषणाः ।
महाभैरवखट्टाङ्गावित्यष्टौ भैरवाः स्मृताः ॥ ७२ ॥
आविर्बभूव कृष्णस्य वामनेत्राद्भयङ्करः ।
त्रिशूलपट्टिशव्याघ्रचर्माम्बरगदाधरः ॥ ७३ ॥
दिगम्बरो महाकायस्त्रिनेत्रश्चन्द्रशेखरः ।
स ईशानो महाभागो दिक्पालानामधीश्वरः ॥ ७४ ॥
डाकिन्यश्चैव योगिन्यः क्षेत्रपालाः सहस्रशः ।
आविर्बभूवः कृष्णस्य नासिकाविवरोदरात् ॥ ७५ ॥
सुरास्त्रिकोटिसंख्याताः दिव्यमूर्त्तिधरा वराः ।
आविर्बभूवुः सहसा पुंसश्च पृष्ठदेशतः ॥ ७६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौति-शौनक-
संवादे सृष्टिनिरूपणे ब्रह्मखण्डे
पञ्चमोऽध्यायः ।

---

# षष्ठोऽध्यायः ।

——००——

सौतिरुवाच ।

अथ कृष्णो महालक्ष्मीं सादरञ्च सरस्वतीम् ।
नारायणाय प्रददौ रत्नेन्द्रमालया सह ॥ १ ॥
सावित्रीं ब्रह्मणे प्रादान्मूर्त्तिं धर्माय सादरम् ।
रतिं कामाय रूपाढ्यां कुवेराय मनोरमाम् ॥ २ ॥
अन्याश्च या या अन्येभ्यो याश्च येभ्यः समुद्भवाः ।
तस्मै तस्मै ददौ कृष्णस्तां तां रूपवतीं सतीम् ॥ ३ ॥
ततः शङ्करमाहूय सर्वेशो योगिनां गुरुम् ।
उवाच प्रियमित्येवं गृहाण सिंहवाहिनीम् ॥ ४ ॥
श्रीकृष्णस्य वचः श्रुत्वा प्रहस्य नीललोहितः ।
उवाच भीतः प्रणतः प्राणेशं प्रभुमच्युतम् ॥ ५ ॥

श्रीमहेश्वर उवाच ।

अधुनाहं न गृह्णामि प्रकृतिं प्राकृतो यथा ।
त्वद्भक्त्येकव्यवहितां दास्यमार्गविरोधिनीम् ॥ ६ ॥
तत्त्वज्ञानसमाच्छन्नां योगद्वारकपाटिकाम् ।
मुक्तीच्छाध्वंसरूपाञ्च सकामां कामवर्द्धिनीम् ॥ ७ ॥
तपस्याच्छन्नरूपाञ्च महामोहकरण्डिकाम् ।
भवकारागृहे घोरे दृढ़ां निगड़रूपिणीम् ॥ ८ ॥
शश्वद्बहिर्बुद्धिजननीं सद्बुद्धिच्छेदकारिणीम् ।
शृङ्गारभागसाराञ्च विषयेच्छाविवर्द्धिनीम् ॥ ९ ॥

नेच्छामि गृहिणीं नाथ ! वरं देहि मदीप्सितम् ।
यस्य यद्वाञ्छितं तस्मै तद्ददाति सदीश्वरः ॥ १० ॥
त्वद्भक्तिविषये दास्ये लालसा वर्द्धतेऽनिशम् ।
तृप्तिर्न जायते नामजपने पादसेवने ॥ ११ ॥
त्वन्नाम पञ्चवक्त्रेण गुणञ्च मङ्गलालयम् ।
स्वप्ने जागरणे शश्वद्गायन् गायन् भ्रमाम्यहम् ॥ १२ ॥
आकल्पकोटिकोटिञ्च तद्रूपध्यानतत्परम् ।
भोगेच्छाविषये नैव योगे तपसि मन्मनः ॥ १३ ॥
त्वत्सेवने पूजने च वन्दने नामकीर्त्तने ।
सदोल्लसितमेषाञ्च विरतौ विरतिं लभेत् ॥ १४ ॥
स्मरणं कीर्त्तनं नामगुणयोः श्रवणं जपः ।
त्वच्चारुरूपध्यानं त्वत्पादसेवाभिवन्दनम् ॥ १५ ॥
समर्पणञ्चात्मनश्च नित्यं नैवेद्यभोजनम् ।
वरं वरेश ! देहीदं नवधा भक्तिलक्षणम् ॥ १६ ॥
सार्ष्टिसालोक्यसारूप्यसामीप्यसाम्यलीनताम् ।
वदन्ति षड्विधां मुक्तिं मुक्ता मुक्तिविदो विभो ! ॥१७॥
अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च सर्वकामावसायिता ॥ १८ ॥
सर्वज्ञदूरश्रवणं परकायप्रवेशनम् ।
वाक्सिद्धिः कल्पवृक्षत्वं स्रष्टुं संहर्त्तुमीशता ॥ १९ ॥
अमरत्वञ्च सर्वाग्र्यं सिद्धयोऽष्टादश स्मृताः ।
योगास्तपांसि सर्वाणि दानानि च व्रतानि च ॥ २० ॥
यशः कीर्त्तिर्वचः सत्यं धर्माण्यनशनानि च ।
भ्रमणं सर्वतीर्थेषु स्नानमन्यसुरार्चनम् ॥ २१ ॥

सुरार्चादर्शनं सप्तद्वीपसप्तप्रदक्षिणम्।
स्नानं सर्वसमुद्रेषु सर्वस्वर्गप्रदर्शनम्॥ २२॥
ब्रह्मत्वञ्चैव रुद्रत्वं विष्णुत्वञ्च परं पदम्।
अतोऽनिर्वचनीयानि वाञ्छनीयानि सन्ति वा॥ २३॥
सर्वाण्येतानि सर्वेश! कथितानि च यानि च।
तव भक्तिकलांशस्य कलां नार्हन्ति षोड़शीम्॥ २४॥
शवस्य वचनं श्रुत्वा कृष्णस्तं योगिनां गुरुम्।
प्रहस्योवाच वचनं सत्यं सर्वसुखप्रदम्॥ २५॥

श्रीभगवानुवाच।

मत्सेवां कुरु सर्वेश शर्व सर्वविदांवर।
कल्पकोटिशतं यावत् पूर्णं शश्वदहर्निशम्॥ २६॥
वरस्तपस्विनां त्वञ्च सिद्धानां योगिनां तथा।
ज्ञानिनां वैष्णवानाञ्च सुराणाञ्च सुरेश्वर॥ २७॥
अमरत्वं लभ भव! भव मृत्युञ्जयो महान्।
सर्वसिद्धिञ्च वेदांश्च सर्वज्ञत्वञ्च मद्वरात्॥ २८॥
असंख्यब्रह्मणां पातं लीलया वत्स! द्रक्ष्यसि।
अद्य प्रभृति ज्ञानेन तेजसा वयसा शिव॥ २९॥
पराक्रमेण यशसा महसा मत्समो भव।
प्राणानामधिकस्त्वञ्च न भक्तस्त्वत्परो मम॥ ३०॥
त्वत्परो नास्ति मे प्रेयांस्त्वं मदीयात्मनः परः।
ये त्वां निन्दन्ति पापिष्ठा ज्ञानहीना विचेतनाः॥३१॥
पच्यन्ते कालसूत्रेण यावच्चन्द्रदिवाकरौ।
कल्पकोटिशतान्ते च ग्रहीष्यसि शिवां शिव॥ ३२॥

ममाज्यर्थञ्च वचनं पालनं कर्त्तुमर्हसि ।
त्वन्मुखान्निर्गतं वाक्यं करोमि नाधुनेति च ॥ ३३ ॥
मद्वाक्यञ्च स्ववाक्यञ्च पालनं तत् करिष्यसि ।
गृहीत्वा प्रकृतिं शम्भो दिव्यं वर्षसहस्रकम् ॥ ३४ ॥
सुखं सुमहत् शृङ्गारं करिष्यसि न संशयः ।
न केवलं तपस्वी त्वमीश्वरो मत्समो महान् ॥ ३५ ॥
काले गृही तपस्वी च योगी स्वेच्छामयो हि यः ।
दुःखञ्च दारसंयोगे यत्त्वया कथितं शिव ॥ ३६ ॥
कुस्त्री ददाति दुःखञ्च स्वामिने न पतिव्रता ।
कुले महति या जाता कुलजा कुलपालिका ॥ ३७ ॥
करोति पालनं स्नेहात् सत्पुत्रस्य समं पतिम् ।
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं कुलयोषितः ॥ ३८ ॥
पतितोऽपतितो वापि कृपणश्चेश्वरोऽथवा ।
असत्कुलप्रसूता याः पित्रोर्दुःशीलमिश्रिताः ॥ ३९ ॥
ध्रुवं ताः परभोग्याश्च पतिं निन्दन्ति सन्ततम् ।
आवयोरतिरिक्तञ्च या पश्यति पतिं सती ॥ ४० ॥
गोलोके स्वामिना सार्द्धं कोटिकल्पं प्रमोदते ।
भविता सा शिवा शैवा प्रकृतिर्वैष्णवी शिव ॥ ४१ ॥
मदाज्ञया च तां साध्वीं ग्रहीष्यसि भवाय च ।
प्रकृत्या योनिसंयुक्तं त्वल्लिङ्गं तीर्थमुत्तमम् ॥ ४२ ॥
तीर्थं सहस्रं संपूज्य भक्त्या पञ्चोपचारतः ।
सदक्षिणं संयतो यः पवित्रश्च जितेन्द्रियः ॥ ४३ ॥
कोटिकल्पञ्च गोलोके मोदते च मया सह ।
लक्षं तीर्थं पूजयेद् यो विधिवत् साधुदक्षिणम् ॥ ४४ ॥

न च्युतिस्तस्य गोलोकात् स भवेदावयोः समः ।
मृद्भस्मगोशकृत्पिण्डे तीर्थे वालुकयाऽपिवा ॥ ४५ ॥
कृत्वा लिङ्गं सकृत् पूज्य वसेत् कल्पायुतं दिवि ।
प्रजावान् भूमिमान् विद्वान् पुत्त्रवान् धनवांस्तथा ॥४६॥
ज्ञानवान् मुक्तिमान् साधुः शिवलिङ्गार्चनाद्भवेत् ।
शिवलिङ्गार्चनं स्थानमतीर्थं तीर्थमेव तत् ।
भवेत्तत्र मृतः पापी शिवलोकं स गच्छति ॥ ४७ ॥
महादेव महादेव महादेवेति वादिनः ।
पश्चाद्यामि महात्रस्तो नामश्रवणलोभतः ॥ ४८ ॥
शिवेति शब्दमुच्चार्य्य प्राणांस्त्यजति यो नरः ।
कोटिजन्मार्जितात् पापात् मुक्तो मुक्तिं प्रयाति सः ॥४९
शिवं कल्याणवचनं कल्याणं मुक्तिवाचकम् ।
यतस्तत् प्रभवेत्तेन स शिवः परिकीर्त्तितः ॥ ५० ॥
विच्छेदे धनबन्धूनां निमग्नः शोकसागरे ।
शिवेति शब्दमुच्चार्य्य लभेत् सर्वशिवं नरः ॥ ५१ ॥
पापघ्ने वर्त्तते शिश्च वश्च मुक्तिप्रदे तथा ।
पापघ्नो मोक्षदो नृणां शिवस्तेन प्रकीर्त्तितः ॥ ५२ ॥
शिवेति च शिवं नाम यस्य वाचि प्रवर्त्तते ।
कोटिजन्मार्जितं पापं तस्य नश्यति निश्चितम् ॥ ५३ ॥
इत्युक्त्वा शूलिने कृष्णो दत्त्वा कल्पतरुं मनुम् ।
तत्त्वज्ञानं मृत्युजयमुवाच सिंहवाहिनीम् ॥ ५४ ॥

श्रीभगवानुवाच ।

अधुना तिष्ठ वत्से ! त्वं गोलोके मम सन्निधौ ।
काले भजिष्यसि शिवं शिवदञ्च शिवायनम् ॥ ५५ ॥

तेजःसु सर्वदेवानामाविर्भूय वरानने ! ।
संहृत्य दैत्यान् सर्वांश्च भविता सर्वपूजिता ॥ ५६ ॥
ततः कल्पविशेषे च सत्यं सत्ययुगे सति ।
भविता दक्षकन्या त्वं सुशीला शम्भुगेहिनी ॥ ५७ ॥
ततः शरीरं संत्यज्य यज्ञे भर्त्तुश्च निन्दया ।
मेनायां शैलभार्य्यायां भविता पार्वतीति च ॥ ५८ ॥
दिव्यं वर्षसहस्रञ्च विहरिष्यसि शम्भुना ।
पूर्णं ततः सर्वकालमभेदत्वं लभिष्यसि ॥ ५९ ॥
काले सर्वेषु विश्वेषु महापूजा च पूजिते ।
भविता प्रतिवर्षे च शारदीया सुरेश्वरि ! ॥ ६० ॥
ग्रामेषु नगरेष्वेव पूजिता ग्रामदेवता ।
भवती भवितेत्येवं नामभेदेन चारुणा ॥ ६१ ॥
मदाज्ञया शिवकृतैस्तन्त्रैर्नानाविधैरपि ।
पूजाविधिं विधास्यामि कवचं स्तोत्रसंयुतम् ॥ ६२ ॥
भविष्यन्ति महात्मश्च तवैव परिचारकाः ।
धर्मार्थकाममोक्षाणां सिद्धाश्च फलभागिनः ॥ ६३ ॥
ये त्वां मातर्भजिष्यन्ति पुण्यक्षेत्रे च भारते ।
तेषां यशश्च कीर्त्तिश्च धर्मैश्वर्य्यञ्च वर्द्धते ॥ ६४ ॥
इत्युक्त्वा प्रकृतिं तस्यै मन्त्रमेकादशाक्षरम् ।
दत्त्वा सकामवीजञ्च मन्त्रराजमनुत्तमम् ॥ ६५ ॥
चकार विधिना ध्यानं भक्तं भक्तानुकम्पया ।
श्रीमाया कामवीजाढ्यं ददौ मन्त्रं दशाक्षरम् ॥ ६६ ॥
सृष्ट्यौपयोगिकीं शक्तिं सर्वसिद्धिञ्च कामदाम् ।
तद्विशिष्टोत्कृष्टतत्त्वज्ञानं तस्यै ददौ विभुः ॥ ६७ ॥

त्रयोदशाक्षरं मन्त्रं दत्त्वा तस्मै जगत्पतिः ।
कवचं स्तोत्रसहितं शङ्कराय तथा द्विज ! ॥ ६८ ॥
दत्त्वा धर्माय तं मन्त्रं सिद्धिज्ञानं तदेव च ।
कामाय वह्नये चैव कुवेराय च वायवे ॥ ६९ ॥
एवं कुवेरादिभ्यस्तु दत्त्वा मन्त्रादिकं परम् ।
विधिस्त्रोवाच सृष्ट्यर्थं विधातुर्विधिरेव सः ॥ ७० ॥

श्रीभगवानुवाच ।

मदीयञ्च तपः कृत्वा दिव्यं वर्षसहस्रकम् ।
सृष्टिं कुरु महाभाग विधे नानाविधां पराम् ॥ ७१ ॥
इत्युक्त्वा ब्रह्मणे कृष्णो ददौ मालां मनोरमाम् ।
जगाम सार्द्धं गोपीभिर्गोपैर्वृन्दावनं वनम् ॥ ७२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौति-शौनक-
संवादे ब्रह्मखण्डे सृष्टिनिरूपणं
नाम षष्ठोऽध्यायः ।

—·—

## सप्तमोऽध्यायः ।

सौतिरुवाच ।

तदा ब्रह्मा तपः कृत्वा सिद्धिं प्राप्य यथेप्सिताम् ।
ससृजे पृथिवीमादौ मधुकैटभमेदसा ॥ १ ॥
ससृजे पर्वतानष्टौ प्रधानान् सुमनोहरान् ।
क्षुद्रानसंख्यान् किं ब्रूमः प्रधानाख्यां निशामय ॥ २ ॥

सुमेरुञ्चैव कैलासं मलयञ्च हिमालयम् ।
उदयञ्च तथाऽस्तञ्च सुवेलं गन्धमादनम् ॥ ३ ॥
समुद्रान् ससृजे सप्त नदान् कतिविधा नदीः ।
वृत्तांश्च ग्रामनगरं समुद्राख्यां निशामय ॥ ४ ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवान् ।
लक्षयोजनमानेन द्विगुणांश्च परात्परान् ॥ ५ ॥
सप्तद्वीपांश्च तद्भूमिमण्डले कमलाकृतेः ।
उपद्वीपांस्तथा सप्त सीमशैलांश्च सप्त च ॥ ६ ॥
निबोध विप्र द्वीपाख्यां पुरा या विधिना कृता ।
जम्बुशाककुशप्लक्षक्रौञ्चन्यग्रोधपौष्करान् ॥ ७ ॥
मेरोरष्टसु शृङ्गेषु ससृजेऽष्टौ पुरीः प्रभुः ।
अष्टानां लोकपालानां विहाराय मनोहराः ॥ ८ ॥
मूलेऽनन्तस्य नगरीं निर्माय जगतां पतिः ।
ऊर्द्ध्वं स्वर्गांश्च सप्तैव तेषामाख्यां निशामय ॥ ९ ॥
भूर्लोकञ्च भुवर्लोकं स्वर्लोकं सुमनोहरम् ।
जनलोकं तपोलोकं सत्यलोकञ्च शौनक ॥ १० ॥
शृङ्गमूर्द्धि ब्रह्मलोकं जरादिपरिवर्जितम् ।
तदूर्द्ध्वं ध्रुवलोकञ्च सर्वतः सुमनोहरम् ॥ ११ ॥
तदधः सप्तपातालान्निर्ममे जगदीश्वरः ।
स्वर्गातिरिक्तभोगाढ्यानधोऽधः क्रमतो मुने ! ॥ १२ ॥
अतलं वितलञ्चैव सुतलञ्च तलातलम् ।
महातलञ्च पातालं रसातलमधस्ततः ॥ १३ ॥
सप्तद्वीपैः सप्तस्वर्गैः सप्तपातालसंज्ञकैः ।
एभिर्लोकैश्च ब्रह्माण्डं ब्रह्माधिकारमेव च ॥ १४ ॥

एवञ्चासंख्यब्रह्माण्डं सर्वं कृत्रिममेव च ।
महाविष्णोश्च लोमाञ्चविवरेषु च शौनक ! ॥ १५ ॥
प्रतिविश्वेषु दिक्पाला ब्रह्मविष्णुमहेश्वराः ।
सुरा नरादयः सर्वे सन्ति कृष्णस्य मायया ॥ १६ ॥
ब्रह्माण्डगणनां कर्त्तुं न क्षमो जगतां पतिः ।
न शङ्करो न धर्मश्च न च विष्णुश्च के सुराः ॥ १७ ॥
संख्यातुमीश्वरः शक्तो न संख्यातं तथापि सः ।
विश्वाकाशदिशाश्चैव सर्वतो यद्यपि क्षमः ॥ १८ ॥
कृत्रिमाणि च विश्वानि विश्वस्थानि च यानि च ।
अनित्यानि च विप्रेन्द्र स्वप्नवन्नश्वराणि च ॥ १९ ॥
वैकुण्ठः शिवलोकश्च गोलोकश्च तयोः परः ।
नित्यो विश्ववहिर्भूतश्चात्माकाशदिशो यथा ॥ २० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौतिशौनक-
संवादे ब्रह्मखण्डे सृष्टिनिरूपणं
नाम सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

---

सौतिरुवाच ।

ब्रह्मा विश्वं विनिर्माय सावित्र्यां वरयोषिति ।
चकार वीर्य्याधानञ्च कामुक्यां कामुको यथा ॥ १ ॥

सा दिव्यं शतवर्षञ्च धृत्वा गर्भं सुदुःसहम् ।
सुप्रसूता च सुसुवे चतुर्वेदान् मनोहरान् ॥ २ ॥
विविधान् शास्त्रसङ्घांश्च तर्कव्याकरणादिकान् ।
षट्त्रिंशत्संख्यका दिव्या रागिणीः सुमनोहराः ॥३॥
षट्रागान् सुन्दरांश्चैव नानातालसमन्वितान् ।
सत्यत्रेताद्वापरांश्च कलिञ्च कलहप्रियम् ॥ ४ ॥
वर्षं मासमृतुञ्चैव तिथिं दण्डक्षणादिकम् ।
दिनं रात्रिञ्च वारांश्च सन्ध्यामुषसमेव च ॥ ५ ॥
पुष्टिञ्च देवसेनाञ्च मेधाञ्च विजयां जयाम् ।
षट्कृत्तिकाश्च योगांश्च करणांश्च तपोधन ! ॥ ६ ॥
देवसेनां महाषष्ठीं कार्त्तिकेयप्रियां सतीम् ।
मातृकासु प्रधाना सा बालानामिष्टदेवता ॥ ७ ॥
ब्राह्मं पाद्मञ्च वाराहं कल्पत्रयमिदं स्मृतम् ।
नित्यं नैमित्तिकञ्चैव द्विपरार्द्धञ्च प्राकृतम् ॥ ८ ॥
चतुर्विधञ्च प्रलयं कालञ्च मृत्युकन्यकाम् ।
सर्वान् व्याधिगणांश्चैव सा प्रसूय स्तनं ददौ ॥ ९ ॥
अथ धातुः पृष्ठदेशादधर्मः समजायत ।
अलक्ष्मीस्तद्वामपार्श्वाद्बभूव तस्य कामिनी ॥ १० ॥
नाभिदेशाद्विश्वकर्मा बभूव शिल्पिनां गुरुः ।
महान्तो वसवोऽष्टौ च महाबलपराक्रमाः ॥ ११ ॥
अथ धातुश्च मनस आविर्भूताः कुमारकाः ।
चत्वारः पञ्चवर्षीया ज्वलन्तो ब्रह्मतेजसा ॥ १२ ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो भगवांश्चतुर्थो ज्ञानिनां वरः ॥ १३ ॥

आविर्बभूव मुखतः कुमारः कनकप्रभः ।
दिव्यरूपधरः श्रीमान् सस्त्रीकः सुन्दरो युवा ॥ १४ ॥
क्षत्रियाणां वीजरूपो नाम्ना स्वायम्भुवो मनुः ।
या स्त्री: सा शतरूपा च रूपाढ्या कमलाकला ॥ १५ ॥
सस्त्रीकश्च मनुस्तस्थौ धात्राज्ञापरिपालकः ।
स्वयं विधाता पुत्रांश्च तानुवाच प्रहर्षितान् ॥ १६ ॥
सृष्टिं कर्त्तुं महाभागो महाभागवतान् द्विज ! ।
जग्मुस्ते च नहीत्युक्ता तप्तुं कृष्णपरायणाः ॥ १७ ॥
चुकोप हेतुना तेन विधाता जगतां पतिः ।
कोपासक्तस्य च विधेर्ज्वलतो ब्रह्मतेजसा ॥ १८ ॥
आविर्भूता ललाटाच्च रुद्रा एकादश प्रभो ।
कालाग्निरुद्रः संहर्त्ता तेषामेकः प्रकीर्त्तितः ॥ १९ ॥
सर्वेषामेव विश्वानां स एव तामसः स्मृतः ।
राजसश्च स्वयं ब्रह्मा शिवो विष्णुश्च सात्विकौ ॥ २० ॥
गोलोकनाथः कृष्णश्च निर्गुणः प्रकृतेः परः ।
परमाज्ञानिनो मूर्खा वदन्ति तामसं शिवम् ॥ २१ ॥
शुद्धसत्वस्वरूपञ्च निर्मलं वैष्णवाग्रणीम् ।
शृणु नामानि रुद्राणां वेदोक्तानि च यानि च ॥ २२ ॥
महान् महात्मा मतिमान् भीषणश्च भयङ्करः ।
ऋतुध्वजश्चोर्द्ध्वकेशः पिङ्गलाक्षो रुचिः शुचिः ॥ २३ ॥
पुलस्त्यो दक्षकर्णाच्च पुलहो वामकर्णतः ।
दक्षनेत्रात्तथाऽत्रिश्च वामनेत्रात् क्रतुः स्वयम् ॥ २४
अरणिर्नासिकारन्ध्रादङ्गिराश्च मुखाद्रुचिः ।
भृगुश्च वामपार्श्वाच्च दक्षो दक्षिणपार्श्वतः ॥ २५ ॥

छायायाः कर्दमो जातो नाभेः पञ्चशिखस्तथा ।
वक्षसश्चैव वोढुश्च कण्ठदेशाच्च नारदः ॥ २६ ॥
मरीचिः स्कन्धदेशाच्चैवापान्तरतमा गलात् ।
वशिष्ठो रसनादेशात् प्रचेता अधरोष्ठतः ॥ २७ ॥
हंसश्च वामकुक्षेश्च दक्षकुक्षेर्यतिः स्वयम् ।
सृष्टिं विधातुं स विधिश्चकाराज्ञां सुतान् प्रति ।
पितुर्वाक्यं समाकर्ण्य तमुवाच स नारदः ॥ २८ ॥

नारद उवाच ।

पूर्वमानय मज्ज्येष्ठान् सनकादीन् पितामह ।
कारयित्वा दारयुक्तानस्मान् वद जगत्पते ! ॥ २९ ॥
पित्रा ते तपसे युक्ताः संसाराय वयं कथम् ।
अहो हन्त ! प्रभोर्बुद्धिर्विपरीताय कल्पते ॥ ३० ॥
कस्मै पुत्राय पीयूषात् परं दत्तं तपोऽधुना ।
कस्मै ददासि विषयं विषमञ्च विषाधिकम् ॥ ३१ ॥
अतीवनिम्ने घोरे च भवाब्धौ यः पतेत् पितः ।
निष्कृतिस्तस्य नास्तीति कोटिकल्पे गतेऽपि च ॥ ३२ ॥
निस्तारवीजं सर्वेषां वीजञ्च पुरुषोत्तमम् ।
सर्वदं भक्तिदं दास्यप्रदं सत्यं कृपामयम् ॥ ३३ ॥
भक्तैकशरणं भक्तवत्सलं स्वच्छमेव च ।
भक्तप्रियं भक्तनाथं भक्तानुग्रहकारकम् ॥ ३४ ॥
भक्ताराध्यं भक्तासाध्यं विहाय परमेश्वरम् ।
मनो दधाति को मूढ़ो विषये नाशकारणे ॥ ३५ ॥
विहाय कृष्णसेवाञ्च पीयूषादधिकां प्रियाम् ।
को मूढ़ो विषमश्नाति विषमं विषयाभिधम् ॥ ३६ ॥

स्वप्नवन्नश्वरं तुच्छमसत्यं नाशकारणम् ।
यथा दीपशिखाग्रञ्च कीटानां सुमनोहरम् ॥ ३७ ॥
यथा वड़िशमांसञ्च मत्स्यापातसुखप्रदम् ।
तथा विषयिणां तात विषयं मृत्युकारणम् ॥ ३८ ॥
इत्युक्त्वा नारदस्तत्र विरराम विधेः पुरः ।
तस्थौ तातं नमस्कृत्य ज्वलदग्निशिखोपमः ॥ ३९ ॥
ब्रह्मा कोपपरीतश्च शशाप तनयं द्विज ।
उवाच कम्पिताङ्गश्च रक्तास्यः स्फुरिताधरः ॥ ४० ॥

ब्रह्मोवाच ।

भविता ज्ञानलोपस्ते मच्छापेन च नारद ।
क्रीड़ामृगस्त्वं साध्यश्च योषिल्लुब्धश्च लम्पटः ॥ ४१ ॥
स्थिरयौवनयुक्तानां रूपाढ्यानां मनोहरः ।
पञ्चाशत्कामिनीनाञ्च भर्त्ता च प्राणवल्लभः ॥ ४२
शृङ्गारशास्त्रवेत्ता च महाशृङ्गारलोलुपः ।
नानाप्रकारशृङ्गारनिपुणानां गुरोर्गुरुः ॥ ४३ ॥
गन्धर्वाणाञ्च प्रवरः सुस्वरश्च सुगायनः ।
वीणावादनसन्दर्भनिष्णातः स्थिरयौवनः ॥ ४४
प्राज्ञो मधुरवाक् शान्तः सुशीलः सुन्दरः सुधीः ।
भविष्यसि न सन्देहो नामतश्चोपवर्हणः ॥ ४५ ॥
ताभिर्दिव्यं लक्षयुगं विहृत्य निर्जने वने ।
पुनर्मदीयशापेन दासीपुत्रश्च तत्परः ॥ ४६ ॥
वत्स वैष्णवसंसर्गात् वैष्णवोच्छिष्टभोजनात् ।
पुनः कृष्णप्रसादेन भविष्यसि ममात्मजः ॥ ४७ ॥

ज्ञानं दास्यामि ते दिव्यं पुनरेव पुरातनम् ।
अधुना भव नष्टस्त्वं मत्सुतो निपत ध्रुवम् ॥ ४८ ॥
ब्रह्मेत्युक्त्वा सुतं विप्र विरराम जगत्पतिः ।
रुरोद नारदस्तातमुवाच संपुटाञ्जलिः ॥ ४९ ॥

नारद उवाच ।

क्रोधं संहर संहर्त्तस्तात तात जगद्गुरो ।
स्रष्टुस्तपस्वीशस्याहो क्रोधोऽयमप्यनाकरः ॥ ५० ॥
शपेत् परित्यजेत् विद्वान् पुत्त्रमुत्पथगामिनम् ।
तपस्विनं सुतं शप्तुं कथमर्हसि पण्डित ॥ ५१ ॥
जनिर्भवतु मे ब्रह्मन् यासु यासु च योनिषु ।
न जहातु हरेर्भक्तिर्मामेवं देहि मे वरम् ॥ ५२ ॥
पुत्त्रश्चेज्जगतां धातुर्नास्ति भक्तिर्हरेः पदे ।
शूकरादतिरिक्तश्च सोऽधमो भारते भुवि ॥ ५३ ॥
जातिस्मरो हरेर्भक्तियुक्तः शूकरयोनिषु ।
जनिर्लभेत् स प्रवरो गोलोकं याति कर्म्मणा ॥ ५४ ॥
गोविन्दचरणाम्भोजभक्तिमाध्वीकमीप्सितम् ।
पिबतां वैष्णवादीनां स्पर्शपूता वसुन्धरा ॥ ५५ ॥
तीर्थानि स्पर्शमिच्छन्ति वैष्णवानां पितामह ।
पापानां पापिदत्तानां क्षालनायात्मनामपि ॥ ५६ ॥
मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारते ।
परैश्च कोटिपुरुषैः पूर्वैः सार्द्धं हरेरहो ॥ ५७ ॥
कोटिजन्मार्जितात् पापान्मन्त्रग्रहणमात्रतः ।
मुक्ताः शुध्यन्ति यत्पूर्वं कर्म निर्मूलयन्ति च ॥ ५८ ॥

पुत्रान् दारांश्च शिष्यांश्च सेवकान् बान्धवांस्तथा।
यो दर्शयति सन्मार्गं सद्गतिस्तं लभेत् ध्रुवम् ॥ ५९ ॥
यो दर्शयत्यसन्मार्गं शिष्यैर्विश्वासितो गुरुः।
कुम्भीपाके स्थितिस्तस्य यावच्चन्द्रदिवाकरौ ॥ ६० ॥
स किं गुरुः स किं तातः स किं स्वामी स किं सुतः
यः श्रीकृष्णपदाम्भोजे भक्तिं दातुमनीश्वरः ॥ ६१ ॥
शप्तो निरपराधेन त्वयाऽहं चतुरानन।
मया शप्तुं त्वमुचितो घ्नन्तं घ्नन्त्यपि पण्डिताः ॥ ६२ ॥
कवचस्तोत्रपूजाभिः सहितस्ते मनुर्मनोः।
लुप्तो भवतु मच्छापात् प्रतिविश्वेषु निश्चितम् ॥ ६३ ॥
अपूज्यो भव विश्वेषु यावत् कल्पत्रयं पितः।
गतेषु त्रिषु कल्पेषु पूज्यपूज्यो भविष्यसि ॥ ६४ ॥
अधुना यज्ञभागस्ते व्रतादिर्व्वापि सुव्रत।
पूजनं चास्तु मामैकं वन्द्यो भव सुरादिभिः ॥ ६५ ॥
इत्युक्त्वा नारदस्तत्र विरराम पितुः पुरः।
तस्थौ सभायां स विधिर्हृदयेन विदूयता ॥ ६६ ॥
उपवर्हणगन्धर्वो नारदस्तेन हेतुना।
दासीपुत्रश्च शापेन पितुरेव च शौनक ॥ ६७ ॥
ततः पुनर्नारदश्च स बभूव महानृषिः।
ज्ञानं प्राप्य पितुः पश्चात् कथयिष्यामि चाधुना ॥ ६८

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौति-शौनक-
संवादे ब्रह्मखण्डे ब्रह्म-नारदशापोपलम्भनं
नाम अष्टमोऽध्यायः।

— —

# नवमोऽध्यायः ।

---

सौतिरुवाच ।

अथ ब्रह्मा स्वपुत्रांस्तानादिदेश च सृष्टये ।
सृष्टिं प्रचक्रुस्ते सर्वे विप्रेन्द्र नारदं विना ॥ १ ॥
मरीचेर्मनसो जातः कश्यपश्च प्रजापतिः ।
अत्रेर्नेत्रमलाच्चन्द्रः क्षीरोदे च बभूव ह ॥ २ ॥
प्रचेतसोऽपि मनसो गौतमश्च बभूव ह ।
पुलस्त्यमानसः पुत्रो मैत्रावरुण एव च ॥ ३ ॥
मनोश्च शतरूपायां तिस्रः कन्याः प्रजज्ञिरे ।
आकूतिर्देवहूतिश्च प्रसूतिस्ताः पतिव्रताः ॥ ४ ॥
प्रियव्रतोत्तानपादौ द्वौ च पुत्रौ मनोहरौ ।
उत्तानपादतनयो ध्रुवः परमधार्मिकः ॥ ५ ॥
आकूतिं रुचये प्रादात् दक्षाय च प्रसूतिकाम् ।
देवहूतिं कर्दमाय यत्पुत्रः कपिलः स्वयम् ॥ ६ ॥
प्रसूत्यां दक्षवीजेन षष्टिकन्याः प्रजज्ञिरे ।
अष्टौ धर्माय प्रददौ रुद्रायैकादश स्मृताः ॥ ७ ॥
शिवायैकां सतीं प्रादात् कश्यपाय त्रयोदश ।
सप्तविंशतिकन्याश्च दक्षश्चन्द्राय दत्तवान् ॥ ८ ॥
नामानि धर्मपत्नीनां मत्तो विप्र निशामय ।
शान्तिः पुष्टिर्धृतिस्तुष्टिः क्षमा श्रद्धा मतिः स्मृतिः ॥९॥

शान्तिः पुत्त्रश्च सन्तोषः पुष्टेः पुत्त्रो महानभूत् ।
धृतेर्धैर्य्यञ्च तुष्टेश्च हर्षदर्पौ सुतौ स्मृतौ ॥ १० ॥
क्षमापुत्त्रः सहिष्णुश्च श्रद्धापुत्त्रश्च धार्मिकः ।
मतेर्ज्ञानाभिधः पुत्त्रः स्मृतेर्जातिस्मरो महान् ॥ ११ ॥
पूर्वपत्नाञ्च मूर्त्तेश्च नरनारायणावृषी ।
बभूवुरेते धर्मिष्ठा धर्मपुत्राश्च शौनक ॥ १२ ॥
नामानि रुद्रपत्नीनां सावधानं निबोध मे ।
कला कलावती काष्ठा कालिका कलहप्रिया ॥ १३ ॥
कन्दली भीषणा रास्ना प्रमोचा भूषणा शुकी ।
एतासां बहवः पुत्त्रा बभूवुः शिवपार्श्वदाः ॥ १४ ॥
सा सती स्वामिनिन्दायां तनुं तत्याज यज्ञतः ।
पुनर्भूत्वा शैलपुत्त्री लेभे च शङ्करं पतिम् ॥ १५ ॥
कश्यपस्य प्रियाणाञ्च नामानि शृणु धार्मिक ।
अदितिर्देवमाता या दैत्यमाता दितिस्तथा ॥ १६ ॥
सर्पमाता तथा कद्रुर्विनता पक्षिसूस्तथा ।
सुरभिश्च गवां माता महिषाणाञ्च निश्चितम् ॥ १७ ॥
सारमेयादिजन्तूनां सरमा सूश्चतुष्पदाम् ।
दनुः प्रसूर्दानवानामन्याश्चेत्येवमादिकाः ॥ १८ ॥
इन्द्रश्च द्वादशादित्या उपेन्द्राद्याः सुरा मुने ! ।
कथितास्त्वादितेः पुत्त्रा महाबलपराक्रमाः ॥ १९ ॥
इन्द्रपुत्त्रो जयन्तश्च ब्रह्मन् शच्यामजायत ।
आदित्यस्य सवर्णायां कन्यायां विश्वकर्मणः ॥ २० ॥
शनैश्चरयमौ पुत्त्रौ कालिन्दी कन्यका तथा ।
उपेन्द्रवीर्य्यात् पृथ्व्यान्तु मङ्गलः समजायत ॥ २१ ॥

शौनक उवाच ।

कथं सौते स चोपेन्द्रान्मङ्गलः समजायत ।
वसुन्धरायां बलवान् तन्मे व्याख्यातुमर्हसि ॥ २२ ॥

सौतिरुवाच ।

उपेन्द्ररूपमालोक्य कामार्त्ता च वसुन्धरा ।
विधाय सुन्दरीवेशमचता प्रौढ़यौवना ॥ २३ ॥
मलये निर्जने रम्ये चारुचन्दनपल्लवे ।
चन्दनोच्चितसर्वाङ्गं रत्नभूषणभूषितम् ॥ २४ ॥
तं सुशीलं शयानञ्च शान्तं सस्मितमीप्सितम् ।
सस्मिता तस्य तल्पे च सहसा समुपस्थिता ॥ २५ ॥
सुरम्यां मालतीमालां ददौ तस्मै वरानना ।
सुगन्धि चन्दनं चारु कस्तूरीकुङ्कुमान्वितम् ॥ २६ ॥
उपेन्द्रस्तन्मनो ज्ञात्वा कामि मन्मथपीड़ितम् ।
नानाप्रकारशृङ्गारं चकार च तया सह ॥ २७ ॥
तदङ्गसङ्गसंसक्ता मूर्च्छां प्राप सती तदा ।
मृतेव निद्रितेवासौ वीजाधानं कृते हरौ ॥ २८ ॥
तां विलग्नाञ्च सुश्रोणीं सुखसम्भोगमूर्च्छिताम् ।
बृहन्मुक्तनितम्बाञ्च सस्मितां विपुलस्तनीम् ॥ २९ ॥
क्षणं वक्षसि कृत्वा तां तदोष्ठञ्च चुचुम्ब ह ।
विहाय तत्र रहसि जगाम पुरुषोत्तमः ॥ ३० ॥
उर्वशी पथि गच्छन्ती बोधयामास तां मुने ! ।
सा च पप्रच्छ वृत्तान्तं कथयामास भूश्च ताम् ॥ ३१ ॥
वीर्य्यं संवरणं कर्त्तुं सा चाशक्ता च दुर्बला ।
प्रवालस्याकरे त्रस्ता वीर्य्यन्यासं चकार सा ॥ ३२ ॥

तेन प्रवालवर्णश्च कुमारः समपद्यत ।
तेजसा सूर्य्यसदृशो नारायणसुतो महान् ॥ ३३ ॥
मङ्गलस्य प्रिया मेधा तस्य घण्टेश्वरो महान् ।
व्रणदातेति तेजस्वी विष्णुतुल्यो बभूव ह ॥ ३४ ॥
दितेर्हिरण्यकशिपुर्हिरण्याक्षो महाबली ।
कन्या च सिंहिका विप्र सैंहिकेयश्च तत्सुतः ॥ ३५ ॥
निर्ऋतिः सिंहिका सा च तेन राहुश्च नैर्ऋतः ।
शूकरेण हिरण्याक्षोऽप्यनपत्यो मृतो युवा ॥ ३६ ॥
हिरण्यकशिपोः पुत्रः प्रह्लादो वैष्णवाग्रणीः ।
विरोचनश्च तत्पुत्त्रस्तत्पुत्त्रश्च बलिः स्वयम् ॥ ३७ ॥
बलेः पुत्त्रो महायोगी ज्ञानी शङ्करकिङ्करः ।
दितिवंशश्च कथितः कद्रुवंशं निबोध मे ॥ ३८ ॥
अनन्तं वासुकिञ्चैव कालीयञ्च धनञ्जयम् ।
कर्कोटकं तक्षकञ्च पद्ममैरावतं तथा ॥ ३९ ॥
महापद्मञ्च शङ्कुञ्च शङ्खं संवरणन्तथा ।
धृतराष्ट्रञ्च दुर्द्धर्षं दुर्जयं दुर्मुखं बलम् ॥ ४० ॥
गोक्षं गोकामुखञ्चैव विरूपादींश्च शौनक ।
एतेषां प्रवराश्चैव यावत्यः सर्पजातयः ॥ ४१ ॥
कन्यका मनसा देवी कमलांशसमुद्भवा ।
तपस्विनीनां प्रवरा महातेजस्विनी शुभा ॥ ४२ ॥
यत्पतिश्च जरत्कारुर्नारायणकलोद्भवः ।
आस्तीकस्तनयो यस्या विष्णुतुल्यश्च तेजसा ॥ ४३ ॥
एतेषां नाममात्रेण नास्ति नागभयं नृणाम् ।
कद्रुवंशो निगदितो विनतायाश्च श्रूयताम् ॥ ४४ ॥

वैनतेयारुणौ पुत्त्रौ विष्णुतुल्यपराक्रमौ ।
तद्बभूवुः क्रमेणैव यावत्यः पक्षिजातयः ॥ ४५ ॥
गावश्च महिषाश्चैव सुरभिप्रवरा इमे ।
सर्वे वै सारमेयाश्च बभूवुः सरमासुताः ॥ ४६ ॥
दानवाश्च दनोर्वंश्या अन्यासामन्यजातयः ।
उक्तः कश्यपवंशश्च चन्द्राख्यानं निबोध मे ॥ ४७ ॥
नामानि चन्द्रपत्नीनां सावधानं निशामय ।
अत्यपूर्वञ्च चरितं पुराणेषु पुरातनम् ॥ ४८ ॥
अश्विनी भरणी चैव कृत्तिका रोहिणी तथा ।
मृगशीर्षा तथार्द्रा च पूज्या साध्वी पुनर्वसुः ॥ ४९ ॥
पुष्याश्लेषा मघा पूर्वफल्गुन्युत्तरफल्गुनी ।
हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका ॥५०॥
ज्येष्ठा मूला तथा पूर्वाषाढ़ा चैवोत्तरा स्मृता ।
श्रवणा च धनिष्ठा च तथा शतभिषा शुभा ॥ ५१ ॥
पूर्वोत्तरभाद्रपदी रेवत्यन्ता विधुप्रियाः ।
तासां मध्ये च शुभगा रोहिणी रसिका वरा ॥ ५२ ॥
सन्ततं रसभावेन चकार शशिनं वशम् ।
रोहिण्युपगतश्चन्द्रो न यात्यन्याञ्च कामिनीम् ॥ ५३ ॥
सर्वा भगिन्यः पितरं कथयामासुरादृताः ।
सपत्नीकृतसन्तापं प्राणनाशकरं परम् ॥ ५४ ॥
दक्षः प्रकुपितश्चन्द्रं शशाप मन्त्रपूर्वकम् ।
द्रुतं श्वशुरशापेन यक्ष्मग्रस्तो बभूव सः ॥ ५५ ॥
दिने दिने यक्ष्मणा स क्षीयमाणश्च दुःखितः ।
वपुष्यर्द्धं क्षीयमाणे शङ्करं शरणं ययौ ॥ ५६ ॥

दृष्ट्वा चन्द्रं शङ्करश्च क्लेशितं शरणागतम् ।
करुणासागरस्तस्मै कृपया चाभयं ददौ ॥ ५७ ॥
निर्मुक्तं यक्ष्मणा कृत्वा स्वकपाले स्थलं ददौ ।
अमरो निर्भयो भूत्वा स तस्थौ शिवशेखरे ॥ ५८ ॥
तं शिवः शेखरे कृत्वा बभूव चन्द्रशेखरः ।
नास्ति देवेषु लोकेषु शिवात् शरणपञ्जरः ॥ ५९ ॥
दक्षकन्याः पतिं मुक्तं दृष्ट्वा च रुरुदुः पुनः ।
आजग्मुः शरणं तातं दक्षं तेजस्विनां वरम् ॥ ६० ॥
उच्चैश्च रुरुदुर्गत्वा निहत्याङ्गं पुनः पुनः ।
तमूचुः कातरं दीना दीननाथं विधेः सुतम् ॥ ६१ ॥

दक्षकन्या ऊचुः ।

स्वामिसौभाग्यलाभाय त्वमुक्तोऽस्माभिरेव च ।
सौभाग्यमस्तु नस्तात ! गतः स्वामी गुणान्वितः ॥ ६२ ॥
स्थिते चक्षुषि हे तात ! दृष्टं ध्वान्तमयं जगत् ।
विज्ञातमधुना स्त्रीणां पतिरेव हि लोचनम् ॥ ६३ ॥
पतिरेव गतिः स्त्रीणां पतिः प्राणाश्च सम्पदः ।
धर्मार्थकाममोक्षाणां हेतुः सेतुर्भवार्णवे ॥ ६४ ॥
पतिर्नारायणः स्त्रीणां व्रतं धर्मः सनातनः ।
सर्वं कर्म वृथा तासां स्वामिनां विमुखाश्च याः ॥ ६५ ॥
स्नानञ्च सर्वतीर्थेषु सर्वयज्ञेषु दक्षिणा ।
सर्वदानानि पुण्यानि व्रतानि नियमानि च ॥ ६६ ॥
देवार्चनं चानशनं सर्वाणि च तपांसि च ।
स्वामिनः पादसेवायां कलां नार्हन्ति षोड़शीम् ॥ ६७ ॥

सर्वेषां बान्धवानाञ्च प्रियः पुत्रश्च योषिताम् ।
स एव स्वामिनोऽंशश्च शतपुत्रात् परः पतिः ॥ ६८ ॥
असद्वंशप्रसूता या सा द्वेष्टि स्वामिनं सदा ।
यस्या मनश्चलं दुष्टं सन्ततं परपुरुषे ॥ ६९ ॥
पतितं रोगिणं दुष्टं निर्धनं गुणहीनकम् ।
युवानं चैव वृद्धं वा भजेत्तं न त्यजेत् सती ॥ ७० ॥
सगुणं निर्गुणं वापि या द्वेष्टि संत्यजेत् पतिम् ।
पच्यते कालसूत्रे सा यावच्चन्द्रदिवाकरौ ॥ ७१ ॥
कीटैः शकुनतुल्यैश्च भक्षिता सा दिवानिशम् ।
भुङ्क्ते मृतवसामांसं पिबेन्मूत्रञ्च तृष्णया ॥ ७२ ॥
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ।
श्वापदः शतजन्मानि सा भवेद्वन्धुहा ततः ॥ ७३ ॥
ततो मानवजन्मानि लभेच्चेत् पूर्वकर्मणः ।
विधवा धनहीना च रोगयुक्ता भवेत् ध्रुवम् ॥ ७४ ॥
देहि नः कान्तदानाञ्च कामपूरं विधेः सुत ।
विधाता सदृशस्त्वञ्च पुनः स्रष्टुं चमो जगत् ॥ ७५ ॥
कन्यानां वचनं श्रुत्वा दक्षः शङ्करसन्निधिम् ।
जगाम शम्भुस्तं दृष्ट्वा समुत्थायं ननाम च ॥ ७६ ॥
दक्षस्तस्याशिषं कृत्वा समुवाच कृपानिधिम् ।
तत्याज कोपं दुर्द्धर्षं दृष्ट्वा च प्रणतं शिवम् ॥ ७७ ॥

दक्ष उवाच ।

देहि जामातरं शम्भो मदीयं प्राणवल्लभम् ।
मत्सुतानाञ्च प्राणानां परमेव प्रियं पतिम् ॥ ७८ ॥

न चेद्ददासि जामातर्मम जामातरं विधुम् ।
दास्यामि दारुणं शापं तुभ्यं त्वं केन मुच्यसे ॥ ७९ ॥
दक्षस्य वचनं श्रुत्वा तमुवाच कृपानिधिः ।
सुधाधिकञ्च वचनं ब्रह्मन् शरणपञ्जरः ॥ ८० ॥

शिव उवाच ।

करोषि भस्मसाच्चेन्मां ददासि शापमेव च ।
नाहं दातुं समर्थश्च चन्द्रञ्च शरणागतम् ॥ ८१ ॥
शिवस्य वचनं श्रुत्वा दक्षस्तं शप्तुमुद्यतः ।
शिवः सस्मार गोविन्दं विपन्मोचणकारकम् ॥ ८२ ॥
एतस्मिन्नन्तरे कृष्णो वृद्धब्राह्मणरूपधृक् ।
समाययौ तयोर्मूलं तौ तञ्च नमतुः क्रमात् ॥ ८३ ॥
दत्त्वा शुभाशिषं तौ स ब्रह्मज्योतिः सनातनः ।
उवाच शङ्करं पूर्वं परिपूर्णतमो द्विज ॥ ८४ ॥

श्रीभगवानुवाच ।

न चात्मनः प्रियः कश्चित् शर्व ! सर्वेषु बन्धुषु ।
आत्मानं रक्ष दक्षाय देहि चन्द्रं सुरेश्वर ! ॥ ८५ ॥
तपस्विनां वरः शान्तस्त्वमेव वैष्णवाग्रणीः ।
समः सर्वेषु जीवेषु हिंसाक्रोधविवर्जितः ॥ ८६ ॥
दक्षः क्रोधी च दुर्द्धर्षस्तेजस्वी ब्रह्मणः सुतः ।
दुष्टो बिभेति दुर्द्धर्षं न दुर्द्धर्षश्च कञ्चन ॥ ८७ ॥
नारायणवचः श्रुत्वा प्रहस्य शङ्करः स्वयम् ।
उवाच नीतिसारञ्च नीतिबीजं परात्परम् ॥ ८८ ॥

शङ्कर उवाच ।

तपो दास्यामि तेजश्च सर्वसिद्धिञ्च सम्पदम् ।

प्राणांश्च न समर्थोऽहं प्रदातुं शरणागतम् ॥ ८९ ॥
यो ददाति भयेनैव प्रपन्नं शरणागतम् ।
तञ्च धर्मः परित्यज्य याति शप्वा सुदारुणम् ॥ ९० ॥
सर्वं त्यक्तुं समर्थोऽहं न स्वधर्मं जगत्प्रभो ! ।
यः स्वधर्मविहीनश्च स च सर्वबहिष्कृतः ॥ ९१ ॥
यश्च धर्मं सदा रक्षेत् धर्मस्तं परिरक्षति ।
धर्मं वेदेश्वर त्वञ्च किं मां ब्रूहि स्वमायया ॥ ९२ ॥
त्वं सर्वपाता स्रष्टा च हन्ता च परिणामतः ।
त्वयि भक्तिर्दृढ़ा यस्य तस्य कस्माद्भयं भवेत् ॥ ९३ ॥
शङ्करस्य वचः श्रुत्वा भगवान् सर्वभाववित् ।
चन्द्रं चन्द्राद्विनिष्कृष्य दक्षाय प्रददौ हरिः ॥ ९४ ॥
प्रतस्थावर्द्धचन्द्रश्च निर्व्याधिः शिवशेखरे ।
निजग्राह परं चन्द्रं विष्णुदत्तं प्रजापतिः ॥ ९५ ॥
यक्ष्मग्रस्तञ्च तं दृष्ट्वा दक्षस्तुष्टाव माधवम् ।
पक्षे पूर्णं क्षतं पक्षे तं चकार हरिः स्वयम् ॥ ९६ ॥
कृष्णस्तेभ्यो वरं दत्त्वा जगाम स्वालयं द्विज ।
दक्षश्चन्द्रं गृहीत्वा च कन्याभ्यः प्रददौ पुनः ॥ ९७ ॥
चन्द्रस्ताश्च परिप्राप्य विजहार दिवानिशम् ।
समं ददर्श ताः सर्वास्तत्प्रभृत्येव कम्पितः ॥ ९८ ॥
इत्येवं कथितं सर्वं किञ्चित् सृष्टिक्रमं मुने ! ।
श्रुतञ्च गुरुवक्त्रेण पुष्करे मुनिसंसदि ॥ ९९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौतिशौनक-
संवादे ब्रह्मखण्डे नवमोऽध्यायः ।

---

# दशमोऽध्यायः ।

—०—

सौतिरुवाच ।

भृगोः पुत्रश्च च्यवनः शुक्रश्च ज्ञानिनां वर ।
क्रतोरपि क्रिया भार्य्या बालिखिल्यानसूयत ॥ १ ॥
त्रयः पुत्राश्चाङ्गिरसो बभूवुर्मुनिसत्तमाः ।
वृहस्पतिरुतथ्यश्च सम्बरश्चापि शौनक ! ॥ २ ॥
वशिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ।
पराशरसुतः श्रीमान् कृष्णद्वैपायनो हरिः ॥ ३ ॥
व्यासपुत्रः शिवांशश्च शुकश्च ज्ञानिनां वरः ।
विश्रश्रवाः पुलस्त्यस्य यस्य पुत्रो धनेश्वरः ॥ ४ ॥

शौनक उवाच ।

अहो ! पुराणविदुषामतीवदुर्गमं वचः ।
न बुद्धं वचनं किञ्चिद्धनेशजन्मपूर्वकम् ॥ ५ ॥
अधुना कथितं जन्म धनेशस्येश्वरादिदम् ।
पुनर्भिन्नक्रमं जन्म ब्रवीषि कथमेव माम् ॥ ६ ॥

सौतिरुवाच ।

बभूवुरेते दिक्पालाः पुरा च परमेश्वरात् ।
पुनश्च ब्रह्मशापेन स च विश्रश्रवःसुतः ॥ ७ ॥
गुरवे दक्षिणां दातुमुतथ्यश्च धनेश्वरम् ।
ययाचे कोटिस्वर्णञ्च यत्नतश्च प्रचेतसे ॥ ८ ॥

धनेशो विरसो भूत्वा तस्मै तद्दातुमुद्यतः ।
चकार भस्मसात् विप्र पुनर्जन्म ललाभ सः ॥ ९ ॥
तेन विश्रवसःपुत्त्रः कुवेरश्च धनाधिपः ।
रावणः कुम्भकर्णश्च धार्मिकश्च विभीषणः ॥ १० ॥
पुलहस्य सुतो वात्स्यः शाण्डिल्यश्च रुचेः सुतः ।
सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः ॥ ११ ॥
काश्यपः कश्यपाज्जातो भरद्वाजो वृहस्पतेः ।
स्वयं वात्स्यश्च पुलहात् सावर्णिर्गौतमात्तथा ॥ १२ ॥
शाण्डिल्यश्च रुचेः पुत्त्रो मुनिस्तेजस्विनां वरः ।
बभूवुः पञ्चगोत्राश्च एतेषां प्रवरा भवे ॥ १३ ॥
बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।
ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक ! ॥ १४ ॥
चन्द्रादित्यमनूनाञ्च प्रवराः क्षत्रियाः स्मृताः ।
ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः ॥ १५ ॥
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ।
तासां सङ्करजातेन बभूवुर्वर्णसङ्कराः ॥ १६ ॥
गोपनापितभिल्लाश्च तथा मोदककूवरौ ।
ताम्बूलिस्वर्णकारौ च तथा वणिकजातयः ॥ १७ ॥
इत्येवमाद्या विप्रेन्द्र सत्शूद्राः परिकीर्त्तिताः ।
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ॥ १८ ॥
विश्वकर्मा च शूद्रायां वीर्य्याधानं चकार सः ।
ततो बभूवुः पुत्त्राश्च नवैते शिल्पकारिणः ॥ १९ ॥
मालाकारकर्मकारशङ्खकारकुविन्दकाः ।
कुम्भकारः कंसकारः षडेते शिल्पिनां वराः ॥ २० ॥

सूत्रधारश्चित्रकारः स्वर्णकारस्तथैव च ।
पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥ २१ ॥

शौनक उवाच ।

कथं देवो विश्वकर्म्मा वीर्य्याधानञ्चकार सः ।
शूद्रायामधमायाञ्च कथं ते पतितास्त्रयः ॥ २२ ॥
कथं तेषु ब्रह्मशापो बभूव केन हेतुना ।
हे पुराणविदां श्रेष्ठ तन्नः संशितुमर्हसि ॥ २३ ॥

सौतिरुवाच ।

घृताची कामतः कामं वेशञ्चक्रे मनोहरम् ।
तां ददर्श विश्वकर्म्मा गच्छन्तीं पुष्करे पथि ॥ २४ ॥
आगच्छन्नविलोक्याञ्च प्रसादोत्फुल्लमानसः ।
तां ययाचे स शृङ्गारं कामेन हृतचेतनः ॥ २५ ॥
रत्नालङ्कारभूषाढ्यां सर्व्वावयवकोमलाम् ।
यथा षोड़शवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥ २६ ॥
बृहन्नितम्बभारार्त्तां मुनिमानसमोहिनीम् ।
अतिवेगकटाक्षेण लोलां कामार्तिपीड़िताम् ॥ २७ ॥
तत्श्रोणीं कठिनां दृष्ट्वा वायूनां शुकसंहृताम् ।
अतीवोच्चैस्तनयुगं कठिनं वर्त्तुलाकृतम् ॥ २८ ॥
सस्मितं चारुवक्त्रञ्च शरच्चन्द्रविनिन्दकम् ।
पक्वविम्बफलारक्तमोष्टाधरं मनोहरम् ॥ २९ ॥
सिन्दूरविन्दुसंयुक्तं कस्तूरीविन्दुभिः सह ।
कपालमुज्ज्वलं शश्वत् कपोलं मणिकुण्डलम् ॥ ३० ॥
तमुवाच प्रियां शान्तां कामशास्त्रविशारदः ।
कामाग्निवर्द्धनोद्योगि वचनं श्रुतिसुन्दरम् ॥ ३१ ॥

विश्वकर्मोवाच।

अयि क्व यासि ललिते मम प्राणाधिके प्रिये।
मम प्राणांश्चापहृत्य स्थिता भव क्षणं शुभे ॥ ३२ ॥
तवैवान्वेषणं कृत्वा भ्रमामि जगतीतलम्।
स्वप्राणांस्त्यक्तुमिष्टोऽहं तां न दृष्ट्वा हुताशने ॥ ३३ ॥
त्वं यासीति कामलाकं श्रुत्वा रम्भामुखेऽधुना।
आगच्छन्नहमेवाद्य चास्मिन् वर्त्मन्यवस्थितः ॥ ३४ ॥
अहो सरस्वतीतीरे पुष्पोद्याने मनोहरे।
सुगन्धिमन्दशीतेन वायुना सुरभीकृते ॥ ३५ ॥
रम कान्ते मया सार्द्धं यूना कान्तेन शोभने।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ ३६ ॥
स्थिरयौवनसंयुक्ता त्वमेव चिरजीविनी।
कामुकी कोमलाङ्गी च सुन्दरीषु च सुन्दरी ॥ ३७ ॥
मृत्युञ्जयवरेणैव मृत्युकन्या जिता मया।
कुवेरभवनं हृत्वा धनं लब्धं कुवेरतः ॥ ३८ ॥
रत्नमाला च वरुणाद्वायोः स्त्रीरत्नभूषणम्।
वह्निशुद्धं वस्त्रयुगं वह्नेः प्राप्तञ्च वेतनात् ॥ ३९ ॥
कामशास्त्रं कामदेवाद्योषिद्रञ्जनकारणम्।
शृङ्गारशिल्पं यत्किञ्चित् लब्धं चन्द्राच्च दुर्लभम् ॥ ४० ॥
रत्नमालां वस्त्रयुग्मं सर्वाणि भूषणानि च।
तुभ्यं दातुं हृदि कृतं प्राप्तन्तत्क्षण एव च ॥ ४१ ॥
गृहे तान्येव संस्थाप्य चागतोऽन्वेषणे भवे।
विरामे सुखसम्भोगे तुभ्यं दास्यामि साम्प्रतम् ॥ ४२ ॥

कामुकस्य वचः श्रुत्वा घृताची सस्मिता मुने ! ।
ददौ प्रत्युत्तरं शीघ्रं नीतियुक्तं मनोहरम् ॥ ४३ ॥

घृताच्युवाच ।

त्वया यदुक्तं भद्रन्तत् स्वीकारोऽप्यधुनाऽपि च ।
किन्तु सामयिकं वाक्यं ब्रवीष्यामि स्मरातुर ॥ ४४ ॥
कामदेवालयं यामि कृतं वेशञ्च तत्कृते ।
यद्दिने यत्कृते यामो वयं तेषाञ्च योषितः ॥ ४५ ॥
अद्याहं कामपत्नी च गुरुपत्नी तवाधुना ।
त्वयोक्तमधुनेदञ्च पठितं कामदेवतः ॥ ४६ ॥
विद्यादाता मन्त्रदाता गुरुर्लक्षगुणैः पितुः ।
मातुः सहस्रगुणतो नास्त्यन्यस्तत्समो गुरुः ॥ ४७ ॥
गुरोः शतगुणैः पूज्या गुरुपत्नी श्रुतौ श्रुता ।
पितुः शतगुणै पूज्या यथा माता विचक्षण ॥ ४८ ॥
मात्रा सहितशृङ्गारे यावान् दोषः श्रुतौ श्रुतः ।
ततो लक्षगुणो दोषो गुरुपत्नीसमागमे ॥ ४९ ॥
मातरित्येवशब्देन याञ्च सम्भाषते नरः ।
सा मातृतुल्या सत्येन धर्मः साक्षी सतामपि ॥ ५० ॥
त्वया सहितशृङ्गारे कालसूत्रं प्रयाति सः ।
तत्र घोरे वसत्येव यावच्चन्द्रदिवाकरौ ॥ ५१ ॥
मात्रा सहितशृङ्गारे ततो दोषश्चतुर्गुणः ।
सार्द्धञ्च गुरुपत्न्या च तल्लक्षगुण एव च ॥ ५२ ॥
कुम्भीपाके पतत्येव यावद् वै ब्रह्मणो वयः ।
प्रायश्चित्तं पापिनश्च तस्य नैव श्रुतौ श्रुतम् ॥ ५३ ॥
चक्राकारं कुलालस्य तीक्ष्णधारञ्च खड्गवत् ।

वसामूत्रपुरीषञ्च परिपूर्णं सुदुस्तरम् ॥ ५४ ॥
शूलवत्क्रिमिसंयुक्तं तप्तमग्निसमद्रवम् ।
पापिनां तद्विहारञ्च कुम्भीपाकं प्रकीर्त्तितम् ॥ ५५ ॥
यावान् दोषो हि पुंसाञ्च गुरुपत्नीसमागमे ।
तावांश्च गुरुपत्न्याश्च तत्रैव कामुकी यदि ॥ ५६ ॥
अद्य यास्यामि कामस्य मन्दिरं तस्य कामिनी ।
वेशं कृत्वा गमिष्यामि तत्कृतेऽहं दिनान्तरे ॥ ५७ ॥
घृताचीवचनं श्रुत्वा विश्वकर्मा रुरोष ताम् ।
शशाप शूद्रयोनिञ्च व्रजेति जगतीतले ॥ ५८ ॥
घृताची तद्वचः श्रुत्वा तं शशाप सुदारुणम् ।
लभ जन्म भवे त्वञ्च स्वर्गभ्रष्टो भवेति च ॥ ५९ ॥
घृताचीत्येवमुक्त्वा च जगाम काममन्दिरम् ।
कामेन सुरतं कृत्वा कथयामास तां कथाम् ॥ ६० ॥
सा भारते च कामोक्त्या गोपस्य मदनस्य च ।
पत्नी प्रयागे नगरे ललाभ जन्म शौनक ! ॥ ६१ ॥
जातिस्मरा तत्प्रसूता बभूव च तपस्विनी ।
वरं न वव्रे धर्मिष्ठा तपस्यायां मनो दधौ ॥ ६२ ॥
तपश्चकार तपसा तप्तकाञ्चनसन्निभा ।
दिव्यञ्च शतवर्षं सा गङ्गातीरे मनोरमे ॥ ६३ ॥
वीर्य्येण सुरकारोश्च नव पुत्रान् प्रसूय सा ।
पुनः स्वर्लोकं गत्वा च सा घृताची बभूव ह ॥ ६४ ॥

शौनक उवाच ।

कथं वीर्य्यं सा दधार सुरकारोस्तपस्विनी ।
पुत्रान्नव प्रसूता च कुत्र वा कति वा दिनात् ॥ ६५ ॥

सौतिरुवाच ।

विश्वकर्मा तु तच्छापं समाकर्ण्य रुषान्वितः ।
जगाम ब्रह्मणः स्थानं शोकेन हृतचेतनः ॥ ६६ ॥
नत्वा स्तुत्वा च ब्रह्माणं कथयामास तां कथाम् ।
ललाभ जन्म ब्राह्मण्यां पृथिव्यामाज्ञया विधेः ॥ ६७ ॥
स एव ब्राह्मणो भूत्वा भुवि कारुर्बभूव ह ।
नृपाणाञ्च गृहस्थानां नानाशिल्पं चकार ह ॥ ६८ ॥
शिल्पञ्च कारयामास सर्वांश्च सर्वतः सदा ।
विचित्रं विविधं शिल्पमाश्चर्य्यं सुमनोहरम् ॥ ६९ ॥
एकदा तु प्रयागे च शिल्पं कृत्वा नृपस्य च ।
स्नातुं जगाम गङ्गाञ्च ददर्श तत्र कामिनीम् ॥ ७० ॥
घृताचीं नवरूपाञ्च युवतिं तां तपस्विनीम् ।
जातिस्मरां तां बुबुधे स च जातिस्मरो द्विज ! ॥ ७१ ॥
दृष्ट्वा सकामः सहसा बभूव हृतचेतनः ।
उवाच मधुरं शान्तः शान्तां ताञ्च तपस्विनीम् ॥ ७२ ॥

ब्राह्मण उवाच ।

अहोऽधुना त्वमत्रैव घृताचि सुमनोहरे ।
मा मां स्मरसि रम्भोरु विश्वकर्माऽहमेव च ॥ ७३ ॥
शापमोक्षं करिष्यामि भज मां तव सुन्दरि ! ।
त्वत्कृतेऽतिदहत्येव मनो मे स च मन्मथः ॥ ७४ ॥
द्विजस्य वचनं श्रुत्वा घृताची नवरूपिणी ।
उवाच मधुरं शान्ता नीतियुक्तं परं वचः ॥ ७५ ॥

गोपिकोवाच।

तद्दिने कामकान्ताहमधुना च तपस्विनी।
कथं दास्यामि शृङ्गारं गङ्गातीरे च भारते॥ ७६॥
विश्वकर्मन्निदं पुण्यं कर्मक्षेत्रञ्च भारतम्।
अत्र यत् क्रियते कर्म भोगोऽन्यत्र शुभाशुभम्॥ ७७॥
धर्मी मोक्षलते जन्म संलभ्य तपसः फलात्।
निबद्धः कुरुते कर्म मोहितो विष्णुमायया॥ ७८॥
माया नारायणीशाना परितुष्टा च यं भवेत्।
तस्मै ददाति श्रीकृष्णो भक्तिं तन्मन्त्रमीप्सितम्॥ ७९॥
यो मूढ़ो विषयासक्तो लब्धजन्मा च भारते।
विहाय कृष्णं सर्वेशं स मुग्धो विष्णुमायया॥ ८०॥
सर्वं स्मरामि देवाहमहो जातिस्मरा पुरा।
घृताची सुरवेश्याहमधुना गोपकन्यका॥ ८१॥
तपः करोमि मोक्षार्थं गङ्गातीरे सुपुण्यदे।
नात्र स्थलञ्च क्रीड़ायाः स्थिरस्त्वं भव कामुक॥ ८२॥
अन्यत्र कृतपापञ्च गङ्गायाञ्च विनश्यति।
गङ्गातीरे कृतं पापं सद्यो लक्षगुणं भवेत्॥ ८३॥
तत् तु नारायणक्षेत्रे तपसा च विनश्यति।
यद्येव कामतः कृत्वा निवृत्तश्च भवेत् पुनः॥ ८४॥
घृताचीवचनं श्रुत्वा विश्वकर्मा निराकृतिः।
जगाम तां गृहीत्वा च मलयं चन्दनालयम्॥ ८५॥
रम्यायां मलयद्रोण्यां पुष्पतल्पे मनोरमे।
पुष्पचन्दनवातेन सन्ततं सुरभीकृते॥ ८६॥

चकार सुखसम्भोगं तया सह सुनिर्जने ।
पूर्णं द्वादशवर्षञ्च बुबुधे न दिवानिशम् ॥ ८७ ॥
बभूव गर्भः कामिन्याः परिपूर्णः सुदुर्वहः ।
सा सुषाव च तत्रैव पुत्रान्नव मनोहरान् ॥ ८८ ॥
कृतशिल्पितशिल्पांश्च ज्ञानयुक्तांश्च शौनक ! ।
पूर्वप्राक्तनतो युग्यान् बलयुक्तान् विचक्षणान् ॥ ८९ ॥
मालाकारकर्मकंसशङ्खकारकुविन्दकान् ।
कुम्भकारसूत्रधारस्वर्णचित्रकरांस्तथा ॥ ९० ॥
तौ च तेभ्यो वरं दत्त्वा तान् संस्थाप्य महीतले ।
मानवीं तनुमुत्सृज्य जग्मतुर्निजमन्दिरम् ॥ ९१ ॥
स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां द्विजोत्तम ! ।
बभूव पतितः सद्यो ब्रह्मशापेन कर्मणा ॥ ९२ ॥
सूत्रधारो द्विजानान्तु शापेन पतितो भुवि ।
शीघ्रञ्च यज्ञकाष्ठानि न ददौ तेन हेतुना ॥ ९३ ॥
व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानाञ्च कोपतः ॥ ९४ ॥
कश्चिद्वणिग्विशेषश्च संसर्गात् स्वर्णकारिणः ।
स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः ॥ ९५ ॥
कुलटायाञ्च शूद्रायां चित्रकारस्य वीर्य्यतः ।
बभूवाट्टालिकाकारः पतितो जारदोषतः ॥ ९६ ॥
अट्टालिकाकारवीजात् कुम्भकारस्य योषिति ।
बभूव कोटकः सद्यः पतितो गृहकारकः ॥ ९७ ॥
कुम्भकारस्य वीजेन सद्यः कोटकयोषिति ।
बभूव तैलकारश्च कुटिलः पतितो भुवि ॥ ९८ ॥

सद्यः क्षत्रियवीजेन राजपुत्रस्य योषिति ।
बभूव तीवरश्चैव पतितो जारदोषतः ॥ ९९ ॥
तीवरस्य तु वीजेन तैलकारस्य योषिति ।
बभूव पतितो दस्युर्लेटश्च परिकीर्त्तितः ॥ १०० ॥
लेटस्तीवरकन्यायां जनयामास यन्नरान् ।
मल्लमल्लं मातारश्च भड़ं कोलं कलन्दरम् ॥ १०१
ब्राह्मण्यां शूद्रवीर्य्येण पतितो जारदोषतः ।
सद्यो बभूव चण्डालः सर्व्वस्मादधमोऽशुचिः ॥ १०२ ॥
तीवरेण च चाण्डाल्यां चर्म्मकारो बभूव ह ।
चर्म्मकार्य्याञ्च चण्डालान्मांसच्छेदो बभूव ह ॥ १०३ ॥
मांसच्छेद्यां तीवरेण कोँचश्च परिकीर्त्तितः ।
कोँचस्त्रियान्तु कैवर्त्तात् कर्त्तारः परिकीर्त्तितः ॥१०४॥
सद्यश्चण्डालकन्यायां लेटवीर्य्येण शौनक ! ।
बभूवतुस्तौ द्वौ पुत्त्रौ दुष्टौ हड्डिडम्मौ तथा ॥ १०५ ॥
क्रमेण हड्डिकन्यायां सद्यश्चण्डालवीर्य्यतः ।
बभूवुः पञ्चपुत्त्राश्च दुष्टा वनचराश्च ते ॥ १०६ ॥
लेटात्तीवरकन्यायां गङ्गातीरे च शौनक ! ।
बभूव सद्यो यो बालो गङ्गापुत्त्रः प्रकीर्त्तितः ॥ १०७ ॥
गङ्गापुत्त्रस्य कन्यायां वीर्य्येण वेशधारिणः ।
बभूव वेशधारी च पुत्त्रो युङ्गी प्रकीर्त्तितः ॥ १०८ ॥
वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव ह ।
शुण्डीयोषिति वैश्यात्तु पौण्ड्रकश्च बभूव ह ॥ १०९ ॥
क्षत्रात् करणकन्यायां राजपुत्त्रो बभूव ह ।
राजपुत्त्र्यान्तु करणादागरीति प्रकीर्त्तितः ॥ ११० ॥

क्षत्रवीर्य्येण वैश्यायां कैवर्त्तः परिकीर्त्तितः।
कलौ तीवरसंसर्गात् धीवरः पतितो भुवि ॥ १११ ॥
तीवर्य्यां धीवरात् पुत्त्रो बभूव रजकः स्मृतः।
रजक्यां तीवराच्चैव कोयालीति बभूव ह ॥ ११२ ॥
नापितात् गोपकन्यायां सर्वस्वी तस्य योषिति।
क्षत्राद् बभूव व्याधश्च बलवान् मृगहिंसकः ॥ ११३ ॥
तीवरात् शुण्डिकन्यायां बभूवुः सप्तपुत्त्रकाः।
ते कलौ हड्डिसंसर्गात् बभूवुर्दस्यवः सदा ॥ ११४ ॥
ब्राह्मण्यामृषिवीर्य्येण ऋतोः प्रथमवासरे।
कुत्सितश्चोदरे जातः कूदरस्तेन कीर्त्तितः ॥ ११५ ॥
तदशौचं विप्रतुल्यं पतितो ऋतुदोषतः।
सद्यः कोटकसंसर्गादधमो जगतीतले ॥ ११६ ॥
क्षत्रवीर्य्येण वैश्यायामृतोः प्रथमवासरे।
जातः पुत्त्रो महादस्युर्बलवांश्च धनुर्द्धरः ॥ ११७ ॥
चकार वागतीतञ्च क्षत्रियेणापि वारितः।
तेन जात्याः सपुत्त्रश्च वागतीतः प्रकीर्त्तितः ॥ ११८ ॥
क्षत्रवीर्य्येण शूद्रायामृतुदोषेण पापतः।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ॥ ११९ ॥
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः।
शौचाचारविहीनाश्च दुर्द्धर्षा धर्मवर्जिताः ॥ १२० ॥
म्लेच्छात् कुविन्दकन्यायां जोलाजातिर्बभूव ह।
जोलात् कुविन्दकन्यायां शराकः परिकीर्त्तितः ॥१२१॥
वर्णसङ्करदोषेण बह्वश्च श्रुतजातयः।
तासां नामानि संख्याश्च को वा वक्तुं क्षमो द्विज ॥१२२॥

वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति ।
वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जनाः ॥ १२३ ॥
ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणाः ।
तेभ्यश्च जाताः शूद्रायां ये व्यालग्राहिणो भुवि ॥१२४॥

शौनक उवाच ।

कथं ब्राह्मणपत्न्यान्तु सूर्य्यपुत्रोऽश्विनीसुतः ।
अहो केन विपाकेन वीर्य्याधानञ्चकार ह ॥१२५॥

सौतिरुवाच ।

गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः ।
ददर्श कामुकः शान्तः पुष्पोद्याने च निर्जने ॥ १२६ ॥
तया निवारितो यत्नात् बलेन बलवान् सुरः ।
अतीवसुन्दरीं दृष्ट्वा वीर्य्याधानञ्चकार सः ॥ १२७ ॥
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोहरे ।
सद्यो बभूव पुत्त्रश्च तप्तकाञ्चनसन्निभः ॥ १२८ ॥
सपुत्त्रा स्वामिनो गेहं जगाम व्रीड़िता सदा ।
स्वामिनं कथयामास यन्मार्गे दैवशङ्कटम् ॥ १२९ ॥
विप्रो रोषेण तत्याज तञ्च पुत्त्रं स्वकामिनीम् ।
सरिद्बभूव योगेन सा च गोदावरी स्मृता ॥ १३० ॥
पुत्त्रं चिकित्साशास्त्रञ्च पाठयामास यत्नतः ।
नानाशिल्पञ्च मन्त्रञ्च स्वयं स रविनन्दनः ॥ १३१ ॥
विप्रश्च ज्योतिर्गणनाद्वेतनाच्च निरन्तरम् ।
वेदधर्मपरित्यक्तो बभूव गणको भुवि ॥ १३२ ॥
लोभी विप्रश्च शूद्राणामग्रे दानं गृहीतवान् ।
ग्रहणे मृतदानानामग्रदानी बभूव सः ॥ १३३ ॥

कश्चित् पुमान् ब्रह्मयज्ञे यज्ञकुण्डात् समुत्थितः ।
स सूतो धर्मवक्ता च मत्पूर्वपुरुषः स्मृतः ॥ १३४ ॥
पुराणं पाठयामास तञ्च ब्रह्मा कृपानिधिः ।
पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः ॥ १३५ ॥
वैश्यायां सूतवीर्य्येण पुमानेको बभूव ह ।
स भट्टो वावदूकश्च सर्वेषां स्तुतिपाठकः ॥ १३६ ॥
एतत्ते कथितं किञ्चित् पृथिव्यां जातिनिर्णयम् ।
वर्णसङ्करदोषेण बह्व्योऽन्याः सन्ति जातयः ॥ १३७ ॥
सम्बन्धो येषु येषां यः सर्वजातिषु सर्वतः ।
तत्त्वं ब्रवीमि वेदोक्तं ब्रह्मणा कथितं पुरा ॥ १३८ ॥
पिता तातस्तु जनको जन्मदातरि वर्त्तते ।
अम्बा माता च जननी गर्भस्थल्यां प्रसूरिति ॥ १३९ ॥
पितामहः पितृपिता तत्पिता प्रपितामहः ।
अत ऊर्द्ध्वं ज्ञातयश्च सगोत्राः परिकीर्त्तिताः ॥ १४० ॥
मातामहः पिता मातुः प्रमातामह एव च ।
मातामहस्य जनकस्तत्पिता वृद्धपूर्वकः ॥ १४१ ॥
पितामही पितुर्माता तत्श्वश्रूः प्रपितामही ।
तत्श्वश्रूश्च परिज्ञेया सा वृद्धप्रपितामही ॥ १४२ ॥
मातामही मातृमाता मातृतुल्या च पूजिता ।
प्रमातामहीति ज्ञेया प्रमातामहकामिनी ॥ १४३ ॥
वृद्धमातामही ज्ञेया तत्पितुः कामिनी तथा ।
पितृभ्राता पितृव्यश्च मातृभ्राता च मातुलः ॥ १४४ ॥
पितृस्वसा पितुर्भग्नी मातृभग्नी च मासुरी ।
सूनुश्च तनयः पुत्रो दायादश्चात्मजस्तथा ॥ १३५ ॥

धनभाग्वीर्य्यजश्चैव पुंसि जन्ये च वर्त्तते ।
जन्यायां दुहिता कन्या चात्मजा परिकीर्त्तिता ॥१४६॥
पुत्रपत्नी बधूर्ज्ञेया जामाता दुहितुः पतिः ।
पतिः प्रियश्च भर्त्ता च स्वामी कान्ते च वर्त्तते ॥ १४७ ॥
देवरः स्वामिनो भ्राता ननन्दा स्वामिनः स्वसा ।
श्वशुरः स्वामिनस्तातः श्वश्रूश्च स्वामिनः प्रसूः ॥ १४८
भार्य्या जाया प्रिया कान्ता स्त्रीश्च पत्न्याश्च वर्त्तते ।
पत्नीभ्राता श्यालकश्च पत्नीभग्नी च श्यालिका ॥ १४९
पत्नीमाता तथा श्वश्रूस्तत्पिता श्वशुरः स्मृतः ।
सगर्भः सोदरो भ्राता सगर्भा भगिनी स्मृता ॥ १५० ॥
भगिनीपुत्रो भागिनेयो भ्रातृपुत्रश्च भ्रातृजः ।
श्यालस्तु भगिनीकान्तो भगिनीपतिरेव च ॥ १५१ ॥
श्यालीपतिस्तु भ्राता च श्वशुरैकस्य हेतुना ।
श्वशुरस्तु पिता ज्ञेयो जन्मदातुः समो मुने ॥ १५२ ॥
अन्नदाता भयत्राता पत्नीतातस्तथैव च ।
विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम् ॥ १५३ ॥
अन्नदातुश्च या पत्नी भगिनी गुरुकामिनी ।
माता च तत्सपत्नी च कन्या पुत्रप्रिया तथा ॥१५४॥
मातुर्माता पितुर्माता श्वश्रूः पित्रोः स्वसा तथा ।
पितृव्यानी मातुलानी मातरश्च चतुर्दश ॥ १५५ ॥
पौत्रस्तु पुत्रपुत्रे च प्रपौत्रस्तत्सुतेऽपि च ।
तत्पुत्राद्याश्च ये वंशाः कुलजाश्च प्रकीर्त्तिताः ॥ १५६ ॥
कन्यापुत्रश्च दौहित्रस्तत्पुत्राद्याश्च बान्धवाः ।
भागिनेयसुताद्याश्च पुरुषा बान्धवाः स्मृताः ॥ १५७ ॥

भ्रातृपुत्त्रस्य पुत्त्राद्यास्ते पुनर्ज्ञातयः स्मृताः ।
गुरुपुत्त्रस्तथा भ्राता पोष्यः परमबान्धवः ॥ १५८ ॥
गुरुकन्या च भगिनी पोष्या मातृसमा मुने ।
पुत्त्रस्य च गुरुर्भ्राता पोष्यः सुस्निग्धबान्धवः ॥ १५९ ॥
पुत्त्रस्य श्वशुरो भ्राता बन्धुर्वैवाहिकः स्मृतः ।
कन्यायाः श्वशुरे चैव तत्सम्बन्धः प्रकीर्त्तितः ॥ १६० ।
गुरुश्च कन्यकायाश्च भ्राता सुस्निग्धबान्धवः ।
गुरुश्वशुरभ्रातॄणां गुरुतुल्यः प्रकीर्त्तितः ॥ १६१ ॥
बन्धुता येन सार्द्धञ्च तन्मित्रं परिकीर्त्तितम् ।
मित्रं सुखप्रदं ज्ञेयं दुःखदो रिपुरुच्यते ॥ १६२ ॥
बान्धवो दुःखदो दैवात् निःसम्बन्धो सुखप्रदः ।
सम्बन्धास्त्रिविधाः पुंसां विप्रेन्द्र जगतीतले ॥ १६३ ॥
विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्त्तितः ।
मित्रन्तु प्रीतिजं ज्ञेयं स सम्बन्धः सुदुर्लभः ॥ १६४ ॥
मित्रमाता मित्रभार्य्या मातृतुल्या न संशयः ।
मित्रभ्राता मित्रपिता पितृभ्रातृसमो नृणाम् ॥१६५॥
चतुर्थं नाम सम्बन्धमित्याह कमलोद्भवः ।
जारश्चोपपतिर्बन्धुर्दुष्टासम्भोगकर्त्तरि ॥ १६६ ॥
उपपत्न्यां नवज्ञा च प्रेयसी चित्तहारिणी ।
स्वामितुल्यश्च जारश्च नवज्ञा गृहिणीसमा ॥ १६७ ॥
सम्बन्धो देशभेदे च सर्वदेशे विगर्हितः ।
अवैदिको निन्दितस्तु विश्वामित्रेण निर्मितः ॥ १६८ ॥
दुस्त्यजस्तु महद्भिस्तु देशभेदे च सञ्चरेत् ।
अकीर्त्तिजनकः पुंसां योषिताञ्च विशेषतः ॥ १६९ ॥

तेजीयसां न दोषाय विद्यमाने युगे युगे ॥ १७० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौति-शौनक-
संवादे ब्रह्मखण्डे जातिसम्बन्धनिर्णयो
नाम दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

——oo——

शौनक उवाच ।

द्विजः सभार्य्यां संत्यज्य किञ्चकारावशेषतः ।
अश्विनौर्वा महाभाग किंनाम कस्य वंशजौ ॥ १ ॥

सौतिरुवाच ।

द्विजश्च सुतपा नाम भारद्वाजो महामुनिः ।
तपश्चकार कृष्णस्य लक्षवर्षं हिमालये ॥ २ ॥
महातपस्वी तेजस्वी प्रज्वलन् ब्रह्मतेजसा ।
ज्योतिर्दर्शनं कृष्णस्य गगने सहसा क्षणम् ॥ ३ ॥
वरं स वव्रे निर्लिप्तमात्मानं प्रकृतेः परम् ।
मा च मोक्षं ययाचे तं दास्यं भक्तिञ्च निश्चलाम् ॥ ४ ॥
बभूवाकाशवाणीति कुरु दारपरिग्रहम् ।
पश्चाद्दास्यं प्रदास्यामि भक्तिं भोगक्षये द्विज ॥ ५ ॥
पितॄणां मानसीं कन्यां ददौ तस्मै विधिः स्वयम् ।
तस्यां कल्याणमित्रश्च बभूव मुनिपुङ्गव ॥ ६ ॥
यस्य स्मरणमात्रेण न भवेत् कुलिशाद्भयम् ।
न द्रष्टव्यं बन्धुमात्रं नूनं तत्स्मरणाल्लभेत् ॥ ७ ॥

कल्याणमित्रजननीं परित्यज्य महामुनिः ।
शशाप सूर्य्यपुत्रञ्च यज्ञभाग्वर्ज्जितो भव ॥ ८ ॥
ससोदरश्चैवापूज्यो भवेति च सुराधम ।
व्याधिग्रस्तो जड़ाङ्गश्च भवतेऽकीर्त्तिमानिति ॥ ९ ॥
इत्युक्त्वा सुतपा गेहे प्रतस्थौ सूनुना सह ।
अश्विभ्यां सहितः सूर्य्यः प्रययौ च तदन्तिकम् ॥ १० ॥
पुत्राभ्यां व्याधियुक्ताभ्यां सूर्य्यस्त्रिजगताम्पतिः ।
मुनीन्द्रं च सुतपसं प्रतुष्टाव च शौनक ॥ ११ ॥

सूर्य्य उवाच ।

क्षमस्व भगवन् विप्र विष्णुरूप युगे युगे ।
मम पुत्रापराधञ्च भारद्वाज मुनीश्वर ॥ १२ ॥
ब्रह्मविष्णुमहेशाद्याः सुराः सर्वे च सन्ततम् ।
भुञ्जते विप्रदत्तन्तु फलपुष्पजलादिकम् ॥ १३ ॥
ब्राह्मणावाहिता देवाः शश्वद्विश्वेषु पूजिताः ।
न च विप्रात् परो देवो विप्ररूपी स्वयं हरिः ॥ १४ ॥
ब्राह्मणे परितुष्टे च तुष्टो नारायणः स्वयम् ।
नारायणे च सन्तुष्टे सन्तुष्टाः सर्वदेवताः ॥ १५ ॥
नास्ति गङ्गासमं तीर्थं न च कृष्णात् परः सुरः ।
न शङ्कराद्वैष्णवश्च न सहिष्णुर्धरापरा ॥ १६ ॥
न च सत्यात् परो धर्मो न साध्वी पार्वती परा ।
न दैवात् बलवान् कश्चित् नच पुत्रात् परः प्रियः ॥१७॥
न च व्याधिसमः शत्रुर्न च पूज्यो गुरोः परः ।
नास्ति मातृसमो बन्धुर्न च मित्रं पितुः परम् ॥१८॥

एकादशीव्रतपरा तपो नानशनात् परम् ।
परं सर्वधनं रत्नं विद्या रत्नात् परा यथा ॥ १९ ॥
सर्वाश्रमपरो विप्रो नास्ति विप्रसमो गुरुः ।
वेदवेदाङ्गसर्वार्थमित्याह कमलोद्भवः ॥ २० ॥
सूर्य्यस्य वचनं श्रुत्वा भारद्वाजो ननाम तम् ।
निरजौ चापि तत्पुत्त्रौ चकार तपसः फलात् ॥२१॥
पश्चाच्च तव पुत्त्रौ च यज्ञभाजौ भविष्यतः ।
इत्युक्ता तच्च सुतपा प्रणम्य भास्करं मुनिः ॥ २२ ॥
जगाम गङ्गां स त्वस्तो हरिसेवनतत्परः ।
पुत्त्राभ्यां सहितः सूर्य्यो जगाम निजमन्दिरम् ॥ २३ ॥
बभूवतुस्तौ पूज्यौ च यज्ञभाजौ द्विजाज्ञया ।
एतत् सूर्य्यकृतं विप्रस्तोत्रं यो मानवः पठेत् ।
विप्रपादप्रसादेन सर्वत्र विजयी भवेत् ॥ २४ ॥
ब्राह्मणेभ्यो नम इति प्रातरुत्थाय यः पठेत् ।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ २५ ॥
पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे ।
सागरे यानि तीर्थानि विप्रपादेषु तानि च ॥ २६ ॥
विप्रपादोदकं पीत्वा यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥ २७ ॥
विप्रपादोदकं पुण्यं भक्तियुक्तश्च यः पिबेत् ।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ २८ ॥
महारोगी यदि पिबेत् विप्रपादोदकं द्विज ।
मुच्यते सर्वरोगाच्च मासमेकन्तु भक्तितः ॥ २९ ॥
अविद्यो वा सविद्यो वा सन्ध्यापूतो हि यो द्विजः ।

स एव विष्णुसदृशो न हरौ विमुखो यदि ॥ ३० ॥
घ्नन्तं विप्रं शपन्तं वा न हन्यान्न च तं शपेत् ।
गोभ्यः शतगुणं पूज्यो हरिभक्तिश्च ब्राह्मणः ॥ ३१ ॥
पादोदकञ्च नैवेद्यं भुङ्क्ते विप्रस्य यो द्विज ।
नित्यं नैवेद्यभोजी यो राजसूयफलं लभेत् ॥ ३२ ॥
एकादश्यां न भुङ्क्ते यो नित्यं कृष्णं समर्चयेत् ।
तस्य पादोदकं प्राप्य स्थलं तीर्थं भवेत् ध्रुवम् ॥ ३३ ॥
यो भुङ्क्ते भोजनोच्छिष्टं नित्यं नैवेद्यभोजनम् ।
कृष्णदेवस्य पूतोऽसौ जीवन्मुक्तो महीतले ॥ ३४ ॥
अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम् ।
द्विजानां कुलजातानामित्याह कमलोद्भवः ॥ ३५ ॥
ब्रह्मा च ब्रह्मपुत्राश्च सर्वे विष्णुपरायणाः ।
ब्राह्मणस्तत्कुले जातो विमुखश्च हरौ कथम् ॥ ३६ ॥
पितॄर्मातामहादीनां संसर्गस्य गुरोश्च वा ।
दोषेण विमुखाः कृष्णे विप्रा जीवन्मृताश्च ते ॥ ३७ ॥
स किं गुरुः स किं तातः स किं पुत्त्रः स किं सखा ।
स किं राजा स किं बन्धुर्न दद्याद् यो हरौ मतिम् ॥ ३८
स वैष्णवाद्द्विजाद्विप्र चण्डालो वैष्णवो वरः ।
सगणः श्वपचो मुक्तो ब्राह्मणो नरकं व्रजेत् ॥ ३९ ॥
सन्ध्याहीनोऽशुचिर्नित्यं कृष्णे वा विमुखो द्विज ।
स एव ब्राह्मणाभासो विषहीनो यथोरगः ॥ ४० ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति ।
तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिः ॥ ४१ ॥
पुंसां मातामहादीनां शतैः सार्द्धं हरेः पदम् ।

प्रयाति वैष्णवः पुंसामात्मनः कुलकोटिभिः ॥ ४२ ॥
ब्रह्मक्षत्रियविट्शूद्राश्चतस्रो जातयो यथा।
स्वतन्त्रा जातिरेका च विश्वेषु वैष्णवाभिधा ॥ ४३ ॥
ध्यायन्ते वैष्णवाः शश्वद्गोविन्दपादपङ्कजम्।
ध्यायते तांश्च गोविन्दः शश्वत्तेषाञ्च सन्निधौ ॥ ४४ ॥
सुदर्शनं संनियोज्य भक्तानां रक्षणाय च।
तथापि नहि निश्चिन्तोऽवतिष्ठद्भक्तसन्निधौ ॥ ४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौतिशौनक-
संवादे ब्रह्मखण्डे विष्णुवैष्णवब्राह्मण-
प्रशंसा नामैकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

शौनक उवाच।

ऋषिवंशप्रसङ्गेन बभूवुर्विविधाः कथाः।
उपालम्भेन प्रस्तावात् कौतुकेन श्रुता मया ॥ १ ॥
प्रजा वा ससृजुः के वा ऊर्द्ध्वरेताश्च कश्चन।
पित्रा सह विरोधेन नारदः किञ्चकार सः ॥ २ ॥
पितुः शापेन पुत्रस्य किं बभूव विरोधतः।
पितुर्वा पुत्रशापेन सौते तत् कथ्यतां शुभम् ॥ ३ ॥

सौतिरुवाच ।

हंसी यतिश्चारणिश्च वोढुः पञ्चशिखस्तथा ।
अपान्तरतमाश्चैव सनकाद्याश्च शौनक ॥ ४ ॥
एतैर्विना च ब्रह्मो ब्रह्मपुत्राश्च सन्ततम् ।
सांसारिकाः प्रजावन्तो गुर्वाज्ञापरिपालकाः ॥ ५ ॥
अपूज्यः पुत्रशापेन स्वयं ब्रह्मा प्रजापतिः ।
तेनैव ब्रह्मणो मन्त्रं नोपासन्ते विपश्चितः ॥ ६ ॥
नारदो गुरुशापेन गन्धर्वश्च बभूव सः ।
कथयामि सुविस्तीर्णं तद्वृत्तान्तं निशामय ॥ ७ ॥
गन्धर्वराजः सर्वेषां गन्धर्वाणां वरो महान् ।
परमैश्वर्य्यसंयुक्तः पुत्रहीनो हि कर्मणा ॥ ८ ॥
गुर्वाज्ञया पुष्करे स परमेण समाधिना ।
तपश्चकार शम्भोश्च कृपणो दीनमानसः ॥ ९ ॥
शिवस्य कवचं स्तोत्रं मन्त्रञ्च द्वादशाक्षरम् ।
ददौ गन्धर्वराजाय वशिष्ठश्च कृपानिधिः ॥ १० ॥
जजाप परमं मन्त्रं दिव्यं वर्षशतं मुने ! ।
पुष्करे स निराहारः पुत्रदुःखेन तापितः ॥ ११ ॥
विरामे शतवर्षस्य ददर्श पुरतः शिवम् ।
भासयन्तं दशदिशो ज्वलन्तं ब्रह्मतेजसा ॥ १२ ॥
शश्वत्तेजःस्वरूपञ्च भगवन्तं सनातनम् ।
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकारकम् ॥ १३ ॥
तपोरूपं तपोवीजं तपस्याफलदं फलम् ।
शरणागतभक्ताय दातारं सर्वसम्पदाम् ॥ १४ ॥

त्रिशूलपट्टिशधरं वृषभस्थं दिगम्बरम् ।
शुद्धस्फटिकसङ्काशं त्रिनेत्रं चन्द्रशेखरम् ॥ १५ ॥
तप्तस्वर्णप्रभामुष्टजटाजालधरं वरम् ।
नीलकण्ठञ्च सर्वज्ञं नागयज्ञोपवीतकम् ॥ १६ ॥
संहर्त्तारञ्च सर्वेषां कालं मृत्युञ्जयं परम् ।
ग्रीष्ममध्याह्नमार्त्तण्डकोटिसङ्काशमीश्वरम् ॥ १७ ॥
तत्त्वज्ञानप्रदं शान्तं मुक्तिदं हरिभक्तिदम् ।
दृष्ट्वा ननाम सहसा गन्धर्वो दण्डवद् भुवि ॥ १८ ॥
वशिष्ठदत्तस्तोत्रेण तुष्टाव परमेश्वरम् ।
वरं वृणुष्वेति शिवस्तमुवाच कृपानिधिः ।
स ययाचे हरेर्भक्तिं पुत्रं परमवैष्णवम् ॥ १९ ॥
गन्धर्वस्य वचः श्रुत्वा जहास चन्द्रशेखरः ।
उवाच दीनं दीनेशो दीनबन्धुः सनातनम् ॥ २० ॥

श्रीमहादेव उवाच ।

कृतार्थस्त्वं वरादेकादन्यच्चर्वितचर्वणम् ।
गन्धर्वराज वृणुषे को वा त्वत्तोऽतिमङ्गले ॥ २१ ॥
यस्य भक्तिर्हरौ वत्स सुदृढ़ा सर्वमङ्गला ।
स समर्थः सर्वविश्वं पूतं कर्त्तुञ्च लीलया ॥ २२ ॥
आत्मनः कुलकोटिञ्च शतं मातामहस्य च ।
पुरुषाणां समुद्धृत्य गोलोकं याति निश्चितम् ॥ २३ ॥
त्रिविधानि च पापानि कोटिजन्मार्जितानि च ।
निहत्य पुण्यभोगञ्च हरिदास्यं लभेद् ध्रुवम् ॥ २४ ॥
तावत्पत्नी सुतस्तावत् तावदैश्वर्य्यमीप्सितम् ।
सुखं दुःखं नृणां तावत् यावत् कृष्णे न मानसम् ॥२५

कृष्णे मनसि सञ्जाते भक्तिखड्गो दुरत्ययः ।
नराणां कर्मवृक्षाणां मूलच्छेदं करोत्यहो ॥ २६ ॥
भवेद्येषां सुकृतिनां पुत्राः परमवैष्णवाः ।
कुलकोटिञ्च तेषां ते उद्धरन्त्यवलीलया ॥ २७ ॥
चरितार्थः पुमानेकाद्वरमिच्छुर्वराद्दहो ।
किं वरेण द्वितीयेन पुंसां दृप्तिर्न मङ्गले ॥ २८ ॥
धनं सञ्चितमस्माकं वैष्णवानां सुदुर्लभम् ।
श्रीकृष्णे भक्तिदास्यञ्च न वयं दातुमुत्सुकाः ॥ २९ ॥
वरयान्यं वरं वत्स यत्ते मनसि वाञ्छितम् ।
इन्द्रत्वममरत्वं वा ब्रह्मत्वं लभ दुर्लभम् ॥ ३० ॥
सर्वसिद्धिं महायोगं ज्ञानं मृत्युञ्जयादिकम् ।
सुखेन सर्वं दास्यामि हरिदास्यं त्यज क्षम ॥ ३१ ॥
शङ्करस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुकः ।
उवाच दीनो दीनेशं दातव्यं सर्वसम्पदाम् ॥ ३२ ॥

गन्धर्व उवाच ।

यच्चक्षुःपतनेनैव ब्रह्मणः पतनं भवेत् ।
तद् ब्रह्मत्वं स्वप्नतुल्यं कृष्णभक्तो न चेच्छति ॥ ३३ ॥
इन्द्रत्वममरत्वं वा सिद्धियोगादिकं शिव ।
ज्ञानं मृत्युञ्जयाद्यं वा न हि भक्तस्य वाञ्छितम् ॥३४॥
सालोक्यसार्ष्टिसामीप्यसायुज्यं श्रीहरेरपि ।
तत्र निर्वाणमोक्षञ्च न हि वाञ्छन्ति वैष्णवाः ॥ ३५ ॥
शश्वत्तत्सुदृढा भक्तिर्हरिदास्यं सुदुर्लभम् ।
स्वप्ने जागरणे भक्ता वाञ्छन्त्येवं वरं वरम् ॥ ३६ ॥

तद्दास्यं वैष्णवसुतं देहि कल्पतरो वरम् ।
त्वां प्राप्य लभते तुष्टं वरमन्यं स र्वरः ॥ ३७ ॥
न दास्यसीदं चेच्छम्भो वरं दुष्कृतिनञ्च माम् ।
हत्वा हि स्वशिरश्छेदं प्रदास्यामि हुताशने ॥ ३८ ॥
गन्धर्ववचनं श्रुत्वा तमुवाच कृपानिधिः ।
भक्तं दीनञ्च भक्तेशो भक्तानुग्रहकारकः ॥ ३९ ॥

श्रीशङ्कर उवाच ।

हरिभक्तिं हरेर्दास्यं पुत्त्रं परमवैष्णवम् ।
चिरायुषञ्च गुणिनं शश्वत्सुस्थिरयौवनम् ॥ ४० ॥
ज्ञानिनं सुन्दरवरं गुरुभक्तं जितेन्द्रियम् ।
गन्धर्वराज प्रवरं वरेमं लभ मा खिद ॥ ४१ ॥
इत्युक्त्वा शङ्करस्तस्माज्जगाम स्वालयं मुने ।
गन्धर्वराजः सन्तुष्ट आजगाम स्वमन्दिरम् ॥ ४२ ॥
प्रफुल्लमानसाः सर्वे मानवाः सिद्धकर्मणः ।
नारदस्तस्य भार्य्यायां लेभे जन्म च भारते ॥ ४३ ॥
सुषाव पुत्त्रं सा वृद्धा पर्वते गन्धमादने ।
गुरुर्वशिष्ठो भगवान् नाम चक्रे यथोचितम् ॥ ४४ ॥
बालकस्य च तस्यैव मङ्गलं मङ्गले दिने ।
उपशब्दोऽधिकार्थश्च पूज्ये च बर्हणः पुमान् ।
पूज्यानामधिको बालस्तेनोपबर्हणाभिधः ॥ ४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौति-शौनक-
संवादे ब्रह्मखण्डे नारदजन्मकथनं नाम
द्वादशोऽध्यायः ।

# त्रयोदशोऽध्यायः ।

सौतिरुवाच ।

पुत्रोत्सवे च रत्नानि धनानि विविधानि च ।
गन्धर्वराजः प्रददौ ब्राह्मणेभ्यो मुदान्वितः ॥ १ ॥
उपबर्हणस्तु कालेन हरेर्मन्त्रं सुदुर्लभम् ।
वशिष्ठद्वारा सम्प्राप्य चकार दुष्करं तपः ॥ २ ॥
एकदा गण्डकीतीरे तत्र सम्प्राप्तयौवनम् ।
गन्धर्वपत्न्यो दृष्ट्वैर्मूर्च्छामापुश्च तत्क्षणम् ॥ ३ ॥
ततस्तीव्रं तपः कृत्वा प्राणान् संत्यज्य योगतः ।
पश्चागत्वा बभूवुश्च कन्याश्चित्ररथस्य च ॥ ४ ॥
उपबर्हणगन्धर्वं ताश्च तं वव्रिरे पतिम् ।
मुदा माला ददुस्तस्मै कामुक्यः पितुराज्ञया ॥ ५ ॥
गृहीत्वा ताश्च गन्धर्वो युवा सुस्थिरयौवनः ।
दिव्यं विलक्षवर्षञ्च रेमे रहसि कामुकः ॥ ६ ॥
ततोऽपि सुचिरं राज्यं कृत्वा ताभिः सहानिशम् ।
जगाम ब्रह्मणः स्थानं हरिगाथां जगौ मुने ॥ ७ ॥
दृष्ट्वा स रम्भारम्भोरुनर्त्तने कठिनं स्तनम् ।
बभूव स्खलनं तस्य गन्धर्वस्य महात्मनः ॥ ८ ॥
द्रुतं तत्याज सङ्गीतं मूर्च्छां प्राप सभातले ।
उच्चैः प्रजहसुर्देवा ब्रह्मा कोपात् शशाप तम् ॥ ९ ॥

व्रज त्वं शूद्रयोनिञ्च गान्धर्वीं तनुमुत्सृज ।
काले वैष्णवसंसर्गात् मत्पुत्रस्त्वं भविष्यसि ॥ १० ॥
विना विपत्तेर्महिमा पुंसां नैव भवेत् सुत ।
सुखं दुःखञ्च सर्वेषां क्रमेण प्रभवेदिति ॥ ११ ॥
इत्येवमुक्त्वा स विधिर्जगाम पुष्करात् गृहम् ।
उपबर्हणगन्धर्वस्तत्याज तां तनुं तदा ॥ १२ ॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धमाज्ञाख्यञ्चेति भित्त्वा षट्चक्रमेव च ॥ १३ ॥
इड़ां सुसुम्नां मेधाञ्च पिङ्गलां प्राणहारिणीम् ।
सर्वज्ञानप्रदाञ्चैव मनःसंयमनीं तथा ॥ १४ ॥
विशुद्धाञ्च निरुद्धाञ्च वायुसञ्चारिणीन्तथा ।
तेजःशुष्ककरीञ्चैव बलपुष्टिकरीन्तथा ॥ १५ ॥
बुद्धिसञ्चारिणीञ्चैव ज्ञानजृम्भनकारिणीम् ।
सर्वप्राणहराञ्चैव पुनर्जीवनकारिणीम् ॥ १६ ॥
एताः षोड़शधा नाड़ीर्भित्त्वा च हंसमेव च ।
मनसा सहितं ब्रह्मरन्ध्रमानीय योगतः ॥ १७ ॥
स्थित्वा मुहूर्त्तमात्मानमात्मन्येव युयोज ह ।
जातिस्मरश्च योगीन्द्रः संप्राप ब्रह्म शौनक ! ॥ १८ ॥
वीणां त्रितन्त्रीं दुष्प्राप्यां वामस्कन्धे निधाय च ।
शुद्धस्फटिकमालाञ्च विधृत्य दक्षिणे करे ॥ १९ ॥
संजल्पन् परमं ब्रह्म वेदसारं परात्परम् ।
परं निस्तारबीजञ्च कृष्ण इत्यक्षरद्वयम् ॥ २० ॥
प्राच्यां कृत्वा शिरःस्थानं पश्चिमे चरणद्वयम् ।
निधाय दर्भशयने शयानः पुरुषो यथा ॥ २१ ॥

गन्धर्वराजस्तं दृष्ट्वा भार्य्यया सह तत्क्षणम् ।
योगेन ब्रह्म सम्प्राप श्रीकृष्णं मनसा स्मरन् ॥ २२ ॥
पत्न्यश्च बान्धवाः सर्वे विलप्य रुरुदुर्भृशम् ।
जग्मुः क्रमेण शोकार्त्ता मोहिता विष्णुमायया ॥२३॥
पञ्चाशद्योषितां मध्ये प्रधाना महिषी च या ।
साध्वी मालावती नाम्ना परमा प्रेयसी वरा ॥ २४ ॥
उच्चैरुरोद सा तीव्रं कान्तं कृत्वा च वक्षसि ।
इत्युवाच च शोकार्त्ता कान्तं संबोध्य एव च ॥ २५ ॥

मालावत्युवाच ।

हे नाथ रमणश्रेष्ठ विदग्धरसिकेश्वर ।
दर्शनं देहि मां बन्धो ! निमग्नां शोकसागरे ॥ २६ ॥
विश्रम्भके सुवसने रम्ये चन्दनकानने ।
पुष्पभद्रानदीतीरे पुष्पोद्याने मनोहरे ॥ २७ ॥
चन्दनाचलसान्निध्ये चारुचन्दनकानने ।
पुष्पचन्दनतल्पे च चन्दनानिलवासिते ॥ २८ ॥
गन्धमादनशैलैकदेशे रम्ये नदीतटे ।
पुंस्कोकिलनिनादे च मालतीजलशालिनि ॥ २९ ॥
श्रीशैले श्रीवने दिव्ये श्रीनिवासनिषेविते ।
श्रीयुक्ते श्रीपद्माम्भोजे पूतेऽच्युतकृते शुभे ॥ ३० ॥
पुरा या या कृता क्रीडा वसन्ते रहसि त्वया ।
मया च दुर्हृदा सार्द्धं तया च दूयते मनः ॥ ३१ ॥
सुधातुल्येन वचसा सिक्ताहञ्च पुरा त्वया ।
दूयते सततं तेन परमात्मातिदारुणम् ॥ ३२ ॥

साधुना सह संसर्गो वैकुण्ठादपि दुर्लभः ।
अहो ततोऽतिविच्छेदो मरणादपि दुष्करः ॥ ३३ ॥
तस्मात्तेषाञ्च विच्छेदः साधुशोककरः परः ।
ततोऽपि बन्धुविच्छेदः शोकः परमदारुणः ॥ ३४ ॥
ततोऽपत्यवियोगो हि मरणादतिरिच्यते ।
सर्वस्मात् पतिभेदो हि तत्परं नास्ति सङ्कटम् ॥ ३५ ॥
शयने भोजने स्नाने स्वप्ने जागरणेऽपि च ।
स्वामिविच्छेददुःखञ्च नूतनं च दिने दिने ॥ ३६ ॥
सर्वशोकं विस्मरेत् स्त्री स्वामिसंयोगमात्रतः ।
बन्धुमन्यं न पश्यामि यं दृष्ट्वा विस्मरेत् पतिम् ॥ ३७ ॥
नातो विशिष्टं पश्यामि बान्धवं स्वामिना विना ।
साध्वीनां कुलजातानामित्याह कमलोद्भवः ॥ ३८ ॥
हे दिगीशाश्च दिक्पाला हे धर्म हे प्रजापते ।
गिरीश कमलाकान्त पतिदानञ्च देहि मे ॥ ३९ ॥
इत्युक्ता विरहार्त्ता सा कन्या चित्ररथस्य च ।
मूर्च्छां संप्राप तत्रैव दुर्गमे गहने वने ॥ ४० ॥
विचेतना तत्र तस्थौ कान्तं कृत्वा स्ववक्षसि ।
परिपूर्णं दिवानक्तं सर्वैर्देवैश्च रक्षिता ॥ ४१ ॥
प्रभाते चेतनां प्राप्य विललाप भृशं मुहुः ।
इत्युवाच पुनस्तत्र हरिं संबोध्य सा सती ॥ ४२ ॥

मालावत्युवाच ।

हे कृष्ण जगतां नाथ नाथ नाहं जगद्बहिः ।
त्वमेव जगतां पाता मां न पाहि कथं प्रभो ॥ ४३ ॥

अयं भर्त्तास्य भार्य्याहं ममेति तव मायया ।
त्वमेव सम्भवो भर्त्ता सर्वेषां सर्वकारणः ॥ ४४ ॥
गन्धर्वः कर्मणा कान्तः कान्ताहमस्य कर्मणा ।
क्व गतः कर्मभोगान्ते कुत्र संस्थाप्य मां प्रियाम् ॥ ४५ ॥
को वा कस्याः पतिः पुत्त्रः का वा कस्य प्रिया प्रभो ।
संयुनक्ति विधाता च वियुनक्ति च कर्मणा ॥ ४६ ॥
संयोगे परमानन्दो वियोगे प्राणसङ्कटम् ।
अस्वज्जगति मूर्खस्य नात्मारामस्य निश्चितम् ॥ ४७ ॥
नश्वरो विषयः सत्यं भोगश्च बान्धवो भुवि ।
स्वयं त्यक्तः सुखायैव दुःखाय त्याजितः परैः ॥ ४८ ॥
तस्मात् सन्तः स्वयं त्यक्त्वा परमैश्वर्य्यमीप्सितम् ।
ध्यायन्ते सततं कृष्णपादपद्मं निरापदम् ॥ ४९ ॥
सर्वत्र ज्ञानिनः सन्तः का स्त्री ज्ञानवती भुवि ।
ततो मह्यं विमूढायै दातुमर्हति वाञ्छितम् ॥ ५० ॥
न मे वाञ्छामरत्वे च शक्रत्वे मोक्षवर्त्मनि ।
इमं कान्तं वरं देहि चतुर्वर्गकरं परम् ॥ ५१ ॥
यावती कामिनी जातिर्जगत्यां जगदीश्वर ।
कस्यैचिन्नहि दत्तश्च तेन धात्रेदृशः पतिः ॥ ५२ ॥
तस्मै दत्ता गुणाः सर्वे रूपाणि विविधानि च ।
सुशीलानि च सर्वाणि चामरत्वं विना हरे ॥ ५३ ॥
रूपेण च गुणेनैव तेजसा विक्रमेण च ।
ज्ञानेन शान्त्या सन्तुष्ट्या हरितुल्यः प्रभुर्मम ॥ ५४ ॥
हरिभक्तो हरिसमो गाम्भीर्य्ये सागरो यथा ।
दीप्तिमान् सूर्य्यतुल्यश्च शुद्धो वह्निसमस्तथा ॥ ५५ ॥

चन्द्रतुल्यः सुदृश्यश्च कन्दर्पसमसुन्दरः ।
बुद्ध्या बृहस्पतिसमः काव्ये कविसमस्तथा ॥ ५६ ॥
वाणी च सर्वशास्त्रज्ञः प्रतिभायां भृगोरिव ।
कुवेरतुल्यो धनवान् महान् दाता मनोरिव ॥ ५७
धर्मे धर्मसमो धर्मी सत्ये सत्यव्रताधिकः ।
कुमारतुल्यस्तपसा स्वाचारो ब्रह्मणा समः ॥ ५८ ॥
ऐश्वर्य्ये शक्रतुल्यश्च सहिष्णुः पृथिवीसमः ।
एवम्भूतो मृतः कान्तः प्राणा यान्ति न मे कथम् ॥५९॥
अरे सुरा यज्ञभाजो घृतं भोक्तुं क्षमा भुवि ।
क्षणेनायज्ञभाजश्च करिष्यामि च लीलया ॥ ६० ॥
नारायण जगत्कान्त नाहमेव जगद्वहिः ।
शीघ्रं जीवय मत्कान्तमन्यथा त्वां शपाम्यहम् ॥ ६१ ॥
प्रजापते पुत्त्रशापात्त्वमपूज्यो महीतले ।
तवैवानधिकारित्वं करिष्याम्यधुना भवे ॥ ६२ ॥
हे शम्भो ज्ञानलोपं ते करिष्यामि शपेन च ।
धर्मलोपञ्च धर्मस्य करिष्याम्यवलीलया ॥ ६३ ॥
यमाधिकारं दूरञ्च करिष्यामि न संशयः ।
सत्यं कालं शपिष्यामि मृत्युकन्यां सुनिष्ठुराम् ॥ ६४ ॥
शपामि सर्वानत्रैव जरां व्याधिं विनाऽधुना ।
व्याधिना जरया मृत्युर्नह्यभूच्च पतेर्मम ॥ ६५ ॥
इत्युक्त्वा कौशिकीतीरं जगाम शप्तुमेव तान् ।
मालावती महासाध्वी शवं कृत्वा स्ववक्षसि ॥ ६६ ॥
तां शप्तुमुद्यतां दृष्ट्वा ब्रह्मा देवपुरोगमः ।
जगाम शरणं विष्णुं तीरं क्षीरपयोनिधेः ॥ ६७ ॥

तत्र स्नात्वा च तुष्टाव परमात्मानमीश्वरम् ।
विष्णुं ब्रह्मा जगत्कान्तमित्युवाच ह भीतवत् ॥ ६८ ॥

ब्रह्मोवाच ।

उपबर्हणपत्नी सा कन्या चित्ररथस्य च ।
कान्तहेतोश्च मां देवान् शपित्त्वं रक्ष माधव ॥ ६९ ॥
स्मरन्ति साधवः सन्तो जपन्ति योगिनो मुदा ।
स्वप्ने जागरणे चैव सर्वकार्य्येषु माधवम् ॥ ७० ॥
शरणागतदीनार्त्तपरित्राणपरायण ।
रक्ष रक्ष हृषीकेश व्रजामः शरणं वयम् ॥ ७१ ॥
पूजा मे पुत्त्रशापेन विहता साम्प्रतं प्रभो ।
अधिकारहतं माञ्च करोति मालती सती ॥ ७२ ॥
सर्वाधिकारो ब्रह्माण्डे त्वया दत्तः पुरा प्रभो ।
सम्पदेताद्दशी नाथ यास्यत्येवाधुना मम ॥ ७३ ॥

महादेव उवाच ।

त्वया दत्तं महाज्ञानं गुप्तं सर्वेषु दुर्लभम् ।
शतमन्वन्तरतपःफलेन पुष्करे पुरा ॥ ७४ ॥
ऐश्वर्य्यं वा धनं वापि विद्या वा विक्रमोऽथवा ।
ज्ञानस्य परमार्थस्य कलां नार्हति षोड़शीम् ॥ ७५ ॥
सर्वाज्ञातं स्वगुप्तमतीवदुर्लभं परम् ।
मम तत्त्वज्ञानरत्नं शापेन याति योषितः ॥ ७६ ॥
अहो पतिव्रतातेजः सर्वेषां तेजसां परम् ।
तेजोऽनलेन दग्धं मां रक्ष रक्ष हरे हरे ॥ ७७ ॥

धर्म उवाच ।

सर्वरत्नात् परं रत्नं धर्म एव सनातनः ।

यास्यत्येवंविधो धर्मस्त्वया दत्तः पुरा प्रभो ॥ ७८ ॥
सप्तमन्वन्तरतपःफलेन परमेश्वर ।
प्राप्तो धर्मोऽधुना याति शापेन योषितः प्रभो ॥ ७९ ॥

देवा ऊचुः ।

यज्ञभाजो घृतभुजो वयमेव त्वया कृताः ।
योषित्शापेन तत् सर्वमधुना याति माधव ॥ ८० ॥
इत्युक्त्वा संयताः सर्वे तस्थुस्तत्र भयार्दिताः ।
एतस्मिन्नन्तरेऽकस्माद्वाग् बभूवाशरीरिणी ॥ ८१ ॥
यूयं गच्छत तन्मूलं विप्ररूपी जनार्दनः ।
पश्चाद्यास्यति शान्त्यर्थमिति वो रक्षणाय च ॥ ८२ ॥
श्रुत्वा तद्वचनं देवाः प्रहृष्टमानसोन्मुखाः ।
जग्मुर्मालावतीस्थानं कौशिकीतीरमीश्वराः ॥ ८३ ॥
तामेव ददृशुर्देवा देवीं मालावतीं सतीम् ।
रत्नसारेन्द्रभूषाभिरुज्ज्वलां कमलाकलाम् ॥ ८४ ॥
वह्निशुद्धांशुकाधानां सिन्दूरविन्दुभूषिताम् ।
शरच्चन्द्रप्रभां शान्तां द्योतयन्तीं दिशस्त्विषा ॥ ८५ ॥
पतिसेवामहद्धर्मचिरसञ्चिततेजसा ।
प्रज्वलन्तीं सुप्रदीप्तशिखां वह्नेरिवोत्तमाम् ॥ ८६ ॥
योगासनं कुर्वतीञ्च शववक्षःस्थलस्थिताम् ।
सुरम्यां स्वामिनो वीणां बिभ्रतीं दक्षिणे करे ॥ ८७ ॥
तर्जन्यङ्गुष्ठकोटिभ्यां शुद्धस्फटिकमालिकाम् ।
भक्त्या स्नेहेन कान्तस्य बिभ्रतीं योगमुद्रया ॥ ८८ ॥
चारुचम्पकवर्णाभां बिम्बोष्ठीं रत्नमालिनीम् ।
यथा षोड़शवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥ ८९ ॥

दृढान्वितम्बभारार्त्तां पीनश्रोणिपयोधराम् ।
पश्यन्तीं शवमीशस्य शुभदृष्ट्या पुनः पुनः ॥ ८० ॥
एवम्भूताञ्च तां दृष्ट्वा देवास्ते विस्मयं ययुः ।
स्थगिताश्च क्षणं तत्र धार्म्मिका धर्मभीरवः ॥ ८१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे सौतिशौनकसंवादे
ब्रह्मखण्डे मालावतीविलापो नाम
त्रयोदशोऽध्यायः ।

## चतुर्दशोऽध्यायः ।

सौतिरुवाच ।

तत्र स्थित्वा क्षणं देवा ब्रह्मेशानपुरोगमाः ।
ययुर्मालावतीमूलं परं मङ्गलदायकाः ॥ १ ॥
मालावती सुरान् दृष्ट्वा प्रणनाम पतिव्रता ।
रुरोद कान्तं संस्थाप्य देवानां सन्निधौ मुने ॥ २ ॥
एतस्मिन्नन्तरे तत्र कश्चिद् ब्राह्मणबालकः ।
आजगाम सुराणाञ्च सभामतिमनोहरः ॥ ३ ॥
दण्डी छत्री शुक्लवासा विभ्रत्तिलकमुज्ज्वलम् ।
दीर्घपुस्तकहस्तश्च सुप्रशान्तश्च सस्मितः ॥ ४ ॥
चन्दनोच्चितसर्वाङ्गः प्रज्वलन् ब्रह्मतेजसा ।
सुरान् संभाष्य तत्रैव विस्मितान् विष्णुमायया ॥ ५ ॥

तत्रोवास सभामध्ये तारामध्ये यथा शशी ।
उवाच देवान् सर्वांश्च मालतीञ्च विचक्षणः ॥ ६ ॥

ब्राह्मण उवाच ।

कथमत्र सुराः सर्वे ब्रह्मेशानपुरोगमाः ।
स्वयं विधाता जगतां स्रष्टाऽत्र केन कर्म्मणा ॥ ७ ॥
सर्वब्रह्माण्डसंहर्त्ता शम्भुरत्र स्वयं विभुः ।
अहो त्रिजगतां साक्षी धर्म्मश्च सर्वकर्म्मणाम् ॥ ८ ॥
कथं रविः कथं चन्द्रः कथमत्र हुताशनः ।
कथं कालो मृत्युकन्या कथं वाऽत्र यमादयः ॥ ९ ॥
हे मालावति त्वत्क्रोड़े शवः कस्तेऽतिशुष्कितः ।
जीवितायाः कथं मूले योषितश्च पुमान् शवः ॥ १० ॥
इत्युक्त्वा तांश्च तां विप्रो विरराम सभातले ।
मालावती तं प्रणम्य समुवाच विचक्षणम् ॥ ११ ॥

मालावत्युवाच ।

आनन्दपूर्वकं वन्दे विप्ररूपं जनार्दनम् ।
तुष्टा देवा हरिस्तुष्टो यस्य पुष्पजलेन च ॥ १२ ॥
अवधानं कुरु विभो ! शोकार्त्ताया निवेदने ।
समा कृपा सतां शश्वत् योग्यायोग्ये कृपावताम् ॥ १३ ॥
उपबर्हणभार्य्याऽहं कन्या चित्ररथस्य च ।
सर्वे मालावतीं कृत्वा वदन्ति विप्रपुङ्गव ॥ १४ ॥
दिव्यं लक्षयुगं रम्ये स्थाने स्थाने मनोहरे ।
कृता क्रीड़ा च स्वच्छन्दमनेन स्वामिना सह ॥ १५ ॥
प्रिये स्नेहो हि साध्वीनां यावान् विप्रेन्द्र योषिताम् ।
सर्वं शास्त्रानुसारेण जानासि त्वं विचक्षण ॥ १६ ॥

अकस्मात् ब्रह्मणः शापात् प्राणांस्तत्याज मत्पतिः ।
देवानुद्दिश्य विलपे यथा जीवति मत्पतिः ॥ १७ ॥
स्वकार्य्यसाधने सर्वे व्यग्राश्च जगतीतले ।
भावाभावं न जानन्ति केवलं स्वार्थतत्पराः ॥ १८ ॥
सुखं दुःखं भयं शोकः सन्तापः कर्मणां नृणाम् ।
ऐश्वर्य्यं परमानन्दो जन्म मृत्युश्च मोक्षणम् ॥ १९ ॥
देवाश्च सर्वजनका दातारः कर्मणां फलम् ।
कर्त्तारः कर्मवृक्षाणां मूलच्छेदञ्च लीलया ॥ २० ॥
न हि देवात् परो बन्धुर्न हि देवात् परो बली ।
दयावान हि देवाच्च न च दाता ततः परः ॥ २१ ॥
सर्वान् देवानहं याचे पतिदानं ममेप्सितम् ।
धर्मार्थकाममोक्षाणां फलदांश्च सुरद्रुमान् ॥ २२ ॥
यदि दास्यन्ति देवा मे कान्तदानं यथेप्सितम् ।
भद्रं तदान्यथा तेभ्यो दास्यामि स्त्रीबधं ध्रुवम् ॥ २३ ॥
शपिष्यामि च सर्वांश्च दारुणं दुर्निवारकम् ।
दुर्निवार्य्यः सतीशापस्तपसा केन वार्य्यते ॥ २४ ॥
इत्युक्ता मालती साध्वी शोकार्त्ता सुरसंसदि ।
विरराम द्विजश्रेष्ठस्तामुवाच च शौनक ॥ २५ ॥

ब्राह्मण उवाच ।

कर्मणां फलदातारो देवाः सत्यञ्च मालति ! ।
न सद्यः सुचिरेणैव धान्यं कृषकवन्नृणाम् ॥ २६ ॥
गृही च कृषकद्वारा क्षेत्रे धान्तं वपेत् सति ! ।
तदङ्कुरो भवेत् काले काले वृक्षः फलत्यपि ॥ २७ ॥

काले सुपक्कं भवति काले प्राप्नोति तद् गृही ।
एवं सर्वं समुन्नेयं चिरेण कर्मणः फलम् ॥ २८ ॥
अष्टीं वपति संसारे गृहस्थो विष्णुमायया ।
काले तदङ्कुरो वृक्षः काले प्राप्नोति तत्फलम् ॥ २९ ॥
पुण्यवान् पुण्यभूमौ च करोति सुचिरन्तपः ।
तेषाञ्च फलदातारो देवाः सत्यं न संशयः ॥ ३० ॥
ब्राह्मणानां मुखे चेत्रे श्रेष्ठेऽनूषर एव च ।
यो यज्जुहोति भक्त्या च स तत् प्राप्नोति निश्चितम् ॥३१॥
न बलं न च सौन्दर्य्यं नैश्वर्य्यं न धनं सुतः ।
नैव स्त्री न च सत्कान्तः किम्भवेत् तपसा विना ॥३२॥
सेवते प्रकृतिं यो हि भक्त्या जन्मनि जन्मनि ।
स लभेत् सुन्दरीं कान्तां विनीताञ्च गुणान्विताम् ॥३३॥
श्रियञ्च निश्चलां पुत्त्रं पौत्त्रं भूमिं धनं प्रजाम् ।
प्रकृतेश्च वरेणैव लभेद्भक्तोऽवलीलया ॥ ३४ ॥
शिवं शिवस्वरूपञ्च शिवदं शिवकारणम् ।
ज्ञानानन्दं महात्मानं परं मृत्युञ्जयं परम् ॥ ३५ ॥
तमीशं सेवते यो हि भक्त्या जन्मनि जन्मनि ।
पुमान् प्राप्नोति सत्कान्तां कामिनी चापि सत्पतिम् ॥ ३६
विद्यां ज्ञानं सुकवितां पुत्त्रं पौत्त्रं परां श्रियम् ।
बलं धनं विक्रमञ्च लभेद्वरवरेण सः ॥ ३७ ॥
ब्रह्माणं भजते यो हि लभेत् सोऽपि प्रजां श्रियम् ।
विद्यामैश्वर्य्यमानन्दं वरेण ब्रह्मणो नरः ॥ ३८ ॥
यो नरो भजते भक्त्या दीननाथं दिनेश्वरम् ।
विद्यामारोग्यमानन्दं धनं पुत्रं लभेद् ध्रुवम् ॥ ३९ ॥

गणेश्वरं यो भजते देवदेवं सनातनम् ।
सर्वाग्रपूज्यं सर्वेशं भक्त्या जन्मनि जन्मनि ॥ ४० ॥
विघ्ननाशो भवेत्तस्य स्वप्ने जागरणेऽनिशम् ।
परमानन्दमैश्वर्य्यं पुत्रं पौत्रं धनं प्रजाः ॥ ४१ ॥
ज्ञानं विद्यां सुकवितां लभते तद्वरेण च ।
भजते यो हि विष्णुञ्च लक्ष्मीकान्तं सुरेश्वरम् ॥ ४२ ॥
वरार्थी चेत् लभेत् सर्वं निर्वाणमन्यथा ध्रुवम् ।
शान्तं निषेव्य पातारं सत्यं सत्यं लभेन्नरः ॥ ४३ ॥
सर्वं तपः सर्वधर्मं यशः कीर्त्तिमनुत्तमाम् ।
विष्णुं निषेव्य सर्वेशं यो मूढ़ो लभते वरम् ॥ ४४ ॥
विड़म्बितो विधात्राऽसौ मोहितो विष्णुमायया ।
माया नारायणीशाना सर्वप्रकृतिरीश्वरी ॥ ४५ ॥
सा कृपां कुरुते यस्य विष्णुमन्त्रं ददाति तम् ।
धर्मं यो भजते धर्मी सर्वधर्मं लभेद् ध्रुवम् ॥ ४६ ॥
इहलोके सुखं भुक्त्वा याति विष्णोः परं पदम् ।
यो यं देवं भजेद्भक्त्या स चान्ते लभते च तम् ॥ ४७ ॥
काले पश्चात्तेन सार्द्धं परं विष्णोः पदं लभेत् ।
श्रीकृष्णं भजते यो हि निर्गुणं प्रकृतेः परम् ॥ ४८ ॥
ब्रह्मविष्णुशिवादीनां सेव्यं वीजं परात्परम् ।
अक्षरं परमं ब्रह्म भगवन्तं सनातनम् ॥ ४९ ॥
साकारञ्च निराकारं ज्योतिः स्वेच्छामयं विभुम् ।
सर्वाधारञ्च सर्वेशं परमानन्दमीश्वरम् ॥ ५० ॥
निर्लिप्तं साक्षिरूपञ्च भक्तानुग्रहविग्रहम् ।
जीवन्मुक्तः स सत्यं हि न वरं लभते सुधीः ॥ ५१ ॥

स सर्वं मन्यते तुच्छं सालोक्यादि चतुष्टयम् ।
ब्रह्मत्वममरत्वं वा मोक्षं यत्तुच्छवत् सति ! ॥ ५२ ॥
ऐश्वर्य्यं लोष्ट्रतुल्यञ्च नश्वरं चैव मन्यते ।
इन्द्रत्वञ्च मनुत्वञ्च चिरजीवित्वमेव वा ॥ ५३ ॥
जलबुद्बुदवद् बुद्ध्या चातितुच्छं न गण्यते ।
स्वप्ने जागरणे वापि शश्वत् सेवाञ्च वाञ्छति ॥ ५४ ॥
दास्यं विना न याचेत श्रीकृष्णस्य पदं परम् ।
तत्प्रसादात् दृढ़ां भक्तिं लब्ध्वा पूर्णां निरन्तरम् ॥ ५५ ॥
परिपूर्णतमं ब्रह्म निषेव्य सुस्थिरः सदा ।
आत्मनः कुलकोटिञ्च शतं मातामहस्य च ॥ ५६ ॥
श्वशुरस्य शतं पूर्वमुद्धृत्य चावलीलया ।
दासं दासीं प्रसूं भार्य्यां पुत्रादपि परं शतम् ॥ ५७ ॥
उद्धरेत् कृष्णभक्तश्च गोलोकं याति निश्चितम् ।
तावद् गर्भे वसेत् कामी तावती यमयातना ॥ ५८ ॥
तावद् गृही च भोगार्थी यावत् कृष्णं न सेवते ।
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति ॥ ५९ ॥
यमस्तल्लिखनं दूरं करोति तत्क्षणं भिया ।
मधुपर्कादिकं ब्रह्मा पुरैव तन्नियोजयेत् ॥ ६० ॥
अहो विलङ्घ्य मल्लोकं मार्गेणानेन यास्यति ।
तस्य वै निष्कृतिर्नास्ति कल्पकोटिशतैरपि ॥ ६१ ॥
दुरितानि च भीतानि कोटिजन्मकृतानि च ।
तं विहाय पलायन्ते वैनतेयं यथोरगाः ॥ ६२ ॥
पुरातनं कृतं कर्म यद् यत्तस्य शुभाशुभम् ।
छिनत्ति कृष्णचक्रेण तीक्ष्णधारेण सन्ततम् ॥ ६३ ॥

तं विहाय जरा मृत्युर्याति चक्रभिया सति।
अन्यथा शतखण्डं तां कुरुते च सुदर्शनः॥ ६४॥
निःशङ्को याति गोलोकं विहाय मानवीं तनुम्।
गत्वा दिव्यां तनुं धृत्वा श्रीकृष्णं सेवते सदा॥ ६५॥
यावत् कृष्णो हि गोलोके तावद् भक्तो वसेत् सदा।
निमेषं मन्यते दासो नश्वरं ब्रह्मणो वयः॥ ६६॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे सौतिशौनक-
संवादे विष्णुमालतीसंवादो नाम
चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

---

ब्राह्मण उवाच।

केन रोगेण हि मृतोऽधुना साध्वि! तव प्रियः।
सर्वरोगचिकित्साञ्च जानामि च चिकित्सकः॥ १॥
मृततुल्यं मृतं रोगात् सप्ताहाभ्यन्तरे सति!।
महाज्ञानेन तं जीवं जीवयाम्यवलीलया॥ २॥
जरामृत्युं यमं कालं व्याधिमानीय तत्पुरः।
निबध्य दातुं शक्तोऽहं व्याधो बद्धा पशुं यथा॥ ३॥
यतो न सञ्चरेद् व्याधिर्देहेषु देहधारिणाम्।
व्याधीनां कारणं यद् यत् सर्वं जानामि सुन्दरि!॥ ४॥

यतो न सञ्चरेद् व्याधिर्वीजं दुष्टममङ्गलम् ।
तदुपायं विजानामि शास्त्रतत्त्वानुसारतः ॥ ५ ॥
यो वा योगेन खेदेन देहत्यागं करोति च ।
तस्य तं जीवनोपायं जानामि योगधर्मतः ॥ ६ ॥
ब्राह्मणस्य वचः श्रुत्वा स्फीता मालावती सती ।
सस्मिता स्निग्धचित्ता सा तमुवाच प्रहर्षिता ॥ ७ ॥

मालावत्युवाच ।

अहो श्रुतं किमाश्चर्य्यं वचनं बालवक्त्रतः ।
वयसाऽतिशिशुर्दृष्टो ज्ञानं योगविदां परम् ॥ ८ ॥
त्वया कृता प्रतिज्ञा च कान्तं जीवयितुं मम ।
विपरीतं न सद्वाक्यं तत्क्षणं जीवितः पतिः ॥ ९ ॥
जीवयिष्यति मत्कान्तं पश्चाद्वेदविदां वरः ।
यद् यत् पृच्छामि सन्देहात्तद्भवान् वक्तुमर्हति ॥ १० ॥
सभार्यां जीविते कान्ते तस्य तीव्रस्य सन्निधौ ।
त्वां हि प्रष्टुं न शक्ताहं विद्यमाने महीश्वरे ॥ ११ ॥
एते ब्रह्मादयो देवा विद्यमानाश्च संसदि ।
त्वञ्च वेदविदां श्रेष्ठो न च कश्चिन्महीश्वरः ॥ १२ ॥
नारीं रक्षति भर्त्ता चेत् न कोऽपि खण्डितुं क्षमः ।
शास्तिं करोति यदि स न कोऽपि रक्षिता भुवि ॥१३॥
एवं देवेषु नो शक्तिः शक्तौ वा ब्रह्मरुद्रयोः ।
स्त्रीपुम्भावश्च बोद्धव्यः स्वामी कर्त्ता च योषिताम् ॥१४॥
स्वामी कर्त्ता च हर्त्ता च शास्ता पोष्टा च रक्षिता ।
अभीष्टदेवः पूज्यश्च न गुरुः स्वामिनः परः ॥ १५ ॥

कन्या सत्कुलजाता या सा कान्तवशवर्त्तिनी ।
या स्वतन्त्रा च सा दुष्टा स्वभावात् कुलटा ध्रुवम् ॥१६॥
दुष्टा परपुमांसञ्च सेवते या नराधमा ।
सा निन्दति पतिं शश्वदसद्वंशप्रसूतिका ॥ १७ ॥
उपबर्हणभार्य्याहं कन्या चित्ररथस्य च ।
वधूर्गन्धर्वराजस्य कान्तभक्ता सदा द्विज ॥ १८ ॥
सर्वं कालयितुं शक्तस्त्वञ्च वेदविदां वर ।
कालं यमं मृत्युकन्यामदभ्यासं समानय ॥ १९ ॥
मालावतीवचः श्रुत्वा विप्रो वेदविदां वरः ।
सभामध्ये समाहूय तान् प्रत्यक्षं चकार ह ॥ २० ॥
ददर्श मृत्युकन्याञ्च प्रथमं मालती सती ।
कृष्णवर्णां घोररूपां रक्ताम्बरधरां वराम् ॥ २१ ॥
सस्मितां षड्भुजां शान्तां दयायुक्तां महासतीम् ।
कालस्य स्वामिनो वामे चतुःषष्टिसुतान्विताम् ॥ २२ ॥
कालं नारायणांशञ्च ददर्श सुरता सती ।
महोग्ररूपं विकटं ग्रीष्मसूर्य्यसमप्रभम् ॥ २३ ॥
षड्वक्त्रं षोड़शभुजं चतुर्विंशतिलोचनम् ।
षट्पादं कृष्णवर्णञ्च रक्ताम्बरधरं परम् ॥ २४ ॥
देवस्य देवं विकृतं सर्वसंहाररूपिणम् ।
कालाधिदेवं सर्वेशं भगवन्तं सनातनम् ॥ २५ ॥
ईषद्धास्यप्रसन्नास्यमक्षमालाकरं वरम् ।
जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् ॥ २६ ॥
सती ददर्श पुरतो व्याधिसंघान् सुदुर्जयान् ।
वयसाऽतिमहाष्टद्धान् स्तनन्धान् मातृसन्निधौ ॥ २७ ॥

स्थूलपादं कृष्णवर्णं धर्मिष्ठं रविनन्दनम् ।
जपन्तं परमं ब्रह्म भगवन्तं सनातनम् ॥ २८ ॥
धर्माधर्मविचारज्ञं परं धर्मस्वरूपिणम् ।
पापिनामपि शास्तारं ददर्श पुरतो यमम् ॥ २९ ॥
तांश्च दृष्ट्वा च निःशङ्का पप्रच्छ प्रथमं यमम् ।
मालावती महासाध्वी प्रहृष्टवदनेक्षणा ॥ ३० ॥

मालावत्युवाच ।

हे धर्मराज धर्मिष्ठ धर्मशास्त्रविशारद ।
कालव्यतिक्रमे कान्तं कथं हरसि मे विभो ॥ ३१ ॥

यम उवाच ।

अप्राप्तकालो म्रियते न कश्चिज्जगतीतले ।
ईश्वराज्ञां विना साध्वि नासृतं चालयाम्यहम् ॥ ३२ ॥
अहं कालो मृत्युकन्या व्याधयश्च सुदुर्जयाः ।
निषेकेण प्राप्तकालं कालयन्तीश्वराज्ञया ॥ ३३ ॥
मृत्युकन्या विचारज्ञा यं प्राप्नोति निषेकतः ।
तमहं कालयाम्येव पृच्छ तां केन हेतुना ॥ ३४ ॥

मालावत्युवाच ।

त्वमपि स्त्री मृत्युकन्या जानासि स्वामिवेदनम् ॥ ३५ ॥
कथं हरसि मत्कान्तं जीवितायां मयि प्रिये ॥ ३६ ॥

मृत्युकन्योवाच ।

पुरा विश्वसृजा सृष्टाऽप्यहमेवात्र कर्मणि ।
न च क्षमा परित्यक्तुं बहुना तपसा सति ॥ ३७ ॥
सती सतीनां मध्ये च काचित्तेजस्विनी वरा ।
मामेव भस्मसात् कर्त्तुं क्षमा यदि भवेद्भवे ॥ ३८ ॥

सर्वापच्छान्तिरेवेह तदा भवति सुन्दरि ।
पुत्राणां स्वामिनः पश्चात् भविता यद्भविष्यति ॥ ३९ ॥
कालेन प्रेरिताऽहञ्च मृत्युत्ता व्याधयश्च वै ।
न मत्सुतानां दोषश्च न च मे शृणु निश्चितम् ॥ ४० ॥
पृच्छ कालं महात्मानं धर्मज्ञं धर्मसंसदि ।
तदा यदुचितं भद्रे तत् करिष्यसि निश्चितम् ॥ ४१ ॥

मालावत्युवाच ।

हे काल कर्मणां साक्षिन् कर्मरूप सनातन ।
नारायणांशो भगवन् नमस्तुभ्यं पराय च ॥ ४२ ॥
कथं हरसि मत्कान्तं जीवितायां मयि प्रभो ।
जानासि सर्वदुःखञ्च सर्वज्ञस्त्वं कृपानिधे ॥ ४३ ॥

कालपुरुष उवाच ।

को वाऽहं को यमः का च मृत्युकन्या च व्याधयः ।
वयं भ्रमामः सततमीशाज्ञापरिपालकाः ॥ ४४ ॥
यस्य स्रष्टा च प्रकृतिर्ब्रह्मविष्णुशिवादयः ।
सुरा मुनीन्द्रा मनवो मानवाः सर्वजन्तवः ॥ ४५ ॥
ध्यायन्ति तत्पदाम्भोजं योगिनश्च विचक्षणाः ।
जपन्ति शश्वन्नामानि पुण्यानि परमात्मनः ॥ ४६ ॥
यद्भयाद् वाति वातोऽयं सूर्य्यस्तपति यद्भयात् ।
स्रष्टा ब्रह्माज्ञया यस्य पाता विष्णुर्यदाज्ञया ॥ ४७ ॥
संहर्त्ता शङ्करः सर्वजगतां यस्य शासनात् ।
धर्मश्च कर्मणां साक्षी यस्याज्ञापरिपालकः ॥ ४८ ॥
राशिचक्रं ग्रहाः सर्वे भ्रमन्ति यस्य शासनात् ।
दिगीशाश्चैव दिक्पाला यस्याज्ञापरिपालकाः ॥ ४९ ॥

यस्याज्ञया च तरवः पुष्पाणि च फलानि च।
बिभ्रत्येव ददत्येव काले मालावतीसति ॥ ५० ॥
यस्याज्ञया जलाधारा सर्वाधारा वसुन्धरा।
क्षमावती च पृथिवी कम्पिता च भयेन च ॥ ५१ ॥
सहसा मोहिता माया मायया यस्य सन्ततम्।
सर्वप्रसूर्या प्रकृतिः सा भीता यद्भयादहो ॥ ५२ ॥
यस्यान्तं न विदुर्वेदा वस्तूनां भावगा अपि।
पुराणानि च सर्वाणि यस्यैव स्तुतिपाठकाः ॥ ५३ ॥
यस्य नाम विधिर्विष्णुः सेवते सुमहान् विराट्।
षोड़शांशो भगवतः स एव तेजसो विभोः ॥ ५४ ॥
सर्वेश्वरः कालकालो मृत्योर्मृत्युः परात्परः।
सर्वविघ्नविनाशाय तं कृष्णं परिचिन्तय ॥ ५५ ॥
सर्वाभीष्टञ्च भर्त्तारं प्रदास्यति कृपानिधिः।
इमे यत्प्रेरिताः सर्वे स दाता सर्वसम्पदाम् ॥ ५६ ॥
इत्युक्त्वा कालपुरुषो विरराम च शौनक।
कथां कथितुमारेभे पुनरेव तु ब्राह्मणः ॥ ५७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे
मालावतीकालपुरुषसंवादे
पञ्चदशोऽध्यायः।

———

अहं नारायणं कान्तं शान्तं सुन्दरविग्रहम् ।
साम्प्रतं लब्धुमिच्छामि वरमेवञ्च देहि मे ॥ २९ ॥

ब्रह्मोवाच ।

सुदामा नाम गोपश्च श्रीकृष्णाङ्गसमुद्भवः ।
तदंशश्चातितेजस्वी ललाभ जन्म भारते ॥ ३० ॥
साम्प्रतं राधिकाशापाद्दनुवंशसमुद्भवः ।
शङ्खचूड़ इति ख्यातस्त्रैलोक्येन च तत्परः ॥ ३१ ॥
गोलोके त्वां पुरा दृष्ट्वा कामोन्मथितमानसः ।
विलङ्घितुं न शशाक राधिकायाः प्रभावतः ॥ ३२ ॥
स च जातिस्मरस्तस्मात्त्वां ललाभ वरेण च ।
जातिस्मरापि त्वमपि सर्वं जानासि सुन्दरि ॥ ३३ ॥
अधुना तस्य पत्नी च भव भाविनि शोभने ।
पश्चान्नारायणं कान्तं शान्तमेव लभिष्यसि ॥ ३४ ॥
शापान्नारायणस्यैव कलया दैवयोगतः ।
भविष्यसि वृक्षरूपा त्वं पूता विश्वपावनी ॥ ३५ ॥
प्रधाना सर्वपुष्पाणां विष्णुप्राणाधिका भवेत् ।
त्वया विना च सर्वेषां पूजा च विफला भवेत् ॥ ३६ ॥
वृन्दावने वृक्षरूपा नाम्ना वृन्दावनीति च ।
तत्पत्रैर्गोपिका गोपाः पूजयिष्यन्ति माधवम् ॥ ३७ ॥
वृक्षाधिदेवीरूपेण सार्द्धं कृष्णेन सन्ततम् ।
विहरिष्यसि गोपेन स्वच्छन्दं मद्वरेण च ॥ ३८ ॥
इत्येवं वचनं श्रुत्वा सस्मिता हृष्टमानसा ।
प्रणनाम च ब्रह्माणं तञ्च किञ्चिदुवाच ह ॥ ३९ ॥

तुलस्युवाच ।

यथा मे द्विभुजे कृष्णे वाञ्छा च श्यामसुन्दरे ।
सत्यं ब्रवीमि हे तात न तथा च चतुर्भुजे ॥ ४० ॥
मद्दतदृष्टश्च गोविन्दे दैवात् शृङ्गारभङ्गतः ।
गोविन्दस्यैव वचनात् प्रार्थयामि चतुर्भुजम् ॥ ४१ ॥
तत्प्रसादेन गोविन्दं पुनरेव सुदुर्लभम् ।
ध्रुवमेवं लभिष्यामि राधाभीतिं प्रमोचय ॥ ४२ ॥

ब्रह्मोवाच ।

गृहाण राधिकामन्त्रं ददामि षोड़शाक्षरम् ।
तस्याश्च प्राणतुल्या त्वं मद्वरेण भविष्यसि ॥ ४३ ॥
शृङ्गारं युवयोर्गोप्यमाज्ञास्यति च राधिका ।
राधासमा त्वं सुभगा गोविन्दस्य भविष्यसि ॥ ४४ ॥
इत्येवमुक्त्वा दत्त्वा च देव्याश्च षोड़शाक्षरम् ।
मन्त्रं तस्यै जगद्धाता स्तोत्रञ्च कवचं परम् ॥ ४५ ॥
सर्वं पूजाविधानञ्च पुरश्चर्याविधिक्रमम् ।
परं शुभाशिषं कृत्वा सोऽन्तर्द्धानञ्चकार ह ॥ ४६ ॥
सा च ब्रह्मोपदेशेन पुण्ये बदरिकाश्रमे ।
जजाप परमं मन्त्रं यद्दिष्टं पूर्वजन्मनः ॥ ४७ ॥
दिव्यं द्वादशवर्षञ्च पूजाञ्चैव चकार सा ।
बभूव सिद्धा सा देवी तत्प्रत्यादेशमाप च ॥ ४८ ॥
सिद्धे तपसि मन्त्रे च वरं प्राप्य यथेप्सितम् ।
बुभुजे च महाभागं यद्विश्वेषु सुदुर्लभम् ॥ ४९ ॥
प्रसन्नमानसा देवी तत्याज तपसः क्लमम् ।
सिद्धे फले नराणाञ्च दुःखञ्च सुखमुत्तमम् ॥ ५० ॥

भुक्त्वा पीत्वा च सन्तुष्टा शयनञ्च चकार सा ।
तल्पे मनोरमे तत्र पुष्पचन्दनचर्चिते ॥ ५१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे तुलस्युपाख्याने तुलसीवर-
प्रदानं नाम पञ्चदशोऽध्यायः ।

— —

## षोड़शोऽध्यायः ।

——००——

नारायण उवाच ।

तुलसी परितुष्टा च सुखापहृष्टमानसा ।
नवयौवनसम्पन्ना प्रशंसन्ती वराङ्गना ॥ १ ॥
चिक्षेप पञ्चबाणञ्च पञ्चबाणश्च तां प्रति ।
पुष्पायुधेन सा दग्धा पुष्पचन्दनचर्चिता ॥ २ ॥
पुलकाञ्चितसर्वाङ्गी कम्पितारक्तलोचना ।
क्षणं सा शुष्कतां प्राप क्षणं मूर्च्छामवाप ह ॥ ३ ॥
क्षणमुद्विग्नतां प्राप क्षणं तन्द्रां सुखावहाम् ।
क्षणं सा दाहनं प्राप क्षणं प्राप प्रमत्तताम् ॥ ४ ॥
क्षणं सा चेतनां प्राप क्षणं प्राप विषण्णताम् ।
उत्तिष्ठन्ती क्षणं तल्पाद् गच्छन्ती निकटं क्षणम् ॥ ५ ॥
भ्रमन्ती क्षणमुद्वेगाद्विवसन्ती क्षणं पुनः ।
क्षणमेव समुद्वेगात् सुष्वाप पुनरेव सा ॥ ६ ॥

पुष्पचन्दनतल्पञ्च तद् बभूवातिकण्टकम् ।
विषमाहारसुस्वादु दिव्यरूपं फलं जलम् ॥ ७ ॥
निलयश्च निराकारः सूक्ष्मवस्त्रं हुताशनः ।
सिन्दूरपत्रकञ्चैव व्रणतुल्यञ्च दुःखदम् ॥ ८ ॥
क्षणं ददर्श तन्द्रायां सुवेशं पुरुषं सती ।
सुन्दरञ्च युवानञ्च सस्मितं रसिकेश्वरम् ॥ ९ ॥
चन्दनोचितसर्वाङ्गं रत्नभूषणभूषितम् ।
आगच्छन्तं माल्यवन्तं पश्यन्तं तन्मुखाम्बुजम् ॥ १० ॥
कथयन्तं रतिकथां चुम्बन्तमधरं मुहुः ।
शयानवन्तं तल्पे च समाश्लिष्यन्तमीलितम् ॥ ११ ॥
पुनरेव तु गच्छन्तमागच्छन्तं वसन्तकम् ।
कान्त क्व यासि प्राणेश तिष्ठेत्येवमुवाच सा ॥ १२ ॥
पुनः स्वचेतनां प्राप्य विललाप पुनः पुनः ।
एवं तपोवने सा च तस्थौ तत्रैव नारद ॥ १३ ॥
शङ्खचूड़ो महायोगी जैगीषव्यान्मनोरमम् ।
कृष्णस्य मन्त्रं सम्प्राप्य कृत्वा सिद्धिन्तु पुष्करे ॥ १४ ॥
कवचञ्च गले बद्ध्वा सर्वमङ्गलमङ्गलम् ।
ब्रह्मेशाच्च वरं प्राप्य यत्तन्मनसि वाञ्छितम् ॥ १५ ॥
आज्ञया ब्रह्मणः सोऽपि बदरीञ्च समाययौ ॥ १६ ॥
आगच्छन्तं शङ्खचूड़ं ददर्श तुलसी मुने ।
नवयौवनसम्पन्नं कामदेवसमप्रभम् ॥ १७ ॥
श्वेतचम्पकवर्णाभं रत्नभूषणभूषितम् ।
शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ॥ १८ ॥
रत्नसारविनिर्माणविमानस्थं मनोहरम् ।

रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् । १९ ॥
पारिजातकुसुमानां माल्यवन्तञ्च सस्मितम् ।
कस्तूरीकुङ्कुमयुतं सुगन्धिचन्दनान्वितम् ॥ २० ॥
सा दृष्ट्वा सन्निधाने तं मुखमाच्छाद्य वाससा ।
सस्मिता तं निरीक्षन्ती सकटाक्षं पुनः पुनः ॥ २१ ॥
बभूवातिनम्रमुखी नवसङ्गमलज्जिता ।
कामुकी कामवाणेन पीड़िता पुलकान्विता ॥ २२ ॥
पिबन्ती तन्मुखाम्भोजं लोचनाभ्याञ्च सन्ततम् ।
ददर्श शङ्खचूड़श्च कन्यामेकां तपोवने ॥ २३ ॥
पुष्पचन्दनतल्पस्थां वसन्तीं वाससावृताम् ।
पश्यन्तीं तन्मुखं शश्वत् सस्मितां सुमनोहराम् ॥ २४ ॥
सुपीनकठिनश्रोणीं पीनोन्नतपयोधराम् ।
मुक्तापङ्क्तिप्रभायुष्टदन्तपङ्क्तिं सुबिभ्रतीम् ॥ २५ ॥
पक्वबिम्बाधरोष्ठीञ्च सुनासां सुन्दरीं वराम् ।
तप्तकाञ्चनवर्णाभां शरच्चन्द्रसमप्रभाम् ॥ २६ ॥
स्वतेजसा परिवृतां सुखदृश्यां मनोरमाम् ।
कस्तूरीबिन्दुभिः सार्द्धमधश्चन्दनबिन्दुना ॥ २७ ॥
सिन्दूरबिन्दुना शश्वत् सीमन्ताधःस्थलोज्ज्वलाम् ।
निम्ननाभिगभीराञ्च तदधस्त्रिवलीयुताम् ॥ २८ ॥
करपद्मतलारक्तां नखचन्द्रैर्विभूषिताम् ।
स्थलपद्मप्रभायुक्तं पादपद्मञ्च बिभ्रतीम् ॥ २९ ॥
आरक्तवर्णं ललितमलक्तकसमप्रभम् ।
ऊर्द्ध्वपद्मस्थलपद्मपद्मराजविराजिताम् ॥ ३० ॥
शरदिन्दुविनिन्द्यैकनखेन्दुराजिराजिताम् ।

अमूल्यरत्ननिर्माणपाशकावलिसंयुताम् ॥ ३१ ॥
मणीन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जिताम् ॥ ३२ ॥
दधतीं कवरीभारं मालतीमाल्यसंयुतम् ।
अमूल्यरत्ननिर्माणमकराकृतिरूपिणा ॥ ३३ ॥
चित्रकुण्डलयुग्मेन गण्डस्थलविराजिताम् ।
रत्नेन्द्रसारहारेण स्तनमध्यस्थलोज्ज्वलाम् ॥ ३४ ॥
रत्नकङ्कणकेयूरशङ्खभूषणभूषिताम् ।
रत्नाङ्गुरीयकैर्दिव्यैरङ्गुल्यावलिराजिताम् ॥ ३५ ॥
दृष्ट्वा तां ललितां रम्यां सुशीलां सुदतीं सतीम् ।
उवास तत्समीपे च मधुरं तामुवाच सः ॥ ३६ ॥

शङ्खचूड़ उवाच ।

का त्वमत्र कस्य कन्या धन्ये मान्ये सुयोषिताम् ।
का त्वं मानिनि कल्याणि सर्वकल्याणदायिनि ॥ ३७ ॥
स्वर्गभोगादिसारेति विहारे हाररूपिणि ।
संसारदारसारे च मायाधारे मनोहरे ॥ ३८ ॥
जगद्विलक्षणे चाभे मुनीन्द्रमोहकारिणि ।
मौनीभूते किङ्करं मां सम्भाषां कुरु सुन्दरि ॥ ३९ ॥
इत्येवं वचनं श्रुत्वा सकामा वामलोचना ।
सस्मिता नम्रवदना सकामं तमुवाच सा ॥ ४० ॥

तुलस्युवाच ।

धर्मध्वजसुताहञ्च तपस्यायां तपोवने ।
तपस्विनीह तिष्ठामि कस्त्वं गच्छ यथासुखम् ॥ ४१ ॥
कामिनीकुलजाताञ्च रहस्ये कामिनीं सतीम् ।
न पृच्छति कुले जात एवमेव श्रुतौ श्रुतम् ॥ ४२ ॥

लम्पटोऽसत्कुले जातो धर्मशास्त्रार्थवर्जितः ।
येनाश्रुतः श्रुतेरर्थः स कामीच्छति कामिनीम् ॥ ४३ ॥
आपातमधुरामन्ते अन्तकां पुरुषस्य ताम् ।
विषकुम्भाकाररूपाममृतास्याञ्च सन्ततम् ॥ ४४ ॥
हृदये क्षुरधाराभां शश्वन्मधुरभाषिणीम् ।
स्वकार्य्यपरिनिष्पन्नतत्परां सततं सदा ॥ ४५ ॥
कार्य्यार्थे स्वामिवशगामन्यथैवावशां सदा ।
स्वान्तर्मलिनरूपाञ्च प्रसन्नवदनेक्षणाम् ॥ ४६ ॥
श्रुतौ पुराणे यासाञ्च चरित्रमनिरूपितम् ।
तासु को विश्वसेत् प्राज्ञो ह्यप्राज्ञ इव सर्वदा ॥ ४७ ॥
तासां को वा रिपुर्मित्रं प्रार्थयन्तीं नवं नवम् ।
दृष्ट्वा सुवेशं पुरुषमिच्छन्तीं हृदये सदा ॥ ४८ ॥
वाह्ये स्वात्मसतीत्वञ्च ज्ञापयन्तीं प्रयत्नतः ।
शश्वत्कामाञ्च रामाञ्च कामाधारां मनोहराम् ॥४९॥
वाह्ये छलाच्छादयन्तीं स्वान्तर्मैथुनलालसाम् ।
कान्तं ग्रसन्तीं रहसि वाह्येऽतीवसुलज्जिताम् ॥ ५० ॥
मानिनीं मैथुनाभावे कोपिनीं कलहाङ्कुराम् ।
संभीतां भूरिसम्भोगात् स्वल्पमैथुनदुःखिताम् ॥ ५१ ॥
सुमिष्टान्नात् शीततोयादाकाङ्क्षन्ती च मानसे ।
सुन्दरं रसिकं कान्तं युवानं गुणिनं सदा ॥ ५२ ॥
सुतात् परमतिस्नेहं कुर्वन्ती रतिकर्त्तरि ।
प्राणाधिकप्रियतमं सम्भोगकुशलं प्रियम् ॥ ५३ ॥
पश्यन्तीं रिपुतुल्यञ्च वृद्धं वा मैथुनाक्षमम् ।
कलहं कुर्वती शश्वत् येन सार्द्धं सुकोपनाम् ॥ ५४ ॥

चर्चया भक्षयन्तीं तं कीलाश इव गोरसः ।
दुःसाहसस्वरूपाञ्च सर्वदोषाश्रयां सदा ॥ ५५ ॥
शश्वत्कपटरूपाञ्च सर्वदोषाश्रयां सदा ।
ब्रह्मविष्णुशिवादीनां दुस्त्याज्यां मोहरूपिणीम् ॥ ५६ ॥
तपोमार्गार्गलां शश्वन्मुक्तिद्वारकवाटिकाम् । ५७ ॥
हरेर्भक्तिव्यवहितां सर्वमायाकरण्डिकाम् ।
संसारकारागारे च शश्वन्निगड़रूपिणीम् ॥ ५८ ॥
इन्द्रजालस्वरूपाञ्च मिथ्यावादिस्वरूपिणीम् ।
बिभ्रतीं वाह्यसौन्दर्य्यं मध्याङ्गमतिकुत्सितम् ॥ ५९ ॥
नानाविण्मूत्रपूयानामाधारं मलसंयुतम् ।
दुर्गन्धिदोषसंयुक्तं रक्ताक्तकमसंस्कृतम् ॥ ६० ॥
मायारूपं मायिनाञ्च विधिना निर्मितं पुरा ।
विषरूपां मुमुक्षूणामदृश्याञ्चैव सर्वदा ॥ ६१ ॥
इत्युक्त्वा तुलसी तञ्च विरराम च नारद ।
सस्मितः शङ्खचूड़श्च प्रवक्तुमुपचक्रमे ॥ ६२ ॥

शङ्खचूड़ उवाच ।

त्वया यत् कथितं देवि न च सर्वमलीककम् ।
किञ्चित् सत्यमलीकञ्च किञ्चिन्मत्तो निशामय ॥ ६३ ॥
निर्मितं द्विविधं धात्रा स्त्रीरूपं सर्वमोहनम् ।
कृत्यारूपं वास्तवञ्च प्रशंस्यञ्चाप्रशंसितम् ॥ ६४ ॥
लक्ष्मीसरस्वतीदुर्गासावित्रीराधिकादिकम् ।
सृष्टिसूत्रस्वरूपञ्चाप्याद्यं स्रष्ट्रा तत् तु विनिर्मितम् ॥६५॥
एतासामंशरूपं यत् स्त्रीरूपं वास्तवं स्मृतम् ।
तत् प्रशंस्यं यशोरूपं सर्वमङ्गलकारणम् ॥ ६६ ॥

शतरूपा देवहूती स्वधा स्वाहा च दक्षिणा ।
छायावती रोहिणी च वरुणानी शची तथा ॥ ६७ ॥
कुवेरवायुपत्नी साप्यदितिश्च दितिस्तथा ।
लोपामुद्रानसूया च कैटभी तुलसी तथा ॥ ६८ ॥
अहल्यारुन्धती मेना तारा मन्दोदरी परा ।
दमयन्ती वेदवती गङ्गा च मनसा तथा ॥ ६९ ॥
पुष्टिस्तुष्टिः स्मृतिर्मेधा कालिका च वसुन्धरा ।
षष्ठी मङ्गलचण्डी च मूर्त्तिश्च धर्मकामिनी ॥ ७० ॥
स्वस्तिः श्रद्धा च शान्तिश्च तुष्टिः कान्तिस्तथापरा ।
निद्रा तन्द्रा क्षुत् पिपासा सन्ध्या रात्रिर्दिनानि च ॥७१॥
सम्पत्तिर्वृत्तिकीर्त्त्यश्च क्रियाशोभाप्रभांशिकम् ।
यत् स्त्रीरूपञ्च सम्भूतमुत्तमं तद् युगे युगे ॥ ७२ ॥
कलास्वरूपं तद् यत्तु स्वर्वेश्यादिकमेव च ।
तदप्रशंस्यं विश्वेषु पुंश्चलीरूपमेव च ॥ ७३ ॥
सत्त्वप्रधानं यद्रूपं तच्च शुद्धं स्वभावतः ।
तदुत्तमञ्च विश्वेषु साध्वीरूपं प्रशंसितम् ॥ ७४ ॥
तद् वास्तवञ्च विज्ञेयं प्रवदन्ति मनीषिणः ।
रजोरूपं तमोरूपं कलासु द्विविधं स्मृतम् ॥ ७५ ॥
स्थानाभावात् क्षणाभावान्मध्यस्थस्याभावतः ।
देहक्लेशेन रोगेण सत्संसर्गेण सुन्दरि ॥ ७६ ॥
बहुगोष्ठीसहनेन रिपुराजभयेन च ।
रजोरूपस्य साध्वीत्वमेतैर्नैवोपजायते ॥ ७७ ॥
इदं मध्यस्वरूपञ्च प्रवदन्ति मनीषिणः ।
तमोरूपं दुरासाध्यमधमं तद् विदुर्बुधाः ॥ ७८ ॥

न दृच्छति कुले जातः पण्डितश्च परस्त्रियम् ॥ ७९ ॥
आगच्छामि त्वत्समीपमाज्ञया ब्रह्मणोऽधुना ।
गान्धर्वेण विवाहेन त्वां ग्रहीष्यामि शोभने ॥ ८० ॥
अहमेव शङ्खचूड़ो देवविद्रावकारकः ।
दनुवंशोद्भवो विश्वे सुदामाहं हरेः पुरे ॥ ८१ ॥
अहमष्टसु गोपेषु गोगोपीपार्षदेषु च ।
अधुना दानवेन्द्रोऽहं राधिकायाश्च शापतः ॥ ८२ ॥
जातिस्मरोऽहं जानामि कृष्णमन्त्रप्रभावतः ।
जातिस्मरा त्वं तुलसी संसक्ता हरिणा पुरा ॥ ८३ ॥
त्वमेव राधिकाकोपात् जातासि भारते भुवि ।
त्वां सम्भोक्तुमिच्छकोऽहं नालं राधाभयात्ततः ॥ ८४ ॥
इत्येवमुक्त्वा स पुमान् विरराम महामुने ।
सस्मिता तुलसी हृष्टा प्रवक्तुमुपचक्रमे ॥ ८५ ॥

तुलस्युवाच ।

एवंविधो बुधो विश्वे बुधेषु च प्रशंसितः ।
कान्तमेवंविधं कान्ता शश्वदिच्छति कामतः ॥ ८६ ॥
त्वयाहमधुना सत्यं विचारेण पराजिता ।
स निन्दितश्चाप्यशुचिर्यः पुमांश्च स्त्रिया जितः ॥ ८७ ॥
निन्दन्ति पितरो देवा बान्धवा स्त्रीजितं जनम् ।
स्त्रीजितं मनसा वाचा पिता भ्राता च निन्दति ॥ ८८ ॥
शुद्धेद् विप्रो दशाहेन जातके मृतके तथा ।
भूमिपो द्वादशाहेन वैश्यः पञ्चदशाहतः ॥ ८९ ॥
शूद्रो मासेन वेदेषु मातृवद्वर्णशङ्करः ।
अशुचिः स्त्रीजितः शुद्धेच्चितादाहनकालतः ॥ ९० ॥

न गृह्णन्तीच्छया तस्य पितरः पिण्डतर्पणम् ।
न गृह्णन्तीच्छया देवास्तस्य पुष्पजलादिकम् ॥ ९१ ॥
किं तस्य ज्ञानतपसा जपहोमप्रपूजनैः ।
किं विद्यया वा यशसा स्त्रीभिर्यस्य मनो हृतम् ॥९२॥
विद्याप्रभावज्ञानार्थं मया त्वञ्च परीक्षितः ।
कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् ॥९३॥
वराय गुणहीनाय वृद्धायाज्ञानिने तथा ।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥ ९४ ॥
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च ।
पङ्गुलायाङ्गहीनाय चान्धाय वधिराय च ॥ ९५ ॥
जड़ाय चैव मूकाय क्लीवतुल्याय पापिने ।
ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च ॥९६॥
शान्ताय गुणिने चैव यूने च विदुषेऽपि च ।
वैष्णवाय सुतां दत्त्वा दशवाजिफलं लभेत् ॥ ९७ ॥
यः कन्यापालनं कृत्वा करोति विक्रयं यदि ।
विपदा धनलोभेन कुम्भीपाकं स गच्छति ॥ ९८ ॥
कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी ।
कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश ॥ ९९ ॥
तदन्ते व्याधयोनौ च लभते जन्म निश्चितम् ।
विक्रीणाति मांसभारं वहत्येव दिवानिशम् ॥ १०० ॥
इत्येवमुक्त्वा तुलसी विरराम तपोवने ।
एतस्मिन्नन्तरे ब्रह्मा तयोरन्तिकमाययौ ॥ १०१ ॥
मूर्ध्ना ननाम तुलसी शङ्खचूड़श्च नारद ।
उवास तत्र देवेशश्चोवाच च तयोर्हितम् ॥ १०२ ॥

ब्रह्मोवाच।

किं करोषि शङ्खचूड़ संवादमनया सह।
गान्धर्वेण विवाहेन त्वमिमां ग्रहणं कुरु॥ १०३॥
त्वञ्च पुरुषरत्नञ्च स्त्रीरत्नं स्त्रीष्वियं सती।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत्॥ १०४॥
निर्विरोधसुखं राजन् को वा त्यजति दुर्लभम्।
योऽविरोधसुखत्यागी स पशुर्नात्र संशयः॥ १०५॥
किमुपेक्षसि त्वं कान्तमीदृशं गुणिनं सति।
देवानामसुराणाञ्च दानवानां विमर्दकम्॥ १०६॥
यथा लक्ष्मीश्च लक्ष्मीशे यथा कृष्णे च राधिका।
यथा मयि च सावित्री भवानी च भवे यथा॥ १०७॥
यथा धरा वराहे च यथा मेना हिमालये।
यथात्रावनसूया च दमयन्ती नले यथा॥ १०८॥
रोहिणी च यथा चन्द्रे यथा कामे रतिः सती।
यथादितिः कश्यपे च वशिष्ठेऽरुन्धती यथा॥ १०९॥
यथाहल्या गौतमे च देवहूती च कर्दमे।
यथा वृहस्पतौ तारा शतरूपा मनौ यथा॥ ११०॥
यथा च दक्षिणा यज्ञे यथा स्वाहा हुताशने।
यथा शची महेन्द्रे च यथा पुष्टिर्गणेश्वरे॥ १११॥
देवसेना यथा स्कन्दे धर्मे मूर्त्तिर्यथा सती।
सौभाग्या सुप्रिया त्वञ्च शङ्खचूड़े तथा भव॥ ११२॥
अनेन सार्द्धं सुचिरं सुन्दरेण च सुन्दरि।
स्थाने स्थाने विहारञ्च यथेच्छं कुरु सन्ततम्॥ ११३॥
पश्चात् प्राप्स्यसि गोविन्दं गोलोके पुनरेव च।

चतुर्भुजश्च वैकुण्ठे शङ्खचूडे मृते सति ॥ ११४ ॥
इत्येवमाशिषं कृत्वा स्वालयं प्रययौ विधिः।
गान्धर्वेण विवाहेन जगृहे ताञ्च दानवः ॥ ११५ ॥
स्वर्गे दुन्दुभिवाद्यञ्च पुष्पवृष्टिर्बभूव ह।
स रेमे रमया सार्द्धं वासगेहे मनोहरे ॥ ११६ ॥
मूर्च्छां सम्प्राप तुलसी नवसङ्गमसङ्गता।
निमग्ना निर्जने साध्वी सम्भोगसुखसागरे ॥ ११७ ॥
चतुःषष्टिकलामानं चतुःषष्टिविधं सुखम्।
कामशास्त्रे यन्निरुक्तं रसिकानां यथेप्सितम् ॥ ११८ ॥
अङ्गप्रत्यङ्गसंश्लेषपूर्वकं स्त्रीमनोहरम्।
तत्सर्वं सुखशृङ्गारं चकार रसिकेश्वरः ॥ ११९ ॥
अतीवरम्ये देशे च सर्वजन्तुविवर्जिते।
पुष्पचन्दनतल्पे च पुष्पचन्दनवायुना ॥ १२० ॥
पुष्पोद्याने नदीतीरे पुष्पचन्दनचर्चिते।
गृहीत्वा रसिकां रामां पुष्पचन्दनचर्चिताम् ॥ १२१ ॥
भूषितां भूषणैः सर्वैरतीवसुमनोहराम्।
सुरतेर्विरतिर्नास्ति तयोः सुरतविज्ञयोः ॥ १२२ ॥
जहार मानसं भर्त्तुर्लीलया तुलसी सती।
चेतनां रसिकायाश्च जहार रसभाववित् ॥ १२३ ॥
वक्षसश्चन्दनं वाह्वोस्तिलकं विजहार सा।
स च जग्राह तस्याश्च सिन्दूरविन्दुपत्रकम् ॥ १२४ ॥
स तद्वक्षसि तस्याश्च नखरेखां ददौ मुदा।
सा ददौ तद्वामपार्श्वे करभूषणलक्षणम् ॥ १२५ ॥
राजा दन्तोष्ठपुटके ददौ दशनदंशनम्।

तद्गण्डयुगले सा च प्रददौ तच्चतुर्गुणम् ॥ १२६ ॥
सुरतेर्विरतौ तौ च समुत्थाय परस्परम् ।
सुवेशञ्चक्रतुस्तत्र यत्तन्मनसि वाञ्छितम् ॥ १२७ ॥
कुङ्कुमाक्तचन्दनेन सा तस्मै तिलकं ददौ ।
सर्वाङ्गे सुन्दरे रम्ये चकार चानुलेपनम् ॥ १२८ ॥
सुवासितञ्च ताम्बूलं वह्निशुद्धे च वाससी ।
पारिजातस्य कुसुमं माल्यञ्चैव सुशोभनम् ॥ १२९ ॥
अमूल्यरत्ननिर्माणमङ्गुरीयकमुत्तमम् ।
सुन्दरञ्च मणिवरं त्रिषु लोकेषु दुर्लभम् ॥ १३० ॥
दासी तवाहमित्येवं समुच्चार्य्य पुनः पुनः ।
ननाम परया भक्त्या स्वामिनं गुणशालिनम् ॥ १३१ ॥
सस्मिता तन्मुखाम्भोजं लोचनाभ्यां पपौ पुनः ।
निमेषरहिताभ्याञ्च सकटाक्षञ्च सुन्दरम् ॥ १३२ ॥
स च ताञ्च समाकृष्य चकार वक्षसि प्रियाम् ।
सस्मितं वाससाच्छन्नं ददर्श मुखपङ्कजम् ॥ १३३ ॥
चुचुम्ब कठिने गण्डे बिम्बोष्ठे पुनरेव च ।
ददौ तस्यै वस्त्रयुग्मं वरुणादाहृतञ्च यत् ।
तदाहृतां रत्नमालां त्रिषु लोकेषु विश्रुताम् ॥ १३४ ॥
ददौ मञ्जीरयुग्मञ्च स्वाहायाश्च हृतञ्च यत् ।
केयूरयुग्मं छायाया रोहिण्याश्चैव कुण्डलम् ॥ १३५ ॥
अङ्गुरीयकरत्नानि रत्याश्च वरभूषणम् ।
शङ्खं सुरुचिरं चित्रं यद्दत्तं विश्वकर्मणा ॥ १३६ ॥
विचित्रपीठकश्रेणीं शय्याञ्चापि सुदुर्लभाम् ।
भूषणानि च दत्त्वा च परीहारञ्चकार ह ॥ १३७ ॥

निर्माय कवरीभारं तस्याश्च माल्यसंयुतम् ।
सुचित्रं पत्रकं गण्डे जयलेखसमं तथा ॥ १३८ ॥
चन्द्रलेखात्रिभिर्युक्तं चन्दनेन सुगन्धिना ।
परितः परितश्चित्रैः सार्द्धं कुङ्कुमविन्दुभिः ॥ १३९ ॥
ज्वलत्प्रदीपाकारञ्च सिन्दूरतिलकं ददौ ।
तत्पादपद्मयुगले स्थलपद्मविनिन्दिते ॥ १४० ॥
चित्रालक्तकरागञ्च नखरेषु ददौ मुदा ।
स्ववक्षसि मुहुर्न्यस्तं सरागञ्चरणाम्बुजम् ॥ १४१ ॥
हे देवि ! तव दासोऽहमित्युच्चार्य्य पुनः पुनः ।
रत्ननिर्माणयानेन ताञ्च कृत्वा स्ववक्षसि ।
तपोवनं परित्यज्य राजा स्थानान्तरं ययौ ॥ १४२ ॥
मलये देवनिलये शैले शैले वने वने ।
स्थाने स्थानेऽतिरम्ये च पुष्पोद्यानेऽतिनिर्जने ॥ १४३ ॥
कन्दरे कन्दरे सिन्धुतीरे च सुन्दरे वने ।
पुष्पभद्रानदीतीरे नीरवातमनोहरे ॥ १४४ ॥
पुलिने पुलिने दिव्ये नद्यां नद्यां नदे नदे ।
मधौ मधुकराणाञ्च मधुरध्वनिनादिते ॥ १४५ ॥
विनिस्यन्दे सुपवने नन्दने गन्धमादने ।
देवोद्याने देववने चित्रे चन्दनकानने ॥ १४६ ॥
चम्पकानां केतकीनां माधवीनाञ्च माधवे ।
कुन्दानां मालतीनाञ्च कुमुदाम्भोजकानने ॥ १४७ ॥
कल्पवृक्षे कल्पवृक्षे पारिजातवने वने ।
निर्जने काञ्चनीस्थाने धन्ये काञ्चनपर्वते ॥ १४८ ॥
काञ्चीवने किञ्चनके कञ्चुके काञ्चनाकरे ।

पुष्पचन्दनतल्पे च पुंस्कोकिलरुते श्रुते ॥ १४९ ॥
पुष्पचन्दनसंयुक्तः पुष्पचन्दनवायुना ।
कामुक्या कामुकः कामात् स रेमे रामया सह ॥१५०॥
न तृप्तो दानवेन्द्रश्च तृप्तिर्नैव जगाम सा ।
हविषा कृष्णवर्त्मेव ववृधे मदनस्तयोः ॥ १५१ ॥
तया सह समागत्य स्वाश्रमं दानवस्ततः ।
रम्यक्रीड़ालयं कृत्वा विजहार पुनस्ततः ॥ १५२ ॥
एवं संबुभुजे राज्यं शङ्खचूड़ः प्रतापवान् ।
एकमन्वन्तरं पूर्णं राजराजेश्वरो बली ॥ १५३ ॥
देवाणामसुराणाञ्च दानवानाञ्च सन्ततम् ।
गन्धर्वाणां किन्नराणां राक्षसानाञ्च शास्तिदः ॥ १५४ ॥
हृताधिकारा देवाश्च चरन्ति भिक्षुका यथा ॥ १५५ ॥
पूजाहोमादिकं तेषां जहार विषयं बलात् ।
आश्रयं चाधिकारञ्च शस्त्रास्त्रभूषणादिकम् ॥ १५६ ॥
निरुद्यमाः सुराः सर्वे चित्रपुत्तलिका यथा ।
ते च सर्वे विषण्णाश्च प्रजग्मुर्ब्रह्मणः सभाम् ॥ १५७ ॥
वृत्तान्तं कथयामासू रुरुदुश्च भृशं मुहुः ।
तदा ब्रह्मा सुरैः सार्द्धं जगाम शङ्करालयम् ॥ १५८ ॥
सर्वं संकथयामास विधाता चन्द्रशेखरम् ।
ब्रह्मा शिवश्च तैः सार्द्धं वैकुण्ठञ्च जगाम ह ॥ १५९ ॥
सुदुर्लभं परं धाम जरामृत्युहरं परम् ।
सम्प्राप च वरं द्वारमाश्रमाणां हरेरहो ॥ १६० ॥
ददर्श द्वारपालांश्च रत्नसिंहासनस्थितान् ।
शोभितान् पीतवस्त्रैश्च रत्नभूषणभूषितान् ॥ १६१ ॥

वनमालान्वितान् सर्वान् श्यामसुन्दरविग्रहान् ।
शङ्खचक्रगदापद्मधरांश्चैव चतुर्भुजान् ॥ १६२ ॥
सस्मितान् पद्मवक्त्रांश्च पद्मनेत्रान्मनोहरान् ।
ब्रह्मा तान् कथयामास वृत्तान्तं गमनार्थकम् ॥ १६३ ॥
तेऽनुज्ञाञ्च ददुस्तस्मै प्रविवेश तदाज्ञया ॥ १६४ ॥
एवञ्च षोड़शद्वारान्निरीक्ष्य कमलोद्भवः ।
देवैः सार्द्धं तानतीत्य प्रविवेश हरेः सभाम् ॥ १६५ ॥
देवर्षिभिः परिवृतां पार्षदैश्च चतुर्भुजैः ।
नारायणस्वरूपैश्च सर्वैः कौस्तुभभूषितैः ॥ १६६ ॥
पूर्णेन्दुमण्डलाकारां चतुरस्रां मनोहराम् ।
मणीन्द्रसारनिर्माणां हीरासारसुशोभिताम् ॥ १६७ ॥
अमूल्यरत्नखचितां रचितां स्वेच्छया हरेः ।
माणिक्यमालाजालाढ्यां मुक्तापंक्तिविभूषिताम् ॥१६८॥
मण्डितां मण्डलाकारै रत्नदर्पणकोटिभिः ।
विचित्रै श्चित्ररेखाभिर्नानाचित्रविचित्रिताम् ।
पद्मरागेन्द्ररचितै रचितां पद्मकृत्रिमैः ॥ १६९ ॥
सोपानशतकैर्युक्तां स्यमन्तकविनिर्मितैः ।
पट्टसूत्रग्रन्थियुक्तैश्चारुचन्दनपल्लवैः ॥ ७० ॥
इन्द्रनीलमणिस्तम्भैर्वेष्टितां सुमनोरमाम् ।
सद्रत्नपूर्णकुम्भानां समूहैश्च समन्विताम् ॥ १७१ ॥
पारिजातप्रसूनानां मालाजालैर्विराजिताम् ।
कस्तूरीकुङ्कुमाक्तैश्च सुगन्धिचन्दनद्रवैः ॥ १७२ ॥
सुसंस्कृतान्तु सर्वत्र वासितां गन्धवायुना ।
विद्याधरीसमूहानां सङ्गीतैश्च मनोहराम् ॥ १७३ ॥

सहस्रयोजनायामां परिपूर्णाञ्च किङ्करैः ।
ददर्श श्रीहरिं ब्रह्मा शङ्करैश्च सुरैः सह ॥ १७४ ॥
वसन्तं तन्मध्यदेशे यथेन्दुं तारकावृतम् ।
अमूल्यरत्ननिर्माणचित्रसिंहासनस्थितम् ॥ १७५ ॥
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ।
शङ्खचक्रगदापद्मधारिणं च चतुर्भुजम् ॥ १७६ ॥
नवीननीरदश्यामं सुन्दरं सुमनोहरम् ।
अमूल्यरत्ननिर्माणसर्व्वभूषणभूषितम् ॥ १७७ ॥
चन्दनोच्चितसर्वाङ्गं बिभ्रन्तं केलिपङ्कजम् ।
पुरतो नृत्यगीतञ्च पश्यन्तं सस्मितं मुदा ॥ १७८ ॥
शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम् ।
भक्तप्रदत्तताम्बूलं भुक्तवन्तं सुवासितम् ॥ १७९ ॥
गङ्गया परया भक्त्या सेवितं श्वेतचामरैः ।
सर्वैश्च स्तूयमानञ्च भक्तिनम्रात्मकन्धरैः ॥ १८० ॥
एवं विशिष्टं तं दृष्ट्वा परिपूर्णतमं विभुम् ।
ब्रह्मादयः सुराः सर्वे प्रणम्य तुष्टुवुस्तदा ॥ १८१ ॥
पुलकाङ्कितसर्वाङ्गाः साश्रुनेत्राः सगद्गदाः ।
भक्त्या परमया भक्ता भीता नम्रात्मकन्धराः ॥ १८२ ॥
पुटाञ्जलियुतो भूत्वा विधाता जगतामपि ।
वृत्तान्तं कथयामास विनयेन हरेः पुरः ॥ १८३ ॥
हरिस्तद्वचनं श्रुत्वा सर्वज्ञः सर्वभाववित् ।
प्रहस्योवाच ब्रह्माणं रहस्यञ्च मनोहरम् ॥ १८४ ॥

श्रीभगवानुवाच ।

शङ्खचूड़स्य वृत्तान्तं सर्वं जानामि पद्मज ।

मङ्गलस्य च गोपस्य महातेजस्विनः पुरा ॥ १८५ ॥
सुराः शृणुत तत्सर्वमितिहासं पुरातनम् ।
गोलोकस्यैव चरितं पापघ्नं पुण्यकारणम् ॥ १८६ ॥
सुदामा नाम गोपश्च पार्षदप्रवरो मम ।
स प्राप दानवीं योनिं राधाशापात् सुदारुणात् ॥१८७॥
तत्रैकदाहमगमं स्वालयाद्रासमण्डलम् ।
विहाय मानिनीं राधां मम प्राणाधिकां पराम् ॥१८८॥
सा मां विरजया सार्द्धं विज्ञाय किङ्करीमुखात् ।
पश्चात् क्रुधा सा जगाम मां ददर्श च तत्र च ॥ १८९ ॥
विरजाञ्च नदीरूपां मां ज्ञात्वा च तिरोहितम् ।
पुनर्जगाम सा रुष्टा स्वालयं सखीभिः सह ॥ १९० ॥
मां दृष्ट्वा मन्दिरे देवी सुदामसहितं पुरा ।
भृशं मां भर्त्सयामास मौनीभूतञ्च सुस्थिरम् ॥ १९१ ॥
तच्छ्रुत्वा च सुमहांश्च सुदामा तां चुकोप ह ।
स च तां भर्त्सयामास कोपेन मम सन्निधौ ॥ १९२ ॥
तच्छ्रुत्वा सा कोपयुक्ता रक्तपङ्कजलोचना ।
वहिष्कर्त्तुञ्चकाराज्ञां संत्रस्ता मम संसदि ॥ १९३ ॥
सखीलक्षं समुत्तस्थौ दुर्वारं तेजसोज्ज्वलम् ।
वहिश्चकार तं तूर्णं जल्पन्तञ्च पुनः पुनः ॥ १९४ ॥
सा च तद्वचनं श्रुत्वा समारुष्टा सशाप तम् ।
याहि रे दानवीं योनिमित्येवं दारुणं वचः ॥ १९५ ॥
तं गच्छन्तं शपन्तञ्च रुदन्तं मां प्रणम्य च ।
वारयामास सा तुष्टा रुदन्ती कृपया पुनः ॥ १९६ ॥
हे वत्स ! तिष्ठ मा गच्छ क्व यासीति पुनः पुनः ।

समुच्चार्य्य च तत्पश्चात् जगाम सा च विस्मिता ॥१९७॥
गोप्यश्च रुरुदुः सर्वा गोपाश्चेति सुदुःखिताः ।
ते सर्वे राधिका चापि तत्पश्चाद् बोधिता मया ॥१९८॥
आयास्यति क्षणार्द्धेन कृत्वा शापस्य पालनम् ।
सुदामन् त्वमिहागच्छेत्युवाच सा निवारिता ॥ १९९ ॥
गोलोकस्य क्षणार्द्धेन चैकमन्वन्तरं भवेत् ।
पृथिव्यां जगतां धातरित्येवं वचनं ध्रुवम् ॥ २०० ॥
स एव शङ्खचूड़श्च पुनस्तत्रैव यास्यति ।
महाबलिष्ठो योगीशः सर्वमायाविशारदः ॥ २०१ ॥
मम शूलं गृहीत्वा च शीघ्रं गच्छथ भारतम् ।
शिवः करोतु संहारं मम शूलेन दानवम् ॥ २०२ ॥
ममैव कवचं कण्ठे सर्वमङ्गलमङ्गलम् ।
बिभर्त्ति दानवः शश्वत् संसारविजयी ततः ॥ २०३ ॥
तत्र ब्रह्मन् स्थिते कण्ठे न कोऽपि हिंसितुं क्षमः ।
तद्याच्ञां करिष्यामि विप्ररूपोऽहमेव च ॥ २०४ ॥
सतीत्वभङ्गस्तत्पत्न्या यत्र काले भविष्यति ।
तत्रैव काले तन्मृत्युरिति दत्तो वरस्त्वया ॥ २०५ ॥
तत्पत्न्याश्चोदरे वीर्य्यमर्पयिष्यामि निश्चितम् ।
तत्क्षणेनैव तन्मृत्युर्भविष्यति न संशयः ॥२०६॥
पश्चात् सा देहमुत्सृज्य भविष्यति प्रिया मम ।
इत्युक्त्वा जगतां नाथो ददौ शूलं हराय च ॥ २०७ ॥
शूलं दत्त्वा ययौ शीघ्रं हरिरभ्यन्तरं मुदा ।
भारतञ्च ययुर्देवा ब्रह्मरुद्रपुरोगमाः ॥ २०८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे षोड़शोऽध्यायः ।

# सप्तदशोऽध्यायः।

—•—

नारायण उवाच।

ब्रह्मा शिवं संनियोज्य संहारे दानवस्य च।
जगाम स्वालयं तूर्णं यथास्थानं महामुने॥ १॥
चन्द्रभागानदीतीरे वटमूले मनोहरे।
तत्र तस्थौ महादेवो देवनिस्तारहेतवे॥ २॥
दूतं कृत्वा पुष्पदन्तं गन्धर्वेश्वरमीप्सितम्।
शीघ्रं प्रस्थापयामास शङ्खचूडान्तिकं मुदा॥ ३॥
स चेश्वराज्ञया शीघ्रं ययौ तन्नगरं वरम्।
महेन्द्रनगरोत्कृष्टं कुवेरभवनाधिकम्॥ ४॥
पञ्चयोजनविस्तीर्णं दैर्घ्ये तद्विगुणं मुने।
स्फाटिकाकारमणिभिर्निर्माणमणिवेष्टितम्।
सप्तभिः परिखाभिश्च दुर्गमाभिः समन्वितम्॥ ५॥
ज्वलदग्निनिभैः शश्वज्ज्वलितं रत्नकोटिभिः।
युक्तञ्च वीथिशतकैर्मणिवेदिसमन्वितैः॥ ६॥
परितो वणिजां संघैर्नानावस्तुविराजितैः।
सिन्दूराकारमणिभिर्निर्मितैश्च विचित्रितैः॥ ७॥
भूषितं भूषितैर्दिव्यैराश्रमैः शतकोटिभिः।
गत्वा ददर्श तन्मध्ये शङ्खचूडालयं वरम्॥ ८॥
अतीववलयाकारं यथा पूर्णेन्दुमण्डलम्।
ज्वलदग्निशिखाभिश्च परिखाभिश्चतसृभिः॥ ९॥

सुदुर्गमञ्च शत्रूणामन्येषां सुगमं सुखम् ।
अत्युच्चैर्गगनस्पर्शमणिप्राचीरवेष्टितम् ॥ १० ॥
राजितं द्वादशद्वारैर्द्वारपालसमन्वितैः ।
रत्नकृत्रिमपद्माढ्यै रत्नदर्पणभूषितैः ।
मणीन्द्रसारनिर्माणैः शोभितं लक्षमन्दिरैः ॥ ११ ॥
शोभितं रत्नसोपानैः रत्नस्तम्भविराजितैः ।
रत्नचित्रकवाटाढ्यैः सद्रत्नकलसान्वितैः ।
रत्नेन्द्रचित्रराजिभिः सुदीप्ताभिर्विराजितैः ॥ १२ ॥
परितो रचितं शश्वद्दानवैः शतकोटिभिः ।
दिव्यास्त्रधारिभिः शूरैर्महाबलपराक्रमैः ।
सुन्दरैश्च सुवेशैश्च नानालङ्कारभूषितैः ॥ १३ ॥
तान् दृष्ट्वा पुष्पदन्तोऽपि वरद्वारं ददर्श सः ।
द्वारे नियुक्तं पुरुषं शूलहस्तञ्च सस्मितम् ॥ १४ ॥
तिष्ठन्तं पिङ्गलाक्षञ्च ताम्रवर्णं भयङ्करम् ।
कथयामास वृत्तान्तं जगाम तदनुज्ञया ॥ १५ ॥
अतिक्रम्य नवद्वारं जगामाभ्यन्तरं पुरम् ।
न कैश्च रचितं श्रुत्वा दूतरूपं रणस्य च ॥ १६ ॥
गत्वा सोऽभ्यन्तरं द्वारं द्वारपालमुवाच ह ।
रणस्य सर्ववृत्तान्तं विज्ञापयितुमीश्वरम् ॥ १७ ॥
स च तं कथयित्वा च दूतं गन्तुमुवाच ह ।
स गत्वा शङ्खचूड़न्तं ददर्श सुमनोहरम् ॥ १८ ॥
सभामण्डलमध्यस्थं स्वर्णसिंहासनस्थितम् ।
मणीन्द्रखचितं चित्रं रत्नदण्डसमन्वितम् ॥ १९ ॥
रत्नकृत्रिमपुष्पैश्च प्रशस्तं शोभितं सदा ।

भृत्येन मस्तकन्यस्तं स्वर्णच्छत्रं मनोहरम् ॥ २० ॥
सेवितं पार्षदगणैर्व्यजनैः श्वेतचामरैः ।
सुवेशं सुन्दरं रम्यं रत्नभूषणभूषितम् ॥ २१ ॥
माल्यानुलेपनं सूक्ष्मवस्त्रञ्च दधतं मुने ।
दानवेन्द्रैः परिवृतं सुवेशैश्च त्रिकोटिभिः ॥ २२ ॥
शतकोटिभिरन्यैश्च भ्रमद्भिरस्त्रधारिभिः ।
एवंभूतञ्च तं दृष्ट्वा पुष्पदन्तः सविस्मयः ॥ २३ ॥
उवाच रणवृत्तान्तं यदुक्तं शङ्करेण च ॥ २४ ॥

पुष्पदन्त उवाच ।

राजेन्द्र शिवदूतोऽहं पुष्पदन्ताभिधः प्रभो ।
यदुक्तं शङ्करेणैव तद् ब्रवीमि निशामय ॥ २५ ॥
राज्यं देहि च देवानामधिकारञ्च साम्प्रतम् ।
देवाश्च शरणापन्ना देवेशे श्रीहरौ परे ॥ २६ ॥
दत्त्वा त्रिशूलं हरिणा तव प्रस्थापितः शिवः ।
चन्द्रभागानदीतीरे वटमूले त्रिलोचनः ॥ २७ ॥
विषयं देहि तेषाञ्च युद्धं वा कुरु निश्चितम् ।
गत्वा वक्ष्यामि किं शम्भुं तद् भवान् वक्तुमर्हति ॥२८॥
दूतस्य वचनं श्रुत्वा शङ्खचूडः प्रहस्य च ।
प्रभातेऽहं गमिष्यामि त्वञ्च गच्छेत्युवाच ह ॥ २९ ॥
स गत्वोवाच तूर्णं तं वटमूलस्थमीश्वरम् ।
शङ्खचूडस्य वचनं तदीयं यत् परिच्छदम् ॥ ३० ॥
एतस्मिन्नन्तरे स्कन्द आजगाम शिवान्तिकम् ।
वीरभद्रश्च नन्दी च महाकालः सुभद्रकः ॥ ३१ ॥
विशालाक्षश्च बाणश्च पिङ्गलाक्षो विकम्पनः ।

विरूपो विकृतिश्चैव मणिभद्रश्च वास्कलः ॥ ३२ ॥
कपिलाक्षो दीर्घदंष्ट्रो विकटस्ताम्रलोचनः ॥ ३३ ॥
कालङ्कटो बलीभद्रः कालजिह्वः कुटीचरः ।
बलोन्मत्तो रणश्लाघी दुर्जयो दुर्गमस्तथा ॥ ३४ ॥
अष्टौ च भैरवा रौद्रा रुद्राश्चैकादश स्मृताः ।
वसवो वासवाद्याश्च आदित्या द्वादश स्मृताः ॥ ३५ ॥
हुताशनश्च चन्द्रश्च विश्वकर्माश्विनौ च तौ ।
कुवेरश्च यमश्चैव जयन्तो नलकूवरः ॥ ३६ ॥
वायुश्च वरुणश्चैव बुधश्च मङ्गलस्तथा ।
धर्मश्च शनिरीशानः कामदेवश्च वीर्य्यवान् ॥ ३७ ॥
उग्रदंष्ट्रा चोग्रचण्डा कोट्टरी कैटभी तथा ।
स्वयं शतभुजा देवी भद्रकाली भयङ्करी ॥ ३८ ॥
रत्नेन्द्रसारनिर्माण विमानोपरि संस्थिता ।
रक्तवस्त्रपरीधाना रक्तमाल्यानुलेपना ॥ ३९ ॥
नृत्यन्ती च हसन्ती च गायन्ती सुस्वरं मुदा ।
अभयं ददती भक्तमभया सा भयं रिपुम् ॥ ४० ॥
बिभ्रती विकटां जिह्वां सुलोलां योजनायताम् ।
खर्परं वर्त्तुलाकारं गभीरं योजनायतम् ॥ ४१ ॥
त्रिशूलं गगनस्पर्शि शक्तिञ्च योजनायताम् ।
शङ्खं चक्रं गदां पद्मं शरांश्चापं भयङ्करम् ॥ ४२ ॥
मुद्गरं मुषलं वज्रं खड्गं फलकमुज्ज्वलम् ।
वैष्णवास्त्रं वारुणास्त्रं वह्निञ्च नागपाशकम् ॥ ४३ ॥
नारायणास्त्रं ब्रह्मास्त्रं गान्धर्वं गारुडं तथा ।
पार्जन्यञ्च पाशुपतं जृम्भणास्त्रञ्च पार्वतम् ॥ ४४ ॥

माहेश्वरास्त्रं वायव्यं दण्डं सम्मोहनन्तथा ।
अव्यर्थमस्त्रशतकं दिव्यास्त्रशतकं परम् ॥ ४५ ॥
आगत्य तत्र तस्थौ सा योगिनीनां त्रिकोटिभिः ।
सार्द्धं वै डाकिनीनाञ्च विकटानां त्रिकोटिभिः ॥४६॥
भूताः प्रेताः पिशाचाश्च कुष्माण्डा ब्रह्मराक्षसाः ।
वेतालाश्चैव यक्षाश्च राक्षसाश्चैव किन्नराः ॥ ४७ ॥
ताभिश्चैव सह स्कन्दः प्रणम्य चन्द्रशेखरम् ।
पितुः पार्श्वे सभायाञ्च समुवास भवाज्ञया ॥ ४८ ॥
अथ दूते गते तत्र शङ्खचूड़ः प्रतापवान् ।
उवाच तुलसीं वार्त्तां गत्वाभ्यन्तरमेव च ॥ ४९ ॥
रणवार्त्ताञ्च सा श्रुत्वा शुष्ककण्ठौष्ठतालुका ।
उवाच मधुरं साध्वी हृदयेन विदूयता ॥ ५० ॥

तुलस्युवाच ।

हे प्राणनाथ हे बन्धो तिष्ठ मे वक्षसि क्षणम् ।
हे प्राणाधिष्ठातृदेव रक्ष मे जीवनं क्षणम् ॥ ५१ ॥
भुङ्क्ष्व जन्मसमाधानं यद्वै मनसि वाञ्छितम् ।
पश्यामि त्वां क्षणं किञ्चिल्लोचनाभ्यां पिपासिता ॥५२॥
आन्दोलयन्ति प्राणा मे मनोदग्धञ्च सन्ततम् ।
दुःस्वप्नञ्च मया दृष्टञ्चाद्यैव चरमे निशि ॥ ५३ ॥
तुलसीवचनं श्रुत्वा भुक्त्वा पीत्वा नृपेश्वरः ।
उवाच वचनं प्राज्ञो हितं सत्यं यथोचितम् ॥ ५४ ॥

शङ्खचूड़ उवाच ।

कालेन योजितं सर्वं कर्मभोगनिबन्धने ।
शुभं हर्षं सुखं दुःखं भयं शोकममङ्गलम् ॥ ५५ ॥

काले भवन्ति वृचाश्च स्कन्धवन्तश्च कालतः ।
क्रमेण पुष्पवन्तश्च फलवन्तश्च कालतः ॥ ५६ ॥
ते सर्वे फलिनः काले काले कालं प्रयान्ति च ।
भवन्ति काले भूतानि काले कालं प्रयान्ति च ॥ ५७ ॥
काले भवन्ति विश्वानि काले नश्यन्ति सुन्दरि ॥ ५८ ॥
काले सृजति स्रष्टा च पाता पाति च कालतः ।
संहर्त्ता संहरेत् काले सञ्चरन्ति क्रमेण ते ॥ ५९ ॥
ब्रह्मविष्णुशिवादीनामीश्वरः प्रकृतेः परः ।
स्रष्टा पाता च संहर्त्ता स कृत्स्नांशेन सर्वदा ॥६०॥
काले स एव प्रकृतिं निर्माय स्वेच्छया प्रभुः ।
निर्माय प्राकृतान् सर्वान् विश्वस्थांश्च चराचरान् ॥७१॥
आब्रह्मस्तम्भपर्य्यन्तं सर्वं कृत्रिममेव च ।
प्रवदन्ति च कालेन नश्यत्यपि हि नश्वरम् ॥ ६२ ॥
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात् परम् ।
सर्वेशं सर्वरूपञ्च सर्वात्मानन्तमीश्वरम् ॥ ६३ ॥
जलं जलेन सृजति जलं पाति जलेन यः ।
हरेज्जलं जलेनैव तं कृष्णं भज सन्ततम् ॥ ६४ ॥
यस्याज्ञया वाति वातः शीघ्रगामी च सन्ततम् ।
यस्याज्ञया च तपनस्तपत्येव यथा चणम् ॥ ६५ ॥
यथाचणं वर्षतीन्द्रो मृत्युश्चरति जन्तुषु ।
यथाचणं दहत्यग्निश्चन्द्रो भ्रमति भीतवत् ॥ ६६ ॥
मृत्योर्मूलं कालमूलं यमस्य च यमं परम् ।
विभुं स्रष्टुश्च स्रष्टारं पातुश्च पालकं भवे ॥ ६७ ॥
संहर्त्तारञ्च संहर्त्तुस्तं कृष्णं शरणं व्रज ।

को बन्धुश्चैव केषां वा सर्वबन्धुं भज प्रिये ॥ ६८ ॥
अहं को वा च त्वं का वा विधिना योजितः पुरा ।
त्वया सार्द्धं कर्मणा च पुनस्तेन नियोजितः ॥ ६९ ॥
अज्ञानी कातरः शोके विपत्तौ च न पण्डितः ।
सुखं दुःखं भ्रमत्येव चक्रनेमिक्रमेण च ॥ ७० ॥
नारायणं तं सर्वेशं कान्तं प्राप्स्यसि निश्चितम् ।
तपः कृतं यदर्थं च पुरा बदरिकाश्रमे ॥ ७१ ॥
मया त्वं तपसा लब्धा ब्रह्मणश्च वरेण हि ।
हरेरर्थे तव तपो हरिं प्राप्स्यसि कामिनि ॥ ७२ ॥
वृन्दावने च गोविन्दं गोलके त्वं लभिष्यसि ।
अहं यास्यामि तल्लोकं तनुं त्यक्त्वा च दानवीम् ॥ ७३ ॥
तत्र द्रक्ष्यसि मां त्वञ्च त्वां च द्रक्ष्यामि सन्ततम् ।
आगमं राधिकाशापात् भारतञ्च सुदुर्लभम् । ७४ ॥
पुनर्यास्यामि तत्रैव कः शोको मे शृणु प्रिये ।
त्वं हि देहं परित्यज्य दिव्यरूपं विधाय च ॥ ७५ ॥
तत्कालं प्राप्स्यसि हरिं मा कान्ते कातरा भव ।
इत्युक्त्वा च दिनान्ते च तया सार्द्धं मनोहरे ॥ ७६ ॥
सुष्वाप शोभने तल्पे पुष्पचन्दनचर्चिते ।
नानाप्रकारविभवे चचार रत्नमन्दिरे ॥ ७७ ॥
रत्न प्रदीप संयुक्ते स्त्रीरत्नं प्राप्य सुन्दरीम् ।
निनाय रजनीं राजा क्रीड़ाकौतुकमङ्गलैः ॥ ७८ ॥
कृत्वा वक्षसि कान्तां तां रुदन्तीं मतिदुःखिताम् ।
कृशोदरीं निराहारां निमग्नां शोकसागरे ॥ ७९ ॥
पुनस्तां बोधयामास दिव्यज्ञानेन ज्ञानवित् ।

पुरा कृष्णेन यद्दत्तं भाण्डीरे तत्त्वमुत्तमम् ॥ ८० ॥
स च तस्यै ददौ तच्च सर्वशोकहरं परम् ।
ज्ञानं संप्राप्य सा देवी प्रसन्नवदनेक्षणा ॥ ८१ ॥
क्रीड़ाञ्चकार हर्षेण सर्वं मत्वातिनश्वरम् ।
तौ दम्पती च क्रीड़ार्त्तौ निमग्नौ सुखसागरे ॥ ८२ ॥
पुलकाङ्कितसर्वाङ्गौ मूर्च्छितौ निर्जने मुने ।
अङ्गप्रत्यङ्गसंयुक्तौ सुप्रीतौ सुरतोत्सुकौ ॥ ८३ ॥
एकाङ्गौ च तथा तौ द्वौ चार्द्धनारीश्वरौ यथा ।
प्राणेश्वरञ्च तुलसी मेने प्राणाधिकं परम् ॥ ८४ ॥
प्राणाधिकाञ्च तां मेने राजा प्राणाधिकेश्वरीम् ।
तौ स्थितौ सुखसुप्तौ च तन्द्रितौ सुन्दरौ समौ ॥८५॥
सुवेशौ सुखसम्भोगादचेष्टौ सुमनोहरौ ।
क्षणं सचेतनौ तौ च कथयन्तौ रसाश्रयाम् ।
कथां मनोहरां दिव्यां हसन्तौ च क्षणं पुनः ॥८६॥
भक्तवन्तौ च ताम्बूलं प्रदत्तं च परस्परम् ॥ ८७ ॥
परस्परं सेवितौ च सुप्रीत्या श्वेतचामरैः ।
क्षणं शयानौ सानन्दौ वसन्तौ च क्षणं पुनः ॥ ८८ ॥
क्षणं केलिनियुक्तौ च रसभावसमन्वितौ ।
सुरतेर्विरतिर्नास्ति तौ तद्विषयपण्डितौ ॥ ८९ ॥
सततं जययुक्तौ द्वौ क्षणं नैव पराजितौ ॥ ९० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे तुलस्युपाख्याने तुलसीशङ्खचूड़-
सम्भोगो नाम सप्तदशोऽध्यायः ।

——

# अष्टादशोऽध्यायः ।

नारायण उवाच ।

श्रीकृष्णं मनसा ध्यात्वा राजा कृष्णपरायणः ।
ब्राह्मे मुहूर्त्ते उत्थाय पुष्पतल्पान्मनोहरात् ॥ १ ॥
रात्रिवासः परित्यज्य स्नात्वा मङ्गलवारिणा ।
धौते च वाससी धृत्वा कृत्वा तिलकमुज्ज्वलम् ॥ २ ॥
चकाराह्निकमावश्यमभीष्टदेववन्दनम् ।
दध्याज्यं मधु लाजञ्च ददर्श वस्तु मङ्गलम् ॥ ३ ॥
रत्नश्रेष्ठं मणिश्रेष्ठं वस्त्रश्रेष्ठञ्च काञ्चनम् ।
ब्राह्मणेभ्यो ददौ भक्त्या यथा नित्यञ्च नारद ॥ ४ ॥
अमूल्यरत्नं यत्किञ्चित् मुक्तामाणिक्यहीरकम् ।
ददौ विप्राय गुरवे यात्रामङ्गलहेतवे ॥ ५ ॥
गजरत्नमश्वरत्नं धेनुरत्नं मनोहरम् ।
ददौ सर्वं दरिद्राय विप्राय मङ्गलाय च ॥ ६ ॥
भाण्डाराणां सहस्रञ्च नगराणां त्रिलक्षकम् ।
ग्रामाणां शतकोटिञ्च ब्राह्मणेभ्यो ददौ मुदा ॥ ७ ॥
पुत्त्रं कृत्वा च राजेन्द्रं सुचन्द्रं दानवेषु च ।
पुत्त्रे समर्प्य भार्य्याञ्च राज्यञ्च सर्वसम्पदम् ॥ ८ ॥
प्रजानुचरसंघञ्च भाण्डार वाहनादिकम् ।
सर्वं सन्नाहयुक्तञ्च धनुष्पाणिर्बभूव ह ॥ ९ ॥

भृत्यद्वारा क्रमेणैव चकार सैन्यसञ्चयम् ।
अश्वानाञ्च त्रिलक्षेण पञ्चलक्षेण हस्तिनाम् ॥ १० ॥
रथानामयुतेनैव धानुष्काणां त्रिकोटिभिः ।
त्रिकोटिभिश्चर्म्मिणाञ्च शूलिनाञ्च त्रिकोटिभिः ॥ ११ ॥
कृता सेनापरिमिता दानवेन्द्रेण नारद ।
तस्यां सेनापतिश्चैव युद्धशास्त्रविशारदः ॥ १२ ॥
महारथः सविज्ञेयो रथिनां प्रवरो रणे ।
त्रिलक्षाक्षौहिणीसेनापतिं कृत्वा नराधिपः ॥ १३ ॥
त्रिंशदक्षौहिणी वाद्यभाण्डौघञ्च चकार ह ।
बहिर्बभूव शिविरान्मनसा श्रीहरिं स्मरन् ॥ १४ ॥
रत्नेन्द्रसारनिर्म्माणं विमानमारुरोह सः ।
गुरुवर्गान् पुरस्कृत्य प्रययौ शङ्करान्तिकम् ॥ १५ ॥
पुष्पभद्रानदीतीरे यत्राक्षयवटः शुभः ।
सिद्धाश्रमञ्च सिद्धानां सिद्धिक्षेत्रञ्च नामतः ॥ १६ ॥
कपिलस्य तपःस्थानं पुण्यक्षेत्रञ्च भारते ।
पश्चिमोदधि पूर्व्वे च मलयस्य च पश्चिमे ॥ १७ ॥
श्रीशैलोत्तरभागे च गन्धमादन दक्षिणे ।
पञ्चयोजनविस्तीर्णा दैर्घ्ये शतगुणा तथा ।
शाश्वती जलपूर्णा च पुष्पभद्रा नदी शुभा ॥ १८ ॥
लवणोदप्रियाभार्य्या शश्वत्सौभाग्यसंयुता ।
शुद्धस्फटिकसङ्काशा भारते च सुपुण्यदा ॥ १९ ॥
शरावती मिश्रिता च निर्गता सा हिमालयात् ।
गोमन्तं वामतः कृत्वा प्रविष्टा पश्चिमोदधौ ॥ २० ॥
तत्र गत्वा शङ्खचूडो ददर्श चन्द्रशेखरम् ।

वटमूले समासीनं सूर्य्यकोटिसमप्रभम् । २१ ॥
कृत्वा योगासनं स्थित्वा मुद्रायुक्तञ्च सस्मितम् ।
शुद्धस्फटिकसङ्काशं ज्वलन्तं ब्रह्मतेजसा ॥ २२ ॥
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम् ।
तप्तकाञ्चनवर्णाभं जटाजालञ्च बिभ्रतम् ॥ २३ ॥
त्रिनेत्रं पञ्चवक्त्रञ्च नागयज्ञोपवीतिनम् ।
मृत्युञ्जयं मृत्युमृत्युं विश्वमृत्युकरं परम् ॥ २४ ॥
भक्तमृत्युहरं शान्तं गौरिकान्तं मनोरमम् ।
तपसां फलदातारं दातारं सर्वसम्पदाम् ॥ २५ ॥
आशुतोषं प्रसन्नास्यं भक्तानुग्रहकारणम् ।
विश्वनाथं विश्वरूपं विश्ववीजञ्च विश्वजम् ॥ २६ ॥
विश्वम्भरं विश्ववरं विश्वसंहारकारणम् ।
कारणं कारणानाञ्च नरकार्णवतारणम् ॥ २७ ॥
ज्ञानप्रदं ज्ञानवीजं ज्ञानानन्दं सनातनम् ।
अवरुह्य विमानाच्च तं दृष्ट्वा दानवेश्वरः ॥ २८ ॥
सर्वैः सार्द्धं भक्तियुक्तः शिरसा प्रणनाम सः ।
वामतो भद्रकालीञ्च स्कन्दञ्च तत् पुरःस्थितम् ॥ २९ ॥
आशिषञ्च ददौ तस्मै काली स्कन्दश्च शङ्करः ।
उत्तस्थुर्दानवं दृष्ट्वा सर्वे नन्दीश्वरादयः ॥ ३० ॥
परस्परञ्च सम्भाषां ते चक्रुस्तत्र साम्प्रतम् ।
राजा कृत्वा च सम्भाषामुवास शिवसन्निधौ ॥ ३१ ॥
प्रसन्नात्मा महादेवो भगवांस्तमुवाच ह ॥ ३२ ॥

श्रीमहादेव उवाच ।

विधाता जगतां ब्रह्मा पिता धर्मस्य धर्मवित् ।

मरीचिस्तस्य पुत्रश्च वैष्णवश्चापि धार्म्मिकः ॥ ३३ ॥
कश्यपश्चापि तत्पुत्रो धर्म्मिष्ठश्च प्रजापतिः ।
दक्षप्रीत्या ददौ तस्मै भक्त्या कन्यास्त्रयोदश ॥ ३४ ॥
तास्वेका च दनुः साध्वी तत् सौभाग्येन च वर्द्धिता ।
चत्वारिंशद्दनोः पुत्राः दानवास्तेजसोज्ज्वलाः ॥ ३५ ॥
तेष्वेको विप्रचित्तिश्च महाबलपराक्रमः ।
तत्पुत्रो धार्म्मिको दम्भो विष्णुभक्तो जितेन्द्रियः ॥ ३६ ॥
जजाप परमं मन्त्रं पुष्करे लक्षवत्सरम् ।
शुक्राचार्य्यं गुरुं कृत्वा कृष्णस्य परमात्मनः ॥ ३७ ॥
तदा त्वां तनयं प्राप परं कृष्णपरायणम् ।
पुरा त्वं पार्षदो गोपो गोपेष्वष्टसु धार्म्मिकः ॥ ३८ ॥
अधुना राधिकाशापात् भारते दानवेश्वरः ।
आब्रह्मस्तम्भपर्य्यन्तं भ्रमं मेने च वैष्णवः ॥ ३९ ॥
सालोक्यसार्ष्टिसारूप्यसामीप्यैक्यं हरेरपि ।
दीयमानं न गृह्णन्ति वैष्णवाः सेवनं विना ॥ ४० ॥
ब्रह्मत्वममरत्वं वा तुच्छं मेने च वैष्णवः ।
इन्द्रत्वं वा कुवेरत्वं न मेने गणनासु च ॥ ४१ ॥
कृष्णभक्तस्य ते किं वा देवानां विषये भ्रमे ।
देहि राज्यञ्च देवानां मत्प्रीतिं कुरु भूमिप ॥ ४२ ॥
सुखं स्वराज्ये त्वं तिष्ठ देवास्तिष्ठन्तु स्वे पदे ।
अलं भ्रातृविरोधेन सर्वे कश्यपवंशजाः ॥ ४३ ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोड़शीम् ॥ ४४ ॥
स्वसम्पदाञ्च हानिञ्च यदि राजेन्द्र मन्यसे ।

सर्वावस्थासु ममता केषां याति च सर्वदा ॥ ४५ ॥
ब्रह्मणश्च तिरोभावो लये प्राकृतिके सति ।
आविर्भावः पुनस्तस्य प्रभवेदीश्वरेच्छया ॥ ४६ ॥
ज्ञानं बुद्धिश्च तपसा स्मृतिर्लोकस्य निश्चितम् ।
करोति सृष्टिं ज्ञानेन स्रष्टा सोऽपि क्रमेण च ॥ ४७ ॥
परिपूर्णतमो धर्मः सत्ये सत्याश्रयः सदा ।
त्रिभागः सोऽपि त्रेतायां द्विभागो द्वापरे स्मृतः ॥४८॥
एकभागः कलेः पूर्वं तद्ध्रासश्च क्रमेण च ।
कलामात्रं कलेः शेषे कुह्वां चन्द्रकला यथा ॥ ४९ ॥
यादृक् तेजो रवेर्ग्रीष्मे न तादृक् शिशिरे पुनः ।
दिने च यादृङ्मध्याह्ने सायं प्रातर्न तत् समम् ॥ ५० ॥
उदयं याति कालेन बाल्यताञ्च क्रमेण च ।
प्रकाण्डताञ्च तत्पश्चात् कालेऽस्तं पुनरेव सः ॥ ५१ ॥
दिने प्रच्छन्नतां याति काले च दुर्दिने घने ।
राहुग्रस्ते कम्पितश्च पुनरेव प्रसन्नताम् ॥ ५२ ॥
परिपूर्णतमश्चन्द्रः पूर्णिमायाञ्च यादृशः ।
तादृशो न भवेन्नित्यं क्षयं याति दिने दिने ॥ ५३ ॥
पुनः स पुष्टितां याति परकुह्वा दिने दिने ।
सम्पद्युक्तः शुक्लपक्षे कृष्णे म्लानश्च यक्ष्मणा ॥ ५४ ॥
राहुग्रस्ते दिने म्लानो दुर्दिने निविड़े घने ।
काले चन्द्रो भवेत् शुद्धो भ्रष्टश्रीः कालभेदके ॥ ५५ ॥
भविष्यति बलिश्चेन्द्रो भ्रष्टश्रीः सुतलेऽधुना ।
कालेन पृथ्वी शस्याढ्या सर्वाधारा वसुन्धरा ॥ ५६ ॥
काले जले निमग्ना सा तिरोभूता विपन्नता ।

काले नश्यन्ति विश्वानि प्रभवन्त्येव कालतः ॥ ५७ ॥
चराचराश्च कालेन नश्यन्ति प्रभवन्ति च।
ईश्वरस्यैव समता कृष्णस्य परमात्मनः ॥ ५८ ॥
अहं मृत्युञ्जयो यस्मादसंख्यं प्राकृतं लयम्।
अदर्शञ्चापि द्रक्ष्यामि वारं वारं पुनः पुनः ॥ ४९ ॥
स च प्रकृतिरूपश्च स एव पुरुषः स्मृतः।
सचात्मा सर्वजीवश्च नानारूपधरः परः ॥ ६० ॥
करोति सततं योहि तन्नाम गुणकीर्त्तनम्।
कालं मृत्युं स जयति जन्म रोगं जराभयम् ॥ ६१ ॥
स्रष्टा कृतो विधि स्तेन पाता विष्णु कृतोभवे।
अहं कृतश्च संहर्त्ता वयं विषयिणः यतः।
कालाग्नि रुद्रं संहारे नियुज्य विषये नृप ॥ ६२ ॥
अहङ्करोमि सततं तन्नाम गुणकीर्त्तनम्।
तेन मृत्युञ्जयोऽहञ्च ज्ञानेनानेन निर्भयः ॥ ६३ ॥
मृत्युर्मत्तो भयाद् याति वैनतेयादिवोरगः।
इत्युक्त्वा स च सर्वेशः सर्वज्ञः सर्वभावनः ॥ ६४ ॥
विरराम च सर्वश्च सभामध्ये च नारद।
राजा तद्वचनं श्रुत्वा प्रशसंस पुनः पुनः ॥ ६५ ॥
उवाच मधुरं देवं परं विनय पूर्वकम् ॥ ६६ ॥

शङ्खचूड़ उवाच।

त्वया यत् कथितं नाथ सर्वं सत्यं च नानृतम्।
तथापि किञ्चिद्याथार्थ्यं श्रूयतां मन्निवेदनम् ॥ ६७ ॥
ज्ञातिद्रोहे महत् पापं त्वयोक्त मधुनात यत्।
गृहीत्वा तस्य सर्वस्वं कुतः प्रस्थापितो बली ॥ ६८ ॥

मया समुद्धृतं सर्वमैश्वर्य्यं विक्रमेण च ।
सुतलाच्च समुद्धर्त्तुं नालं सोऽपि गदाधरः ॥ ६९ ॥
सभ्रात्वको हिरण्याचः कथं देवैश्च हिंसितः ।
शुम्भादयश्चासुराश्च कथं देवैर्निपातिताः ॥ ७० ॥
पुरा समुद्रमथने पीयूषं भक्षितं सुरैः ।
क्लेशभाजो वयं तत्र तैः सर्वफलभाजनैः ॥ ७१ ॥
क्रीड़ाभाण्ड मिदं विश्वं कृष्णस्य परमात्मनः ।
यस्मै तत्र स ददाति तस्यैश्वर्य्यं भवेत्तदा ॥ ७२ ॥
देवदानवयोर्वादः शश्वन्नैमित्तिकः सदा ।
पराजयो जयस्तेषां कालेऽस्माकं क्रमेण च ॥ ७३ ॥
तत्रावयोर्विरोधे च गमनं निष्फलं तव ।
समसम्बन्धिनोर्बन्धोरीश्वरस्य महात्मनः ॥ ७४ ॥
इयं ते महती लज्जा स्पर्द्धास्माभिः सहाधुना ।
ततोऽधिका च समरे कीर्त्तिहानिः पराजये ॥ ७५ ॥
शङ्खचूड़ वचः श्रुत्वा प्रहस्य च त्रिलोचनः ।
यथोचितं सुमधुर मुवाच दानवेश्वरम् ॥ ७६ ॥

श्री महादेव उवाच ।

युष्माभिः सह युद्धं मे ब्रह्मवंश समुद्भवैः ।
का लज्जा महती राजन्नकीर्त्तिर्वा पराजये ॥७७॥
युद्ध मादौ हरेरेव मधुना कैटभेन च ।
हिरण्यकशिपोश्चैव सह तेनात्मना नृप ॥ ७८ ॥
हिरण्याचस्य युद्धञ्च पुनस्तेन गदाभृता ।
त्रिपुरैः सह युद्धञ्च मया चापि पुराकृतम् ॥ ७९ ॥
सर्वेश्वर्य्याः सर्वमातुः प्रकृत्याश्च बभूव ह ।

सह शुम्भादिभिः पूर्वं समरं परमाद्भुतम् ॥ ८० ॥
पार्षदप्रवरस्त्वञ्च कृष्णस्य परमात्मनः ।
ये ये हताश्च ते दैत्या नहि केऽपि त्वया समाः ॥ ८१ ॥
का लज्जा महती राजन् मम युद्धे त्वया सह ।
सुराणां शरणस्यैव प्रेषितस्य हरेरहो ॥ ८२ ॥
देहि राज्यञ्च देवानां वाग्व्यये किं प्रयोजनम् ।
युद्धं त्वं कुरु मत् सार्द्धमिति मे निश्चितं वचः ॥ ८३ ॥
इत्युक्त्वा शङ्करस्तत्र विरराम च नारद ।
उत्तस्थौ शङ्खचूड़श्च स्वामात्यैः सह सत्वरः ॥ ८४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे प्रकृतिखण्डे तुलस्युपाख्याने शिवशङ्खचूड़-संवादेऽष्टादशोऽध्यायः ।

---

## ऊनविंशोऽध्यायः ।

---

नारायण उवाच ।

शिवं प्रणम्य शिरसा दानवेन्द्रः प्रतापवान् ।
समारुरोह यानञ्च स्वामात्यैः सह सत्वरः ॥ १ ॥
बभूवुस्ते च संक्षुब्धाः स्कन्दस्य शक्तिपीड़या ।
नेदुर्दुन्दुभयः स्वर्गे पुष्पवृष्टिर्बभूव ह ॥ २ ॥

स्कन्दस्योपरि तत्रैव समरे च भयङ्करे ।
स्कन्दस्य समरं दृष्ट्वा महदद्भुतमुल्वणम् ॥ ३ ॥
दानवानां क्षयकरं यथा प्राकृतिकं लयम् ।
राजा विमान मारुह्य शरवर्षञ्चकारह ॥ ४ ॥
नृपस्य शरवृष्टिश्च घनस्य वर्षणं यथा ।
महान् घोरान्धकारश्च वह्न्युत्थानं बभूव ह ॥ ५ ॥
देवाः प्रदुद्रुवुश्चान्ये सर्वे नन्दीश्वरादयः ।
एक एव कार्त्तिकेय स्तस्थौ समर मूर्द्धनि ॥ ६ ॥
पर्वतानाञ्च सर्पाणां शिलानां शाखिनान्तथा ।
श श्वच्चकार वृष्टिञ्च दुर्वाह्याञ्च भयङ्करीम् ॥ ७ ॥
नृपस्य शरवृष्ट्या च प्रच्छन्नः शिवनन्दनः ।
नीरदेन च सान्द्रेण संछन्नो भास्करो यथा ॥ ८ ॥
धनुश्चिच्छेद स्कन्दस्य दुर्वहञ्च भयङ्करम् ।
बभञ्ज च रथं दिव्यं चिच्छेद रथघोटकान् ॥ ९ ॥
मयूरं जर्ज्जरीभूतं दिव्यास्त्रेण चकार सः ।
शक्तिं चिक्षेप सूर्य्याभां तस्य वक्षसि घातिनीम् ॥ १० ॥
क्षणं मूर्च्छाञ्च संप्राप्य संलभ्य चेतनां पुनः ।
गृहीत्वान्यद्धनुर्दिव्यं यद्दत्तं विष्णुना पुरा ॥ ११ ॥
रत्नेन्द्रसारनिर्माणं यानमारुह्य कार्त्तिकः ।
शस्त्रमस्त्रं गृहीत्वा च चकार रण मुल्वणम् ॥ १२ ॥
सर्पांश्च पर्वतांश्चैव वृक्षांश्च प्रस्तरां स्तथा ।
सर्वांश्चिच्छेद कोपेन दिव्यास्त्रेण शिवात्मजः ॥ १३ ॥
वह्निं निर्वापयामास पार्जन्येन प्रतापवान् ।
रथं धनुश्च चिच्छेद शङ्खचूड़स्य लीलया ॥ १४ ॥

सन्नाहं सारथिञ्चैव किरीटं मुकुटोज्ज्वलम् ।
चिक्षेप शक्तिमुल्काभां दानवेन्द्रस्य वक्षसि ॥ १५ ॥
मूर्च्छां संप्राप्य राजा च संलभ्य चेतनां पुनः ।
आरुह्य वै यानमन्यं धनुर्जग्राह सत्वरः ॥ १६ ॥
चकार शरजालञ्च मायया मायिनाम्बरः ।
गुहञ्चाच्छाद्य समरे शरजालेन नारद ॥ १७ ॥
जग्राह शक्तिमव्यर्थां शतसूर्य्यसमप्रभाम् ।
प्रलयाग्निशिखारूपां विष्णोश्च तेजसाहताम् ॥ १८ ॥
चिक्षेप ताञ्च कोपेन महावेगेन कार्त्तिके ।
पपात शक्तिस्तद्गात्रे वह्निराशिरिवोज्ज्वला ॥ १९ ॥
मूर्च्छां संप्राप शक्त्या च कार्त्तिकेयो महाबलः ।
काली गृहीत्वा तं क्रोड़े निनाय शिवसन्निधौ ॥२०॥
शिवस्तञ्चापि ज्ञानेन जीवयामास लीलया ।
ददौ बलमनन्तञ्च सचोत्तस्थौ प्रतापवान् ॥ २१ ॥
शिवः स्वसैन्यं देवांश्च प्रेरयामास सत्वरः ।
दानवेन्द्रैः ससैन्यैश्च युद्धारम्भो बभूव ह ॥ २२ ॥
स्वयं महेन्द्रो युयुधे सार्द्धञ्च वृषपर्वणा ।
भास्करो युयुधे विप्रचित्तिना सह सत्तरः ॥ २३ ॥
दम्भेन सह चन्द्रश्च चकार समरं परम् ।
कालेश्वरेण कालश्च गोकर्णेन हुताशनः ॥ २४ ॥
कुवेरः कालकेयेन विश्वकर्मा मयेन च ।
भयङ्करेण मृत्युश्च संहारेण यमस्तथा ॥ २५ ॥
कलविङ्केन वरुणश्चञ्चलेन समीरणः ।
बुधश्च घृतपृष्ठेन रक्ताक्षेण शनैश्वरः ॥ २६ ॥

अयन्तो रत्नसारेण वसवोवर्चसाङ्गणैः।
अश्विनी च दीप्तिमता धूम्रेण नलकूवरः॥ २७॥
धनुर्द्धरेण धर्मश्च मण्डूकाक्षेण मङ्गलः।
शोभाकरेणैवेशानः पीठरेण च मन्मथः २८॥
उल्कामुखेन धूम्रेण खड्गेनापि ध्वजेन च।
काञ्चीमुखेन पिण्डेन धूम्रेण सह नन्दिना॥ २८॥
विश्वेन च पलाशेन चादित्या युयुधुः परम्।
एकादश महारुद्राश्चैकादश भयङ्करैः॥ ३०॥
महामारी च युयुधे चोग्रदण्डादिभिः सह।
नन्दीश्वरादयः सर्वे दानवानां गणैः सह॥ ३१॥
युयुधुश्च महद् युद्धे प्रलये च भयङ्करे।
वटमूले च शम्भुश्च तस्थौ काल्या सुतेन च॥ ३२॥
सर्वे च युयुधुः सैन्यासमूहा. सततं मुने।
रत्नसिंहासने रम्ये कोटिभिर्दानवैः सह॥ ३३॥
उवास शङ्खचूड़श्च रत्नभूषणभूषितः।
शङ्करस्य च योधाश्च युद्धे सर्वे पराजिताः॥ ३५॥
देवाश्च दुद्रुवुः सर्वे भीताश्च क्षतविक्षताः।
चकार कोपं स्कन्दश्च देवेभ्यश्चाभयं ददौ॥ ३५॥
बलञ्च स्वगणानां वै वर्द्धयामास तेजसा।
स्वयमेवन्तु युयुधे दानवानां गणैः सह॥ ३६॥
अक्षौहिणीनां शतकं समरे स जघान ह।
खर्परं पातयामास काली कमललोचना॥ ३७॥
पपौ रक्तं दानवानां क्रुद्धा सा शतखर्परम्।
दशलक्षं गजेन्द्राणां शतलक्षञ्च घोटकम्॥ ३८॥

समादायैकहस्तेन मुखे चिक्षेप लीलया ।
कबन्धानां सहस्रञ्च ननर्त्त समरे मुने ॥ ३९ ॥
स्कन्दस्य शरजालेन दानवाः क्षतविक्षताः ।
भीताश्च दुद्रुवुः सर्वे महाबलपराक्रमाः ॥ ४० ॥
वृषपर्वा विप्रचित्तिर्दम्भश्चापि विकङ्कनः ।
स्कन्देन सार्द्धं युयुधुस्ते च सर्वे क्रमेण च ॥ ४१ ॥
काली जगाह समरं ररक्ष कार्त्तिकं शिवः ।
वीरास्तामनुजग्मुश्च ते च नन्दीश्वरादयः ॥ ४२ ॥
सर्वे देवाश्च गन्धर्वा यक्षराक्षसकिन्नराः ।
राज्यभाण्डाश्च बहुशः शतकोटिर्बलाहकाः ॥ ४३ ॥
सा च गत्वा च संग्रामं सिंहनादं चकार ह ।
देव्याश्च सिंहनादेन प्रापुर्मूर्च्छाञ्च दानवाः ॥ ४४ ॥
अट्टाट्टहासमशिवं चकार च पुनः पुनः ।
हृष्टा पपौ च माध्वीकं ननर्त्त रणमूर्द्धनि ॥ ४५ ॥
उग्रदंष्ट्रा चोग्रचण्डा कोट्टरी च पपौ मधु ।
योगिनीनां डाकिनीनां गणाः सुरगणादयः ॥ ४६ ॥
दृष्ट्वा कालीं शङ्खचूड़ः शीघ्रमाजिं समाययौ ।
दानवाश्च भयं प्रापु राजा तेभ्योऽभयं ददौ ॥ ४७ ॥
काली चिक्षेप वह्निञ्च प्रलयाग्निशिखोपमम् ।
राजा निर्वापयामास पार्जन्येनावलीलया ॥ ४८ ॥
चिक्षेप वारुणं सा च तत्तीव्रं महदद्भुतम् ।
गान्धर्वेण च चिच्छेद दानवेन्द्रश्च लीलया ॥ ४९ ॥
माहेश्वरं प्रचिक्षेप काली वह्निशिखोपमम् ।
राजा जघान तच्छीघ्रं वैष्णवेनावलीलया ॥ ५० ॥

नारायणास्त्रं सा देवी चिक्षेप मन्त्रपूर्वकम् ।
राजा ननाम तं दृष्ट्वा चावरुह्य रथाद्भुवि ॥ ५१ ॥
ऊर्द्ध्वं जगाम तच्छास्त्रं प्रलयाग्निशिखोपमम् ।
पपात शङ्खचूड़श्च भक्त्या च दण्डवद्भुवि ।
ब्रह्मास्त्रं सा च चिक्षेप यत्नतो मन्त्रपूर्वकम् ॥ ५२ ॥
ब्रह्मास्त्रेण महाराजा निर्वाणञ्च चकार ह ।
चिक्षेपातीव दिव्यास्त्रं सा देवी मन्त्रपूर्वकम् ॥ ५३ ॥
राजा दिव्यास्त्रजालेन निर्वाणञ्च चकारह ।
देवी चिक्षेप शक्तिञ्च यत्नतो योजनायताम् ॥ ५४ ॥
राजा तीक्ष्णास्त्रजालेन शतखण्डं चकार ह ।
जग्राह मन्त्रपूर्वञ्च देवी पाशुपतं रुषा ॥ ५५ ॥
निक्षेप्तुं सा निषिद्धा च वाग्बभूवाशरीरिणी ।
मृत्युः पाशुपतेनास्ति नृपस्य च महात्मनः ॥ ५६ ॥
यावदस्त्येव कण्ठेऽस्य कवचञ्च हरेरिति ।
यावत् सतीत्वमस्तीति सत्याश्च नृपयोषितः ॥ ४७ ॥
तावदस्य जरामृत्युर्नास्तीति ब्रह्मणो वरः ।
इत्याकर्ण्य भद्रकाली न तच्चिक्षेप सा सती ॥ ५८ ॥
शतलक्षं दानवानां जग्राह लीलया क्षुधा ।
ग्रस्तुं जगाम वेगेन शङ्खचूड़ं भयङ्करी ॥ ५९ ॥
दिव्यास्त्रेण सुतीक्ष्णेन वारयामास दानवः ।
खड्गं चिक्षेप सा देवी ग्रीष्मसूर्य्योपमं परम् ॥ ६० ॥
दिव्यास्त्रेण दानवेन्द्रः शतखण्डं चकार सः ।
पुनर्ग्रस्तुं महादेवी वेगेन च जगाम तम् ॥ ६१ ॥
निवारयामास च तां सर्वसिद्धेश्वरो वरः ।

वेगेन मुष्टिना काली कोपयुक्ता भयङ्करी ॥ ६२ ॥
बभञ्जाथ रथं तस्य जघान सारथिं सती ।
सा च शूलञ्च चिक्षेप प्रलयाग्निशिखोपमम् ॥ ६३ ॥
वामहस्तेन जग्राह शङ्खचूड़स्य लीलया ।
मुष्ट्या जघान तं देवी महाकोपेन वेगतः ॥ ६४ ॥
बभ्राम व्यथया दैत्यः क्षणं मूर्च्छामवाप ह ।
क्षणेन चेतनां प्राप्य समुत्तस्थौ प्रतापवान् ॥ ६५ ॥
न चकार बाहुयुद्धं देव्या सह ननाम ताम् ।
देव्यास्त्रास्त्रञ्च चिच्छेद जग्राह च स्वतेजसा ॥ ६६ ॥
नास्त्रं चिक्षेप तां भक्त्या मातृबुद्ध्या च वैष्णवः ॥६७॥
गृहीत्वा दानवं देवी भ्रामयित्वा पुनः पुनः ।
ऊर्द्धं च प्रेरयामास महावेगेन कोपतः ।
ऊर्द्धात् पपात वेगेन शङ्खचूड़ः प्रतापवान् ॥ ६८ ॥
निपत्य च समुत्तस्थौ प्रणम्य भद्रकालिकाम् ।
रत्नेन्द्रसारनिर्माणं विमानान्यं मनोहरम् ।
आरुरोह हर्षयुक्तो न विश्रान्तो महारणे ॥ ६९ ॥
दानवानाञ्च क्षतजं मांसञ्च विपुलं क्षुधा ॥ ७० ॥
पीत्वा भुक्त्वा भद्रकाली जगाम शङ्करान्तिकम् ।
उवाच रणवृत्तान्तं पौर्वापर्य्यं यथाक्रमम् ॥ ७१ ॥
श्रुत्वा जहास शम्भुश्च दानवानां विनाशनम् ।
लक्षञ्च दानवेन्द्रानामवशिष्टं रणेऽधुना ॥ ७२ ॥
उद्वृत्तं भुञ्जता सार्द्धं तदन्यं भुक्तमीश्वर ।
संग्रामे दानवेन्द्रञ्च हन्तुं पाशुपतेन वै ॥ ७३ ॥
अवध्यस्तव राजेति वाग् बभूवा शरीरिणी ।

राजेन्द्रश्च महामानी महाबलपराक्रमः । ७४ ॥
न च चिक्षेप मय्यस्त्रं चिच्छेद मम सायकम् ॥ ७५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायणनारदसंवादे तुलस्युपाख्याने कालीशङ्खचूड़युद्धे ऊनविंशोऽध्यायः ।

---

## विंशतितमोऽध्यायः ।

नारायण उवाच ।

शिवस्तत्त्वं समाकर्ण्य तत्त्वज्ञानविशारदः ।
ययौ स्वयञ्च समरं सगणैः सह नारद ॥ १ ॥
शङ्खचूड़ः शिवं दृष्ट्वा विमानादवरुह्य च ।
ननाम परया भक्त्या दण्डवत् पतितो भुवि ॥ २ ॥
तं प्रणम्य च वेगेन विमानमारुरोह सः ।
तूर्णं चकार सन्नाहं धनुर्जग्राह दुर्वहम् ॥ ३ ॥
शिवदानवयोर्युद्धं पूर्णमब्दं बभूव ह ।
न बभूवतुर्न्न्यूनयोर्जयपराजयौ ॥ ४ ॥
न्यस्तशस्त्रश्च भगवान् न्यस्तशस्त्रश्च दानवः ।
रथस्थः शङ्खचूड़श्च वृषस्थो वृषभध्वजः ॥ ५ ॥
दानवानाञ्च शतकमुद्वृत्तञ्च बभूव ह ।
रणे ये ये मृताः शम्भुर्जीवयामास तान् विभुः ॥ ६ ॥

ततो विष्णुर्महामायाद्वृद्धब्राह्मणरूपधृक् ।
आगत्य च रणस्थानमुवाच दानवेश्वरम् ॥ ७ ॥

वृद्धब्राह्मण उवाच ।

देहि भिक्षाञ्च राजेन्द्र मह्यं विप्राय साम्प्रतम् ।
त्वं सर्वसम्पदां दाता यन्मे मनसि वाञ्छितम् ॥ ८ ॥
निराहाराय वृद्धाय तृषितायातुराय च ।
पश्चात् त्वां कथयिष्यामि पुरः सत्यञ्च कुर्विति ॥ ९ ॥
ओमित्युवाच राजेन्द्रः प्रसन्नवदनेक्षणः ।
कवचार्थी जनश्चाहमित्युवाचेति मायया ॥ १० ॥
तत् श्रुत्वा दानवश्रेष्ठो ददौ कवचमुत्तमम् ।
गृहीत्वा कवचं दिव्यं जगाम हरिरेव च ॥ ११ ॥
शङ्खचूड़स्य रूपेण जगाम तुलसीं प्रति ।
गत्वा तस्यां मायया च वीर्य्याधानञ्चकार ह ॥ १२ ॥
अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति ।
ग्रीष्ममध्याह्नमार्त्तण्डशतकप्रभमुज्ज्वलम् ॥ १३ ॥
नारायणाधिष्ठिताग्रं ब्रह्माधिष्ठितमध्यगम् ।
शिवाधिष्ठितमूलञ्च कालाधिष्ठितधारकम् ॥ १४ ॥
किरणावलिसंयुक्तं प्रलयाग्निशिखोपमम् ।
दुर्निवार्य्यञ्च दुर्द्धर्षमव्यर्थं वैरिघातकम् ॥ १५ ॥
तेजसा चक्रतुल्यञ्च सर्वशस्त्रविघातकम् ।
शिवकेशवयोरन्य दुर्वहञ्च भयङ्करम् ॥ १६ ॥
धनुः सहस्रं दीर्घेन प्रस्थेन शतहस्तकम् ।
सजीवं ब्रह्मरूपञ्च नित्यरूपमनिर्मितम् ॥ १७ ॥
संहर्त्तुं सर्वब्रह्माण्डमलञ्च ह्यवलीलया ।

चिक्षेप घूर्णनं कृत्वा शङ्खचूडे च नारद ॥ १८ ॥
राजा चापं परित्यज्य श्रीकृष्णचरणाम्बुजम् ।
ध्यानञ्चकार भक्त्या च कृत्वा योगासनं धिया ॥ १९ ॥
शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि ।
चकार भस्मसात्तञ्च सरथञ्चावलीलया ॥ २० ॥
राजा धृत्वा दिव्यरूपं किशोरगोपवेशकम् ।
द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम् ॥ २१ ॥
रत्नेन्द्रसारनिर्माणं वेष्टितं गोपकोटिभिः ।
गोलोकादागतं यानमारुह्य तत् पुरं ययौ ॥ २२ ॥
गत्वा ननाम शिरसा राधामाधवयोर्मुने ।
भक्त्या तच्चरणाम्भोजं रासे वृन्दावने वने ।
सुदामानं तौ च दृष्ट्वा प्रसन्नवदनेक्षणौ ॥ २३ ॥
तदा च चक्रतुः क्रोड़े स्नेहेन परिसंप्लुतौ ।
अथ शूलञ्च वेगेन प्रययौ शूलिनः करम् ॥ २४ ॥
शङ्करस्तेन शूलेन शूलपाणिर्बभूव सः ।
स शिवस्तेन शूलेन दानवस्यास्थि जालकम् ॥ २५ ॥
प्रेम्णा च प्रेरयामास लवणोदे च सागरे ।
अस्थिभिः शङ्खचूड़स्य शङ्खजातिर्बभूव ह ॥ २६ ॥
नानाप्रकाररूपा च शश्वत् पूता सुरार्चने ।
प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम् ॥ २७ ॥
तीर्थतोयस्वरूपञ्च पवित्रं शम्भुना विना ।
शङ्खशब्दो भवेद् यत्र तत्र लक्ष्मीश्च सुस्थिरा ॥ २८ ॥
सुस्नातः सर्वतीर्थेषु यः स्नातः शङ्खवारिणा ।
शङ्खे हरेरधिष्ठानं यत्र शङ्खस्ततो हरिः ॥ २९ ॥

तत्रैव सततं लक्ष्मीर्दूरीभूतममङ्गलम् ।
स्त्रीणाञ्च शङ्खध्वनिभिः शूद्राणाञ्च विशेषतः ।
भीता रुष्टा याति लक्ष्मीः स्थलमन्यं स्थलात्ततः ॥२०॥
शिवश्च दानवं हत्वा शिवलोकं जगाम सः ॥ २१ ॥
प्रहृष्टो वृषमारुह्य सगणैश्च समावृतः ।
सुराः स्वविषयं प्रापुः परमानन्दसंयुताः ॥ २२ ॥
नेदुर्दुन्दुभयः स्वर्गे जगुर्गन्धर्वकिन्नराः ।
बभूव पुष्पवृष्टिश्च शिवस्योपरि सन्ततम् ॥ २३ ॥
प्रशशंसुः सुरास्तञ्च मुनीन्द्रप्रवरादयः ॥ २४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायणनारदसंवादे तुलस्युपाख्याने शङ्खचूड़वधप्रस्तावो नाम विंशतितमोऽध्यायः ।

—–

## एकविंशतितमोऽध्यायः ।

—००—

नारद उवाच ।

नारायणश्च भगवन् वीर्य्याधानञ्चकार ह ।
तुलस्यां केन रूपेण तन्मे व्याख्यातुमर्हसि ॥ १ ॥
नारायणश्च भगवान् देवानां साधनेन च ।
शङ्खचूड़स्य रूपेण रेमे तद्रमया सह ॥ २ ॥

शङ्खचूड़स्य कवचं गृहीत्वा विष्णुमायया ।
पुनर्विधाय तद्रूपं जगाम तुलसीगृहम् ॥ ३ ॥
दुन्दुभिं वादयामास तुलसीद्वारसन्निधौ ।
जयशब्दरवद्वाराद्बोधयामास सुन्दरीम् ॥ ४ ॥
तत्श्रुत्वा सा च साध्वी च परमानन्दसंयुता ।
राजमार्गं गवाक्षेण ददर्श परमादरात् ॥ ५ ॥
ब्राह्मणेभ्यो धनं दत्त्वा कारयामास मङ्गलम् ।
वन्दिभ्यो भिक्षुकेभ्यश्च वाचिकेभ्यो धनं ददौ ॥ ६ ॥
अवरुह्य रथाद्देवो देव्याश्च भवनं ययौ ।
अमूल्यरत्ननिर्माणं सुन्दरं सुमनोहरम् ॥ ७ ॥
दृष्ट्वा च पुरतः कान्तं शान्तं कान्ता मुदान्विता ।
तत्पादं क्षालयामास ननाम च रुरोद च ॥ ८ ॥
रत्नसिंहासने रम्ये वासयामास कामुकी ।
ताम्बूलञ्च ददौ तस्मै कर्पूरादि सुवासितम् ॥ ६ ॥
अद्य मे सफलं जन्म अद्य मे सफला क्रिया ।
शरणागतञ्च प्राणेशं पश्यन्त्याश्च पुनर्गृहे ॥ १० ॥
सस्मिता सकटाक्षञ्च सकामा पुलकाञ्चिता ।
पप्रच्छ रणवृत्तान्तं कान्तं मधुरया गिरा ॥ ११ ॥

तुलस्युवाच ।

असंख्यविश्वसंहर्त्ता साईमाजौ तव प्रभो ।
कथं बभूव विजयस्तन्मे ब्रूहि कृपानिधे ॥ १२ ॥
तुलसीवचनं श्रुत्वा प्रहस्य कमलापतिः ।
शङ्खचूड़स्य रूपेण तामुवाचामृतं वचः ॥ १३ ॥

श्रीहरिरुवाच।

आवयोः समरं कान्ते पूर्णमब्दं बभूव ह।
नाशो बभूव सर्वेषां दानवानाञ्च कामिनि ॥ १४ ॥
प्रीतिञ्च कारयामास ब्रह्मा च स्वयमावयोः।
देवानामधिकारश्च प्रदत्तो ब्रह्मणा पुरा ॥ १५ ॥
मया गतं स्वभवनं शिवलोकं शिवो गतः।
इत्युक्त्वा जगतां नाथ शयनञ्च चकार ह ॥ १६ ॥
रेमे रमापतिस्तत्र रामया सह नारद।
सा साध्वी सुखसम्भोगादाकर्षणव्यतिक्रमात् ॥ १७ ॥
सर्वं वितर्कयामास कस्त्वमेवेत्युवाच ह ॥ १८ ॥
ददर्श पुरतो देवी देवदेवं सनातनम्।
नवीननीरदश्यामं शरत्पङ्कजलोचनम् ॥ १९ ॥
कोटिकन्दर्पलीलाभं रत्नभूषणभूषितम्।
ईषद्धास्यं प्रसन्नास्यं शोभितं पीतवाससा ॥ २० ॥
तं दृष्ट्वा कामिनी कामान्मूर्च्छां संप्राप लीलया।
पुनश्च चेतनां प्राप्य पुनः सा तमुवाच ह ॥ २१ ॥

तुलस्युवाच।

हे नाथ! ते दया नास्ति पाषाणसदृशस्य च।
छलेन धर्मभङ्गेन मम स्वामी त्वया हतः ॥ २२ ॥
पाषाणसदृशस्त्वञ्च दयाहीनो यतः प्रभो।
तस्मात् पाषाणरूपस्त्वं भुवि देव भवाधुना ॥ २३ ॥
ये वदन्ति दयासिन्धुं त्वान्ते भ्रान्ता न संशयः।
भक्तो विनापराधेन परार्थे च कथं हतः ॥ २४ ॥
दुर्वृत्त त्वञ्च सर्वज्ञो न जानासि परव्यथाम्।

अतस्त्वमेकजनुषि त्वमेव विस्मरिष्यसि ॥ २५ ॥
इत्युक्त्वा च महासाध्वी निपत्य चरणे हरेः ।
भृशं रुरोद शोकार्त्ता विललाप मुहुर्मुहुः ॥ २६ ॥
तस्याश्च करुणां दृष्ट्वा करुणामयसागरः ।
नारायणस्तां बोधयितुमुवाच कमलापतिः ॥ २७ ॥

श्रीभगवानुवाच ।

तपस्त्वया कृतं साध्वि मदर्थे भारते चिरम् ।
त्वदर्थे शङ्खचूड़श्च चकार सुचिरं तपः ॥ २८ ॥
कृत्वा त्वां कामिनीं कामी विजहार च तत् फलात् ।
अधुना दातु मुचितं तवैव तपसः फलम् ॥ २९ ॥
इदं शरीरं त्यक्त्वा च दिव्यं देहं विधाय च ।
रासे मे रमया सार्द्धं त्वं रमासदृशी भव ॥ ३० ॥
इयं तनुर्नदीरूपा गण्डकीति च विश्रुता ।
पूता सुपुण्यदा नृणां पुण्या भवतु भारते ॥ ३१ ॥
तव केश समूहाश्च पुण्यवृक्षा भवन्त्विति ।
तुलसीकेश सम्भूता तुलसीति च विश्रुता ॥ ३२ ॥
त्रिलोकेषु च पुष्पाणां पत्राणां देवपूजने ।
प्रधानरूपा तुलसी भविष्यति वरानने ॥ ३३ ॥
स्वर्गे मर्त्ये च पाताले वैकुण्ठे मम सन्निधौ ।
भवन्तु तुलसीवृक्षा वराः पुष्पेषु सुन्दरि ॥ ३४ ॥
गोलोके विरजा तीरे रासे वृन्दावने भुवि ।
भाण्डीरे चम्पकवने रम्ये चन्दनकानने ॥ ३५ ॥
माधवी केतकी कुन्दमल्लिकामालतीवने ।
भवन्तु तरवस्तत्र पुण्यस्थानेषु पुण्यदाः ॥ ३६ ॥

तुलसीतरुमूले च पुण्यदेशे सुपुण्यदे ।
अधिष्ठानन्तु तीर्थानां सर्वेषाञ्च भविष्यति ॥ ३७ ॥
तत्रैव सर्वदेवानां समधिष्ठानमेवच ।
तुलसीपत्रपतनप्राप्तो यश्च वरानने ॥ ३८ ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
तुलसीपत्रतोयेन योऽभिषेकं समाचरेत् ॥ ३९ ॥
सुधाघटसहस्रेण सा तुष्टिर्न भवेद्धरेः ।
या च तुष्टिर्भवेन्नृणां तुलसीपत्रदानतः ॥ ४० ॥
गवामयुतदानेन यत्फलं लभते नरः ।
तुलसीपत्रदानेन तत् फलं लभते सति ॥ ४१ ॥
तुलसी पत्र तोयञ्च मृत्युकाले च यो लभेत् ।
स मुच्यते सर्वपापात् विष्णुलोकं स गच्छति ॥ ४२ ॥
नित्यं यस्तुलसीतोयं भुङ्क्ते भक्त्या च यो नरः ।
स एव जीवन्मुक्तश्च गङ्गास्नान फलं लभेत् ॥ ४३ ॥
नित्यं यस्तुलसीं दत्वा पूजयेन्माञ्च मानवः ।
लक्षाश्वमेधजं पुण्यं लभते नात्रसंशयः ॥ ४४ ॥
तुलसीं स्वकरे धृत्वा देहे धृत्वा च मानवः ।
प्राणं स्त्यजति तीर्थेषु विष्णुलोकं स गच्छति ॥४५॥
तुलसीकाष्ठनिर्माण मालां गृह्णाति यो नरः ।
पदेपदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ ४६ ॥
तुलसीं स्वकरे धृत्वा स्वीकारं यो न रक्षति ।
स याति कालसूत्रञ्च यावच्चन्द्रदिवाकरौ ॥ ४७ ॥
करोति मिथ्याशपथं तुलस्या यो हि मानवः ।
स याति कुम्भीपाकञ्च यावदिन्द्राश्चतुर्दश ॥ ४८ ॥

तुलसीतोयकणिकां मृत्युकाले च यो लभेत् ।
रत्नयानं समारुह्य वैकुण्ठं स प्रयाति च ॥ ४९ ॥
पूर्णिमायाम् अमायाञ्च द्वादश्यां रविसंक्रमे ।
तैलाभ्यङ्गे चास्नाते च मध्याह्ने निशि सन्ध्ययोः ॥५०॥
अशौचेऽशुचि काले वा रात्रिवासान्विते नराः ।
तुलसीं ये च छिन्दन्ति ते छिन्दन्ति हरेः शिरः ॥ ५१ ॥
त्रिरात्रं तुलसीपत्रं शुद्धं पर्य्युषितं सति ।
श्राद्धे व्रते वा दाने वा प्रतिष्ठायां सुरार्चने ॥ ५२ ॥
भूगतं तोयपतितं यद्दत्तं विष्णवे सति ।
शुद्धन्तु तुलसीपत्रं क्षालनादन्यकर्मणि ॥ ५३ ॥
वृक्षाधिष्ठात्री देवी या गोलोके च निरामये ।
कृष्णेन सार्द्धं रहसि नित्यक्रीड़ां करिष्यति ॥ ५४ ॥
नद्यधिष्ठातृदेवी या भारते च सुपुण्यदा ।
लवणोदस्य पत्नी च मदंशस्य भविष्यति ॥ ५५ ॥
त्वञ्च स्वयं महासाध्वी वैकुण्ठे मम सन्निधौ ।
रमासमा च रासे च भविष्यसि न संशयः ॥ ५६ ॥
अहञ्च शैलरूपी च गण्डकी तीरसन्निधौ ।
अधिष्ठानं करिष्यामि भारते तव शापतः ॥ ५७ ॥
वज्रकीटाश्चकृमया वज्रदंष्ट्राश्च तत्र वै ।
तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम् ॥ ५८ ॥
एकद्वारे चतुश्चक्रं वनमालाविभूषितम् ।
नवीननीरदश्यामं लक्ष्मीनारायणाभिधम् ॥ ५९ ॥
एकद्वारे चतुश्चक्रं नवीननीरदोपमम् ।
लक्ष्मीजनार्दनं ज्ञेयं रहितं वनमालया ॥ ६० ॥

द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम् ।
रघुनाथाभिधं ज्ञेयं रहितं वनमालया ॥ ६१ ॥
अतिक्षुद्रं द्विचक्रञ्च नवीनजलदप्रभम् ।
दधिवामनाभिधं ज्ञेयं गृहिणाञ्च सुखप्रदम् ॥ ६२ ॥
अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम् ।
विज्ञेयं श्रीधरं देवं श्रीप्रदं गृहिणां सदा ॥ ६३ ॥
स्थूलञ्च वर्त्तुलाकारं रहितं वनमालया ।
द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम् ॥ ६४ ॥
मध्यमं वर्त्तुलाकारं द्विचक्रं बाणविक्षतम् ।
रणरामाभिधं ज्ञेयं शरतूणसमन्वितम् ॥ ६५ ॥
मध्यमं सप्तचक्रञ्च छत्रतूणसमन्वितम् ।
राजराजेश्वरं ज्ञेयं राजसम्पत्प्रदं नृणाम् ॥ ६६ ॥
द्विसप्तचक्रं स्थूलञ्च नवीनजलदप्रभम् ।
अनन्ताख्यञ्च विज्ञेयं चतुर्वर्गफलप्रदम् ॥ ६७ ॥
चक्राकारं द्विचक्रञ्च सश्रीकं जलदप्रभम् ।
सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम् ॥ ६८ ॥
सुदर्शनञ्चैकचक्रं गुप्तचक्रं गदाधरम् ।
द्विचक्रं हयवक्त्राभं हयग्रीवं प्रकीर्त्तितम् ॥ ६९ ॥
अतीवविस्तृतास्यञ्च द्विचक्रं विकटं सति ।
नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदं नृणाम् ॥ ७० ॥
द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् ।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा ॥ ७१ ॥
द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम् ।
वासुदेवञ्च विज्ञेयं सर्वकामफलप्रदम् ॥ ७२ ॥

प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम्।
शुषिरच्छिद्रबहुलं गृहिणाञ्च सुखप्रदम्॥ ७३॥
द्वे चक्रे चैकलग्ने च पृष्ठे यत्र तु पुष्कलम्।
सङ्कर्षणन्तु विज्ञेयं सुखदं गृहिणां सदा॥ ७४॥
अनिरुद्धन्तु पीताभं वर्त्तुलञ्चातिशोभनम्।
सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः॥ ७५॥
शालग्रामशिला यत्र तत्र सन्निहितो हरिः।
तत्रैव लक्ष्मीर्वसति सर्वतीर्थसमन्विता॥ ७६॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
तानि सर्वाणि नश्यन्ति शालग्रामशिलार्च्चनात्॥७७॥
छत्राकारे भवेद्राज्यं वर्त्तुले च महाश्रियः।
दुःखञ्च शकटाकारे शूलाग्रे मरणं ध्रुवम्॥ ७८॥
विकृतास्ये च दारिद्रं पिङ्गले हानिरेव च।
लग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम्॥ ७९॥
व्रतं दानं प्रतिष्ठा च श्राद्धञ्च देवपूजनम्।
शालग्रामशिलायाश्चैवाधिष्ठानात् प्रशस्तकम्॥ ८०॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः।
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत्॥ ८१॥
सर्वदानेषु यत् पुण्यं प्रादक्षिण्ये भुवो यथा।
सर्वयज्ञेषु तीर्थेषु व्रतेष्वनशनेषु च॥ ८२॥
तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च।
जीवन्मुक्तो महापूतो भवेदेव न संशयः॥ ८३॥
पाठे चतुर्णां वेदानां तपसां करणे सति।
तत् पुण्यं लभते नूनं शालग्रामशिलार्च्चनात्॥ ८४॥

शालग्रामशिलातोयं नित्यं भुङ्क्ते च यो नरः ।
सुरेप्सितं प्रसादञ्च जन्ममृत्युजराहरम् ॥ ८५ ॥
तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च ।
जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम् ॥ ८६ ॥
तत्रैव हरिणा सार्द्धमसंख्यं प्राकृतं लयम् ।
पश्यत्येव हि दास्ये च निर्मुक्तो दास्यकर्मणि ॥ ८७ ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तञ्च दृष्ट्वा भिया यान्ति वैनतेयमिवोरगाः ॥ ८८ ॥
तत्पादपद्मरजसा सद्यः पूता वसुन्धरा ।
पुंसां लक्षं तत्पितॄणां निस्तारस्तस्य जन्मनः ॥ ८९ ॥
शालग्रामशिलातोयं मृत्युकाले च यो लभेत् ।
सर्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ९० ॥
निर्वाणमुक्तिं लभते कर्मभोगाद्विमुच्यते ।
विष्णुपादे प्रलीनश्च भविष्यति न संशयः ॥ ९१ ॥
शालग्रामशिलां धृत्वा मिथ्यावादं वदेत्तु यः ।
स याति कूर्मदंष्ट्रञ्च यावद्वै ब्रह्मणो वयः ॥ ९२ ॥
शालग्रामशिलां स्पृष्ट्वा स्वीकारं यो न पालयेत् ।
स प्रयात्यसिपत्रञ्च लक्षमन्वन्तराधिकम् ॥ ९३ ॥
तुलसीपत्रविच्छेदं शालग्रामे करोति यः ।
तस्य जन्मान्तरे काले स्त्रीविच्छेदो भविष्यति ॥ ९४ ॥
तुलसीपत्रविच्छेदं शङ्खे यो हि करोति च ।
भार्य्याहीनो भवेत् सोऽपि रोगी च सप्तजन्मसु ॥ ९५ ॥
शालग्रामञ्च तुलसीं शङ्खमेकत्र एव च ।
यो रक्षति महाज्ञानी स भवेत् श्रीहरिप्रियः ॥ ९६ ॥

मत्कृदेव हि यो यस्यां वीर्य्याधानं करोति च ।
तद्विच्छेदे तस्य दुःखं भवेदेव परस्परम् ॥ ९७ ॥
त्वं प्रिया शङ्खचूडस्य चैकमन्वन्तरावधि ।
शङ्खेन सार्द्धं त्वद्भेदः केवलं दुःखदस्तव ॥ ९८ ॥
इत्युक्त्वा श्रीहरिस्तांश्च विरराम च सादरम् ।
सा च देहं परित्यज्य दिव्यरूपं दधार ह ॥ ९९ ॥
यथा श्रीश्च तथा सा चाप्युवास हरिवक्षसि ।
प्रजगाम तया सार्द्धं वैकुण्ठं कमलापतिः ॥ १०० ॥
लक्ष्मीः सरस्वती गङ्गा तुलसी चापि नारद ।
हरेः प्रियाश्चतस्रश्च बभूवुरीश्वरस्य च ॥ १०१ ॥
सद्यस्तद्देहजाता च बभूव गण्डकीनदी ।
हरेरंशेन शैलश्च तत्तीरे पुण्यदो नृणाम् ॥ १०२ ॥
कुर्वन्ति तत्र कीटाश्च शिलां बहुविधां मुने ।
जले पतन्ति या याश्च जलदाभाश्च निश्चितम् ॥ १०३ ॥
स्थलस्थाः पिङ्गला ज्ञेयाश्चोपतापाद्धरेरिति ।
इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ १०४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायणनारदसंवादे तुलस्युपाख्याने एकविंशतितमोऽध्यायः ।

---

# द्वाविंशतितमोऽध्यायः ।

नारद उवाच ।

तुलसी च जगत्पूज्या पूता नारायणप्रिया ।
तस्याः पूजाविधानञ्च स्तोत्रं किं न श्रुतं मया ॥ १ ॥
केन पूज्या स्तुता केन पुरा प्रथमतो मुने ।
तत्र पूज्या सा बभूव केन वा वद मामहो ॥ २ ॥

सूत उवाच ।

नारदस्य वचः श्रुत्वा प्रहस्य गरुड़ध्वजः ।
कथां कथितुमारेभे पुण्यरूपां पुरातनीम् ॥ ३ ॥

नारायण उवाच ।

हरिः संप्राप्य तुलसीं रेमे च रमया सह ।
रमासमान्तां सौभाग्यां चकार गौरवेण च ॥ ४ ॥
सेहे लक्ष्मीश्च गङ्गा च तस्याश्च नवसङ्गमम् ।
सौभाग्यं गौरवं कोपान्न सेहे च सरस्वती ॥ ५ ॥
सा तां जघान कलहे मानिनी हरिसन्निधौ ।
व्रीड़या स्वापमानाच्च सान्तर्द्धानं चकार ह ॥ ६ ॥
सर्वसिद्धेश्वरी देवी ज्ञानिनी सिद्धयोगिनी ।
बभूवादर्शनं कोपात् सर्वत्र च हरेरहो ॥ ७ ॥
हरिर्न दृष्ट्वा तुलसीं बोधयित्वा सरस्वतीम् ।
तदनुज्ञां गृहीत्वा च जगाम तुलसीवनम् ॥ ८ ॥
तत्र गत्वा च स्नात्वा च तुलस्या तुलसीं सतीम् ॥ ९ ॥

पूजयामास ध्यात्वा तां स्तोत्रं भक्त्या चकार ह ।
लक्ष्मीर्मायाकामवाणीबीजपूर्वं दशाक्षरम् ॥ १० ॥
श्रीं ह्रीं क्लीं ऐं वृन्दावन्यै स्वाहा ।
वृन्दावनीति ङेन्तञ्च वह्निजायान्तमेव च ।
अनेन कल्पतरुणा मन्त्रराजेन नारद ॥ ११ ॥
पूजयेच्च विधानेन सर्वसिद्धिं लभेन्नरः ।
घृतदीपेन धूपेन सिन्दूरचन्दनेन च ॥ १२॥
नैवेद्येन च पुष्पेण चोपहारेण नारद ।
हरिस्तोत्रेण तुष्टा सा चाविर्भूय महीरुहात् ॥ १३ ॥
प्रपन्ना चरणाम्भोजे जगाम शरणं शुभम् ।
वरं तस्यै ददौ विष्णुर्जगत्पूज्या भवेति च ॥ १४ ॥
अहं त्वाञ्च धरिष्यामि स्वमूर्ध्नि वक्षसीति च ।
सर्वे त्वां धारयिष्यन्ति स्वयं मूर्ध्नि सुरादयः ॥ १५ ॥
इत्युक्त्वा तां गृहीत्वा च प्रययौ स्वालयं विभुः ॥ १६ ॥

नारद उवाच ।

किं ध्यानं स्तवनं किं वा किं वा पूजाविधिक्रमम् ।
तुलस्याश्च महाभाग तन्मे व्याख्यातुमर्हसि ॥ १७ ॥

नारायण उवाच ।

अन्तर्हितायां तस्याञ्च गत्वा च तुलसीवनम् ।
हरिः संपूज्य तुष्टाव तुलसीं विरहातुरः ॥ १८ ॥

श्रीभगवानुवाच ।

वृन्दारूपाश्च वृक्षाश्च यदैकत्र भवन्ति च ।
विदुर्बुधास्तेन वृन्दा मत्प्रियां तां भजाम्यहम् ॥१९॥

पुरा बभूव या देवी ह्यादौ वृन्दावने वने।
तेन वृन्दावनी ख्याता तां सौभाग्यां भजाम्यहम् ॥२०॥
असंख्येषु च विश्वेषु पूजिता या निरन्तरम्।
तेन विश्वपूजिताख्यां जगत्पूज्यां भजाम्यहम् ॥२१॥
असंख्यानि च विश्वानि पवित्राणि यया सदा।
तां विश्वपावनीं देवीं विरहेण स्मराम्यहम् ॥ २२ ॥
देवा न तुष्टाः पुष्पाणां समूहेन यया विना।
तां पुष्पसारां शुद्धाञ्च द्रष्टुमिच्छामि शोकतः ॥ २३ ॥
विश्वे यत्प्राप्तिमात्रेण भक्त्यानन्दो भवेद्ध्रुवम्।
नन्दिनी तेन विख्याता सा प्रीता भविता हि मे ॥२४॥
यस्या देव्याः तुला नास्ति विश्वेषु निखिलेषु च।
तुलसी तेन विख्याता तां यामि शरणं प्रिये ॥२५॥
कृष्णजीवनरूपा या शश्वत्प्रियतमा सती।
तेन कृष्णजीवनीति मम रक्षतु जीवनम् ॥ २६ ॥
इत्येवं स्तवनं कृत्वा तत्र तस्थौ रमापतिः।
ददर्श तुलसीं साक्षात् पादपद्मे नतां सतीम् ॥ २७ ॥
रुदन्तीमभिमानेन मानिनीं मानपूजिताम्।
प्रियां दृष्ट्वा प्रियः शीघ्रं वासयामास वक्षसि ॥ २८ ॥
भारत्याज्ञां गृहीत्वा च स्वालयञ्च ययौ हरिः।
भारत्या सह तत्प्रीतिं कारयामास सत्वरम् ॥२९॥
वरं विष्णुर्ददौ तस्यै विश्वपूज्या भवेति च।
शिरोधार्य्या च सर्वेषां वन्द्या मान्या ममेति च ॥३०॥
विष्णोर्वरेण सा देवी परितुष्टा बभूव ह।
सरस्वती तामाश्लिष्य वासयामास सन्निधौ ॥ ३१ ॥

लक्ष्मीर्गङ्गा सस्मिता तां समाश्लिष्य च नारद ।
गृहं प्रवेशयामास विनयेन सतीं तदा ॥ ३२ ॥
वृन्दां वृन्दावनीं विश्वपावनीं विश्वपूजिताम् ।
पुष्पसारां नन्दिनीं च तुलसीं कृष्णजीवनीम् ॥ ३३ ॥
एतन्नामाष्टकञ्चैतत् स्तोत्रं नामार्थसंयुतम् ।
यः पठेत्ताञ्च संपूज्य सोऽश्वमेधफलं लभेत् ॥ ३४ ॥
कार्त्तिकीपूर्णिमायाञ्च तुलस्या जन्ममङ्गलम् ।
तत्र तस्याश्च पूजा च विहिता हरिणा पुरा ॥ ३५ ॥
तस्यां यः पूजयेत्ताञ्च भक्त्या च विश्वपावनीम् ।
सर्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ३६ ॥
कार्त्तिके तुलसीपत्रं विष्णवे यो ददाति च ।
गवामयुतदानस्य फलमाप्नोति निश्चितम् ॥ ३७ ॥
अपुत्रो लभते पुत्रं प्रियाहीनो लभेत् प्रियाम् ।
बन्धुहीनो लभेत् बन्धुं स्तोत्रस्मरणमात्रतः ॥ ३८ ॥
रोगी प्रमुच्यते रोगात् बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु पापान्मुच्येत पातकी ॥ ३९ ॥
इत्येवं कथितं स्तोत्रं ध्यानं पूजाविधिं शृणु ।
त्वमेव वेद जानासि काण्वशाखोक्तमेव च ॥ ४० ॥
यद्वृक्षे पूजयेत्ताञ्च भक्त्या चावाहनं विना ।
ध्यात्वा षोड़शोपचारैः ध्यानं पातकनाशनम् ॥ ४१ ॥
तुलसीं पुष्पसाराञ्च सतीं पूज्यां मनोहराम् ।
कृत्स्नपापेन्धदाहाय ज्वलदग्निशिखोपमाम् ॥ ४२ ॥
पुष्पेषु तुलनाप्यस्या नासीद्देवीषु वा मुने ।
पवित्ररूपा सर्वासु तुलसी सा च कीर्त्तिता ॥ ४३ ॥

शिरोधार्य्याञ्च सर्वेषामीप्सितां विश्वपावनीम् ।
जीवन्मुक्तां मुक्तिदाञ्च भजे तां हरिभक्तिदाम् ॥ ४४ ॥
इति ध्यात्वा च संपूज्य स्तुत्वा च प्रणमेद् बुधः ।
उक्तं तुलस्युपाख्यानं किं भूयः श्रोतुमिच्छसि ॥ ४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारा-
यणनारदसंवादे तुलस्युपाख्यानं नाम
द्वाविंशतितमोऽध्यायः ।

---

## त्रयोविंशतितमोऽध्यायः ।

---

नारद उवाच ।

तुलस्युपाख्यानमिदं श्रुतमीश सुधोपमम् ।
यत्तु सावित्र्युपाख्यानं तन्मे व्याख्यातुमर्हसि ॥ १ ॥
पुरा येन समुद्भूता सा श्रुता च श्रुतिप्रसूः ।
केन वा पूजिता देवी प्रथमे कैश्च वा परे ॥ २ ॥

नारायण उवाच ।

ब्रह्मणा वेदजननी पूजिता प्रथमे मुने ।
द्वितीये च देवगणैस्तत्पश्चाद्विदुषां गणैः ॥ ३ ॥
तथा चाश्वपतिः पूर्वं पूजयामास भारते ।
तत्पश्चात् पूजयामासुर्वर्णाश्चत्वार एव च ॥ ४ ॥

नारद उवाच ।

को वा सोऽश्वपतिर्ब्रह्मन् केन वा तेन पूजिता ।

सर्वपूज्या च सावित्री तन्मे व्याख्यातुमर्हसि ॥ ५ ॥

नारायण उवाच ।

मद्रदेशे महाराजा बभूवाश्वपतिर्मुने ।
वैरिणां बलहर्त्ता च मित्राणां दुःखनाशनः ॥ ६ ॥
आसीत्तस्य महाराज्ञी महिषी धर्मचारिणी ।
मालतीति च सा ख्याता यथा लक्ष्मीर्गदाभृतः ॥७॥
सा च राज्ञी महासाध्वी वशिष्ठस्योपदेशतः ।
चकाराराधनं भक्त्या सावित्र्याश्चैव नारद ॥ ८ ॥
प्रत्यादेशं न सा प्राप महिषी न ददर्श ताम् ।
गृहं जगाम सा दुःखाद्धृदयेन विदूयता ॥ ९ ॥
राजा तां दुःखितां दृष्ट्वा बोधयित्वा नयेन वै ।
सावित्र्यास्तपसे भक्त्या जगाम पुष्करं तदा ॥ १० ॥
तपश्चचार तत्रैव संयतः शतवत्सरम् ।
न ददर्श च सावित्रीं प्रत्यादेशो बभूव ह ॥ ११ ॥
शुश्रावाकाशवाणीञ्च नृपेन्द्रश्चाशरीरिणीम् ।
गायत्री दशलक्षञ्च जपं कुर्विति नारद ॥ १२ ॥
एतस्मिन्नन्तरे तत्र प्रजगाम पराशरः ।
प्रणनाम नृपस्तञ्च मुनिर्नृपमुवाच ह ॥ १३ ॥

पराशर उवाच ।

सकृज्जपश्च गायत्र्याः पापं दिन कृतं हरेत् ।
दशधा प्रजपान्नृणां दिवारात्रघमेव च ॥ १४ ॥
शतधा च जपाच्चैवं पापं मासार्जितं परम् ।
सहस्रधा जपाच्चैवं कल्मषं वत्सरार्जितम् ॥ १५ ॥

लक्षजन्मकृतं पापं दशलक्ष त्रिजन्मनः ।
सर्वजन्म कृतं पापं शतलक्षो विनश्यति ॥ १६ ॥
करोति मुक्तिं विप्राणां जपो दशगुणस्ततः ।
करं सर्पफणाकारं कृत्वा तु स्वर्द्ध मुद्रितम् ॥ १७ ॥
आनम्र मूर्द्ध मचलं प्रजपेत् प्राङ्मुखो द्विजः ।
अनामिकामध्यदेशादधो वामक्रमेण च ॥ १८ ॥
तर्जनीमूलपर्य्यन्तं जपस्यैषः क्रमः करे ।
श्वेतपङ्कजवीजानां स्फाटिकानाञ्च संस्कृताम् ॥ १९ ॥
कृत्वा वा मालिकां राजन् जपेत्तीर्थे सुरालये ।
संस्थाप्य मालामश्वत्थपत्रसप्तसु संयतः ॥ २० ॥
कृत्वा गोरोचनाक्ताञ्च गायत्र्या स्नापयेत् सुधीः ।
गायत्रीशतकं तस्यां जपेच्च विधिपूर्वकम् ॥ २१ ॥
अथवा पञ्चगव्येन स्नाता माला च संस्कृता ।
अथ गङ्गोदकेनैव स्नाता वातिसुसंस्कृता ॥ २२ ॥
एवं क्रमेण राजर्षे दशलक्षं जपं कुरु ।
साक्षाद् द्रक्ष्यसि सावित्रीं त्रिजन्मपातकक्षयात् ॥२३॥
नित्यं नित्यं त्रिसन्ध्यञ्च करिष्यसि दिने दिने ।
मध्याह्ने चापि सायाह्ने प्रातरेव शुचिः सदा ॥२४॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदह्ना कुरुते कर्म न तस्य फलभाग् भवेत् ॥ २५ ॥
नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्र वद्वहिःकार्य्यः सर्वस्मात् द्विजकर्मणः ॥ २६ ॥
यावज्जीवनपर्य्यन्तं यस्त्रिसन्ध्यां करोति च ।
स च सूर्य्यसमो विप्रस्तेजसा तपसा सदा ॥ २७ ॥

तत्पादपद्म रजसा सद्यः पूता वसुन्धरा।
जीवन्मुक्तः स तेजस्वी सन्ध्यापूतो हि यो द्विजः ॥२८॥
तीर्थानि च पवित्राणि तस्य स्पर्शनमात्रतः।
ततः पापानि यान्त्येव वैनतेयादिवोरगाः ॥२९॥
न गृह्णन्ति सुराः पूजां पितरः पिण्डतर्पणम्।
स्वेच्छया च द्विजातेश्च त्रिसन्ध्यरहितस्य च ॥ ३० ॥
विष्णुमन्त्रविहीनश्च त्रिसन्ध्यरहितो द्विजः।
एकादशीविहीनश्च विषहीनो यथोरगः ॥ ३१ ॥
नित्यं नैवेद्यभोजी च धावको वृषवाहकः।
शूद्रान्नभोजी विप्रश्च विषहीनो यथोरगः ॥ ३२ ॥
शवदाही च शूद्राणां यो विप्रो वृषलीपतिः।
शूद्राणां सूपकारश्च विषहीनो यथोरगः ॥ ३३ ॥
शूद्राणाञ्च प्रतिग्राही शूद्रयाजी च यो द्विजः।
असिजीवी मसिजीवी विषहीनो यथोरगः ॥ ३४ ॥
यो विप्रोऽवीरान्नभोजी ऋतुस्नानान्नभोजकः।
भगजीवी वार्द्धुषिको विषहीनो यथोरगः ॥ ३५ ॥
यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी।
यो विद्याविक्रयी भूप विषहीनो यथोरगः ॥ ३६ ॥
सूर्योदये च द्विर्भोजी मत्स्यभोजी च यो द्विजः।
शिलापूजादिरहितो विषहीनो यथोरगः ॥ ३७ ॥
इत्युक्त्वा च मुनिश्रेष्ठः सर्वं पूजाविधिं क्रमम्।
तमुवाच च सावित्र्या ध्यानादिकमभीप्सितम् ॥ ३८ ॥
दत्त्वा सर्वं नृपेन्द्राय प्रययौ स्वालयं मुनिः।
राजा सम्पूज्य सावित्रीं ददर्श वरमाप च ॥ ३९ ॥

नारद उवाच।

किं वा ध्यानञ्च सावित्र्याः किं वा पूजाविधानकम्।
स्तोत्रं मन्त्रञ्च किं दत्त्वा प्रययौ स पराशरः॥ ४०॥
नृपः केन विधानेन संपूज्य श्रुतिमातरम्।
वरञ्च किं वा संप्राप वद सोऽश्वपतिर्नृपः॥ ४१॥

नारायण उवाच।

ज्यैष्ठे कृष्णत्रयोदश्यां शुद्धे काले च संयतः।
व्रतमेव चतुर्दश्यां व्रती भक्त्या समाचरेत्॥ ४२॥
व्रतं चतुर्दशाब्दञ्च द्विसप्तफलसंयुतम्।
दत्त्वा द्विसप्तनैवेद्यं पुष्पधूपादिकं तथा॥ ४३॥
वस्त्रं यज्ञोपवीतञ्च भोज्यञ्च विधिपूर्वकम्।
संस्थाप्य मङ्गलघटं फलशाखासमन्वितम्॥ ४४॥
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।
संपूज्य पूजयेदिष्टं घटे आवाहिते मुने॥ ४५॥
शृणु ध्यानञ्च सावित्र्याश्चोक्तं माध्यन्दिने च यत्।
स्तोत्रं पूजाविधानञ्च मन्त्रञ्च सर्वकामदम्॥ ४६॥
तप्तकाञ्चनवर्णाभां ज्वलन्तीं ब्रह्मतेजसा।
ग्रीष्ममध्याह्नमार्त्तण्डसहस्रसमसुप्रभाम्॥ ४७॥
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्।
वह्निशुद्धांशुकाधानां भक्तानुग्रहकातराम्॥ ४८॥
सुखदां मुक्तिदां शान्तां कान्ताञ्च जगतां विधेः।
सर्वसम्पत्स्वरूपाञ्च प्रदात्रीं सर्वसम्पदाम्॥ ४९॥
वेदाधिष्ठातृदेवीञ्च वेदशास्त्रस्वरूपिणीम्।
वेदवीजस्वरूपाञ्च भजे त्वां वेदमातरम्॥ ५०॥

ध्यात्वा ध्यानेन चानेन दत्त्वा पुष्पं स्वमूर्द्धनि ।
पुनर्ध्यात्वा घटे भक्त्या देवीमावहयेद् व्रती ॥ ५१ ॥
दत्त्वा षोड़शोपचारं वेदोक्तमन्त्रपूर्वकम् ।
सम्पूज्य स्तुत्वा प्रणमेदेवं देवीं विधानतः ॥ ५२ ॥
आसनं पाद्यमर्घ्यञ्च स्नानीयञ्चानुलेपनम् ।
धूपं दीपञ्च नैवेद्यं ताम्बूलं शीतलं जलम् ॥ ५३ ॥
वसनं भूषणं माल्यं गन्धमाचमनीयकम् ।
मनोहरं सुतल्पञ्च देयान्येतानि षोड़श ॥ ५४ ॥
दारुसारविकारञ्च हेमादिनिर्मितञ्च वा ।
देवाधारं पुण्यदञ्च मया नित्यं निवेदितम् ॥ ५५ ॥
तीर्थोदकञ्च पाद्यञ्च पुण्यदं प्रीतिदं महत् ।
पूजाङ्गभूतं शुद्धञ्च मया भक्त्या निवेदितम् ॥ ५६ ॥
पवित्ररूपमर्घ्यञ्च दूर्वापुष्पाक्षतान्वितम् ।
पुण्यदं शङ्खतोयाक्तं मया तुभ्यं निवेदितम् ॥ ५७ ॥
सुगन्धिधात्रीतैलञ्च देहसौन्दर्य्यकारणम् ।
मया निवेदितं भक्त्या स्नानीयं प्रतिगृह्यताम् ॥ ५८ ॥
मलयाचलसम्भूतं देहशोभाविवर्द्धनम् ।
सुगन्धियुक्तं सुखदं मया तुभ्यं निवेदितम् ॥ ५९ ॥
गन्धद्रव्योद्भवः पुण्यः प्रीतिदो दिव्यगन्धदः ।
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥ ६० ॥
जगतां दर्शनीयञ्च दर्शनं दीप्तिकारणम् ।
अन्धकारध्वंसवीजं मया तुभ्यं दिवेदितम् ॥ ६१ ॥
तुष्टिदं पुष्टिदञ्चैव प्रीतिदं क्षुद्विनाशनम् ।
पुण्यदं स्वादुरूपञ्च नैवेद्यं प्रतिगृह्यताम् ॥ ६२ ॥

ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ।
तुष्टिदं पुष्टिदञ्चैव मया भक्त्या निवेदितम् ॥ ६३ ॥
सुशीतलं वासितञ्च पिपासानाशकारणम् ।
जगतां जीवरूपञ्च जीवनं प्रतिगृह्यताम् ॥ ६४ ॥
देहशोभास्वरूपञ्च सभाशोभाविवर्द्धनम् ।
कार्पासजञ्च कृमिजं वसनं प्रतिगृह्यताम् ॥ ६५ ॥
काञ्चनादिविनिर्माणं श्रीयुक्तं श्रीकरं सदा ।
सुखदं पुण्यदं चैव भूषणं प्रतिगृह्यताम् ॥ ६६ ॥
नानापुष्पविनिर्माणं बहुभाससमन्वितम् ।
प्रीतिदं पुण्यदञ्चैव माल्यञ्च प्रतिगृह्यताम् ॥ ६७ ॥
सर्वमङ्गलरूपश्च सर्वमङ्गलदो वरः ।
पुण्यप्रदश्च गन्धाढ्यो गन्धश्च प्रतिगृह्यताम् ॥ ६८ ॥
शुद्धं शुद्धिप्रदञ्चैव शुद्धानां प्रीतिदं महत् ।
रम्यमाचमनीयञ्च मया दत्तं प्रगृह्यताम् ॥ ६९ ॥
रत्नसारादिनिर्माणं पुष्पचन्दनसंयुतम् ।
सुखदं पुण्यदञ्चैव सुतल्पं प्रतिगृह्यताम् ॥ ७० ॥
नानावृक्षसमुद्भूतं नानारूपसमन्वितम् ।
फलस्वरूपं फलदं फलञ्च प्रतिगृह्यताम् ॥ ७१ ॥
सिन्दूरञ्च वरं रम्यं भालशोभाविवर्द्धनम् ।
भूषणं भूषणानाञ्च सिन्दूरं प्रतिगृह्यताम् ॥ ७२ ॥
विशुद्धं ग्रन्थिसंयुक्तं पुण्यसूत्रविनिर्मितम् ।
पवित्रं वेदमन्त्रेण यज्ञसूत्रञ्च गृह्यताम् ॥ ७३ ॥
द्रव्याण्येतानि मूलेन दत्त्वा स्तोत्रं पठेत् सुधीः ।
ततः प्रणम्य विप्राय व्रती दद्याच्च दक्षिणाम् ॥ ७४ ॥

सावित्रीति चतुर्थ्यन्तं वह्निजायान्तमेव च ।
लक्ष्मीमायाकामपूर्वं मन्त्रमष्टाक्षरं विदुः ॥ ७५ ॥
मध्यन्दिनोक्तं स्तोत्रञ्च सर्ववाञ्छाफलप्रदम् ।
विप्रजीवनरूपञ्च निबोध कथयामि ते ॥ ७६ ॥
कृष्णेन दत्ता सावित्री गोलोके ब्रह्मणे पुरा ।
न याति सा तेन सार्द्धं ब्रह्मलोकञ्च नारद ॥ ७७ ॥
ब्रह्मा कृष्णाज्ञया भक्त्या तुष्टाव वेदमातरम् ।
तदा सा परितुष्टा च ब्रह्माणञ्चकमे सती ॥ ७८ ॥

ब्रह्मोवाच ।

नारायणस्वरूपे च नारायणि सनातनि ।
नारायणात् समुद्भूते प्रसन्ना भव सुन्दरि ॥ ७९ ॥
तेजःस्वरूपे परमे परमानन्दरूपिणि ।
द्विजातीनां जातिरूपे प्रसन्ना भव सुन्दरि ॥ ८० ॥
नित्ये नित्यप्रिये देवि नित्यानन्दस्वरूपिणि ।
सर्वमङ्गलरूपेण प्रसन्ना भव सुन्दरि ॥ ८१ ॥
सर्वस्वरूपे विप्राणां मन्त्रसारे परात्परे ।
सुखदे मोक्षदे देवि प्रसन्ना भव सुन्दरि ॥ ८२ ॥
विप्र पापेन्ध दाहाय ज्वलदग्निशिखोपमे ।
ब्रह्मतेजःप्रदे देवि प्रसन्ना भव सुन्दरि ॥ ८३ ॥
कायेन मनसा वाचा यत्पापं कुरुते द्विजः ।
तत् ते स्मरणमात्रेण भस्मीभूतं भविष्यति ॥ ८४ ॥
इत्युक्त्वा जगतां धाता तत्र तस्थौ च संसदि ।
सावित्री ब्रह्मणा सार्द्धं ब्रह्मलोकं जगाम सा ॥ ८५ ॥
अनेन स्तवराजेन संस्तूयाश्वपतिर्नृपः ।

ददर्श ताञ्च सावित्रीं वरं प्राप मनोगतम् ॥ ८६ ॥
स्तवराजमिदं पुण्यं त्रिसंध्यायाञ्च यः पठेत् ।
पाठे चतुर्णां वेदानां यत्फलं तल्लभेद् ध्रुवम् ॥ ८७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे सावित्र्युपाख्याने सावित्री स्तोत्र-
प्रकरणं नाम त्रयोविंशतितमोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः ।

नारायण उवाच ।

स्तुत्वानेन सोऽश्वपतिः संपूज्य विधिपूर्वकम् ।
ददर्श तत्र तां देवीं सहस्रार्कसमप्रभाम् ॥ १ ॥
उवाच सा तं राजानं प्रसन्ना सस्मिता सती ।
यथा माता स्वपुत्रञ्च द्योतयन्ती दिशस्त्विषा ॥ २ ॥

सावित्र्युवाच ।

जानामि ते महाराज यत्ते मनसि वर्त्तते ।
वाञ्छितं तव पत्न्याश्च सर्वं दास्यामि निश्चितम् ।
साध्वी कन्याभिलाषञ्च करोति तव कामिनी ।
त्वं प्रार्थयसि पुत्रञ्च भविष्यति क्रमेण ते ॥ ४ ॥
इत्युक्त्वा सा महादेवी ब्रह्मलोकं जगाम ह ।
राजा जगाम स्वगृहं तत्कन्यादौ बभूव ह ॥ ५ ॥

आराधनाच्च सावित्र्या बभूव कमला कला ।
सावित्रीति च तन्नाम चकाराश्वपतिर्नृपः ॥ ६ ॥
कालेन सा वर्द्धमाना बभूव च दिने दिने ।
रूपयौवनसम्पन्ना शुक्ले चन्द्रकला यथा ॥ ७ ॥
सा वरं वरयामास द्युमत्सेनात्मजं तदा ।
सावित्री च सत्यवन्तं नानागुणसमन्वितम् ॥ ८ ॥
राजा तस्मै ददौ ताञ्च रत्नभूषणभूषिताम् ।
स च सार्द्धं यौतुकेन तां गृहीत्वा गृहं ययौ ॥ ९ ॥
स च संवत्सरेऽतीते सत्यवान् सत्यविक्रमः ।
जगाम फलकाष्ठार्थं प्रहर्षं पितुराज्ञया ॥ १० ॥
जगाम तत्र सावित्री तत्पश्चाद्दैवयोगतः ।
निपत्य वृक्षाद्दैवेन प्राणांस्तत्याज सत्यवान् ॥ ११ ॥
यमस्तज्जीवपुरुषं वृद्धाङ्गुष्ठ समं मुने ।
गृहीत्वा गमनञ्चक्रे तत्पश्चात् प्रययौ सती ॥ १२ ॥
पश्चात्तां सुन्दरीं दृष्ट्वा यमः संयमनीपतिः ।
उवाच मधुरं साध्वीं साधूनां प्रवरो महान् ॥ १३ ॥

यम उवाच ।

अहो क्व यासि सावित्रि गृहीत्वा मानुषीं तनुम् ।
यदि यास्यसि कान्तेन सार्द्धं देहं तदा त्यज ॥ १४ ॥
गन्तुं मर्त्यो न शक्नोति गृहीत्वा पाञ्चभौतिकम् ।
देहश्च यमलोकञ्च नश्वरं नश्वरः सदा ॥ १५ ॥
भर्त्तुस्ते कालःपूर्णश्च बभूव भारते सति ।
सकर्मफलभोगार्थं सत्यवान् याति मद्गृहम् ॥१६॥
कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ।

सुखं दुःखं भयं शोकं कर्म्मणैव प्रपद्यते ॥ १७ ॥
कर्म्मणेन्द्रो भवेज्जीवो ब्रह्मपुत्रः स्वकर्म्मणा ।
स्वकर्म्मणा हरेर्दासो जन्मादि रहितो भवेत् ॥ १८ ॥
स्वकर्म्मणा सर्वसिद्धि ममरत्वं लभेद् ध्रुवम् ।
लभेत् स्वकर्म्मणा विष्णोः सालोक्यादिचतुष्टयम् ॥१९॥
कर्म्मणा ब्राह्मणत्वञ्च मुक्तित्वञ्च स्वकर्म्मणा ।
सुरत्वञ्च मनुत्वञ्च राजेन्द्रत्वं लभेन्नरः ॥ २० ॥
कर्म्मणा च मुनीन्द्रत्वं तपस्वित्वञ्च कर्म्मणा ।
कर्म्मणा क्षत्रियत्वञ्च वैश्यत्वञ्च स्वकर्म्मणा ॥ २१ ॥
कर्म्मणा चैव शूद्रत्व मन्त्यजत्वं स्वकर्म्मणा ॥ २२ ॥
स्वकर्म्मणा च म्लेच्छत्वं लभते नात्र संशयः ।
स्वकर्म्मणा जङ्गमत्वं स्थावरत्वं स्वकर्म्मणा ॥ २३ ॥
स्वकर्म्मणा च शैलत्वं वृक्षत्वञ्च स्वकर्म्मणा ।
स्वकर्म्मणा पशुत्वञ्च पक्षित्वञ्च स्वकर्म्मणा ॥ २४ ॥
स्वकर्म्मणा क्षुद्रजन्तुः कृमित्वञ्च स्वकर्म्मणा ।
स्वकर्म्मणा च सर्पत्वं गन्धर्वत्वं स्वकर्म्मणा ॥ २५ ॥
स्वकर्म्मणा राक्षसत्वं किन्नरत्वं स्वकर्म्मणा ।
स्वकर्म्मणा च यक्षत्वं कुष्माण्डत्वं स्वकर्म्मणा ॥ २६ ॥
स्वकर्म्मणा च प्रेतत्वं वैतालत्वं स्वकर्म्मणा ।
भूतत्वञ्च पिशाचत्वं डाकिनीत्वं स्वकर्म्मणा ॥ २७ ॥
दैत्यत्वं दानवत्वञ्च असुरत्वं स्वकर्म्मणा ।
कर्म्मणा पुण्यवान् जीवो महापापी स्वकर्म्मणा ॥ २८ ॥
कर्म्मणा सुन्दरोऽरोगी महारोगी च कर्म्मणा ।
कर्म्मणाचान्धःकाणश्च कुत्सितश्च स्वकर्म्मणा ॥ २९ ॥

कर्मणा नरकं यान्ति जीवाः स्वर्गं स्वकर्मणा ।
कर्मणा शक्रलोकञ्च सूर्य्यलोकं स्वकर्मणा ॥ ३० ॥
कर्मणा चन्द्रलोकञ्च वह्निलोकं स्वकर्मणा ।
कर्मणा वायुलोकञ्च कर्मणा वरुणालयम् ॥ ३१ ॥
तथावै कुवेरलोकञ्च नरो याति स्वकर्मणा ।
कर्मणा ध्रुवलोकञ्च शिवलोकं स्वकर्मणा ॥ ३२ ॥
याति नक्षत्रलोकञ्च सत्यलोकं स्वकर्मणा ।
जनलोकं तपोलोकं महर्लोकं स्वकर्मणा ॥ ३३ ॥
स्वकर्मणा च पातालं ब्रह्मलोकं स्वकर्मणा ।
कर्मणा भारतं पुण्यं सर्वेप्सितवरं परम् ॥ ३४ ॥
कर्मणा याति वैकुण्ठं गोलोकञ्च निरामयम् ।
कर्मणा चिरजीवी च क्षणायुश्च स्वकर्मणा ॥ ३५ ॥
कर्मणा कोटिकल्पायुः क्षीणायुश्च स्वकर्मणा ।
जीवसञ्चारमात्रायुर्गर्भे मृत्युः स्वकर्मणा ॥ ३६ ॥
इत्येवं कथितं सर्वं मया तत्त्वञ्च सुन्दरि ।
कर्मणा ते मृतो भर्त्ता गच्छ वत्से यथा सुखम् ॥ ३७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे कर्मविपाके कर्मणः सर्वहेतुप्रदर्शनं
नाम चतुर्विंशतितमोऽध्यायः ।

---

# पञ्चविंशोऽध्यायः ।

—०—

श्रीनारायण उवाच ।

यमस्य वचनं श्रुत्वा सावित्री च पतिव्रता ।
तुष्टाव परया भक्त्या तमुवाच मनस्विनी ॥ १ ॥

सावित्र्युवाच ।

किं कर्म्म वा शुभं धर्म्मराज किंवाऽशुभं नृणाम् ।
कर्म्म निर्मूलयन्त्येव केन वा साधवो जनाः ॥ २ ॥
कर्म्मणां वीजरूपः कः कोवा कर्म्मफलप्रदः ।
किं कर्म्म उद्भवेत् केन को वा तद्धेतुरेवच ॥ ३ ॥
कोवा कर्म्मफलं भुङ्क्ते कोवा निर्लिप्त एवच ।
कोवा देही कश्च देहः कोवात्र कर्म्मकारकः ॥ ४ ॥
किं विज्ञानं मनोवुद्धिः केवा प्राणाः शरीरिणाम् ।
कानीन्द्रियाणि किं तेषां लक्षणं देवताश्च काः ॥ ५ ॥
भोक्ता भोजयिता कोवा को भोगः काच निष्कृतिः ।
को जीवः परमात्मा कः तन्मे व्याख्यातु मर्हसि ॥ ६ ॥

यम उवाच ।

वेदप्रविहितं कर्म्म तन्मध्ये मङ्गलं परम् ।
अवैदिकन्तु यत् कर्म्म तदेवाशुभमेवच ॥ ७ ॥
अहैतुकी विष्णुसेवा सङ्कल्परहिता सताम् ।
कर्म्मनिर्म्मूलरूपा च सा एव हरिभक्तिदा ॥ ८ ॥

हरिभक्तो नरो यश्च सच मुक्तः श्रुतौ श्रुतम्।
जन्मम्टत्युजराव्याधिशोकभीतिविवर्ज्जितः॥ ९॥
मुक्तिश्च द्विविधा साध्वि! श्रुत्युक्ता सर्व्वसम्मता।
निर्व्वाणपददात्री च हरिभक्तिप्रदा नृणाम्॥ १०॥
हरिभक्तिस्वरूपाञ्च मुक्तिं वाञ्छन्ति वैष्णवाः।
अन्ये निर्व्वाणरूपाञ्च मुक्तिमिच्छन्ति साधवः॥ ११॥
कर्म्मणोवीजरूपश्च सन्ततं तत् फलप्रदः।
कर्म्मरूपश्च भगवान् श्रीकृष्णः प्रकृतेः परः॥ १२॥
सोऽपि तद्धेतुरूपश्च कर्म्म तेन भवेत्सति।
जीवः कर्म्मफलं भुङ्क्ते आत्मा निर्लिप्त एवच॥ १३॥
आत्मनः प्रतिबिम्बश्च देही जीव स एवच।
पाञ्चभौतिक रूपश्च देहो नश्वर एवच॥ १४॥
पृथिवीवायुराकाशो जलं तेजस्तथैवच।
एतानि सूत्ररूपाणि सृष्टिः सृष्टिविधौ हरेः॥ १५॥
कर्त्ता भोक्ता च देही च स्वात्मा भोजयिता सदा।
भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च॥ १६॥
सदसद्भेदवीजञ्च ज्ञानं नानाविधं भवेत्।
विषयाणां विभागानां भेद वीजञ्च कीर्त्तिदम्॥ १७॥
बुद्धिर्व्विवेचनारूपा सा ज्ञानदीपनी श्रुतौ।
वायुभेदाश्च प्राणाश्च बलरूपाश्च देहिनाम्॥ १८॥
इन्द्रियाणाञ्च प्रवरम् ईश्वराणां समूहकम्।
प्रेरकं कर्म्मणाञ्चैव दुर्न्निवार्य्यञ्च देहिनाम्॥ १९॥
अनिरूप्यमदृश्यञ्च ज्ञानभेदं मनः स्मृतम्॥ २०॥
लोचनं श्रवणं घ्राणं त्वग्जिह्वादिकमिन्द्रियम्।

अङ्गिनामङ्गरूपञ्च प्रेरकं सर्वकर्मणाम् ॥ २१ ॥
रिपुरूपं मित्ररूपं सुखदं दुःखदं सदा ।
सूर्य्यो वायुश्च पृथिवी वाण्याद्या देवता स्मृताः ॥२२॥
प्राण देहादिभृत् यो हि स जीवः परिकीर्त्तितः ।
परमात्मा परंब्रह्म निर्गुणः प्रकृतेः परः ॥ २३ ॥
कारणं कारणानाञ्च श्रीकृष्णो भगवान् स्वयम् ।
इत्येवं कथितं सर्वं मया पृष्टं यथागमम् ॥ २४ ॥
ज्ञानिनां ज्ञानरूपञ्च गच्छ वत्से यथा सुखम् ॥२५॥

सावित्र्युवाच ।

त्यक्त्वा क्व यामि कान्तं वा त्वां वा ज्ञानार्णवं बुधम् ।
यद् यत् करोमि प्रश्नञ्च तद्भवान् वक्तुमर्हसि ॥ २६ ॥
कां कां योनिं याति जीवः कर्मणा केन वा यम ।
केन वा कर्मणा स्वर्गं केन वा नरकं पितः ॥ २७ ॥
केन वा कर्मणा मुक्तिः केन भक्तिर्भवेद्धरेः ।
केन वा कर्म रोगी चारोगी केन कर्मणा ॥ २८ ॥
केन वा दीर्घजीवी च केनाल्पायुश्च कर्म्मणा ।
केन वा कर्म्मणा दुःखी केन वा कर्म्मणा सुखी ॥२९॥
अङ्गहीनश्च काणश्च वधिरः केन कर्म्मणा ।
अन्धो वा कृपणो वापि प्रमत्तः केन कर्म्मणा ॥ ३० ॥
क्षिप्तोऽतिलुब्धकश्चैव केन वा नरघातकः ।
केन सिद्धिमवाप्नोति सालोक्यादिचतुष्टयम् ॥ ३१ ॥
केन वा ब्राह्मणत्वञ्च तपस्वित्वञ्च केन वा ।
स्वर्गभोगादिकं केन वैकुण्ठं केन कर्म्मणा ॥ ३२ ॥
गोलोकं केन वा ब्रह्मन् सर्वोत्कृष्टं निरामयम् ।

नरकं वा कतिविधं किं संख्यं नाम किञ्च वा ॥३३॥
को वा कं नरकं याति कियन्तं तेषु तिष्ठति ।
पापिनां कर्म्मणा केन को वा व्याधिः प्रजायते ॥३४॥
यद्यदस्ति मया पृष्टं तन्मे व्याख्यातुमर्हसि ॥ ३५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे प्रकृतिखण्डे सावित्र्युपाख्याने यमसावित्रीसंवादे कर्म्मविपाके सावित्रीप्रश्नो नाम पञ्चविंशतितमोऽध्यायः ।

---

## षड्विंशोऽध्यायः ।

---

नारायण उवाच ।

सावित्रीवचनं श्रुत्वा जगाम विस्मयं यमः
प्रहस्य वक्तुमारेभे कर्म्मपाकञ्च जीविनाम् ॥ १ ॥

यम उवाच ।

कन्या द्वादशवर्षीया वत्से त्वं वयसाधुना ।
ज्ञानन्ते पूर्वविदुषां योगिनां ज्ञानिनां परम् ॥ २ ॥
सावित्रीवरदानेन त्वं सावित्रीकला सती ।
प्राप्ता पुरा भूभृता च तपसा तत्समा शुभे ॥ ३ ॥
यथा श्रीः श्रीपतेः क्रोड़े भवानी च भवोरसि ।
यथा राधा च श्रीकृष्णे सावित्री ब्रह्मवक्षसि ॥ ४ ॥

धर्मेऽरसि यथा मूर्त्तिः शतरूपा मनौ यथा ।
कर्दमे देवहूती च वशिष्ठेऽरुन्धती यथा ॥ ५ ॥
अदितीकश्यपे चापि यथाहल्या च गौतमे ।
यथा शची महेन्द्रे च यथा चन्द्रे च रोहिणी ॥ ६ ॥
यथा रतिः कामदेवे यथा स्वाहा हुताशने ।
यथा स्वधा च पितृषु यथा संज्ञा दिवाकरे ॥ ७ ॥
वरुणानी च वरुणे यज्ञे च दक्षिणा यथा ।
यथा धरा वराहे च देवसेना च कार्त्तिके ॥ ८ ॥
सौभाग्या सुप्रिया त्वञ्च भव सत्यवति प्रिये ।
इति तुभ्यं वरं दत्तमपरञ्च यदीप्सितम् ॥ ९ ॥
वृणु देवि महाभागे सर्वं दास्यामि निश्चितम् ।

सावित्र्युवाच ।

सत्यवदौरसेनैव पुत्राणां शतकं मम ।
भविष्यति महाभाग वरमेतद् मदीप्सितम् ॥ १० ॥
मत्पितुः पुत्रशतकं श्वशुरस्य च चक्षुषी ।
राज्यलाभो भवत्वेव वरमेवं मदीप्सितम् ॥ ११ ॥
अन्ते सत्यवता सार्द्धं यास्यामि हरिमन्दिरम् ।
समतीते लक्षवर्षे देहीमं मे जगत्प्रभो ॥ १२ ॥
जीवकर्म्मविपाकञ्च श्रोतुं कौतूहलञ्च मे ।
विश्वविस्तारबीजञ्च तन्मे व्याख्यातुमर्हसि ॥ १३ ॥

यम उवाच ।

भविष्यति महासाध्वि सर्वं मानसिकं तव ।
जीवकर्म्मविपाकञ्च कथयामि निशामय ॥ १४ ॥

शुभानामशुभानाञ्च कर्म्मणां जन्म भारते ।
पुण्यक्षेत्रेऽत्र सर्वत्र नान्यत्र भुञ्जते जनाः ॥ १५ ॥
सुरा दैत्या दानवाश्च गन्धर्वा राक्षसादयः ।
नरश्च कर्म्मजनको न सर्वे सम जीविनः ॥ १६ ॥
विशिष्टजीविनः कर्म्म भुञ्जते सर्वयोनिषु ।
विशेषतो मानवाश्च भ्रमन्ति सर्वयोनिषु ॥ १७ ॥
शुभाशुभं भुञ्जते च कर्म पूर्वार्जितं परम् ।
शुभेन कर्म्मणा यान्ति ते स्वर्गादिकमेव च ॥ १८ ॥
कर्म्मणा चाशुभेनैव भ्रमन्ति नरकेषु च ।
कर्म्म निर्मूलने मुक्तिः सा चोक्ता द्विविधा मता ॥ १९ ॥
निर्वाणरूपा सेवा च कृष्णस्य परमात्मनः ।
रोगी अकर्म्मणा जीवश्चारोगी शुभकर्म्मणा ॥ २० ॥
दीर्घजीवी च क्षीणायुः सुखी दुःखी च निश्चितम् ।
अन्धादयश्चाङ्गहीनाः कुत्सितेन च कर्मणा ॥ २१ ॥
सिद्ध्यादिकमवाप्नोति सर्वोत्कृष्टेन कर्म्मणा ।
सामान्यं कथितं सर्वं विशेषं शृणु सुन्दरि ॥ २२ ॥
सुदुर्लभं सुभोग्यञ्च पुराणे च श्रुतिष्वपि ॥ २३ ॥
दुर्लभा मानवीजातिः सर्वजातिषु भारते ।
सर्वाभ्यो ब्राह्मणः श्रेष्ठः प्रशस्तः सर्वकर्म्मसु ॥ २४ ॥
विष्णुभक्तो द्विजश्चैव गरीयान् भारते ततः ।
निष्कामश्च सकामश्च वैष्णवो द्विविधः सति ॥ २५ ॥
सकामश्च प्रधानश्च निष्कामो भक्त एव च ।
कर्मभोगी सकामश्च निष्कामो निरुपद्रवः ॥ २६ ॥
स याति देहं त्यक्त्वा च पदं विष्णोर्निरामयम् ।

पुनरागमनं नास्ति तेषां निष्कामिनां सति ॥ २७ ॥
ये सेवन्ते च द्विभुजं कृष्णमात्मानमीश्वरम् ।
गोलोकं यान्ति ते भक्ता दिव्यरूपविधारिणः ॥ २८ ॥
ये च नारायणं भक्ताः सेवन्ते च चतुर्भुजम् ।
वैकुण्ठं यान्ति ते सर्वे दिव्यरूपविधारिणः ॥ २९ ॥
सकामिनो वैष्णवाश्च गत्वा वैकुण्ठमेव च ।
भारतं पुनरायान्ति तेषां जन्म द्विजातिषु ॥ ३० ॥
कालेन ते च निष्कामा भविष्यन्ति क्रमेण च ।
भक्तिञ्च निर्म्मलां बुद्धिं तेभ्यो दास्यति निश्चितम् ॥३१॥
ब्राह्मणाद्वैष्णवादन्ये सकामाः सर्वजन्मसु ।
न तेषां निर्म्मला बुद्धिर्विष्णुभक्तिविवर्जिताः ॥ ३२ ॥
तीर्थाश्रिता द्विजा ये च तपस्यानिरताः सति ।
ते यान्ति ब्रह्मलोकञ्च पुनरायान्ति भारतम् ॥ ३३ ॥
स्वधर्म्मनिरता विप्राः सूर्य्यभक्ताश्च भारते ।
व्रजन्ति सूर्य्यलोकं ते पुनरायान्ति भारतम् ॥ ३४ ॥
स्वधर्म्मनिरता विप्राः शैवाः शाक्ताश्च गाणपाः ।
ते यान्ति शिवलोकञ्च पुनरायान्ति भारतम् ॥ ३५ ॥
ये विप्रा अन्यदेवेष्टाः स्वधर्म्मनिरताः सति ।
ते गत्वा शक्रलोकञ्च पुनरायान्ति भारतम् ॥ ३६ ॥
हरिभक्ताश्च निष्कामाः स्वधर्म्मरहिता द्विजाः ।
तेऽपि यान्ति हरेर्लोकं क्रमाद्भक्तिबलादहो ॥ ३७ ॥
स्वधर्म्मरहिता विप्रा देवान्यसेविनः सदा ।
भ्रष्टाचाराश्च कामाश्च ते यान्ति नरकं ध्रुवम् ॥ ३८ ॥
स्वधर्म्मनिरताश्चैवं वर्णाश्चत्वार एव च ।

भवन्त्येव शुभस्येव कर्म्मण: फलभागिन: ॥ ३८ ॥
स्वधर्म्मरहितास्ते च नरकं यान्ति हि ध्रुवम् ।
भारते च भवन्त्येव कर्म्मण: फलभागिन: ॥ ४० ॥
स्वधर्म्मनिरता विप्रा: स्वधर्म्मनिरताय च ।
कन्यां ददाति विप्राय चन्द्रलोकं व्रजन्ति ते ॥ ४१ ॥
वसन्ति तत्र ते साध्वि यावदिन्द्राश्चतुर्दश ।
सालङ्कृताया दानेन द्विगुणं फलमुच्यते ॥ ४२ ॥
सकामा यान्ति तल्लोकं न निष्कामाश्च वैष्णवा: ।
ते प्रयान्ति विष्णुलोकं फलसन्धानवर्जिता: ॥ ४३ ॥
गव्यञ्च रजतं भार्य्यां वस्त्रं शस्यं फलं जलम् ।
ये ददत्येव विप्रेभ्य स्तल्लोकं हि व्रजन्ति च ॥ ४४ ॥
वसन्ति ते च तल्लोकं यावन्मन्वन्तरं सति ।
कालञ्च सुचिरं वासं कुर्वन्ति तत्र ते जना: ॥ ४५ ॥
यो ददाति सुवर्णञ्च गाञ्च ताम्रादिकं सति ।
ते यान्ति सूर्य्यलोकञ्च शुचये ब्राह्मणाय च ॥ ४६ ॥
वसन्ति तत्र ते लोके वर्षाणामयुतं सति ।
विपुले च चिरं वासं कुर्वन्ति च निरामया: ॥ ४७ ॥
ददाति भूमिं विप्रेभ्यो धान्यानि विपुलानि च ।
स याति विष्णुलोकञ्च श्वेतद्वीपमनोहरम् ॥ ४८ ॥
तत्रैव नियसत्येव यावच्चन्द्रदिवाकरौ ।
विपुलं विपुले वासं करोति पुण्यवान् सति ॥ ४९ ॥
गृहं ददाति विप्राय ये जना भक्तिपूर्वकम् ।
ते यान्ति सुरलोकञ्च चिरं तत्र भवन्ति ते ॥ ५० ॥
गृहरेणुप्रमाणाब्दं दानं पुण्यदिने यदि ।

विपुलं विपुले वासं कुर्वन्ति मानवाः सति ॥ ५१ ॥
यस्मै यस्मै च देवाय यो ददाति गृहं नरः ।
स याति तस्य लोकञ्च रेणुमानाब्दमेव च ॥ ५२ ॥
सौधे चतुर्गुणं पुण्यं पूर्त्ते शतगुणं फलम् ।
प्रकृष्टेऽष्टगुणं तस्मादित्याह कमलोद्भवः ॥ ५३ ॥
यो ददाति तड़ागञ्च सर्वभूताय भारते ।
स याति जनलोकञ्च वर्षाणामयुतं सति ॥ ५४ ॥
वाप्यां फलं शतगुणं प्राप्नोति मानवस्ततः ।
तथा सेतुप्रदानेन तड़ागस्य फलं लभेत् ॥ ५५ ॥
धनुश्चतुःसहस्रेण दैर्घ्ये मानेन निश्चितम् ।
न्यूना वा तावती प्रस्थे सा वापी परिकीर्त्तिता ॥ ५६ ॥
दशवापीसमा कन्या यदि पात्रे प्रदीयते ।
फलं ददाति द्विगुणं यदि सालङ्कृता भवेत् ॥ ५७ ॥
तत्फलञ्च तड़ागे च पङ्कोद्धारेण तत् फलम् ।
वाप्याश्च पङ्कोद्धारेण वापीतुल्यफलं लभेत् ॥ ५८ ॥
अश्वत्थवृक्षमारोप्य प्रतिष्ठाञ्च करोति यः ।
स याति तपसो लोकं वर्षाणामयुतं परम् ॥ ५९ ॥
पुष्पोद्यानं यो ददाति सावित्रि सर्वभूतये ।
स वसेद् ध्रुवलोके च वर्षाणामयुतं ध्रुवम् ॥ ६० ॥
यो ददाति विमानञ्च विष्णवे भारते सति ।
विष्णुलोके वसेत् सोऽपि यावन्मन्वन्तरं परम् ॥ ६१ ॥
चित्रयुक्ते च विपुले फलं तस्य चतुर्गुणम् ।
रथार्द्धं शिविकादाने फलमेव लभेद् ध्रुवम् ॥ ६२ ॥
यो ददाति भक्तियुक्तो हरये दोलमन्दिरम् ।

विष्णुलोके वसेत् सोऽपि यावन्मन्वन्तरं परम् ॥ ६३ ॥
राजमार्गं सौधयुक्तं यः करोति पतिव्रते ।
वर्षाणामयुतं सोऽपि शक्रलोके महीयते ॥ ६४ ॥
ब्राह्मणेभ्योऽपि देवेभ्यो दाने समफलं लभेत् ।
यच्च दत्तं हि तद्भोक्तुं न दत्तं नोपतिष्ठते ॥ ६५ ॥
भुङ्क्ता स्वर्गादिकं सौख्यं पुरा यान्ति च भारते ।
लभेद्विप्रकुलेष्वेव क्रमेणैवोत्तमादिषु ॥ ६६ ॥
भारते पुण्यवान् विप्रो भुंक्ता स्वर्गादिकं परम् ।
पुनः सोऽपि भवेद्विप्रः न पुनः क्षत्रियादयः ॥ ६७ ॥
क्षत्रियो वापि वैश्यो वा कल्पकोटिशतेन च ।
तपसा ब्राह्मणत्वञ्च न प्राप्नोति श्रुतौ श्रुतम् ॥ ६८ ॥
स्वधर्मरहिता विप्रा नानायोनिं व्रजन्ति च ।
भुक्ता च कर्मभोगञ्च विप्रयोनिं लभेत् पुनः ॥ ६९ ॥
नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कल्पकोटिशतैरपि ॥ ७० ॥
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ।
देवतीर्थसहायेन कायव्यूहेन शुध्यति ॥ ७१ ॥
एतत्ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ ७२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे प्रकृतिखण्डे सावित्र्युपाख्याने कर्म्मविपाके कर्मानुरूपस्थानगमनं नाम षड्विंशतितमोऽध्यायः ।

---

## सप्तविंशोऽध्यायः ।

—००—

सावित्र्युवाच ।

प्रयान्ति स्वर्गमन्यञ्च येन येनैव कर्म्मणा ।
मानवाः पुण्यवन्तश्च तन्मे व्याख्यातुमर्हसि ॥ १ ॥

यम उवाच ।

अन्नदानञ्च विप्राय यः करोति च भारते ।
अन्नप्रमाणवर्षञ्च शक्रलोके महीयते ॥ २ ॥
अन्नदानात् परं दानं न भूतं न भविष्यति ।
नात्र पात्रपरीक्षा स्यान्न कालनियमः क्वचित् ॥ ३ ॥
देवेभ्यो ब्राह्मणेभ्यो वा ददाति चासनं यदि ।
महीयते वह्निलोके वर्षाणामयुतं ध्रुवम् ॥ ४ ॥
यो ददाति च विप्राय दिव्यां धेनुं पयस्विनीम् ।
तल्लोममानवर्षञ्च वैकुण्ठे च महीयते ॥ ५ ॥
चतुर्गुणं पुण्यदिने तीर्थे शतगुणं फलम् ।
दानं नारायणक्षेत्रे फलं कोटिगुणं भवेत् ॥ ६ ॥
गां यो ददाति विप्राय भारते भक्तिपूर्वकम् ।
वर्षाणामयुतञ्चैव चन्द्रलोके महीयते ॥ ७ ॥
यश्च पयस्विनीदानं करोति ब्राह्मणाय च ।
तल्लोममानवर्षञ्च वैकुण्ठे च महीयते ॥ ८ ॥
यो ददाति ब्राह्मणाय शालग्रामं सवस्त्रकम् ।
महीयते स वैकुण्ठे यावच्चन्द्रदिवाकरौ ॥ ९ ॥

यो ददाति ब्राह्मणाय छत्रञ्च सुमनोहरम्।
वर्षाणामयुतं सोऽपि मोदते वरुणालये ॥ १० ॥
विप्राय पादुकायुग्मं यो ददाति च भारते।
महीयते वायुलोके वर्षाणामयुतं सति ॥ ११ ॥
यो ददाति ब्राह्मणाय शय्यां दिव्यां मनोहराम्।
महीयते चन्द्रलोके यावच्चन्द्रदिवाकरौ ॥ १२ ॥
यो ददाति प्रदीपञ्च देवाय ब्राह्मणाय च।
यावन्मन्वन्तरं सोऽपि ब्रह्मलोके महीयते ॥ १३ ॥
सम्प्राप्य मानवीं योनिं चक्षुष्मांश्च भवेद् ध्रुवम्।
न याति यमलोकञ्च तेन पुण्येन सुन्दरि ॥ १४ ॥
करोति गजदानञ्च यो हि विप्राय भारते।
यावदिन्द्रादिदेवस्य लोके चार्द्धासने वसेत् ॥ १५ ॥
भारते योऽश्वदानञ्च करोति ब्राह्मणाय च।
मोदते वारुणे लोके यावदिन्द्राश्चतुर्दश: ॥ १६ ॥
प्रकृष्टां शिबिकां यो हि ददाति ब्राह्मणाय च।
महीयते विष्णुलोके यावन्मन्वन्तरं सति ॥ १७ ॥
यो ददाति च विप्राय व्यजनं श्वेतचामरम्।
महीयते वायुलोके वर्षाणामयुतं ध्रुवम् ॥ १८ ॥
धान्याचलं यो ददाति ब्राह्मणाय च भारते।
स च धान्यप्रमाणाब्दं विष्णुलोके महीयते ॥ १९ ॥
तत: स्वयोनिं संप्राप्य चिरजीवी भवेत् सुखी।
दाता गृहीता तौ द्वौ च ध्रुवं वैकुण्ठगामिनौ ॥ २० ॥
सततं श्रीहरेर्नाम भारते यो जपेन्नर:।
स एव चिरजीवी च ततो मृत्यु: पलायते ॥ २१ ॥

यो नरो भारते वर्षे दोलनं कारयेद्धरेः ।
पूर्णिमारजनीशेषे जीवन्मुक्तो भवेन्नरः ॥ २२ ॥
इहलोके सुखं भुक्त्वा यात्यन्ते विष्णुमन्दिरम् ।
निश्चितं निवसेत्तत्र शतमन्वन्तरावधि ॥ २३ ॥
फलमुत्तरफल्गुन्यां ततोऽपि द्विगुणं भवेत् ।
कल्पान्तजीवी स भवेदित्याह कमलोद्भवः ॥ २४ ॥
तिलदानं ब्राह्मणाय यः करोति च भारते ।
तिलप्रमाणवर्षञ्च मोदते विष्णुमन्दिरे ॥ २५ ॥
ततः स्वयोनिं संप्राप्य चिरजीवी भवेत् सुखी ।
ताम्रपात्रस्थदानेन द्विगुणञ्च फलं लभेत् ॥ २६ ॥
सालङ्कृताञ्च भोग्याञ्च सवस्त्रां सुन्दरीं प्रियाम् ।
यो ददाति ब्राह्मणाय भारते च पतिव्रताम् ॥ २७ ॥
महीयते चन्द्रलोके यावदिन्द्राश्चतुर्दश ।
तत्र स्वर्वेश्यया सार्द्धं मोदते च दिवानिशम् ॥ २८ ॥
ततो गन्धर्वलोके च वर्षाणामयुतं सति ।
दिवानिशं कौतुकेन चोर्वश्या सह मोदते ॥ २९ ॥
ततो जन्मसहस्रञ्च प्राप्नोति सुन्दरीं प्रियाम् ।
सतीं सौभाग्ययुक्ताञ्च कोमलां प्रियवादिनीम् ॥ ३० ॥
ददाति सफलं वृक्षं ब्राह्मणाय च यो नरः ।
फलप्रमाणवर्षञ्च शक्रलोके महीयते ॥ ३१ ॥
पुनः स्वयोनिं संप्राप्य लभते सुतमुत्तमम् ।
सफलानाञ्च वृक्षाणां सहस्रञ्च प्रशंसितम् ॥ ३२ ॥
केवलं फलदानञ्च ब्राह्मणाय ददाति यः ।
सुचिरं स्वर्गवासञ्च कृत्वा याति च भारतम् ॥ ३३ ॥

नानाद्रव्यसमायुक्तं नानाशस्यसमन्वितम्।
ददाति यश्च विप्राय भारते विपुलं गृहम्॥ ३४॥
कुवेरलोके वसति स च मन्वन्तरावधि।
ततः स्वयोनिं संप्राप्य महांश्च धनवान् भवेत्॥ ३५॥
यो जनः शस्यसंयुक्तां भूमिञ्च रुचिरां सति।
ददाति भक्त्या विप्राय पुण्यक्षेत्रे च वा सति॥ ३६॥
महीयते स वैकुण्ठे मन्वन्तरशतं ध्रुवम्।
पुनः स्वयोनिं संप्राप्य महांश्च भूमिवान् भवेत्॥ ३७॥
तं न त्यजति भूमिश्च जन्मनां शतकं परम्।
श्रीमांश्च धनवांश्चैव पुत्त्रवांश्च प्रजेश्वरः॥ ३८॥
सप्रजञ्च प्रकृष्टञ्च ग्रामं दद्याद्द्विजातये।
लक्षमन्वन्तरं चैव वैकुण्ठे स महीयते॥ ३९॥
पुनः स्वयोनिं संप्राप्य ग्रामलक्षं लभेत् ध्रुवम्।
न जहाति च तं पृथ्वी जन्मनां लक्षमेव च॥ ४०॥
सप्रजं सुप्रकृष्टञ्च पक्वशस्य समन्वितम्।
नाना पुष्करिणीवृक्ष फलभोगसमन्वितम्॥ ४१॥
नगरं यश्च विप्राय ददाति भारते भुवि।
महीयते स वैकुण्ठे दशलक्षेन्द्रकालकम्॥ ४२॥
पुनः स्वयोनिं संप्राप्य राजेन्द्रो भारते भवेत्।
नगराणाञ्च नियुतं लभते नात्र संशयः॥ ४३॥
धरा तं न जहात्येव जन्मनां नियुतं ध्रुवम्।
परमैश्वर्य्यसंयुक्तो भवेदेव महीतले॥ ४४॥
नगराणाञ्च शतकं देशं यो हि द्विजातये।
सुप्रकृष्टप्रजायुक्तं ददाति भक्तिपूर्वकम्॥ ४५॥

वापीतड़ागसंयुक्तं नानावृक्षसमन्वितम् ।
महीयते स वैकुण्ठे कोटिमन्वन्तरावधि ॥ ४६ ॥
पुनः स्वयोनिं संप्राप्य जम्बुद्वीपपतिर्भवेत् ।
परमैश्वर्य्यसंयुक्तो यथाशक्रस्तथा भुवि ॥ ४७ ॥
मही तं न जहात्येव जन्मनां कोटिमेव च ।
कल्पान्तजीवी स भवेद्राजराजेश्वरो महान् ॥ ४८ ॥
स्वाधिकारं समग्रञ्च यो ददाति द्विजातये ।
चतुर्गुणं फलं चातो भवेत्तस्य न संशयः ॥ ४९ ॥
जम्बुद्वीपं यो ददाति ब्राह्मणाय पतिव्रते ।
फलं शतगुणञ्चातो भवेत्तस्य न संशयः ॥ ५० ॥
सप्तद्वीपमहीदातुः सर्वतीर्थानुसेविनः ।
सर्वेषां तपसां कर्त्तुः सर्वोपवासकारिणः ॥ ५१ ॥
सर्वदान प्रदातुश्च सर्वसिद्धेश्वरस्य च ।
अस्त्येव पुनरावृत्तिर्नभक्तस्य हरेरहो ॥ ५२ ॥
असंख्यब्रह्मणां पातं पश्यन्ति वैष्णवाः सति ।
निवसन्ति हि गोलोके वैकुण्ठे वा हरेः पदे ॥ ५३ ॥
विष्णुमन्त्रोपासकश्च विहाय मानवीं तनुम् ।
विभर्त्ति दिव्यरूपञ्च जन्मम्टत्युजरापहम् ॥ ५४ ॥
लब्ध्वा विष्णोश्च सारूप्यं विष्णुसेवां करोति च ।
स च पश्यति गोलोके ह्यसंख्यं प्राकृतं लयम् ॥ ५५ ॥
नश्यन्ति देवाः सिद्धाश्च विश्वानि निखिलानि च ।
कृष्णभक्ता न नश्यन्ति जन्मम्टत्युजराहराः ॥ ५६ ॥
कार्त्तिके तुलसीदानं करोति हरये च यः ।
युगं पत्रप्रमाणञ्च मोदते हरिमन्दिरे ॥ ५७ ॥

पुनः स्वयोनिं संप्राप्य हरिभक्तिं लभेत् ध्रुवम् ।
सुखी च चिरजीवी च स भवेद्भारते भुवि ॥ ५८ ॥
घृतप्रदीपं हरये कार्त्तिके यो ददाति च ।
पलप्रमाणवर्षञ्च मोदते हरिमन्दिरे ॥ ५९ ॥
पुनः स्वयोनिं संप्राप्य विष्णुभक्तिं लभेत् ध्रुवम् ।
महाधनाढ्यः स भवेच्चक्षुष्मांश्चैव दीप्तिवान् ॥ ६० ॥
माघे यः स्नाति गङ्गायामरुणोदयकालतः ।
युगषष्टिसहस्राणि मोदते हरिमन्दिरे ॥ ६१ ॥
पुनः स्वयोनिं संप्राप्य विष्णुभक्तिं लभेद् ध्रुवम् ।
जितेन्द्रियाणां प्रवरः सभवेद्भारते भुवि ॥ ६२ ॥
माघे यः स्नाति गङ्गायां प्रयागे चारुणोदये ।
वैकुण्ठे मोदते सोऽपि लक्षमन्वन्तरावधि ॥ ६३ ॥
पुनः स्वयोनिं संप्राप्य विष्णुमन्त्रं लभेत् ध्रुवम् ।
त्यक्त्वा च मानुषं देहं पुनर्याति हरेः पदम् ॥ ६४ ॥
नास्ति तत् पुनरावृत्तिर्वैकुण्ठाच्च महीतले ।
करोति हरिदास्यञ्च लब्ध्वा सारूप्यमेव च ॥ ६५ ॥
नित्यस्नायी च गङ्गायां स पूतः सूर्य्यवद् भुवि ।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ ६६ ॥
तस्यैव पादरजसा सद्यःपूता वसुन्धरा ।
मोदते स च वैकुण्ठे यावच्चन्द्रदिवाकरौ ॥ ६७ ॥
पुनः स्वयोनिं संप्राप्य तपस्वी प्रवरो भवेत् ।
स्वधर्मनिरतः शुद्धो विद्वांश्च सुजितेन्द्रियः ॥ ६८ ॥
मीनकर्कटयोर्मध्ये गाढ़ं तपति भास्करे ।
भारते यो ददात्येव जलमेव सुवासितम् ॥ ६९ ॥

मोदते स च वैकुण्ठे यावदिन्द्राश्चतुर्दश: ।
पुन: स्वयोनिं संप्राप्य सुखी निष्कपटो भवेत् ॥ ७० ॥
वैशाखे हरये भक्त्या यो ददाति च चन्दनम् ।
युगषष्टिसहस्राणि मोदते विष्णुमन्दिरे
पुन: स्वयोनिं संप्राप्य रूपवांश्च सुखी भवेत् ॥ ७१ ॥
वैशाखे शक्तुदानञ्च य: करोति द्विजातये ।
शक्तुरेणुप्रमाणाब्दं मोदते विष्णुमन्दिरे ॥ ७२ ॥
करोति भारते यो हि कृष्णजन्माष्टमीव्रतम् ।
शतजन्मकृतात् पापान्मुच्यते नात्र संशय: ॥ ७३ ॥
वैकुण्ठे मोदते सोऽपि यावदिन्द्राश्चतुर्दश: ।
पुन: स्वयोनिं संप्राप्य कृष्णभक्तिं लभेत् ध्रुवम् ॥७४॥
इहैव भारते वर्षे शिवरात्रिं करोति य: ।
मोदते शिवलोके च सप्तमन्वन्तरावधि ॥ ७५ ॥
शिवाय शिवरात्रौ च विल्वपत्रं ददाति य: ।
पत्रप्रमाणञ्च युगं मोदते शिवमन्दिरे ॥ ७६ ॥
पुन: स्वयोनिं संप्राप्य शिवभक्तिं लभेद् ध्रुवम् ।
विद्यावान् पुत्त्रवान् श्रीमान् प्रजावान् भूमिमान् भवेत् ७७
चैत्रमासेऽथवा माघे शङ्करं योऽर्चयेद् व्रती ।
करोति नर्त्तनं भक्त्या वेत्रपाणिर्दिवानिशम् । ७८ ॥
मासं व्याप्यार्द्धमासं वा दशसप्तदिनानि वा ।
दिनमानं युगं सोऽपि शिवलोके महीयते ॥ ७९ ॥
श्रीरामनवमीं यो हि करोति भारते नर: ।
सप्तमन्वन्तरं यावन्मोदते विष्णुमन्दिरे ॥ ८० ॥
पुन: स्वयोनिं संप्राप्य रामभक्तिं लभेद् ध्रुवम् ।

जितेन्द्रियाणां प्रवरो महांश्च धार्मिको भवेत् ॥ ८१ ॥
शारदीयां महापूजां प्रकृतेर्यः करोति च ।
महिषैश्छागलैर्मेषैरिक्षुकुष्माण्डकैस्तथा ॥ ८२ ॥
नैवेद्यैरुपहारैश्च धूपदीपादिभिस्तथा ।
नृत्यगीतादिभिर्वाद्यैर्नानाकौतुकमङ्गलैः ॥ ८३ ॥
शिवलोके वसेत् सोऽपि सप्तमन्वन्तरावधि ।
पुनः स्वयोनिं संप्राप्य बुद्धिञ्च निर्मलां लभेत् ॥ ८४ ॥
अचलां श्रियमाप्नोति पुत्रपौत्रादिवर्द्धिनीम् ।
महाप्रभावयुक्तश्च गजवाजिसमन्वितः ।
राजराजेश्वरः सोऽपि भवेदेव न संशयः ॥ ८५ ॥
भाद्रशुक्लाष्टमीं प्राप्य महालक्ष्मीञ्च योऽर्चयेत् ॥ ८६ ॥
नित्यं भक्त्या पक्षमेकं पुण्यक्षेत्रे च भारते।
दत्त्वा तस्यै प्रकृष्टानि चोपचाराणि षोडश ॥ ८७ ॥
वैकुण्ठे मोदते सोऽपि यावच्चन्द्रदिवाकरौ ।
पुनः स्वयोनिं संप्राप्य राजराजेश्वरो भवेत् ॥ ८८ ॥
कार्त्तिकीपूर्णिमायाञ्च कृत्वा तु रासमण्डलम्
गोपानां शतकं कृत्वा गोपीनां शतकं तथा ॥ ८९ ॥
शिलायां प्रतिमायां वा श्रीकृष्णं राधया सह ।
भारते पूजयेद् दत्त्वा चोपचाराणि षोड़श ॥ ९० ॥
गोलोके च वसेत् सोऽपि यावद् वै ब्रह्मणो वयः ।
भारतं पुनरागत्य हरिभक्तिं लभेद् ध्रुवम् ॥ ९१ ॥
क्रमेण सुदृढ़ां भक्तिं लब्ध्वा मन्त्रं हरेरपि ।
देहं त्यक्त्वा च गोलोकं पुनरेव प्रयाति सः ॥ ९२ ॥
तत्र कृष्णस्य सारूप्यं संप्राप्य पार्षदो भवेत् ।

पुनस्तत्पतनं नास्ति जरामृत्युहरो महान् ॥ ९३ ॥
शुक्लां व्याप्यथवा कृष्णां करोत्येकादशीञ्च यः ।
वैकुण्ठे मोदते सोऽपि यावद् वै ब्रह्मणो वयः ॥ ९४ ॥
भारतं पुनरागत्य हरिभक्तिं लभेद् ध्रुवम् ।
पुनर्याति च वैकुण्ठं न तस्य पतनं भवेत् ॥ ९५ ॥
भाद्रे शुक्ले च द्वादश्यां यः शक्रं पूजयेन्नरः ।
षष्टिवर्षसहस्राणि शक्रलोके महीयते ॥ ९६ ॥
रविवारेऽर्कसंक्रान्त्यां सप्तम्यां शुक्लपक्षतः ।
सम्पूज्यार्कं हविष्यान्नं यः करोति च भारते ॥ ९७ ॥
महीयते सोऽर्कलोके यावच्चन्द्रदिवाकरौ ।
भारतं पुनरागत्य चारोगी श्रीयुतो भवेत् ॥ ९८ ॥
ज्यैष्ठशुक्लचतुर्दश्यां सावित्रीं यो हि पूजयेत् ।
महीयते ब्रह्मलोके सप्तमन्वन्तरावधि ॥ ९९ ॥
पुनर्महीं समागत्य श्रीमानतुलविक्रमः ।
चिरजीवी भवेत् सोऽपि ज्ञानवान् सम्पदायुतः ॥१००॥
माघस्य शुक्लपञ्चम्यां पूजयेद् यः सरस्वतीम् ।
संयतो भक्तितो दत्त्वा चोपचाराणि षोडश ॥ १०१ ॥
महीयते स वैकुण्ठे यावद् ब्रह्म दिवानिशम् ।
संप्राप्य च पुनर्जन्म स भवेत् कविपण्डितः ॥ १०२ ॥
गां सुवर्णादिकं यो हि ब्राह्मणाय ददाति च ।
नित्यं जीवनपर्य्यन्तं भक्तियुक्तश्च भारते ॥ १०३ ॥
गवां लोमप्रमाणाब्दं द्विगुणं विष्णुमन्दिरे ।
मोदते हरिणा सार्द्धं क्रीड़ाकौतुकमङ्गलैः ॥ १०४ ॥
ततः पुनरिहागत्य विष्णुभक्तिं लभेद् ध्रुवम् ।

ततः पुनरिहागत्य राजराजेश्वरो भवेत् ।
गोमांश्च पुत्रवान् विद्वान् ज्ञानवान् सर्वतः सुखी ॥१०५॥
भोजयेद् यो हि मिष्टान्नं ब्राह्मणेभ्यश्च भारते ।
विप्रलोमप्रमाणाब्दं मोदते विष्णुमन्दिरे ॥१०६॥
ततः पुनरिहागत्य स सुखी धनवान् भवेत् ।
विद्वान् सुचिरजीवी च श्रीमानतुलविक्रमः । १०७॥
यो वक्ति वा ददात्येव हरेर्नामानि भारते ।
युगनामप्रमाणञ्च विष्णुलोके महीयते ।१०८॥
ततः पुनरिहागत्य विष्णुभक्तिं लभेद् ध्रुवम् ।
यदि नारायणक्षेत्रे फलं कोटिगुणं लभेत् । १०९ ॥
नाम्नां कोटिं हरेर्यो हि क्षेत्रे नारायणे जपेत् ।
सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद् ध्रुवम् ॥ ११० ॥
लभते न पुनर्जन्म वैकुण्ठे स महीयते ।
लभेद्विष्णोश्च सारूप्यं न तस्य पतनं भवेत् ॥ १११ ॥
यः शिवं पूजयेन्नित्यं कृत्वा लिङ्गञ्च पार्थिवम् ।
यावज्जीवनपर्य्यन्तं स याति शिवमन्दिरम् ॥ ११२ ॥
मृदां रेणुप्रमाणाब्दं शिवलोके महीयते ।
ततः पुनरिहागत्य राजेन्द्रो भारते भवेत् ॥ ११३ ॥
शिलाञ्च योऽर्चयेन्नित्यं शिलातोयञ्च भक्षति ।
महीयते स वैकुण्ठे यावद् वै ब्रह्मणः शतम् ॥ ११४ ॥
ततो लब्ध्वा पुनर्जन्म हरिभक्तिं सुदुर्लभम् ।
महीयते विष्णुलोके न तस्य पतनं भवेत् ॥ ११५ ॥
तपांसि चैव सर्वाणि व्रतानि निखिलानि च ।
कृत्वा तिष्ठति वैकुण्ठे यावदिन्द्राश्चतुर्दश: ॥ ११६ ॥

ततो लब्ध्वा पुनर्जन्म राजेन्द्रो भारते भवेत् ।
ततो मुक्तो भवेत् पश्चात् पुनर्जन्म न विद्यते ॥ ११७ ॥
यः स्नाति सर्वतीर्थेषु भुवि कृत्वा प्रदक्षिणम् ।
स च निर्वाणतां याति न तज्जन्म भवेद् भुवि ॥ ११८ ॥
पुण्यक्षेत्रे भारते च योऽश्वमेधं करोति च ।
अश्वलोमप्रमाणाब्दं शक्रस्यार्द्धासने वसेत् ॥ ११९ ॥
चतुर्गुणं राजसूये फलमाप्नोति मानवः ।
नरमेधेऽश्वमेधार्द्धं गोमेधे च तदेव च ॥ १२० ॥
पुत्रेष्टौ च तदर्द्धञ्च सुपुत्रञ्च लभेद् ध्रुवम् ।
लभते लाङ्गलेष्टौ च गोमेधसदृशं फलम् ॥ १२१ ॥
तत्समानञ्च विप्रेष्टौ वृद्धियागे च तत्फलम् ।
पद्मयज्ञे तदर्द्धञ्च फलमाप्नोति मानवः ॥ १२२ ॥
विशोके च विशोकञ्च पश्चार्द्धं स्वर्गमश्नुते ।
विजये विजयी राजा स्वर्गं पद्मसमं लभेत् ॥१२३॥
प्राजापत्ये प्रजालाभो भूवृद्धि र्भूभृतां भवेत् ।
इह राजश्रियं लब्ध्वा पश्चार्द्धं स्वर्गमश्नुते ।
ऋद्धियागे महैश्वर्य्यं स्वर्गं पद्मसमं भवेत् ॥ १२४ ॥
विष्णुयज्ञःप्रधानश्च सर्वयज्ञेषु सुन्दरि ।
ब्रह्मणा च कृतः पूर्वं महासम्भारसंयुतः ॥ १२५ ॥
बभूव कलहो यत्र दक्षशङ्करयोः सति ।
शेपुश्च नन्दिनं विप्राः नन्दी विप्रांश्च कोपतः ॥ १२६ ॥
यतो हेतोर्दक्षयज्ञं बभञ्ज चन्द्रशेखरः ।
चकार विष्णुयज्ञञ्च पुरा दक्षप्रजापतिः ॥ १२७ ॥
धर्मश्च कश्यपश्चैव शेषश्चापि च कर्दमः ।

स्वायम्भुवो मनुश्चैव तत्पुत्रश्च प्रियव्रतः ॥ १२८ ॥
शिवः सनत्कुमारश्च कपिलश्च ध्रुवस्तथा ।
राजसूयसहस्राणां समृद्धा च क्रतुर्भवेत् ॥ १२९ ॥
राजसूयसहस्राणां फलमाप्नोति निश्चितम् ।
विष्णुयज्ञात् परो यज्ञो नास्ति वेदे फलप्रदः ॥ १३० ॥
बहुकल्पान्तजीवी च जीवन्मुक्तो भवेद् ध्रुवम् ।
ज्ञानेन तेजसा चैव विष्णुतुल्यो भवेदिह ॥ १३१ ॥
देवानाञ्च यथा विष्णु र्वैष्णवानां यथा शिवः ।
शास्त्राणाञ्च यथा वेदा आश्रमाणाञ्च ब्राह्मणाः ॥१३२॥
तीर्थानाञ्च यथा गङ्गा पवित्राणाञ्च वैष्णवाः ।
एकादशी व्रतानाञ्च पुष्पाणां तुलसी यथा ॥ १३३ ॥
नक्षत्राणां यथा चन्द्रः पक्षिणां गरुड़ो यथा ।
यथा स्त्रीणाञ्च प्रकृतिः आधाराणां वसुन्धरा ॥ १३४ ॥
शीघ्रगानाञ्चेन्द्रियाणां चञ्चलानां यथा मनः ।
प्रजापतीनां ब्रह्मा च प्रजेशानां प्रजापतिः ॥ १३५ ॥
वृन्दावनं वनानाञ्च वर्षाणां भारतं यथा ।
श्रीमताञ्च यथा श्रीश्च विदुषाञ्च सरस्वती ॥ १३६ ॥
पतिव्रतानां दुर्गा च सौभाग्यानाञ्च राधिका ।
विष्णुयज्ञस्तथा वत्से यज्ञेषु च महानिति ॥ १३७ ॥
अश्वमेधशतेनैव शक्रत्वं लभते ध्रुवम् ।
सहस्रेण विष्णुपदं संप्राप पृथुरेव च ॥ १३८ ॥
स्नानञ्च सर्वतीर्थेषु सर्वयज्ञेषु दीक्षणम् ।
सर्वेषाञ्च व्रतानाञ्च तपसां फलमेव च ॥ १३९ ॥
पाठश्चतुर्णां वेदानां प्रादक्षिण्यं भुवस्तथा ।

फलं वीजमिदं सर्वं मुक्तिदं कृष्णसेवनम् ॥ १४० ॥
पुराणेषु च वेदेषु चेतिहासेषु सर्वतः ।
निरूपितं सारभूतं कृष्णपादाम्बुजार्चनम् ॥ १४१ ॥
तद्वर्णनञ्च तद्ध्यानं तन्नामगुणकीर्त्तनम् ।
तत्स्तोत्रं स्मरणञ्चैव वन्दनं जप एव च ॥ १४२ ॥
तत्पादोदकनैवेद्यभक्षणं नित्यमेव च ।
सर्वसम्मतमित्येवं सर्वेप्सितमिदं सति ॥ १४३ ॥
भज कृष्णं परं ब्रह्म निर्गुणं प्रकृतेः परम् ।
गृहाण स्वामिनं वत्से सुखं गच्छ स्वमन्दिरम् ॥ १४४ ॥
एतत्ते कथितं सर्वं विपाकं कर्मणां नृणाम् ।
सर्वेप्सितं सर्वमतं परं तत्त्वप्रदं नृणाम् ॥ १४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे सावित्री यमसंवादे सावित्र्युपा-
ख्याने शुभकर्मविपाकप्रकथनं नाम सप्त-
विंशतितमोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः ।

श्रीनारायण उवाच ।

हरेरुत्कीर्त्तनं श्रुत्वा सावित्री यमवक्त्रतः ।
साश्रुनेत्रा सपुलका यमं पुनरुवाच सा ॥ १ ॥

सावित्र्युवाच ।

हरेरुत्कीर्त्तनं धर्मः स्वकुलोद्धारकारणम् ।
श्रोतृणाञ्चैव वक्तृणां जन्ममृत्युजराहरम् ॥ २ ॥
दानानाञ्च व्रतानाञ्च सिद्धीनां तपसां परम् ।
योगानाञ्चैव वेदानां सेवनं कीर्त्तनं हरेः ॥ ३ ॥
मुक्तित्वममरत्वं वा सर्वसिद्धित्वमेव वा ।
श्रीकृष्णसेवनस्यैव कलां नार्हन्ति षोड़शीम् ॥ ४ ॥
भजामि केन विधिना श्रीकृष्णं प्रकृतेः परम् ।
मूढ़ां मामबलां तात वद वेदविदांवर ॥ ५ ॥
शुभकर्म्मविपाकञ्च श्रुतं नृणां मनोहरम् ।
कर्म्माशुभविपाकञ्च तन्मे व्याख्यातुमर्हसि ॥ ६ ॥
इत्युक्त्वा सा सती ब्रह्मन् भक्तिनम्रात्मकन्धरा ।
तुष्टाव धर्म्मराजञ्च वेदोक्तेन स्तवेन च ॥ ७ ॥

सावित्र्युवाच ।

तपसा धर्म्ममाराध्य पुष्करे भास्करः पुरा ।
धर्मांशं यं सुतं प्राप धर्मराजं नमाम्यहम् ॥ ८ ॥
समता सर्वभूतेषु यस्य सर्वस्य साक्षिणः ।
अतो यन्नाम शमनमिति तं प्रणमाम्यहम् ॥ ९ ॥
येनान्तश्च कृतो विश्वे सर्वेषां जीविनां परम् ।
कर्मानुरूपकालेन तं कृतान्तं नमाम्यहम् ॥ १० ॥
बिभर्त्ति दण्डं दण्डाय पापिनां शुद्धिहेतवे ।
नमामि तं दण्डधरं यः शास्ता सर्वकर्म्मणाम् ॥ ११ ॥
विश्वे च कलयत्येव यः सर्वायुश्चापि सन्ततम् ।
अतीव दुर्निवार्य्यञ्च तं कालं प्रणमाम्यहम् ॥ १२ ॥

तपस्वी वैष्णवो धर्म्मी संयमी विजितेन्द्रियः ।
जीविनां कर्म्मफलदं तं यमं प्रणमाम्यहम् ॥ १३ ॥
स्वात्मारामश्च सर्वज्ञो मित्रं पुण्यकृतां भवेत् ।
पापिनां क्लेशदो यश्च पुण्यं मित्रं नमाम्यहम् ॥ १४ ॥
यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा ।
यो ध्यायति परं ब्रह्म ब्रह्मवंशं नमाम्यहम् ॥ १५ ॥
इत्युक्त्वा सा च सावित्री प्रणनाम यमं मुने ।
यमस्तां विष्णुभजनं कर्म्मपाकमुवाच ह ॥ १६ ॥
इदं यमाष्टकं नित्यं प्रातरुत्थाय यः पठेत् ।
यमात्तस्य भयं नास्ति सर्वपापात् प्रमुच्यते ॥ १७ ॥
महापापी यदि पठेत् नित्यं भक्त्या च नारद ।
यमः करोति तं शुद्धं कायव्यूहेन निश्चितम् ॥ १८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे सावित्रीकृतयमस्तोत्रं नामा-
ष्टाविंशोऽध्यायः ।

---

## ऊनत्रिंशोऽध्यायः ।

---

श्रीनारायण उवाच ।

यमस्तस्यै विष्णुमन्त्रं दत्त्वा च विधिपूर्वकम् ।
कर्म्माशुभविपाकञ्च तामुवाच रवेः सुतः ॥ १ ॥

यम उवाच ।

शुभकर्म्मविपाकञ्च श्रुतं नानाविधं सति ।
कर्म्माशुभविपाकञ्च कथयामि निशामय ॥ २ ॥
नानाप्रकारं स्वर्गञ्च याति जीवः स्वकर्म्मणा ।
कुकर्म्मणा च नरकं याति नानाविधं नरः ॥ ३ ॥
नरकाणाञ्च कुण्डानि सन्ति नानाविधानि च ।
नानापुराणभेदेन नामभेदानि तानि च ॥ ४ ॥
विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् ।
भयङ्कराणि घोराणि हे वत्से कुत्सितानि च ॥ ५ ॥
षड़शीति च कुण्डानि संयमन्याञ्च सन्ति च ।
निबोध तेषां नामानि प्रसिद्धानि श्रुतौ सति ॥ ६ ॥
वह्निकुण्डं तप्तकुण्डं चारकुण्डं भयानकम् ।
विट्कुण्डं मूत्रकुण्डञ्च श्लेष्मकुण्डञ्च दुःसहम् ॥ ७ ॥
गरकुण्डं दूषिकाकुण्डं वसाकुण्डं तथैव च ।
शुक्रकुण्डमसृक्कुण्डमश्रुकुण्डञ्च कुत्सितम् ॥ ८ ॥
कुण्डं गात्रमलानाञ्च कर्णविट्कुण्डमेव च ।
मज्जाकुण्डं मांसकुण्डं नखकुण्डञ्च दुस्तरम् ॥ ९ ॥
लोम्नां कुण्डं केशकुण्डं अस्थिकुण्डञ्च दुःखदम् ।
ताम्रकुण्डं लौहकुण्डं प्रतप्तं क्लेशदं महत् ॥ १० ॥
तीक्ष्णकण्टककुण्डञ्च विषकुण्डञ्च विघ्नदम् ।
घर्म्मकुण्डं तप्तसुराकुण्डं चापि प्रकीर्त्तितम् ॥ ११ ॥
प्रतप्ततैलकुण्डञ्च दन्तकुण्डञ्च दुर्वहम् ।
कृमिकुण्डं पूयकुण्डं सर्पकुण्डं दुरन्तरम् ॥ १२ ॥
मशकुण्डं दंशकुण्डं भीमं गरलकुण्डकम् ।

कुण्डञ्च वज्रदंष्ट्राणां वृश्चिकानाञ्च सुव्रते ॥ १३ ॥
शरकुण्डं शूलकुण्डं खड्गकुण्डञ्च भीषणम् ।
गोलकुण्डं नक्रकुण्डं काककुण्डं शुचास्पदम् ॥ १४ ॥
सञ्चालकुण्डं वाजकुण्डं बन्धकुण्डं सुदुस्तरम् ।
तप्तपाषाणकुण्डञ्च तीक्ष्णपाषाणकुण्डकम् ॥ १५ ॥
लालाकुण्डमसिकुण्डं चूर्णकुण्डं सुदारुणम् ।
चक्रकुण्डं वक्रकुण्डं कूर्म्मकुण्डं महोल्बणम् ॥ १६ ॥
ज्वालाकुण्डं भस्मकुण्डं पूतिकुण्डञ्च सुन्दरि ।
तप्तसूर्म्यसिपत्रं क्षुरधारं सूचीमुखम् ॥ १७ ॥
गोधामुखं नक्रमुखं गजदंशञ्च गोमुखम् ।
कुम्भीपाकं कालसूत्रम् अवटोदमरुन्तुदम् ॥ १८ ॥
पांशुभोजं पाशवेष्टं शूलप्रोतं प्रकम्पनम् ।
उल्कामुखम् अन्धकूपं वेधनं दण्डताड़नम् ॥ १९ ॥
जालबन्धं देहचूर्णं दलनं शोषणङ्करम् ।
सर्पज्वालामुखं जिम्भं धूमान्धं नागवेष्टनम् ॥ २० ॥
कुण्डान्येतानि सावित्रि पापिनां क्लेशदानि च ।
नियुक्तैः किङ्करगणै रक्षितानि च सन्ततम् ॥ २१ ॥
दण्डहस्तैः शूलहस्तैः पाशहस्तैर्भयङ्करैः ।
शक्तिहस्तैर्गदाहस्तैर्मदमत्तैश्च दारुणैः ॥ २२ ॥
तमोयुक्तैर्दयाहीनैर्दुर्निवार्य्यैश्च सर्वतः ।
तेजस्विभिश्च निःशङ्कैस्ताम्रपिङ्गललोचनैः ॥ २३ ॥
योगयुक्तैः सिद्धयोगैर्नानारूपधरैर्वरैः ।
आसन्नमृत्युभिर्दृष्टैः पापिभिः सर्वजीविभिः ॥ २४ ॥
स्वकर्म्मनिरतैः शैवैः शाक्तैः सौरैश्च गाणपैः ।

अदृष्टैः पुण्यकृद्भिश्च सिद्धैर्योगिभिरेव च ॥ २५ ॥
स्वधर्म्मनिरतैर्वापि विरतैर्वा स्वतन्त्रकैः ।
बलवद्भिश्च निःशङ्कैः स्वप्रदृष्टैश्च वैष्णवैः ॥ २६ ॥
एतत्ते कथितं साध्वि कुण्डसंख्यानिरूपणम् ।
येषां निवासो यत् कुण्डं निबोध कथयामि ते ॥२७॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे प्रकृतिखण्डे सावित्र्युपाख्याने यमसावित्री-संवादे नरककुण्डसंख्यानं नामोनत्रिं-शोऽध्यायः ।

——

## त्रिंशोऽध्यायः ।

—००—

यम उवाच ।

हरिसेवारतः शुद्धो योगी सिद्धो व्रती सति ।
तपस्वी ब्रह्मचारी च न याति नरकं यतिः ॥ १ ॥
कटुवाचा बान्धवांश्च खलत्वेन च यो नरः ।
दग्धान् करोति बलवान् वह्निकुण्डं प्रयाति सः ॥ २ ॥
गात्रलोमप्रमाणाब्दं तत्र स्थित्वा हुताशने ।
पशुयोनिमवाप्नोति रौद्रे दग्धास्त्रजन्मनि ॥ ३ ॥
ब्राह्मणं तृषितं क्षुब्धं प्रतप्तं गृहमागतम् ।
न भोजयति यो मूढ़स्तप्तकुण्डं प्रयाति सः ॥ ४ ॥

तत्र लोमप्रमाणाब्दं स्थित्वा तत्र च दुःखितः ।
तप्तस्थले वह्निकुण्डे पक्षी च सप्तजन्मसु ॥ ५ ॥
रविवारार्कसंक्रान्त्याममायां श्राद्धवासरे ।
वस्त्राणां क्षारसंयोक्तं करोति यो हि मानवः ॥ ६ ॥
स याति क्षारकुण्डञ्च सूत्रमानाब्दमेव च ।
स व्रजेद्रजकीं योनिं सप्तजन्मसु भारते ॥ ७ ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः ।
षष्टिवर्षसहस्राणि विट्कुण्डञ्च प्रयाति सः ॥ ८ ॥
षष्टिवर्षसहस्राणि विड्भोजी तत्र तिष्ठति ।
षष्टिवर्षसहस्राणि विट्कृमिश्च पुनर्भुवि ॥ ९ ॥
परकीयतड़ागे च तड़ागं यः करोति च ।
उत्सृजेद्दैवदोषेण मूत्रकुण्डं प्रयाति सः ॥ १० ॥
तद्रेणुमानवर्षञ्च तद्भोजी तत्र तिष्ठति ।
भारते गोधिका चैव स भवेत् सप्तजन्मसु ॥ ११ ॥
एकाकी मिष्टमश्नाति श्लेष्मकुण्डं प्रयाति सः ।
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति ॥ १२ ॥
पूर्णमब्दशतञ्चैव सः प्रेतो भारते भवेत् ।
श्लेष्ममूत्रगरञ्चैव पूयं भुङ्क्ते ततः शुचिः ॥ १३ ॥
पितरं मातरञ्चैव गुरुं भार्य्यां सुतं सुताम् ।
यो न पुष्णात्यनाथञ्च गरकुण्डं प्रयाति सः ॥ १४ ॥
पूर्णमब्दसहस्रञ्च तद्भोजी तत्र तिष्ठति ।
ततो व्रजेद्भूतयोनिं शतवर्षं ततः शुचिः ॥ १५ ॥
दृष्ट्वातिथिं वक्रचक्षुः करोति यो हि मानवः ।
पितृदेवास्तस्य जलं न गृह्णन्ति च पापिनः ॥ १६ ॥

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
इहैव लभते चान्ते दूषिकाकुण्डमाव्रजेत् ॥ १७ ॥
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति ।
ततो नरो भवेद्भूमौ दरिद्रः सप्तजन्मसु ॥ १८ ॥
दत्त्वा द्रव्यञ्च विप्राय चान्यस्मै दीयते यदि ।
स तिष्ठति वसाकुण्डे तद्भोजी शतवत्सरम् ॥ १९ ॥
ततो भवेत् स चण्डालस्त्रिजन्मनि ततः शुचिः ।
कृकलासो भवेत् सोऽपि भारते सप्तजन्मसु ।
ततो भवेन्मानवश्च दरिद्रोऽल्पायुरेव च ॥ २० ॥
पुमांसं कामिनी वापि कामिनीं वा पुमानथ ।
यः शुक्रं पाययत्येव शुक्रकुण्डं प्रयाति सः ॥ २१ ॥
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति ।
योनिकृमिः शताब्दञ्च भवेद्भुवि ततः शुचिः ॥ २२ ॥
सन्ताड्य च गुरुं विप्रं रक्तपातञ्च कारयेत् ।
स च तिष्ठत्यसृक्कुण्डे तद्भोजी शतवत्सरम् ॥ २३ ॥
ततो भवेद्व्याधजन्म सप्तजन्मसु भारते ।
ततः शुद्धिमवाप्नोति मानवश्च क्रमेण च ॥ २४ ॥
अश्रुस्रवन्तं गायन्तं भक्तं दृष्ट्वा च गद्गदम् ।
श्रीकृष्णगुणसंगीते हसत्येव हि यो नरः ॥ २५ ॥
स वसेदश्रुकुण्डे च तद्भोजी शतवत्सरम् ।
ततो भवेत् स चण्डालो त्रिजन्मनि ततः शुचिः ॥२६॥
करोति खलतां शश्वद्दग्धहृदयो नरः ।
कुण्डं गात्रमलानाञ्च स च याति दशाब्दकम् ॥ २७ ॥
ततः स गर्दभीं योनिमवाप्नोति त्रिजन्मनि ।

त्रिजन्मनि च शार्गाली ततः शुद्धो भवेद्ध्रुवम् ॥२८॥
बधिरं यो हसत्येव निन्दत्येव हि मानवः ।
स वसेत् कर्णविट्कुण्डे तद्भोजी शतवत्सरम् ॥ २९ ॥
ततो भवेत् स बधिरो दरिद्रः सप्तजन्मसु ।
सप्तजन्मस्वङ्गहीनस्ततः शुद्धिं लभेद्ध्रुवम् ॥ ३० ॥
लोभात् स्वपालनार्थाय जीविनं हन्ति यो नरः ।
मज्जाकुण्डे वसेत् सोऽपि तद्भोजी लक्षवर्षकम् ॥ ३१ ॥
ततो भवेत् स शशको मीनश्च सप्तजन्मसु ।
एणादयश्च कर्म्मभ्यस्ततः शुद्धिं लभेत् ध्रुवम् ॥ ३२ ॥
स्वकन्यापालनं कृत्वा विक्रीणाति हि यो नरः ।
अर्थलोभान्महामूढ़ो मांसकुण्डं प्रयाति सः ॥ ३३ ॥
कन्यालोमप्रमाणाब्दं तद्भोजी तत्र तिष्ठति ।
तञ्च कुण्डे प्रहारञ्च करोति यमकिङ्करः ॥ ३४ ॥
मांसभारं मूर्द्ध्नि कृत्वा रक्तधारां लिहेत् क्षुधा ।
ततो हि भारते पापी कन्याविट्सु कृमिर्भवेत् ॥ ३५ ॥
षष्टिवर्षसहस्राणि व्याधश्च सप्तजन्मसु ।
त्रिजन्मनि वराहश्च कुक्कुरः सप्तजन्मसु ॥ ३६ ॥
सप्तजन्मसु मण्डूको जलौका सप्तजन्मसु ।
सप्तजन्मसु काकश्च ततः शुद्धिं लभेत् ध्रुवम् ॥ ३७ ॥
व्रतानामुपवासानां श्राद्धादीनाञ्च संयमे ।
न करोति क्षौरकर्म सोऽशुचिः सर्वकर्मसु ॥ ३८ ॥
स च तिष्ठति कुण्डेषु नखादीनाञ्च सुन्दरि ।
तदेव दिनमानाब्दं तद्भोजी दण्डताड़ितः ॥ ३९ ॥
सकेशं पार्थिवं लिङ्गं यो वार्चयति भारते ।

स तिष्ठति केशकुण्डे रुद्रेणमानवर्षकम् ॥ ४० ॥
तदन्ते यावनीं योनिं प्रयाति हरकोपतः ।
शताब्दात् शुद्धिमाप्नोति स्वकुलं लभते ध्रुवम् ॥ ४१ ॥
पितृणां यो विष्णुपदे पिण्डं नैव ददाति च ।
स तिष्ठत्यस्थिकुण्डे च स्वलोमाब्दं महोल्वणे ॥ ४२ ॥
ततः स्वयोनिं संप्राप्य खञ्जः सप्तसु जन्मसु ।
भवेन्महादरिद्रश्च ततः शुद्धो हि दण्डतः ॥ ४३ ॥
यः सेवते महामूढ़ो गुर्विणीञ्च स्वकामिनीम् ।
प्रतप्तताम्रकुण्डे च शतवर्षं स तिष्ठति ॥ ४४ ॥
अवीरान्नञ्च यो भुङ्क्ते ऋतुस्नातान्नमेव च ।
लौहकुण्डे शताब्दञ्च स च तिष्ठति तप्तके ॥ ॥ ४५ ॥
स व्रजेद्राजकीं योनिं कर्मकारीं च सप्तसु ।
महाव्रणी दरिद्रश्च ततः शुद्धो भवेन्नरः ॥ ४६ ॥
यो हि घर्मात्तहस्तेन देवद्रव्यमुपस्पृशेत् ।
शतवर्षप्रमाणञ्च घर्मकुण्डे स तिष्ठति ॥ ४७ ॥
यः शूद्रेणाभ्यनुज्ञातो भुङ्क्ते शूद्रान्नमेव च ।
स च तप्तसुराकुण्डे शताब्दं तिष्ठति द्विजः ॥ ४८ ॥
ततो भवेच्छूद्रयाजी ब्राह्मणः सप्तजन्मसु ।
शूद्रश्राद्धान्नभोजी च ततः शुद्धो भवेत् ध्रुवम् ॥ ४८ ॥
वाग्दुष्टा कटुवाचा या ताड़येत् स्वामिनं सदा ।
तीक्ष्णकण्टककुण्डे सा तल्लोमी तत्र तिष्ठति ॥ ५० ॥
ताड़िता यमदूतेन दण्डेन च चतुर्युगम् ।
तत उच्चैःश्रवाः सप्तजन्मस्वेव ततः शुचिः ॥ ५१ ॥
विषेण जीवनं हन्ति निर्दयो यो हि पामरः ।

विषकुण्डे च तद्भोजी सहस्राब्दञ्च तिष्ठति ॥५२॥
ततो भवेन्नृघाती च व्रणी च सप्तजन्मसु ।
सप्तजन्मसु कुष्ठी च ततः शुद्धो भवेत् ध्रुवम् ॥ ५३ ॥
दण्डेन ताड़येद् यो हि वृषञ्च वृषवाहकः ।
भृत्यद्वारा स्वतन्त्रो वा पुण्यक्षेत्रे च भारते ॥ ५४ ॥
प्रतप्ततैलकुण्डे च स तिष्ठति चतुर्युगम् ।
गवां लोमप्रमाणाब्दं वृषो भवति तत्परम् ॥ ५५ ॥
दण्डेन हन्ति जीवं यो लौहेन वड़िषेण वा ।
दन्तकुण्डे वसेत् सोऽपि वर्षाणामयुतं सति ॥ ५६ ॥
ततः स्वयोनिं संप्राप्य चोदरव्याधिसंयुतः ।
जन्मनैकेन क्लेशेन ततः शुद्धो भवेन्नरः ॥ ५७ ॥
यो भुङ्क्ते च वृथामांसं मत्स्यभोजी च ब्राह्मणः ।
हरेर्नैवेद्यभोजी च कृमिकुण्डं प्रयाति सः ॥ ५८ ॥
स्वलोममानवर्षञ्च तद्भोजी तत्र तिष्ठति ।
ततो भवेत् म्लेच्छजातिस्त्रिजन्मनि ततो द्विजः ॥ ५९ ॥
ब्राह्मणः शूद्रयाजी यः शूद्रश्राद्धान्नभोजकः ।
शूद्राणां शवदाही च पूयकुण्डं व्रजेद् ध्रुवम् ॥ ६० ॥
यावल्लोमप्रमाणाब्दं यजमानस्य सुव्रते ।
ताड़ितो यमदूतेन तद्भोजी तत्र तिष्ठति ॥ ६१ ॥
ततो भारतमागत्य स शूद्रः सप्तजन्मसु ।
महाशूली दरिद्रश्च ततः शुद्धः पुनर्द्विजः ॥ ६२ ॥
कृष्णपादमस्तकस्थं सर्पं हन्ति च यो नरः ।
स्वात्मलोमप्रमाणाब्दं सर्पकुण्डं प्रयाति सः ॥ ६३ ॥
सर्पेण भक्षितः सोऽपि यमदूतेन ताड़ितः ।

वसेच्च सर्पविड्भोजी ततः सर्पो भवेद् ध्रुवम् ॥६४॥
ततो भवेत् मानवश्चैवाल्पायुर्दद्रुसंयुतः ।
महाक्लेशेन तन्मृत्युः सर्पेण भक्षितो ध्रुवम् ॥ ६५ ॥
विधिं प्रदत्त्वा जीवांश्च क्षुद्रजन्तूंश्च हन्ति यः ।
स दंशमशयोः कुण्डे जन्ममानाब्दकं वसेत् ॥ ६६ ॥
दिवानिशं भक्षितस्तैरनाहारश्च शब्दकृत् ।
हस्तपादादिबद्धश्च यमदूतेन ताड़ितः ॥ ६७ ॥
ततो भवेत् क्षुद्रजन्तुर्जातिश्च यावती स्मृता ।
ततो भवेन्मानवश्च सोऽङ्गहीनस्ततः शुचिः ॥ ६८ ॥
यो मूढ़ो मधु गृह्णाति हत्वा च मधुमक्षिकाः ।
स एव गरले कुण्डे जीविमानाब्दकं वसेत् ॥ ६९ ॥
मक्षितो गरलैर्दग्धो यमदूतेन ताड़ितः ।
ततो हि मक्षिकाजातिस्ततः शुद्धो भवेन्नरः ॥ ७० ॥
दण्डं करोत्यदण्ड्यं च विप्रदण्डं करोति च ।
स कुण्डं वज्रदंष्ट्राणां कीटानाञ्च प्रयाति च ॥ ७१ ॥
तल्लोममानवर्षञ्च तत्र तिष्ठत्यहर्निशम् ।
शब्दकृत् भक्षितस्तैश्च ततः शुद्धो भवेन्नरः ॥ ७२ ॥
अर्थलोभेन यो भूपः प्रजादण्डं करोति च ।
वृश्चिकानाञ्च कुण्डेषु तल्लोमाब्दं वसेत् ध्रुवम् ॥ ७३ ॥
ततो वृश्चिकजातिश्च सप्तजन्मसु भारते ।
ततो नरश्चाङ्गहीनो व्याधियुक्तो भवेद् ध्रुवम् ॥ ७४ ॥
ब्राह्मणः शस्त्रधारी यो ह्यन्येषां धावको भवेत् ।
सन्ध्याहीनश्च मूढ़श्च हरिभक्तिविहीनकः ॥ ७५ ॥
स तिष्ठति स्वलोमाब्दं कण्डादिषु शरादिषु ।

विद्धः शरादिभिः शश्वत् ततः शुद्धो भवेन्नरः ॥ ७६ ॥
कारागारे सान्धकारे निबध्नाति प्रजाश्च यः ।
शमन्तः स्वल्पदोषेण गोलकुण्डं प्रयाति सः ॥ ७७ ॥
तत्कुण्डं पङ्कतोयाक्तं सान्धकारं भयङ्करम् ।
तीक्ष्णदंष्ट्रैश्च कीटैश्च संयुक्तं गोलकुण्डकम् ॥ ७८ ॥
कीटैर्विद्धो वसेत्तत्र प्रजालोमाब्दमेव च ।
ततो भवेत् प्रजाभृत्यस्ततः शुद्धो नरो भुवि ॥ ७९ ॥
सरोवरादुत्थितांश्च नक्रादीन् हन्ति यः सति ।
नक्रकण्टकमानाब्दं नक्रकुण्डं प्रयाति सः ॥ ८० ॥
ततो नक्रादिजातिश्च भवेन्नद्यादिषु ध्रुवम् ।
ततः सद्योऽपि शुद्धो हि दण्डेनैव नरः पुनः ॥ ८१ ॥
वक्षःश्रोणीस्तनास्यञ्च यः पश्यति परस्त्रियाः ।
कामेन कामुको यो हि पुण्यक्षेत्रे च भारते ॥ ८२ ॥
स वसेत् काककुण्डे च काकैश्च चुञ्चलोचनः ।
ततः स्वलोममानाब्दं ततश्चान्धस्त्रिजन्मनि ॥ ८३ ॥
सप्तजन्मदरिद्रश्च महाक्रूरश्च पातकी ।
भारते स्वर्णकारश्च स च स्वर्णवणिक् ततः ॥ ८४ ॥
यो भारते ताम्रचौरो लौहचौरश्च सुन्दरि ।
स च लोमप्रमाणाब्दं वाजकुण्डं प्रयाति सः ॥ ८५ ॥
तत्रैव वाजविड्भोजी वाजैश्च चुञ्चलोचनः ।
ताड़ितो यमदूतेन ततः शुद्धो भवेन्नरः ॥ ८६ ॥
भारते देवचौरश्च देवद्रव्यादिहारकः ।
सुदुष्करे वज्रकुण्डे स्वलोमाब्दं वसेद् ध्रुवम् ॥ ८७ ॥
देहदग्धो हि तद्वज्रैरनाहारश्च शब्दकृत् ।

ताड़ितो यमदूतेन ततः शुद्धो भवेन्नरः ॥ ८८ ॥
रौप्यगव्यांशुकानाञ्च यश्चौरः सुरविप्रयोः।
तप्तपाषाणकुण्डे च स्वलोमाब्दं वसेद् ध्रुवम् ॥ ८९ ॥
त्रिजन्मनि वकः सोऽपि श्वेतहंसस्त्रिजन्मनि।
जन्मैकं शङ्खचिल्लश्च ततोऽन्ये श्वेतपक्षिणः॥ ९० ॥
ततो रक्तविकारी च शूली च मानवो भवेत्।
सप्तजन्मसु चाल्पायुस्ततः शुद्धो भवेन्नरः ॥ ९१ ॥
रैत्यकांस्यादिपात्रञ्च यो हरेत् सुरविप्रयोः।
तीक्ष्णपाषाणकुण्डे च स्वलोमाब्दं वसेद् ध्रुवम् ॥ ९२ ॥
स भवेदश्वजातिश्च भारते सप्तजन्मसु।
ततोऽधिकाङ्गयुक्तश्च पादरोगी ततः शुचिः ॥ ९३ ॥
पुंश्चल्यन्नञ्च यो भुङ्क्ते पुंश्चलीजीव्यजीवनः।
स्वलोममानवर्षञ्च लालाकुण्डे वसेद् ध्रुवम् ॥९४॥
ताड़ितो यमदूतेन तद्भोजी तत्र तिष्ठति
ततश्चक्षुःशूलरोगी ततः शुद्धः क्रमेण सः ॥ ९५ ॥
म्लेच्छसेवी मसीजीवी यो विप्रो भारते भुवि।
स च तप्तमसीकुण्डे स्वलोमाब्दं वसेद् ध्रुवम् ॥ ९६ ॥
ताड़ितो यमदूतेन तद्भोजी तत्र तिष्ठति।
ततस्त्रिजन्मनि भवेत् कृष्णवर्णः पशुः सति ॥ ९७ ॥
त्रिजन्मनि भवेच्छागः कृष्णसर्पस्त्रिजन्मनि।
ततश्च तालवृक्षश्च ततः शुद्धो भवेन्नरः ॥ ९८ ॥
धान्यादिशस्यं ताम्बूलं यो हरेत् सुरविप्रयोः।
आसनञ्च तथा तल्पं चूर्णकुण्डं प्रयाति सः ॥ ९९ ॥
शताब्दं तत्र निवसेत् यमदूतेन ताड़ितः।

ततो भवेन्मेषजातिः कुक्कुटश्च त्रिजन्मनि ॥ १०० ॥
ततो भवेद् मानवश्च कासव्याधियुतो भुवि ।
वंशहीनो दरिद्रश्च वाल्पायुश्च ततः शुचिः ॥ १०१ ॥
चक्रं करोति विप्राणां हृत्वा द्रव्यञ्च यो नरः ।
स वसेच्चक्रकुण्डे च शताब्दं दण्डताड़ितः ॥ १०२ ॥
ततो भवेन्मानवश्च तैलकारस्त्रिजन्मनि ।
व्याधियुक्तो भवेद्रोगी वंशहीनस्ततः शुचिः ॥ १०३ ॥
बान्धवेषु च विप्रेषु करोति वक्रतां नरः ।
प्रयाति वक्रकुण्डञ्च वसेत्तत्र युगं सति ॥ १०४ ॥
ततो भवेत् स वक्राङ्गो हीनाङ्गः सप्तजन्मसु ।
दरिद्रो वंशहीनश्च भार्य्याहीनस्ततः शुचिः ॥ १०५ ॥
शयने कूर्म्ममांसञ्च ब्राह्मणो यो हि भक्षति ।
कूर्म्मकुण्डे वसेत् सोऽपि शताब्दं कूर्म्मभक्षितः ॥१०६॥
ततो भवेत् कूर्म्मजन्म त्रिजन्मनि च शूकरः ।
त्रिजन्मनि विड़ालश्च मयूरश्च त्रिजन्मनि ॥ १०७ ॥
घृततैलादिकञ्चैव यो हरेत् सुरविप्रयोः ।
स याति ज्वालाकुण्डञ्च भस्मकुण्डञ्च पातकी ॥ १०८ ॥
तत्र स्थित्वा शताब्दञ्च स भवेत्तैलपायिका ।
सप्तजन्म मत्स्यरङ्गो मूषिकश्च ततः शुचिः ॥ १०९ ॥
सुगन्धि तैलं धात्रीञ्च गन्धद्रव्यं तथैव वा ।
भारते पुण्यवर्षे च यो हरेत् सुरविप्रयोः ॥ ११० ॥
वसेत् दुर्गन्धकुण्डे च दुर्गन्धञ्च लभेत् सदा ।
स्वलोममानवर्षञ्च ततो दुर्गन्धिका भवेत् ॥ १११ ॥
दुर्गन्धिका सप्तजन्म मृगनाभिस्त्रिजन्मनि ।

सप्तजन्म शृगालश्च ततो हि मानवो भवेत् ॥ ११२ ॥
बलेनैव छलत्वेन हिंसारूपेण वा सति ।
बली च यो हरेद्भूमिं भारते परपैतृकीम् ॥ ११३ ॥
स वसेत्तप्तशूर्मौ च भवेत्तत्र दिवानिशम् ।
तप्ततैले यथा जीवो दग्धो भ्रमति सन्ततम् ॥ ११४ ॥
भस्मसान्न भवत्येव भोगदेहो न नश्यति ।
सप्तमन्वन्तरं पापी सन्तप्तस्तत्र तिष्ठति ॥ ११५ ॥
शब्दं करोत्यनाहारो यमदूतेन ताड़ितः ।
षष्टिवर्षसहस्राणि विट्कृमिर्भारते ततः ॥ ११६ ॥
ततो भवेद्भूमिहीनो दरिद्रश्च ततः शुचिः ।
ततः स्वयोनिं संप्राप्य शुभकर्म्मा भवेत् पुनः ॥ ११७ ॥
छिनत्ति जीविनः खड्गैर्दयाहीनः सुदारुणः ।
नरघाती हन्ति नरमर्थलोभेन भारते ॥ ११८ ॥
असिपत्रे स वसेद्यावदिन्द्राश्चतुर्दश ।
तेषु चेद्ब्राह्मणान् हन्ति शतमन्वन्तरं तदा ॥ ११९ ॥
छिन्नाङ्गश्च भवेत् पापी खड्गधारेण सन्ततम् ।
अनाहारः शब्दकृच्च यमदूतेन ताड़ितः ॥ १२० ॥
मच्चालः शतजन्मानि भारते शूकरो भवेत् ।
कुक्कुरः शतजन्मानि शृगालः सप्तजन्मसु ॥ १२१ ॥
व्याघ्रश्च सप्तजन्मानि वृकश्चैव त्रिजन्मनि ।
जन्मसप्त गण्डकश्च महिषश्च त्रिजन्मनि ॥ १२२ ॥
ग्रामं वा नगरं वापि दाहनं यः करोति च ।
क्षुरधारे वसेत् सोऽपि छिन्नाङ्गस्त्रियुगं सति ॥ १२३ ॥
ततः प्रेतो भवेत् सद्यो वह्निवक्त्रो भ्रमेन्महीम् ।

सप्तजन्म मेध्यभोजी खद्योतः सप्तजन्मसु ॥ १२४ ॥
ततो भवेन्महाशूली मानवः सप्तजन्मसु ।
सप्तजन्म गलत्कुष्ठी ततः शुद्धो भवेन्नरः ॥ १२५ ॥
परकर्णे मुखं दत्त्वा परनिन्दां करोति यः ।
परदोषे महाश्लाघी देवब्राह्मणनिन्दकः ॥ १२६ ॥
सूचीमुखे स च वसेत् सूचीविद्धो युगत्रयम् ।
ततो भवेद् वृश्चिकश्च सर्पश्च सप्तजन्मसु ॥ १२७ ॥
वज्रकीटः सप्तजन्म भस्मकीटस्ततः परम् ।
ततो भवेन्मानवश्च महाव्याधिस्ततः शुचिः ॥ १२८ ॥
गृहिणाञ्च गृहं भित्वा वस्तुस्तेयं करोति यः ।
गाश्च छागांश्च मेषांश्च याति गोधामुखञ्च सः ॥१२९॥
ततो भवेत् सप्तजन्म गोजातिर्व्याधिसंयुतः ।
त्रिजन्म मेषजातिश्च छागजातिस्त्रिजन्मनि ॥ १३० ॥
ततो भवेन्मानवश्च नित्यरोगी दरिद्रकः ।
भार्य्याहीनो बन्धुहीनः सन्तापी च ततः शुचिः ॥१३१॥
सामान्यद्रव्यचौरश्च याति नक्रमुखं युगम् ।
ततो भवेन्मानवश्च महारोगी ततः शुचिः ॥ १३२ ॥
हन्ति गाश्च गजांश्चैव तुरगांश्च नरांस्तथा ।
स याति गजदंशञ्च महापापी युगत्रयम् ॥ १३३ ॥
ताड़ितो यमदूतेन गजदन्तेन सन्ततम् ।
स भवेद्गजजातिश्च तुरगश्च त्रिजन्मनि ।
गोजाति म्लेच्छजातिश्च ततः शुद्धो भवेन्नरः ॥१३४॥
जलं पिबन्तीं तृषितां गां वारयति यो नरः ।
तत्शुश्रूषाविहीनश्च गोमुखं याति मानवः ॥ १३५ ॥

नरकं गोमुखाकारं कृमितप्तोदकान्वितम्।
तत्र तिष्ठति सन्तप्तो यावन्मन्वन्तरावधि॥ १३६॥
ततो नरोऽपि गोहीनो महारोगी दरिद्रकः।
सप्तजन्मान्त्यजातिश्च ततः शुद्धो भवेन्नरः॥ १३७॥
गोहत्यां ब्रह्महत्याञ्च यः करोत्यातिदेशिकीम्।
यो हि गच्छेदगम्याञ्च सन्ध्याहीनोऽप्यदीक्षितः॥१३८॥
प्रतिग्रही च तीर्थेषु ग्रामयाजी च देवलः।
शूद्राणां सूपकारश्च प्रमत्तो वृषलीपतिः॥ १३९॥
गोहत्यां ब्रह्महत्याञ्च स्त्रीहत्याञ्च करोति यः।
मित्रहत्यां भ्रूणहत्यां महापापी च भारत॥ १४०॥
कुम्भीपाके स च वसेत् यावदिन्द्राश्चतुर्दश।
ताड़ितो यमदूतेन चूर्णमानश्च सन्ततम्॥ १४१॥
क्षणं पतति वह्नौ च क्षणं पतति कण्टके।
क्षणञ्च तप्ततैलेषु तप्ततोयेषु च क्षणम्॥ १४२॥
क्षणञ्च तप्तपाषाणे तप्तलौहे क्षणं ततः।
गृध्रकोटिसहस्राणि शतजन्मानि शूकरः॥ १४३॥
काकश्च सप्तजन्मानि सर्पश्च सप्तजन्मसु।
षष्टिवर्षसहस्राणि ततश्च विट्कृमिर्भवेत्॥ १४४॥
ततो भवेत् स वृषभो गलत्कुष्ठी दरिद्रकः।
यक्ष्माग्रस्तो वंशहीनो भार्य्याहीनस्ततः शुचिः॥१४५॥

सावित्र्युवाच।

ब्रह्महत्या च गोहत्या किंविधा वातिदेशिकी।
का वा नृणामगम्या वा को वा सन्ध्याविहीनकः॥१४६॥
अदीक्षितः पुमान् को वा को वा तीर्थे प्रतिग्रही।

द्विजः को वा ग्रामयाजी को वा विप्रश्च देवलः ॥१४७॥
शूद्राणां सूपकारः कः प्रमत्तो वृषलीपतिः।
एतेषां लक्षणं सर्वं वद वेदविदांवरः ॥ १४८ ॥

यम उवाच।

श्रीकृष्णे च तदर्चायां मृण्मय्यां प्रकृतौ तथा।
शिवे च शिवलिङ्गे वा सूर्य्ये सूर्य्यमणौ तथा ॥१४९॥
गणेशे वा तदर्चायामेवं सर्वत्र सुन्दरि।
यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत्तु सः ॥ १५० ॥
स्वगुरौ स्वेष्टदेवे वा जन्मदातरि मातरि।
करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः ॥ १५१॥
वैष्णवेष्वन्यभक्तेषु ब्राह्मणेष्वितरेषु च।
करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ॥ १५२ ॥
यो मूढ़ो विष्णुनैवेद्ये चान्यनैवेद्यके तथा।
हरेः पादोदकेष्वन्यदेवपादोदके तथा।
करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ॥ १५३ ॥
सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे।
सर्वाद्ये सर्वदेवानां सेव्ये सर्वान्तरात्मनि ॥ १५४ ॥
माययाऽनेकरूपे वाप्येक एव हि निर्गुणे।
करोत्यन्येन समतां ब्रह्महत्यां लभेत्तु सः ॥ १५५ ॥
पितृदेवार्चनां पौर्वापरां वेदविनिर्मिताम्।
यः करोति निषेधञ्च ब्रह्महत्यां लभेत्तु सः ॥ १५६ ॥
ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकांस्तथा।
पवित्राणां पवित्रञ्च ब्रह्महत्यां लभन्ति ते ॥ १५७ ॥

शिवं शिवस्वरूपञ्च कृष्णप्राणाधिकं प्रियम्।
पवित्राणां पवित्रञ्च ज्ञानानन्दं सनातनम्॥ १५८॥
प्रधानं वैष्णवानाञ्च देवानां सेव्यमीश्वरम्।
ये नार्चयन्ति निन्दन्ति ब्रह्महत्यां लभन्ति ते॥ १५९॥
ये निन्दन्ति विष्णुमायां विष्णुभक्तिप्रदां सतीम्।
सर्वशक्तिस्वरूपाञ्च प्रकृतिं सर्वमातरम्॥ १६०॥
सर्वदेवीस्वरूपाञ्च सर्वाद्यां सर्ववन्दिताम्।
सर्वकारणरूपाञ्च ब्रह्महत्यां लभन्ति ते॥ १६१॥
कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम्।
शिवरात्रिं तथा चैकादशीं वारं रवेस्तथा॥ १६२॥
पञ्चपर्वाणि पुण्यानि ये न कुर्वन्ति मानवाः।
लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः॥ १६३॥
अम्बुवाच्यां भूखननं जले शौचादिकञ्च ये।
कुर्वन्ति भारते वत्से ब्रह्महत्यां लभन्ति ते॥ १६४॥
गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम्।
अनाथान् यो न पुष्णाति ब्रह्महत्यां लभेत्तु सः॥ १६५॥
विवाहो यस्य न भवेत् न पश्यति सुतञ्च यः।
हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत्तु सः॥ १६६॥
गामाहारञ्च कुर्वन्तं पिबन्तं यो निवारयेत्।
याति गो विप्रयोर्मध्ये गोहत्याञ्च लभेत्तु सः॥ १६७॥
दण्डैर्गास्ताड़येन्मूढ़ो यो विप्रो वृषवाहकः।
दिने दिने गवां हत्यां लभते नात्र संशयः॥ १६८॥
पादं ददाति वह्नौ च गाञ्च पादेन ताड़येत्।
गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमालभेत्॥ १६९॥

या भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च ।
सूर्य्योदये च द्विर्भोजी च गोहत्यां लभेद् ध्रुवम् ॥१७०॥
अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च ब्राह्मणः ।
यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेद् ध्रुवम् ॥१७१॥
पितृंश्च पर्वकाले च तिथिकाले च देवताम् ।
न सेवते तिथिं यो हि गोहत्यां स लभेद् ध्रुवम् ॥१७२॥
स्वभर्त्तरि च कृष्णे च भेदबुद्धिं करोति या ।
कटूक्त्या ताड़येत् कान्तं सा गोहत्यां लभेद् ध्रुवम्॥१७३॥
गोमार्गखननं कृत्वा वपते शस्यमेव च ।
तड़ागे वा तदूर्द्धे वा स गोहत्यां लभेद् ध्रुवम् ॥१७४॥
प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमम् ।
अर्थलोभादथाज्ञानात् स गोहत्यां लभेद् ध्रुवम् ॥१७५॥
राजके दैवके यत्नाद्गोस्वामी गां न पालयेत् ।
दुःखं ददाति यो मूढ़ो गोहत्यां स लभेद् ध्रुवम् ॥१७६॥
प्राणिनं लङ्घयेद् यो हि देवार्चायां रतं जलम् ।
नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद् ध्रुवम् ॥ १७७ ॥
शश्वन्नास्तीति वादी यो मिथ्यावादी प्रतारकः ।
देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद् ध्रुवम् ॥ १७८ ॥
देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति ।
सम्भ्रमान्न नमेद् यो हि स गोहत्यां लभेद् ध्रुवम् ॥१७९॥
न दद्यात्याशिषं कोपात् प्रणताय च यो द्विजः ।
विद्यार्थिने च विद्याञ्च स गोहत्यां लभेद् ध्रुवम् ॥१८०॥
गोहत्या ब्रह्महत्या च कथिता चातिदेशिकी ।
यथा श्रुतं सूर्य्यवक्त्रात् किं भूयः श्रोतुमिच्छसि ॥१८१॥

सावित्र्युवाच ।

वास्तवे चातिदेशे च सम्बन्धे पापपुण्ययोः ।
न्यूनाधिके च को भेदस्तन्मां व्याख्यातुमर्हसि ।१८२॥

यम उवाच ।

कुत्रापि वास्तवः श्रेष्ठो न्यूनातिदेशिकः सति ।
कुत्रातिदेशिकः श्रेष्ठो वास्तवो न्यून एव च । १८३ ॥
कुत्र वा समता साध्वि तयोर्वेदप्रमाणतः ।
करोति तत्र नास्थां यो गुरुहत्यां लभेत्तु सः ॥ १८४ ॥
पुरापरिचिते विप्रे विद्यामन्त्रप्रदातरि ।
गुरौ पितृत्वमारोपो वास्तवात् श्रेष्ठ उच्यते ॥ १८५ ॥
पितुः शतगुणे माता मातुः शतगुणे तथा ।
विद्यामन्त्रप्रदाता च गुरुः पूज्य श्रुतिस्मृतः ॥ १८६ ॥
गुरुतो गुरुपत्नी च गौरवेण गरीयसी ।
यथेष्टं देवपत्नी च पूज्या चाभीष्टदेवता ॥ १८७ ॥
विप्रः शिवसमो यश्च विष्णुतुल्यपराक्रमः ।
राजातिदेशिकात् श्रेष्ठो वास्तवो गुणलक्षतः ॥१८८॥
सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः ।
ग्रहणे सूर्य्यशशिनोश्चात्रैव समता तयोः ॥ १८९ ॥
आतिदेशिकहत्याया वास्तवश्च चतुर्गुणः ।
सम्मतः सर्वदेवानामित्याह कमलोद्भवः ॥ १९० ॥
आतिदेशिकहत्याया भेदश्च कथितः सति ।
या या गम्या नृणामेव निबोध कथयामि ते ॥ १९१ ॥
स्वस्त्रीगम्या च सर्वेषामिति वेदे निरूपिता ।
अगम्या च तदन्या या इति वेदविदो विदुः ॥ १९२ ॥

सामान्यं कथितं सर्वं विशेषं शृणु सुन्दरि ।
अत्यगम्याश्च या याश्च निबोध कथयामि ते ॥ १९३ ॥
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी ।
अत्यगम्या च निन्द्या च लोके वेदे पतिव्रते ॥ १९४ ॥
शूद्रश्चेद् ब्राह्मणीं गच्छेद् ब्रह्महत्याशतं लभेत् ।
तत्समं ब्राह्मणी चापि कुम्भीपाकं व्रजेद् ध्रुवम् ॥१९५॥
यदि शूद्रां व्रजेद्विप्रो वृषलीपतिरेव सः ।
स भ्रष्टो विप्रजातेश्च चण्डालात् सोऽधमः स्मृतः ॥१९६
विष्ठासमश्च तत् पिण्डो मूत्रतुल्यश्च तर्पणम् ।
तत् पितॄणां सुराणाञ्च पूजने तत्समं सति ॥ १९७ ॥
कोटिजन्मार्जितं पुण्यं सन्ध्यार्चातपसार्जितम् ।
द्विजस्य वृषलीभोगान्नश्यत्येव न संशयः ॥ १९८ ॥
ब्राह्मणश्च सुरापीति विड्भोजी वृषलीपतिः ।
हरिवासरभोजी च कुम्भीपाकं व्रजेद् ध्रुवम् ॥ १९९ ॥
गुरुपत्नीं राजपत्नीं सपत्नीमातरं प्रसूम् ।
सुतां पुत्त्रवधुं श्वश्रूं सगर्भां भगिनीं सति ॥ २०० ॥
सोदरभ्रातृजायाञ्च मातुलानीं पितृप्रसूम् ।
मातुः प्रसूं तत् स्वसारं भगिनीं भ्रातृकन्यकाम् ॥२०
शिष्याञ्च शिष्यपत्नीञ्च भागिनेयस्य कामिनीम् ।
भ्रातुः पुत्त्रप्रियाञ्चैवात्यगम्यामाह पद्मजः ॥ २०२ ॥
एतास्वेकामनेकां वा यो व्रजेन्मानवोऽधमः ।
स मातृगामी वेदेषु ब्रह्महत्या शतं लभेत् ॥ २०३ ॥
अकर्म्मार्होऽपि सोऽस्पृश्यो लोके वेदेऽतिनिन्दितः ।
स याति कुम्भीपाकञ्च महापापी सुदुस्तरम् ॥२०४॥

करोत्यशुद्धां सन्ध्याञ्च सन्ध्यां वा न करोति यः ।
त्रिसन्ध्यां वर्जयेद्यो वा सन्ध्याहीनश्च स द्विजः ॥२०५॥
वैष्णवञ्च तथा शैवं शाक्तं सौरञ्च गाणपम् ।
योऽहङ्कारान्न गृह्णाति मन्त्रं सोऽदीक्षितः स्मृतः ॥२०६॥
प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी गङ्गागर्भान्तरे परे ॥ २०७ ॥
तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे ।
वाराणस्यां वदर्य्याञ्च गङ्गासागरसङ्गमे ॥ २०८ ॥
पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले ।
हरिद्वारे च केदारे सोमे वदरपावने ॥ २०९ ॥
सरस्वती नदीतीरे पुण्ये वृन्दावने वने ।
गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये ॥२१०॥
एष्वन्यत्र यो दानं प्रतिगृह्णाति कामतः ।
स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च ॥२११॥
शूद्रातिरिक्तयाजी यो ग्रामयाजी च कीर्त्तितः ।
तथा देवोपजीवी च देवलः परिकीर्त्तितः ॥ २१२ ॥
शूद्रपाकोपजीवी यः सूपकार इति स्मृतः ।
सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ॥२१३॥
उक्तं पूर्वं प्रकरणे सर्वं वृषलीपतेः ।
एते महापातकिनः कुम्भीपाकं प्रयान्ति ते ॥२१४॥
कुण्डान्यन्यानि ते यान्ति निबोध कथयामि ते ॥२१५॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे प्रकृति-
खण्डे सावित्र्युपाख्याने यमसावित्रीसंवादे पापी
नरकनिरूपणं नाम त्रिंशत्तमोऽध्यायः ।

# एकविंशोऽध्यायः।

———•———

यम उवाच।

हरिसेवां विना साध्वि न लभेत् कर्म्म खण्डनम्।
शुभकर्म्म स्वर्गबीजं नरकञ्च कुकर्म्मणाम्॥ १॥
पुंश्चल्यन्नञ्च यो भुङ्क्ते वेश्यान्नञ्च पतिव्रते।
तां व्रजेत्तु द्विजो यो हि कालसूत्रं प्रयाति सः॥२॥
शतवर्षं कालसूत्रे स्थित्वा शूद्रो भवेत् ध्रुवम्।
तत्र जन्मनि रोगी च ततः शुद्धो भवेत् द्विजः॥ ३॥
पतिव्रताचैकपत्नी द्वितीये कुलटा स्मृता।
तृतीये धर्षिणी ज्ञेया चतुर्थे पुंश्चली स्मृता॥ ४॥
वेश्या च पञ्चमे षष्ठे युग्मी च सप्तमेऽष्टमे।
अत ऊर्द्ध्वं महावेश्या साऽस्पृश्या सर्वजातिषु॥ ५॥
यो द्विजः कुलटां गच्छेद्धर्षिणीं पुंश्चलीमपि।
युग्मीं वेश्यां महावेश्यामवटोदं प्रयाति सः॥ ६॥
शताब्दं कुलटा गामी धृष्टागामी चतुर्गुणम्।
षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम्॥७॥
युग्मीगामी दशगुणं वसेत्तत्र न संशयः।
महावेश्यागामुकश्च ततः शतगुणं वसेत्॥ ८॥
तदा हि सर्वगामीचेत्येवमाह पितामहः।
तत्रैव यातनां भुङ्क्ते यमदूतेन ताड़ितः॥ ९॥
तित्तिरः कुलटागामी धृष्टागामी च वायसः।

कोकिलः पुंश्चलीगामी वेश्यागामी वृकस्तथा ॥ १० ॥
युग्मीगामी शूकरश्च सप्तजन्मसु भारते ।
महावेश्यागामुकश्च श्मशाने शाल्मलिस्तरुः ॥ ११ ॥
यो भुङ्क्ते ज्ञानहीनश्च ग्रहणे चन्द्रसूर्य्ययोः ।
अरुन्तुदं स यात्येव चन्द्रमानाब्दमेव च ॥ १२ ॥
ततो भवेन्मानवश्च उदरव्याधिसंयुतः ।
गुल्मयुक्तश्च काणश्च दन्तहीनस्ततः शुचिः ॥ १३ ॥
वाक्प्रदत्तां हि कन्याञ्च यश्चान्यस्मै ददाति च ।
स वसेत् पांशुभोजे च तद्भोजी च शताब्दकम् ॥ १४ ॥
दत्तापहारी यः साध्वि पाशवेष्टं शताब्दकम् ।
निवसेत् शरशय्यायां यमदूतेन ताड़ितः ॥ १५ ॥
न पूजयेद्यो हि भक्त्या शिवलिङ्गञ्च पार्थिवम् ।
स याति शूलिनः कोपात् शूलप्रोतं सुदारुणम् ॥१६॥
स्थित्वा शताब्दं तत्रैव श्वापदः सप्तजन्मसु ।
ततो भवेत् देवलश्च सप्तजन्म ततः शुचिः ॥ १७ ॥
करोति दण्डं यो विप्रं यद्भयात् कम्पते द्विजः ।
प्रकम्पने वसेत् सोऽपि विप्रलोमाब्दमेव च ॥ १८ ॥
प्रकोपवदना कोपात् स्वामिनं या च पश्यति ।
कटूक्तिं तञ्च वदति याति चोल्कामुखञ्च सा ॥१९॥
उल्कां ददाति वक्त्रे च सन्ततं यमकिङ्करः ।
दण्डेन ताड़येन् मूर्द्ध्नि तल्लोमाब्दप्रमाणकम् ॥२०॥
ततो भवेन्मानवी च विधवा सप्तजन्मसु ।
भुक्त्वा दुःखञ्च वैधव्यं व्याधियुक्ता ततः शुचिः ॥२१॥
या ब्राह्मणी शूद्रभोग्या सान्धकूपं प्रयाति च ।

तप्तशौचोदके ध्वान्ते तदाहारा दिवानिशम् ॥२२॥
निवसेदतिसन्तप्ता यमदूतेन ताड़िता ।
शौचोदके निमग्ना च यावदिन्द्राश्चतुर्दश ॥ २३ ॥
काकीजन्म सहस्राणि शतजन्मानि शूकरी ।
कुक्कुरी शतजन्मानि शृगाली सप्तजन्मसु ॥ २४ ॥
पारावती सप्तजन्म वानरी सप्तजन्मसु ।
ततो भवेत् सा चण्डाली सर्वभोग्या च भारते ॥२५॥
ततो भवेच्च रजकी यक्ष्मग्रस्ता च पुंश्चली ।
ततः कुष्ठयुता तैलकारी शुद्धा भवेत्ततः ॥ २६ ॥
वेश्या वसेद्वेधने च युग्मी च दण्डताड़ने ।
जालबन्धे महावेश्या कुलटा देहचूर्णके ॥ २७ ॥
स्वैरिणी दलने चैव धृष्टा च शोषणे तथा ।
निवसेद्यातनायुक्ता यमदूतेन ताड़िता ॥ २८ ॥
विण्मूत्रभक्षणं तत्र यावन्मन्वन्तरं सति ।
ततो भवेत् विट्कृमिश्च वर्षलक्षं ततः शुचिः ॥ २९ ॥
ब्राह्मणो ब्राह्मणीं गच्छेत् क्षत्रियामपि क्षत्रियः ।
वैश्यो वैश्याञ्च शूद्राञ्च शूद्रो वापि व्रजेद्यदि ॥ ३० ॥
सवर्णं परदारी च कषं याति तया सह ।
भुक्त्वा कषायतप्तोदं निवसेत् द्वादशाब्दकम् ॥ ३१ ॥
ततो विप्रो भवेच्छुद्ध एवञ्च क्षत्रियादयः ।
योषितश्चापि शुध्यन्तीत्येवमाह पितामहः ॥ ३२ ॥
क्षत्रियो ब्राह्मणीं गच्छेत् वैश्यो वापि पतिव्रते ।
मातृगामी भवेत् सोऽपि सूर्पञ्च नरकं व्रजेत् ॥ ३३ ॥
सूर्पाकारैश्च कृमिभिर्ब्राह्मण्या सह भक्षितः ।

प्रतप्तमूत्रभोजी च यमदूतेन ताड़ितः ॥ ३४ ॥
तत्रैव यातनां भुङ्क्ते यावदिन्द्राश्चतुर्दश ।
जन्मसप्त वराहश्च छागलश्च ततः शुचिः ॥ ३५ ॥
करे धृत्वा च तुलसीं प्रतिज्ञां यो न पालयेत् ।
मिथ्या वा शपथं कुर्य्यात् स च ज्वालामुखं व्रजेत् ॥३६॥
गङ्गातोयं करे धृत्वा प्रतिज्ञां यो न पालयेत् ।
शिलां वा देवप्रतिमां स च ज्वालामुखं व्रजेत् ॥३७॥
दत्त्वा च दक्षिणं हस्तं प्रतिज्ञां यो न पालयेत् ।
स्थित्वा देवगृहे वापि स च ज्वालामुखं व्रजेत् ॥ ३८ ॥
स्पृष्ट्वा च ब्राह्मणं गाञ्च वह्निं विष्णुसमं सति ।
न पालयेत् प्रतिज्ञाञ्च स च ज्वालामुखं व्रजेत् ॥३९॥
मित्रद्रोही कृतघ्नश्च यो हि विश्वासघातकः ।
मिथ्यासाक्ष्यप्रदश्चैव स च ज्वालामुखं व्रजेत् ॥ ४० ॥
स्थिते तत्र वसन्त्येव यावदिन्द्राश्चतुर्दश ।
यथाङ्गारप्रदग्धाश्च यमदूतैश्च ताड़ितः ॥ ४१ ॥
चण्डालस्तुलसीस्पर्शी सप्तजन्म ततः शुचिः ।
म्लेच्छो गङ्गाजलस्पर्शी पञ्चजन्म ततः शुचिः ॥ ४२ ॥
शिलास्पर्शी विट्कृमिश्च सप्तजन्मसु सुन्दरि ।
अर्च्चास्पर्शी व्रणकृमिर्जन्मसप्त ततः शुचिः ॥ ४३ ॥
दक्षहस्तप्रदाता च सर्पश्च सप्तजन्मसु ।
ततो भवेद्धस्तहीनो मानवश्च ततः शुचिः ॥ ४४ ॥
मिथ्यावादी देवगृहे देवलः सप्तजन्मसु ।
विप्रादिस्पर्शकारी च सोऽग्रदानी भवेद् ध्रुवम् ॥४५॥
ततो भवन्ति मूकास्ते बधिराश्च त्रिजन्मनि ।

भार्य्याहीना वंशहीना बुद्धिहीनास्ततः शुचिः ॥४६॥
मित्रद्रोही च नकुलः कृतघ्नश्चापि गण्डकः ।
विश्वासघाती व्याघ्रश्च सप्तजन्मसु भारते ॥ ४७ ॥
मिथ्यासाक्ष्यप्रदश्चैव भल्लूकः सप्तजन्मसु ।
पूर्वान् सप्त परान् सप्त पुरुषान् हन्ति चात्मनः ॥४८॥
नित्यक्रियाविहीनश्च जड़त्वेन युतो द्विजः ।
यस्यानास्था वेदवाक्ये मन्दं हसति सन्ततम् ॥ ४९ ॥
व्रतोपवासहीनश्च सद्वाक्यपरनिन्दकः ।
जिह्मो जिह्मो वसेत् सोऽपि शतान्दञ्च हिमोदके ॥५०॥
जलजन्तुर्भवेत् सोऽपि शतजन्म क्रमेण च ।
ततो नानाप्रकारश्च मत्स्यजातिस्ततः शुचिः ॥५१॥
यः करोत्यपहारञ्च देवब्राह्मणयोर्धनम् ।
पातयित्वा स्वपुरुषान् दशपूर्वान् दशापरान् ॥५२॥
स्वयं याति च धूमान्धं धूमध्वान्तसमन्वितम् ।
धूमक्लिष्टो धूमभोजी वसेत्तत्र चतुर्युगम् ॥ ५३ ॥
ततो मूषिकजातिश्च शतजन्मानि भारते ।
ततो नानाविधाः पक्षिजातयः कृमिजातयः ॥ ५४ ॥
ततो नानाविधा वृक्षजातयश्च ततो नरः ।
भार्य्याहीनो वंशहीनो शबरो व्याधिसंयुतः ॥ ५५ ॥
ततो भवेत् स्वर्णकारः सुवर्णस्य वणिक् तथा ।
ततो यवनसेवी च ब्राह्मणो गणकस्ततः ॥ ५६ ॥
विप्रो देवलोपजीवी वैद्यजीवी चिकित्सकः ।
लाक्षालोहादिव्यापारी रसादिविक्रयी च यः ॥५७॥
स याति नागवेष्टञ्च नागैर्वेष्टित एव च ।

वसेत् स्वलोममानाब्दं तत्रैव नागदंशितः ॥ ५८ ॥
ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु ।
गोपश्च कर्म्मकारश्च शङ्खकारस्ततः शुचिः ॥ ५९ ॥
प्रसिद्धानि च कुण्डानि कथितानि पतिव्रते ।
अन्यानि चाप्रसिद्धानि क्षुद्राणि तत्र सन्ति वै ॥६०॥
सन्ति पातकिनस्तेषु स्वकर्म्मफलभोगिनः ।
भ्रमन्ति तावत् संसारे न च ते स्वर्गभागिनः ॥६१॥
यान्त्ययान्ति च स्वर्गञ्च मर्त्यञ्च न हि निर्वृताः ।
निर्वृतिं न हि लिप्सन्ति कृष्णसेवां विना नराः ।
स्वधर्म्मनिरताश्चापि स्वधर्म्मविरतास्तथा ॥६२॥
गच्छन्तो मर्त्यलोकञ्च दुर्द्धर्षा यमकिङ्कराः ।
भीताः कृष्णोपासकाश्च वैनतेयादिवोरगाः ॥ ६३ ॥
स्वदूतं पाशहस्तञ्च गच्छन्तं तं वदाम्यहम् ।
यास्यसीति च सर्वत्र हरिभक्ताश्रमं विना ॥ ६४ ॥
कृष्णमन्त्रोपासकानां नामानि च निकृन्तनम् ।
करोति नखराच्छन्त्या चित्रगुप्तश्च भीतवत् ॥ ६५ ॥
मधुपर्कादिकं ब्रह्मा तेषाञ्च कुरुते पुनः ॥ ६६ ॥
विलङ्घ्य ब्रह्मलोकञ्च गोलोकं गच्छतां सताम् ।
दुरितानि च नश्यन्ति तेषां संस्पर्शमात्रतः ।
यथा सुप्रज्वलद्वह्नौ काष्ठानि च तृणानि च ॥ ६७ ॥
प्राप्नोति मोहः संमोहं तांश्च दृष्ट्वा च भीतवत् ।
कामश्च कामिनं याति लोभक्रोधौ ततः गति ।
मृत्युः पलायते रोगो जरा शोको भयस्तथा ॥ ६८ ॥
कालः शुभाशुभं कर्म्म हर्षो भोगस्तथैव च ॥ ७९ ॥

ये ये न यान्ति यामीञ्च कथितास्ते मया सति ।
शृणु देहविवरणं कथयामि यथागमम् ॥ ७० ॥
पृथिवीवायुराकाशं तेजस्तोयमिति स्फुटम् ।
देहिनां देहवीजञ्च स्रष्टुः सृष्टिविधौ परम् ॥ ७१ ॥
पृथिव्यादि पञ्चभूतैर्यो देहो निर्म्मितो भवेत् ।
सः कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह ॥ ७२ ॥
वृद्धाङ्गुष्ठप्रमाणेन यो जीवः पुरुषाकृतिः ।
बिभर्त्ति सूक्ष्मदेहञ्च तद्रूपं भोगहेतवे ॥ ७३ ॥
स देहो न भवेद्भस्म ज्वलदग्नौ यमालये ।
जले न नष्टो देही वा प्रहारे सुचिरे कृते ॥ ७४ ॥
न शस्त्रे च न चास्त्रे च सुतीक्ष्णे कण्टके तथा ।
तप्तद्रवे तप्तलौहे तप्तपाषाण एव च ॥ ७५ ॥
प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्द्ध्व पतनेऽपि च ।
कथितं देवि वृत्तान्तं कारणञ्च यथागमम् ॥ ७६ ॥
कुण्डानां लक्षणं सर्वं निबोध कथयामि ते ।
अधुना देवि कल्याणि किं भूयः श्रोतुमिच्छसि ॥ ७७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे सावित्र्युपाख्याने पापिकुण्ड-
निर्णयो नाम एकत्रिंशत्तमोऽध्यायः ।

---

# द्वात्रिंशोऽध्यायः ।

---

सावित्र्युवाच ।

धर्मराज महाभाग वेदवेदाङ्गपारग ।
नानापुराणेतिहास-पञ्चरात्र-प्रदर्शक ॥ १ ॥
सर्वेषु सारभूतं यत् सर्वेष्टं सर्वसम्मतम् ।
कर्मच्छेद बीजरूपं प्रशंस्यं सुखदं नृणाम् ॥ २ ॥
यशः प्रदं धर्मदञ्च सर्वमङ्गल मङ्गलम् ।
येन यामीं न ते यान्ति यातनां भवदुःखदाम् ॥ ३ ॥
कुण्डानि च न पश्यन्ति तत्र नैव पतन्ति च ।
न भवेद्येन जन्मादि तत् कर्म वद सुव्रत ॥ ४ ॥
किमाकाराणि कुण्डानि कति तेषां मितानि च ।
केन रूपेण तत्रैव तिष्ठन्ति पापिनः सदा ॥ ५ ॥
स्वदेहे भस्मसाद्भूते यान्ति लोकान्तरं नराः ।
केन देहेन वा भोगं भुञ्जते वा शुभाशुभम् ॥ ६ ॥
सुचिरं क्लेशभोगेन कथं देहो न नश्यति ।
देहो वा किं विधो ब्रह्मन् तन्मे व्याख्यातुमर्हसि ॥ ७ ॥
सावित्रीवचनं श्रुत्वा धर्मराजो हरिं स्मरन् ।
कथां कथयितुमारेभे गुरुं नत्वा च नारद ॥ ८ ॥

यम उवाच ।

वत्से चतुर्षु वेदेषु धर्मेषु संहितासु च ।
पुराणेष्वितिहासेषु पञ्चरात्रादिकेषु च ॥ ९ ॥

अन्येषु सर्वशास्त्रेषु वेदाङ्गेषु च सुव्रते ।
सर्वेष्टसारभूतञ्च मङ्गलं कृष्णचिन्तनम् ॥ १० ॥
जन्ममृत्युजरारोगशोकसन्तापतारणम् ।
सर्वमङ्गलरूपञ्च परमानन्दकारणम् ॥ ११ ॥
कारणं सर्वसिद्धीनां नरकार्णवतारणम् ।
भक्तिवृक्षाङ्कुरकरं कर्मवृक्षनिकृन्तनम् ॥ १२ ॥
गोलोकमार्गसोपानमविनाशि पदप्रदम् ।
सालोक्यसार्ष्टिसारूप्यसामीप्यादिप्रदं शुभे ॥ १३ ॥
कुण्डानि यमदूतञ्च यमञ्च यमकिङ्करान् ।
न हि पश्यन्ति स्वप्नेन श्रीकृष्णकिङ्कराः सति ॥ १४ ॥
हरिव्रतं ये कुर्वन्ति गृहिणः कर्मभोगिनः ।
ये स्नान्ति हरितीर्थे च नाश्नन्ति हरिवासरे ॥ १५ ॥
प्रणमन्ति हरिं नित्यं हर्य्यर्चां पूजयन्ति च ।
न यान्ति ते च घोराञ्च मम संयमनीं पुरीम् ॥ १६ ॥
त्रिसन्ध्यपूता विप्राश्च शुद्धाचारसमन्विताः ।
स्वधर्मनिरताः शान्ता न यान्ति यममन्दिरम् ॥ १७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे यमसावित्रीसंवादे
द्वाविंशत्तमोऽध्यायः ।

# त्रयस्त्रिंशोऽध्यायः ।

—o—

यम उवाच ।

पूर्णेन्दुमण्डलाकारं सर्वकुण्डञ्च वर्त्तुलम् ।
अतीवनिम्नं पाषाणभेदैश्च खचितं सति ॥ १ ॥
न नश्वरञ्चाप्रलयं निर्मितञ्चेश्वरेच्छया ।
क्लेशदं पातकिनाञ्च नानारूपं तदाश्रयम् ॥ २ ॥
ज्वलदङ्गाररूपञ्च शतहस्तशिखान्वितम् ।
परितः क्रोशमानञ्च वह्निकुण्डं प्रकीर्त्तितम् ॥ ३ ॥
महच्छब्दं प्रकुर्वद्भिः पापिभिः परिपूरितम् ।
रक्षितं मम दूतैश्च ताड़ितैश्चापि सन्ततम् ॥ ४ ॥
प्रतप्तोदकपूर्णञ्च हिंस्रजन्तुसमन्वितम् ।
महाघोरान्धकारञ्च पापिसङ्घेन सङ्कुलम् ॥ ५ ॥
प्रकुर्वता काकुशब्दं प्रहारैर्घूर्णितेन च ।
क्रोशार्द्धमानं मद्दूतैस्ताड़ितेन च रक्षितम् ॥ ६ ॥
तप्तक्षारोदकैः पूर्णं नक्रैश्च परिवेष्टितम् ।
सङ्कुलं पापिभिश्चैव क्रोशमानं भयानकम् ॥ ७ ॥
त्राहीति शब्दं कुर्वद्भिर्मद्दूतैश्च ताड़ितैः ।
प्रचलद्भिरनाहारैः शुष्ककण्ठोष्ठतालुकैः ॥ ८ ॥
विण्मूत्रैरेव पूर्णञ्च क्रोशमानञ्च कुत्सितम् ।
अतिदुर्गन्धिसंयुक्तं व्याप्तं पापिभिरेव च ॥ ९ ॥
ताड़ितैर्ममदूतैश्च अनाहारैरुपद्रवैः ।

रचेभिः शब्दं कुर्वद्भिस्तत्कीटैश्च भक्षितम् ॥ १० ॥
तप्तमूत्रद्रवैः पूर्णं मूत्रकीटैश्च संकुलम् ।
युक्तं महापापिभिश्च तत्कीटैर्दंशितं सदा ॥ ११ ॥
गव्यूतिमानं ध्वान्ताक्तं शब्दकृद्भिश्च सन्ततम् ।
मद्दूतैस्ताड़ितैर्घोरैः शुष्ककण्ठौष्ठतालुकैः ॥ १२ ॥
श्लेषपूर्णं क्रोशमितं वेष्टितं चेष्टितैः सदा ।
तद्भोजिभिः पापिभिश्च तत्कीटैर्भक्षितैः सदा ॥ १३ ॥
क्रोशार्द्धं गरपूर्णञ्च गरभोजिभिरन्वितम् ।
गरकीटैर्भक्षितैश्च पापिभिः पूर्णमेव च ॥ १४ ॥
ताड़ितैर्मम दूतैश्च शब्दकृद्भिश्च कम्पितैः ।
सर्पाकारैर्वज्रदंष्ट्रैः शुष्ककण्ठैः सुदारुणैः ॥ १५ ॥
नेत्रयोर्मलपूर्णञ्च क्रोशार्द्धं कीटसंयुतम् ।
पापिभिः संकुलं शश्वत् रवद्भिः कीटभक्षितैः ॥ १६ ॥
वसारसेन पूर्णञ्च क्रोशतुर्य्यं सुदुःसहम् ।
तद्भोजिभिः पातकिभिर्व्याप्तं दूतैश्च ताड़ितैः ॥ १७ ॥
शुक्रपूर्णं क्रोशतुर्य्यं शुक्रकीटैश्च भक्षितैः ।
क्रन्दद्भिः पापिभिः शश्वत्संकुलं व्याकुलैर्भिया ॥ १८ ॥
दुर्गन्धिरक्तपूर्णञ्च वापीमानं गभीरकम् ।
तद्भोजिभिः पापिभिश्च संकुलं कीटभक्षितैः ॥ १९ ॥
पूर्णनेत्राश्रुभिर्नृणां वाप्यर्द्धं पापिभिर्युतम् ।
ताड़ितैर्ममदूतेन तद्भक्ष्यैः कीटभक्षितैः ॥ २० ॥
नृणां गात्रमलैः पूर्णं तद्भक्ष्यैः पापिभिर्युतम् ।
ताड़ितैर्ममदूतैश्च व्यग्रैश्च कीटभक्षितैः ॥ २१ ॥
कर्णविट्परिपूर्णञ्च तद्भक्ष्यैः पापिभिर्युतम् ।

वापीतुल्यप्रमाणञ्च रुदद्भिः कीटभक्षितैः ॥ २२ ॥
मज्जापूर्णं नराणाञ्च महादुर्गन्धिसंयुतम्।
महापातकिभिर्युक्तं वापीतुल्यप्रमाणकम् ॥ २३ ॥
परिपूर्णं छिन्नमांसैर्मम दूतैश्च ताड़ितैः।
पापिभिः सङ्कुलञ्चैव वापीमानं भयानकम् ॥ २४ ॥
कन्याविक्रयिभिश्चैव तद्भक्ष्यैः कीटभक्षितैः।
त्राहीति शब्दं कुर्वद्भिस्त्रासितैश्च भयानकैः ॥ २५ ॥
वापीतुल्यप्रमाणञ्च नखादिकचतुष्टयम्।
पापिभिः संकुलं शश्वन्मद्दूतैश्च ताड़ितैः ॥ २६ ॥
प्रतप्तताम्रकुण्डञ्च ताम्रपर्य्युन्मुखान्वितम्।
ताम्राणां प्रतिमालक्षैः प्रतप्तैराहृतं सदा ॥ २७ ॥
प्रत्येकं प्रतिमाश्लिष्टैः रुदद्भिः पापिभिर्युतम्।
गव्यूतिमानं विस्तीर्णं मम दूतैश्च ताड़ितैः ॥ २८ ॥
प्रतप्तलौहधारञ्च ज्वलदङ्गारसंयुतम्।
लौहानां प्रतिमालक्षैः प्रतप्तैराहृतं सदा ॥ २९ ॥
प्रत्येकं सर्वाश्लिष्टैश्च शश्वत् विचलितैर्भिया।
रक्षरक्षेतिशब्दञ्च कुर्वद्भिर्दूत ताड़ितैः ॥ ३० ॥
महापातकिभिर्युक्तं द्विगव्यूति प्रमाणकम्।
भयानकं ध्वान्तयुक्तं लौहकुण्डं प्रकीर्त्तितम् ॥ ३१ ॥
चर्मकुण्डं तप्तसुराकुण्डं वाप्यर्द्धमेव च।
तद्भोजिभिः पापिभिश्च व्याप्तं मद्दूतताड़ितैः ॥ ३२ ॥
अधः शाल्मलिवृक्षस्य तीक्ष्णकण्टक कुण्डकम्।
लक्षपौरुषमानञ्च क्रोशमानञ्च दुःखदम् ॥ ३३ ॥
धनुर्मानैः कण्टकैश्च सुतीक्ष्णैः परिवेष्टितम् ॥ ३४ ॥

प्रत्येकं कण्टकैर्विद्धं महापातकिभिर्युतम् ।
वृक्षाग्रान्निपतद्भिश्च यमदूतैश्च ताड़ितैः ॥ ३५ ॥
जलं देहीति शब्दञ्च कुर्वद्भिः शुष्कतालुकैः ।
महाभयातिव्यग्रैश्च दण्डेन भग्नमस्तकैः ।
प्रचलद्भिर्यथा तप्ततैले जीविभिरेव च ॥ ३६ ॥
विषौघैस्तच्चकादीनां पूर्णञ्च क्रोशमानकम् ।
तद्भक्ष्यैः पापिभिर्युक्तं यम दूतैश्च ताड़ितैः ॥ ३७ ॥
प्रतप्ततैलपूर्णञ्च कीटादि परिवर्जितम् ।
तद्भक्ष्यैः पापिभिर्युक्तं स्निग्धगात्रैश्च वेष्टितैः ॥ ३८ ॥
काकुशब्दं प्रकुर्वद्भिश्चलद्भिर्दूततािड़तैः ।
महापातकिभिर्युक्तं द्विगव्यूति प्रमाणकम् ॥ ३९ ॥
शस्त्रकुण्डं ध्वान्तयुक्तं क्रोशमानं भयानकम् ।
शूलाकारैः सूतीक्ष्णाग्रैर्लौहशस्त्रैश्च वेष्टितम् ॥ ४० ॥
शस्तशस्त्रस्वरूपञ्च क्रोशतुर्य्यप्रमाणकम् ।
पातकिभिर्वेष्टितञ्च कुन्तविद्धैश्च वेष्टितम् ॥ ४१ ॥
ताड़ितैर्यमदूतैश्च शुष्ककण्ठौष्ठतालुकैः ।
कीटैः सङ्कुलमानैश्च सर्पमानैर्भयङ्करैः ॥ ४२ ॥
तीक्ष्णदन्तैश्च विकृतैर्व्याप्तं ध्वान्तयुतं सति ।
महापातकिभिर्युक्तं भीतैश्च कीटभक्षितैः ।
रुदद्भिः क्रोशमानञ्च यमदूतेन ताड़ितैः ॥ ४३ ॥
अतिदुर्गन्धि संयुक्तं क्रोशार्द्धं पूयसंयुतम् ।
तद्भक्ष्यैः पापिभिर्युक्तं यम दूतेन ताड़ितैः ॥ ४४ ॥
द्विगव्यूति प्रमाणञ्च हिमतोय प्रपूरितम् ।
तालहच प्रमाणैश्च सर्पकोटिभिरावृतम् ॥ ४५ ॥

सर्पवेष्टितगात्रैश्च पापिभिः सर्पभक्षितैः ।
सङ्कुलं शब्दकृद्भिश्च मम दूतैश्च ताड़ितैः ॥ ४६ ॥
कुण्डत्रयं मशादीनां पूर्णञ्च मशकादिभिः ।
सर्वं क्रोशार्द्धमानञ्च महापातकिभिर्युतम् ॥ ४७ ॥
हस्तपादादिभिर्बद्धैः क्षतैः क्षतजलोहितैः ।
हाहेति शब्दं कुर्वद्भिः प्रचलद्भिश्च सन्ततम् ॥ ४८ ॥
वज्रवृश्चिकयोः कुण्डं ताभ्याञ्च परिपूरितम् ।
वाप्यर्द्धं पापिभिर्युक्तं वज्रवृश्चिकदंशितैः ॥ ४९ ॥
कुण्डत्रयं शरादीनां तैरेव परिपूरितम् ।
तैर्विद्धैः पापिभिर्युक्तं वाप्यर्द्धं रक्तलोहितैः ॥ ५० ॥
तप्तपङ्कोदकैः पूर्णं सध्वान्तं गोलकुण्डकम् ।
कीटैः सङ्कुलमानैश्च भक्षितैः पापिभिर्युतम् ॥ ५१ ॥
वाप्यर्द्धं परिपूर्णञ्च जलस्थैः नक्रकोटिभिः ।
दारुणैर्विकृताकारैर्भक्षितैः पापिभिर्युतम् ॥ ५२ ॥
विण्मूत्रश्लेष्मभक्ष्यैश्च संयुक्तं शतकोटिभिः ॥ ५३ ॥
काकैश्च विकृताकारैर्धनुर्लेचञ्च पापिभिः ॥ ५४ ॥
सञ्चालवाजयोः कुण्डं ताभ्याञ्च परिपूरितम् ।
भक्षितैः पापिभिर्युक्तं शब्दकृद्भिश्च सन्ततम् ॥ ५५ ॥
धनुःशतं वज्रयुतं पापिभिः सङ्कुलं सदा ।
शब्दकृद्भिर्वज्रदग्धैरत्यर्थान्तमयं सदा ॥ ५६ ॥
वापीद्विगुणमानञ्च तप्तप्रस्तरनिर्मितम् ।
ज्वलदङ्गारसदृशं चलद्भिः पापिभिर्युतम् ॥ ५७ ॥
क्षुरधारोपमैस्तीक्ष्णैः पाषाणैर्निर्मितं परम् ।
महापातकिभिर्युक्तं क्षतं क्षतजलोहितैः ॥ ५८ ॥

दुर्गन्धि लालपूर्णञ्च तद्भक्ष्यैः पापिभिर्युतम् ।
क्षोभमानं गभीरञ्च मम दूतैश्च ताड़ितैः ॥ ५९ ॥
तप्ततोयाश्मनाकारैः परिपूर्णं धनुःशतम् ।
चलद्भिः पापिभिर्युक्तं मम दूतेन ताड़ितैः ॥ ६० ॥
पूर्णं चूर्णद्रवैः क्षोभमानं पापिभिरन्वितम् ।
तद्भोजिभिः प्रदग्धैश्च मम दूतैश्च ताड़ितैः ।
कुण्डं कुलालचक्राभं घूर्णमानञ्च सन्ततम् ॥ ६१ ॥
सुतीक्ष्णषोड़शारञ्च घूर्णितैः पापिभिर्युतम् ।
अतीव वक्रं निम्नञ्च द्विगव्यूतिप्रमाणकम् ॥ ६२ ॥
कन्दराकारनिर्माणं तप्तोदकसमन्वितम् ।
महापातकिभिर्युक्तं भक्षितैर्जलजन्तुभिः ॥ ६३ ॥
प्रचलद्भिः शब्दकृद्भिर्ध्वान्तयुक्तं भयानकम् ।
कोटिभिर्विक्षताकारैः कच्छपैश्च सुदारुणैः ॥ ६४ ॥
जलस्थैः संयुतं तैश्च भक्षितैः पापिभिर्युतम् ।
ज्वालाकलापैस्तेजोभिर्निर्माणं क्षोभमानकम् ॥ ६५ ॥
शब्दकृद्भिः पापिभिश्च चलद्भिः संयुतं सदा ।
क्षोभमानं गभीरञ्च तप्तभस्मभिरन्वितम् ॥ ६६ ॥
शश्वच्चलद्भिः संयुक्तं पापिभिर्भस्मभक्षितैः ॥ ६७ ॥
तप्तपाषाणलोष्ट्राणां समूहैः परिपूरितम् ।
पापिभिर्दग्धगात्रैश्च युक्तञ्च शुष्कतालुकैः ॥ ६८ ॥
क्षोभमानं ध्वान्तमयं गभीरमतिदारुणैः ।
ताड़ितैर्मम दूतैश्च दग्धकुण्डं प्रकीर्त्तितम् ॥ ६९ ॥
अत्युर्म्मियुक्ततोयञ्च प्रतप्तक्षारसंयुतम् ।
नानाप्रकारविकृतं जलजन्तुसमन्वितम् ॥ ७० ॥

द्विगव्यूतिप्रमाणञ्च गभीरं ध्वान्तसंयुतम्।
तद्भक्ष्यैः पापिभिर्युक्तं दंशितैर्जलजन्तुभिः ॥ ७१ ॥
चलद्भिः क्रन्दमानैश्च न पश्यद्भिः परस्परम्।
उत्तप्तशूर्मिकुण्डञ्च कीर्त्तितञ्च भयानकम् ॥ ७२ ॥
असीवधारपत्रस्याप्युच्चैस्तालतरोरधः।
क्रोशार्द्धमानकुण्डञ्च पतत्पत्रसमन्वितम् ॥ ७३ ॥
पापिनां रक्तपूर्णञ्च वृक्षाग्रात् पततां परम्।
परित्राहीति शब्दञ्च कुर्वतामसतामपि ॥ ७४ ॥
गभीरं ध्वान्तसंयुक्तं रक्तकीटसमन्वितम्।
तदसीपत्रकुण्डञ्च कीर्त्तितञ्च भयानकम् ॥ ७५ ॥
धनुःशतप्रमाणञ्च क्षुराकारास्त्रसङ्कुलम्।
पापिनां रक्तपूर्णञ्च क्षुरधारं भयानकम् ॥ ७६ ॥
सूचीवास्यास्त्रसंयुक्तं पापिरक्तौघपूरितम्।
पञ्चाशद्धनुरायामं क्लेशदञ्च सूचीमुखम् ॥ ७७ ॥
कस्यचिज्जन्तुभेदस्य गोधेत्यस्य मुखाकृतम्।
कूपरूपगभीरञ्च धनुर्विंशत्प्रमाणकम् ॥ ७८ ॥
महापातकिनाञ्चैव महाक्लेशकरं परम्।
तत्कीटभक्षितानाञ्च नम्रास्यानाञ्च सन्ततम् ॥ ७९ ॥
कुण्डं नखमुखाकारं धनुः षोड़शमानकम्।
गभीरं कूपरूपञ्च पापिष्ठैः संकुलं सदा ॥ ८० ॥
गजेन्द्राणां समूहेन व्याप्तं कुण्डाकृतं स्थलम्।
गजदन्तहतानाञ्च पापिनां रक्तपूरितम् ॥ ८१ ॥
तत्कीटभक्षितानाञ्च काकुशब्दकृतां सदा।
धनुःशतप्रमाणञ्च कीर्त्तितं गजदंशनम् ॥ ८२ ॥

धनुस्त्रिंशत्प्रमाणञ्च कुण्डञ्च गोमुखाकृति।
पापिनां दुःखदञ्चैव गोमुखं परिकीर्त्तितम् ॥ ८३ ॥
भ्रमितं कालचक्रेण सन्ततञ्च भयानकम्।
कुम्भाकारं ध्वान्तयुक्तं द्विगव्यूतिप्रमाणकम् ॥ ८४ ॥
लक्षपौरुषमानञ्च गभीरमतिविस्तृतम्।
कुत्रचित्तप्ततैलञ्च कुण्डाभ्यन्तरमन्तिके ॥ ८५ ॥
कुत्रचित्तप्तलौहादि ताम्रादि कुण्डमेव च।
कुत्रचित् तप्तपाषाणकुण्डाभ्यन्तरमन्तिके।
पापिनाञ्च प्रधानैश्च महापातकिभिर्युतम् ॥ ८६ ॥
परस्परं न पश्यद्भिः शब्दकृद्भिश्च सन्ततम्।
ताड़ितैर्मम दूतैश्च दण्डैश्च मुषलैस्तथा ॥ ८७ ॥
घूर्णमानं पतद्भिश्च मूर्च्छितैश्च मुहुर्मुहुः।
पातितैर्मम दूतैश्च चात्यूर्द्धात् पतितैः क्षणम् ॥ ८८ ॥
यावन्तः पापिनः सन्ति सर्वकुण्डेषु सुन्दरि।
तत्र चतुर्गुणाः सन्ति कुम्भीपाके च दुस्तरे ॥ ८९ ॥
सुचिरं पतिताश्चैव भोगदेहविवर्जिताः।
सर्वकुण्डप्रधानञ्च कुम्भीपाकं प्रकीर्त्तितम् ॥ ९० ॥
कालनिर्मितसूत्रेण निबद्धा यत्र पापिनः।
उत्थापिताश्च मद्दूतैः क्षणमेव निमज्जिताः ॥ ९१ ॥
निश्वासबद्धाः सुचिरं कुण्डानामन्तरे तथा।
अतीवक्लेशयुक्ताश्च भोगदेहा न नश्वराः ॥ ९२ ॥
दण्डेन मुषलेनैव मम दूतैश्च ताड़िताः।
प्रतप्ततोययुक्तञ्च कालसूत्रं प्रकीर्त्तितम् ॥ ९३ ॥
अवटः कूपभेदश्च यत्तोदञ्च तदाकृतिः।

प्रतप्ततोयपूर्णञ्च धनुर्विंशत्प्रमाणकम् ॥ ९४ ॥
व्याप्तं महापापिभिश्च दग्धगात्रैश्च सन्ततम् ।
मद्दूतैस्ताड़ितैः शश्वद्दवटोदं प्रकीर्त्तितम् ॥ ९५ ॥
यत्तोयस्पर्शमात्रेण सर्वव्याधिश्च पापिनाम् ।
भवेदकस्मात् पततां यत्र कुण्डे धनुःशते ॥ ९६ ॥
सर्वेरुद्राः पापिनश्च तुदन्ति यत्र सन्ततम् ।
हाहेति शब्दं कुर्वन्तस्तदेवारुन्तुदं विदुः ॥ ९७ ॥
तप्तपांशुभिराकीर्णं ज्वलद्भिस्तु सदग्धकैः ।
तद्भक्ष्यैः पापिभिर्युक्तं पांशुभोजं धनुःशतम् ॥९८॥
पततां पापिनां यत्र भवेदेव प्रकम्पनम् ।
पतन्मात्रे च पापी च पाशेन वेष्टितो भवेत् ।
क्रोशमाने च कुण्डे च तत्पाशवेष्टनं विदुः ॥ ९९ ॥
धनुर्विंशत्प्रमाणञ्च शूलप्रोतं प्रकीर्त्तितम् ।
पतन्मात्रेण पापी च शूलेन ग्रथितो भवेत् ॥१००॥
पततां पापिनां यत्र भवेदेव प्रकम्पनम् ॥ १०१ ॥
अतीव हिमतोये च क्रोशाद्वैञ्च प्रकम्पनम् ।
ददत्येव हि मद्दूता यत्रोल्काः पापिनां मुखे ॥१०२॥
धनुर्विंशत्प्रमाणञ्च तदुल्काभिश्च सङ्कुलम् ।
लक्षपौरुषमानञ्च गभीरञ्च धनुःशतम् ॥ १०३ ॥
नानाप्रकारकृमिभिः संयुक्तञ्च भयानकैः ।
अत्यन्धकारव्याप्तं यत् कूपाकारञ्च वर्त्तुलम् ॥ १०४ ॥
तद्भक्ष्यैः पापिभिर्युक्तं न पश्यद्भिः परस्परम् ।
तप्ततोयप्रतप्तैश्च पतद्भिः कीटभक्षितैः ।
ध्वान्तेन [illegible] चान्धैरन्धकूपं प्रकीर्त्तितम् ॥१०५॥

नानाप्रकारशस्त्रौघैर्यत्र विद्धाश्च पापिनः ।
धनुर्विंशत्प्रमाणञ्च वेधनं तत् प्रकीर्त्तितम् ॥१०६॥
दण्डेन ताड़िता यत्र मम दूतैश्च पापिनः ।
धनुःषोड़शमानञ्च तत् कुण्डं दण्डताड़नम् ॥१०७॥
निबद्धाश्च महाजालैर्यथा मीनाश्च पापिनः ।
धनुस्त्रिंशत्प्रमाणञ्च जालबद्धं प्रकीर्त्तितम् ॥ १०८ ॥
पततां पापिनां कुण्डे देहाश्चूर्णीभवन्ति च ।
लौहवेदीनिबद्धान्तः कोटिपौरुषमानकम् ॥१०९॥
गभीरं ध्वान्तयुक्तञ्च धनुर्विंशत्प्रमाणकम् ।
मूर्च्छितानां जड़ानाञ्च देहचूर्णं प्रकीर्त्तितम् ॥११०॥
दलिताः पापिनो यत्र मद्दूतैर्मुषलैः सदा ।
धनुःषोड़शमानञ्च तत् कुण्डं दलनं स्मृतम् ॥१११॥
पतन्मात्रे यत्र पापी शुष्ककण्ठौष्ठतालुकः ।
वालुकासु च तप्तासु धनुस्त्रिंशत्प्रमाणकम् ॥११२॥
शतपौरुषमानञ्च गभीरं ध्वान्तसंयुतम् ।
जलाहारविरहितं शोषणं तत् प्रकीर्त्तितम् ॥११३॥
नानाचर्मकषायोदं परिपूर्णं धनुःशतम् ।
दुर्गन्धियुक्तं तद्भक्ष्यैः पापिभिः सङ्कुलं कषम् ॥११४॥
सूर्पाकारमुखं कुण्डं धनुर्द्वादशमानकम् ।
तप्तलौहवालुकाभिः पूर्णं पातकिभिर्युतम् ॥११५॥
अन्तराग्निशिखानाञ्च ज्वालाव्याप्तमुखं सदा ।
धनुर्विंशत्प्रमाणञ्च यस्य कुण्डस्य सुन्दरि ॥११६॥
ज्वालाभिर्दग्धगात्रैश्च पापिभिर्व्याप्तमेव यत् ।
तन्महत्क्लेशदं शश्वत् कुण्डं ज्वालामुखं स्मृतम् ॥११७॥

एतन्मात्रायत्र पापी मूर्च्छितो व्यथितो भवेत्।
तप्तेष्टकाभ्यन्तरितं वाप्यर्द्धं जिह्मकुण्डकम् ॥११८॥
धूमान्धकारयुक्तञ्च धूमान्धैः पापिभिर्युतम्।
धनुःशतं श्वासबद्धैर्धूमान्धं परिकीर्त्तितम् ॥११९॥
एतन्मात्रायत्र पापी नागैश्च वेष्टितो भवेत्।
धनुःशतं नागपूर्णं तन्नागवेष्टकुण्डकम् ॥ १२० ॥
षड़शीति च कुण्डानि मयोक्तानि निशामय।
लक्षणञ्चापि तेषाञ्च किं भूयः श्रोतुमिच्छसि ॥१२१॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे यमसावित्रीसंवादे कुण्डलक्षण-
प्रकथनं नाम त्रयस्त्रिंशोऽध्यायः।

---

## चतुस्त्रिंशोऽध्यायः।

---

सावित्र्युवाच।

हरिभक्तिं देहि मह्यं सारभूतां सुदुर्लभाम्।
त्वत्तः सर्वं श्रुतं देव नावशिष्टोऽधुना मम ॥ १ ॥
किञ्चित् कथय मे धर्मं श्रीकृष्णगुणकीर्त्तनम्।
पुंसां लक्षोद्धारवीजं नरकार्णवतारणम् ॥ २ ॥
कारणं मुक्तिसाराणां सर्वाशुभनिवारणम्।
पावनं कर्मवृक्षाणां कृतपापौघहारणम् ॥ ३ ॥

मुक्तयः कतिधा सन्ति किं वा तासाञ्च लक्षणम् ।
हरिभक्तेर्मूर्त्तिभेदं निषेकस्यापि लक्षणम् ॥ ४ ॥
तत्त्वज्ञानविहीना च स्त्रीजातिर्विधिनिर्मिता ।
किं तज्ज्ञानं सारभूतं वद वेदविदां वर ॥ ५ ॥
सर्वदानमनशनं तीर्थस्नानं व्रतं तपः ।
अज्ञानज्ञानदानस्य कलां नार्हन्ति षोड़शीम् ॥ ६ ॥
पितुः शतगुणा माता गौरवेणातिनिश्चिता ।
मातुः शतगुणैः पूज्यो ज्ञानदाता गुरुः प्रभो ॥ ७ ॥

यम उवाच ।

पूर्वं सर्ववरो दत्तो यत्ते मनसि वाञ्छितः ।
अधुना हरिभक्तिस्ते वत्से भवतु मद्वरात् ॥ ८ ॥
श्रोतुमिच्छसि कल्याणि श्रीकृष्णगुणकीर्त्तनम् ।
वक्तॄणां प्रश्नकर्त्तॄणां श्रोतॄणां कुलतारणम् ॥ ९ ॥
शेषो वक्त्रसहस्रेण न हि यद्वक्तुमीश्वरः ।
मृत्युञ्जयो न चमश्च वक्तुं पञ्चमुखेन च ॥ १० ॥
धाता चतुर्णां वेदानां विधाता जगतामपि ।
ब्रह्मा चतुर्मुखेनैव नालं विष्णुश्च सर्ववित् ॥ ११ ॥
कार्त्तिकेयः षण्मुखेन नापि वक्तुमलं ध्रुवम् ।
न गणेशः समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ १२ ॥
सारभूताश्च शास्त्राणां वेदाश्चत्वार एव च ।
कलामात्रं यद्गुणानां न विदन्ति बुधाश्च ये ॥ १३
सरस्वती च यत्नेन नालं यद्गुणवर्णने ।
सनत्कुमारो धर्मश्च सनकश्च सनातनः ॥ १४ ॥
सनन्दः कपिलः सूर्य्यो येऽन्ये च ब्रह्मणः सुताः ।

विचक्षणा न यद्वक्तुं के वान्ये जड़बुद्धयः॥ १५॥
न यद्वक्तुं क्षमाः सिद्धा मुनीन्द्रा योगिनस्तथा।
के वान्ये च वयं के वा भगवद्गुणवर्णने॥ १६॥
ध्यायन्ते यत्पदाम्भोजं ब्रह्मविष्णुशिवादयः।
अतिसाध्यं स्वभक्तानां तदन्येषां सुदुर्लभम्॥ १७॥
कश्चित् किञ्चिद्विजानाति तद्गुणोत्कीर्त्तनं महत्।
अतिरिक्तं विजानाति ब्रह्मा ब्रह्मसुतादयः॥ १८॥
ततोऽतिरिक्तं जानाति गणेशो ज्ञानिनां गुरुः।
सर्वातिरिक्तं जानाति सर्वज्ञः शम्भुरेव च॥ १९॥
तस्मै दत्तं पुरा ज्ञानं कृष्णेन परमात्मना।
अतीवनिर्जने रम्ये गोलोके रासमण्डले॥ २०॥
तत्रैव कथितं किञ्चित् यद्गुणोत्कीर्त्तनं पुनः।
धर्माय कथयामास शिवलोके शिवः स्वयम्॥ २१॥
धर्मस्तत् कथयामास पुष्करे भास्कराय च।
यमाराध्य मम पिता मां प्राप तपसा सति॥ २२॥
पूर्वं स्वविषयञ्चाहं न गृह्णामि प्रयत्नतः।
वैराग्ययुक्तस्तपसे गन्तुमिच्छामि सुव्रते॥ २३॥
तदा मां कथयामास पिता तद्गुणकीर्त्तनम्।
यथागमं तद्वदामि निर्बोधातीव दुर्गमम्॥ २४॥
तद्गुणं स न जानाति तदन्यस्य च का कथा।
यथाकाशो न जानाति स्वान्तमेव वरानने॥ २५॥
सर्वान्तरात्मा भगवान् सर्वकारणकारणम्।
सर्वेश्वरश्च सर्वाद्यः सर्ववित् सर्वरूपधृक्॥ २६॥
नित्यरूपी नित्यदेही नित्यानन्दो निराकृतिः।

निरङ्कुशश्च निःशङ्को निर्गुणश्च निराश्रयः ॥ २७ ॥
निर्लिप्तः सर्वसाक्षी च सर्वाधारः परात्परः ।
तद्विकारा च प्रकृतिस्तद्विकाराश्च प्राकृताः ॥ २८ ॥
स्वयं पुमांश्च प्रकृतिः स्वयञ्च प्रकृतेः परः ।
रूपं विधत्तेऽरूपश्च भक्तानुग्रहहेतवे ॥ २९ ॥
अतीव कमनीयञ्च सुन्दरं सुमनोहरम् ।
नवीननीरदश्यामं किशोरं गोपवेशकम् ॥ ३० ॥
कन्दर्पकोटिलावण्यलीलाधाम मनोहरम् ।
शरन्मध्याह्नपद्मानां शोभामोचनलोचनम् ॥ ३१ ॥
शरत्पार्वणकोटीन्दुशोभाप्रच्छादनाननम् ।
अमूल्यरत्ननिर्माणरत्नाभरणभूषितम् ॥ ३२ ॥
सस्मितं शोभितं शश्वदमूल्यपीतवाससा ।
परं ब्रह्मस्वरूपञ्च ज्वलन्तं ब्रह्मतेजसा ॥ ३३ ॥
सुखदृश्यञ्च शान्तञ्च राधाकान्तमनन्तकम् ।
गोपीभिर्वीक्ष्यमाणञ्च सस्मिताभिः समन्ततः ॥ ३४ ॥
रासमण्डलमध्यस्थं रत्नसिंहासनस्थितम् ।
वंशीं क्वणन्तं द्विभुजं वनमालाविभूषितम् ॥ ३५ ॥
कौस्तुभेन मणीन्द्रेण शश्वद्वक्षःस्थलोज्ज्वलम् ।
कुङ्कुमावीरकस्तूरीचन्दनार्चितविग्रहम् ॥ ३६ ॥
चारुचम्पकमालाब्जमालतीमाल्यमण्डितम् ।
चारुचम्पकशोभाढ्यचूडावङ्किमराजितम् ॥ ३७ ॥
एवम्भूतञ्च ध्यायन्ते भक्ता भक्तिपरिप्लुताः ।
यद्भयाज्जगतां धाता विधत्ते सृष्टिमेव च ॥ ३८ ॥
कर्मानुरूपलिखनं करोति सर्वकर्मणाम् ।

तपसां फलदाता च कर्मणाञ्च यदाज्ञया ॥ ३९ ॥
विष्णुः पाता च सर्वेषां यद्भयात् पाति सन्ततम् ।
कालाग्निरुद्रः संहर्त्ता सर्वविश्वेषु यद्भयात् ॥ ४० ॥
शिवो मृत्युञ्जयश्चैव ज्ञानिनाञ्च गुरोर्गुरुः ।
यद्ज्ञानदानात् सिद्धेशो योगीशः सर्ववित् स्वयम् ॥४१॥
परमानन्दयुक्तश्च भक्तिवैराग्यसंयुतः ।
यत्प्रसादाद्वाति वातः प्रवरः शीघ्रगामिनाम् ॥४२॥
तपनश्च प्रतपति यद्भयात् सन्ततं सति ।
यदाज्ञया वर्षतीन्द्रो मृत्युश्चरति जन्तुषु ॥ ४३ ॥
यदाज्ञया दहेद्वह्निर्जलमेव सुशीतलम् ।
दिशो रक्षन्ति दिक्पाला महाभीता यदाज्ञया ॥४४॥
भ्रमन्ति राशिचक्राणि ग्रहाश्च यद्भयेन च ।
भयात् फलन्ति वृक्षाश्च पुष्पाण्यपि च यद्भयात् ॥ ४५ ॥
भयात् फलानि पक्वानि निष्फलास्तरवो भयात् ।
यदाज्ञया स्थलस्थाश्च न जीवन्ति जलेषु च ॥ ४६ ॥
तथा स्थले जलस्थाश्च न जीवन्ति यदाज्ञया ।
अहं नियमकर्त्ता च धर्माधर्मे च यद्भयात् ॥ ४७ ॥
कालश्च कलयेत् सर्वं भ्रमत्येव यदाज्ञया ।
अकाले न हरेत् कालो मृत्युश्च यद्भयेन च ॥ ४८ ॥
ज्वलदग्नौ पतन्तञ्च गभीरे च जलार्णवे ।
वृक्षाग्रात् तीक्ष्णखड्गे च सर्पादीनां मुखेषु च ॥ ४९ ॥
नानाशस्त्रास्त्रविद्धञ्च रणेषु विषमेषु च ।
पुष्पचन्दनतल्पे च बन्धुवर्गैश्च रक्षितम् ।
शयानं तल्पमध्ये च काले कालो हरेद्भयात् ॥ ५० ॥

धत्ते वायुस्तोयराशिं तोयं कूर्मं यदाज्ञया ॥ ५१ ॥
कूर्मोऽनन्तं स च क्षौणीं समुद्रान् सप्तपर्वतान् ।
सर्वांश्चैव क्षमारूपा नानारूपं बिभर्त्ति सः ॥ ५२ ॥
यतः सर्वाणि भूतानि लीयन्तेऽन्ते च तत्र च ।
इन्द्रायुश्चैव दिव्यानां युगानामेकसप्ततिः ॥ ५३ ॥
अष्टाविंशच्छक्रपाते ब्रह्मणश्चेत्यहर्निशम् ।
अष्टाधिके पञ्चशते सहस्रे पञ्चविंशती ॥ ५४ ॥
युगे नराणां शक्रायुरेवं संख्याविदो विदुः ।
एवं त्रिंशद्दिनैर्मासो द्वाभ्यान्ताभ्यामृतुः स्मृतः ॥५५॥
ऋतुभिः षड्भिरेवाब्दं शताब्दं ब्रह्मणो वयः ।
ब्रह्मणश्च निपाते च चक्षुरुन्मीलनं हरेः ॥ ५६ ॥
चक्षुर्निमीलने तस्य लयं प्राकृतिकं विदुः ।
प्रलये प्राकृताः सर्वे देवाद्याश्च चराचराः ॥ ५७ ॥
लीना धातरि धाता च श्रीकृष्णनाभिपङ्कजे ।
विष्णुः क्षीरोदशायी च वैकुण्ठे यश्चतुर्भुजः ॥ ५८ ॥
विलीना वामपार्श्वे च कृष्णस्य परमात्मनः ।
रुद्राद्या भैरवाद्याश्च यावन्तश्च शिवानुगाः ॥ ५९ ॥
शिवाधारे शिवे लीना ज्ञानानन्दे सनातने ।
ज्ञानाधिदेवः कृष्णस्य महादेवस्य चात्मनः ॥ ६० ॥
तस्य ज्ञानविलीनश्च बभूव च क्षयं हरेः ।
दुर्गायां विष्णुमायायां विलीनाः सर्वशक्तयः ॥ ६१ ॥
सा च कृष्णस्य बुद्धौ च बुद्ध्यधिष्ठातृदेवता ।
नारायणांशः स्कन्दश्च लीनो वक्षसि तस्य च ॥ ६२ ॥
श्रीकृष्णांशश्च तद्बाहौ देवाधीशो गणेश्वरः ।

पद्मांशाचापि पद्मायां सा राधायाश्च सुव्रते ॥ ६३ ॥
गोप्यश्चापि च तस्यां च सर्वाश्च देवयोषितः ।
कृष्णप्राणाधिदेवी सा तस्य प्राणेषु सा स्थिता ॥६४॥
सावित्री च सरस्वत्यां वेदशास्त्राणि यानि च ।
स्थिता वाणी च जिह्वायां तस्यैव परमात्मनः ॥६५॥
गोलोकस्य च गोपाश्च विलीनास्तस्य लोमसु ।
तत्प्राणेषु च सर्वेषां प्राणा वाता हुताशनः ॥ ६६ ॥
जठराग्नौ विलीनश्च जलं तद्रसनाग्रतः ।
वैष्णवाश्चरणाम्भोजे परमानन्दसंयुताः ॥ ६७ ॥
सारात्सारतरा भक्तिरसपीयूषपायिनः ।
विराट् क्षुद्रश्च महति लीनः कृष्णे महान् विराट् ॥६८॥
यस्यैव लोमकूपेषु विश्वानि निखिलानि च ।
यस्य चक्षुर्निमेषेण महांश्च प्रलयो भवेत् ॥ ६९ ॥
चक्षुरुन्मीलने सृष्टिर्यस्यैव पुनरेव च ।
यावत् कालो निमेषेण तावदुन्मीलने व्ययः ॥ ७० ॥
ब्रह्मणश्च शताब्देन सृष्टिस्तत्र लयः पुनः ।
ब्रह्मसृष्टिलयानाञ्च संख्या नास्त्येव सुव्रते ।
यथा भूरजसाञ्चैवा संख्यानाञ्च निशामय ॥ ७१ ॥
चक्षुर्निमेषे प्रलयो यस्य सर्वान्तरात्मनः ।
उन्मीलने पुनः सृष्टिर्भवेदेवेश्वरेच्छया ॥ ७२ ॥
तद्गुणोत्कीर्त्तनं वक्तुं ब्रह्माण्डेषु च कः क्षमः ॥ ७३ ॥
यथा श्रुतं तातवक्त्रात् तथोक्तञ्च यथागमम् ।
मुक्तयश्च चतुर्वेदैर्निरुक्ताश्च चतुर्विधाः ॥ ७४ ॥
तत्प्रधाना हरेर्भक्तिर्मुक्तेरपि गरीयसी ।

सालोक्यदा हरेरेका चान्या सारूप्यदा परा ॥ ७५ ॥
सामीप्यदा च निर्वाणदात्री चैवमिति स्मृतिः ।
भक्तास्ता न हि वाञ्छन्ति विना तत्सेवनादिकम् ॥ ७६ ॥
सिद्धित्वममरत्वञ्च ब्रह्मत्वञ्चावहेलया ।
जन्ममृत्युजराव्याधिभयशोकादिखण्डनम् ॥ ७७ ॥
दिव्यरूपधारणञ्च निर्वाणं मोक्षदं विदुः ।
मुक्तिश्च सेवारहिता भक्तिः सेवाविवर्द्धिनी ॥ ७८ ॥
भक्तिमुक्त्योरयं भेदो निषेकलक्षणं शृणु ।
विदुर्बुधा निषेकञ्च भोगञ्च कृतकर्मणाम् ॥ ७९ ॥
तत् खण्डनञ्च शुभदं श्रीकृष्णसेवनं परम् ।
तत्त्वज्ञानमिदं साध्वि सारञ्च लोकवेदयोः ॥ ८० ॥
विघ्नघ्नं शुभदं चोक्तं गच्छ वत्से यथा सुखम् ।
इत्युक्त्वा सूर्य्यपुत्रश्च जीवयित्वा च तत्पतिम् ॥ ८१ ॥
तस्यै शुभाशिषं दत्त्वा गमनं कर्त्तुमुद्यतः ।
दृष्ट्वा यमञ्च गच्छन्तं सावित्री तं प्रणम्य च ॥ ८२ ॥
रुरोद चरणे धृत्वा सद्विच्छेदोऽतिदुःखदः ।
सावित्रीरोदनं दृष्ट्वा यम एव कृपानिधिः ॥ ८३ ॥
तामित्युवाच सन्तुष्टो रुरोद चापि नारद ॥ ८४ ॥

यम उवाच ।

लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते ।
अन्ते यास्यसि गोलोके श्रीकृष्णभवनं शुभे ॥ ८५ ॥
गत्वा च स्वगृहं भद्रे सावित्र्याश्च व्रतं कुरु ।
द्विसप्तवर्षपर्य्यन्तं नारीणां मोक्षकारणम् ॥ ८६ ॥
ज्यैष्ठे कृष्णचतुर्द्दश्यां सावित्र्याश्च व्रतं शुभम् ।

शुक्लाष्टम्यां भाद्रपदे महालक्ष्म्या व्रतं शुभम्॥ ८७॥
द्वाष्टवर्षव्रतं चेदं प्रत्यब्दं पञ्चमेव च।
करोति परया भक्त्या सा याति च हरेः पदम्॥८८॥
प्रतिमङ्गलवारे च देवीं मङ्गलचण्डिकाम्।
प्रतिमासं शुक्लषष्ठ्यां षष्ठीं मङ्गलदायिकाम्॥ ८९॥
तथा चाषाढ़संक्रान्त्यां मनसां सर्वसिद्धिदाम्।
राधां रासे च कार्त्तिक्यां कृष्णप्राणाधिकां प्रियाम्॥९०
उपोष्य शुक्लाष्टम्याञ्च प्रतिमासे वरप्रदाम्।
विष्णुमायां भगवतीं दुर्गां दुर्गतिनाशिनीम्॥ ९१॥
प्रकृतिं जगदम्बां च पतिपुत्रवतीं सतीम्।
पतिव्रतासु शुद्धासु यन्त्रेषु प्रतिमासु च॥ ९२॥
या नारी पूजयेद् भक्त्या धनसन्तानहेतवे।
इहलोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम्॥ ९३॥
इत्युक्त्वा तां धर्मराजो जगाम निजमन्दिरम्।
गृहीत्वा स्वामिनं सा च सावित्री च निजालयम्॥९४॥
सावित्री सत्यवन्तञ्च वृत्तान्तञ्च यथाक्रमम्।
अन्यांश्च कथयामास बान्धवांश्चैव नारद॥ ९५॥
सावित्रीजनकः पुत्रान् संप्राप वै क्रमेण च।
श्वशुरश्चक्षुषी राज्यं सा च पुत्रान् वरेण च॥ ९६॥
लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते।
जगाम स्वामिना सार्द्धं गोलोकं सा पतिव्रता॥९७॥
सवितुश्चाधिदेवी या मन्त्राधिष्ठातृदेवता।
सावित्री चापि वेदानां सावित्री तेन कीर्त्तिता॥९८॥
इत्येवं कथितं वत्स सावित्र्याख्यानमुत्तमम्।

जीवकर्मविपाकञ्च किं पुनः श्रोतुमिच्छसि ॥ ८८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे सावित्र्युपाख्यानं
नाम चतुस्त्रिंशत्तमोऽध्यायः ।

---

## पञ्चत्रिंशोऽध्यायः ।

---

नारद उवाच ।

श्रीकृष्णस्यात्मनश्चैव निर्गुणस्य निराकृतेः ।
सावित्री यमसंवादे श्रुतं सुनिर्मलं यशः ॥ १ ॥
तद्गुणोत्कीर्त्तनं सत्यं मङ्गलानाञ्च मङ्गलम् ।
अधुना श्रोतुमिच्छामि लक्ष्म्युपाख्यानमीश्वर ॥ २ ॥
केनादौ पूजिता सापि किम्भूता केन वा पुरा ।
तद्गुणोत्कीर्त्तनं सत्यं वद वेदविदांवर ॥ ३ ॥

नारायण उवाच ।

सृष्टेरादौ पुरा ब्रह्मन् कृष्णस्य परमात्मनः ।
देवी वामांशसंभूता बभूव रासमण्डले ॥ ४ ॥
अतीव सुन्दरी श्यामा न्यग्रोधपरिमण्डला ।
यथा द्वादशवर्षीया शश्वत्सुस्थिरयौवना ॥ ५ ॥
श्वेतचम्पकवर्णाभा सुखदृश्या मनोहरा ।
शरत्पार्वणकोटीन्दुप्रभाप्रच्छादनानना ॥ ६ ॥

शरन्मध्याह्नपद्मानां शोभामोचनलोचना ।
सा च देवी द्विधाभूता सहसैवेश्वरेच्छया ॥ ७ ॥
समा रूपेण वर्णेन तेजसा वयसा त्विषा ।
यशसा वाससा मूर्त्या भूषणेन गुणेन च ॥ ८ ॥
स्मितेन वीक्षणेनैव वचसा गमनेन च ।
मधुरेण स्वरेणैव नयेनानुनयेन च ॥ ९ ॥
तद्वामांशा महालक्ष्मीर्दक्षिणांशा च राधिका ।
राधादौ वरयामास द्विभुजञ्च परात्परम् ॥ १० ॥
महालक्ष्मीश्च तत्पश्चात् चकाम कमनीयकम् ।
कृष्णस्तद्गौरवेणैव द्विधारूपो बभूव ह ॥ ११ ॥
दक्षिणांशश्च द्विभुजो वामांशश्च चतुर्भुजः ।
चतुर्भुजाय द्विभुजो महालक्ष्मीं ददौ पुरा ॥ १२ ॥
लक्ष्यते दृश्यते विश्वं स्निग्धदृष्ट्या यया निशम् ।
देवीषु या च महती महालक्ष्मीश्च सा स्मृता ॥ १३ ॥
द्विभुजो राधिकाकान्तो लक्ष्मीकान्तश्चतुर्भुजः ।
गोलोके द्विभुजस्तस्थौ गोपैर्गोपीभिरावृतः ॥ १४ ॥
चतुर्भुजश्च वैकुण्ठं प्रययौ पद्मया सह ।
सर्वांशेन समौ तौ द्वौ कृष्णनारायणौ परौ ॥ १५ ॥
महालक्ष्मीश्च योगेन नानारूपा बभूव सा ।
वैकुण्ठे च महालक्ष्मीः परिपूर्णतमा परा ॥ १६ ॥
शुद्धसत्त्वस्वरूपा च सर्वसौभाग्यसंयुता ।
प्रेम्णा सा च प्रधाना च सर्वासु रमणीषु च ॥ १७ ॥
स्वर्गे च स्वर्गलक्ष्मीश्च शक्रसम्पत्स्वरूपिणी ।
पातालेषु च मर्त्त्येषु राजलक्ष्मीश्च राजसु ॥ १८ ॥

गृहलक्ष्मीर्गृहेष्वेव गृहिणी च कलांशया ।
सम्पत् स्वरूपा गृहिणां सर्वमङ्गलमङ्गला ॥ १९ ॥
गवां प्रसूः सा सुरभी दक्षिणा यज्ञकामिनी ।
क्षीरोदसिन्धुकन्या सा श्रीरूपा पद्मिनीषु च ॥ २० ॥
शोभारूपा च चन्द्रे च सूर्य्यमण्डलमण्डिता ।
विभूषणेषु रत्नेषु फलेषु च जलेषु च ॥ २१ ॥
नृपेषु नृपपत्नीषु दिव्यस्त्रीषु गृहेषु च ।
सर्वशस्येषु वस्त्रेषु स्थानेषु संस्कृतेषु च ॥ २२ ॥
प्रतिमासु च देवानां मङ्गलेषु घटेषु च ।
माणिक्येषु च मुक्तासु माल्येषु च मनोहरा ॥ २३ ॥
मणीन्द्रेषु च हारेषु क्षीरेषु चन्दनेषु च ।
वृक्षशाखासु रम्यासु नवमेघेषु वस्तुषु ॥ २४ ॥
वैकुण्ठे पूजिता सादौ देवी नारायणेन च ।
द्वितीये ब्रह्मणा भक्त्या तृतीये शङ्करेण च ॥ २५ ॥
विष्णुना पूजिता सा च क्षीरोदे भारते मुने ।
स्वायम्भुवेन मनुना मानवेन्द्रैश्च सर्वतः ॥ २६ ॥
ऋषीन्द्रैश्च मुनीन्द्रैश्च सद्भिश्च गृहिभिर्भवेत् ।
गन्धर्वाद्यैश्च नागाद्यैः पातालेषु च पूजिता ॥ २७ ॥
शुक्लाष्टम्यां भाद्रपदे कृता पूजाच ब्रह्मणा ।
भक्त्या च पक्षपर्य्यन्तं त्रिषु लोकेषु नारद ॥ २८ ॥
चैत्रे पौषे च भाद्रे च पुण्ये मङ्गलवासरे ।
विष्णुना निर्मिता पूजा त्रिषु लोकेषु भक्तितः ॥२९॥
वर्षान्ते पौषसंक्रान्त्यां मेध्यामावाह्य प्राङ्गणे ।
मनुस्तां पूजयामास साभूता भुवनत्रये ॥ ३० ॥

राजेन्द्रेण पूजिता सा मङ्गलेनैव मङ्गला ।
केदारेणैव नीलेन नलेन सुबलेन च ॥ ३१ ॥
ध्रुवेणोत्तानपादेन शक्रेण बलिना तथा ।
कश्यपेन च दक्षेण मनुना च विवस्वता ॥ ३२ ॥
प्रियव्रतेन चन्द्रेण कुवेरेणैव वायुना ।
यमेन वह्निना चैव वरुणेनैव पूजिता ॥ ३३ ॥
एवं सर्वत्र सर्वैश्च वन्दिता पूजिता सदा ।
सर्वैश्वर्य्याधिदेवी सा सर्वसम्पत्स्वरूपिणी ॥ ३४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे लक्ष्म्युपाख्याने
पञ्चत्रिंशोऽध्यायः ।

---

## षट्त्रिंशोऽध्यायः ।

---

नारद उवाच ।

नारायणप्रिया सा च वरा वैकुण्ठवासिनी ।
वैकुण्ठाधिष्ठात्री देवी महालक्ष्मीः सनातनी ॥ १ ॥
कथं बभूव सा देवी पृथिव्यां सिन्धुकन्यका ।
किं तद्ध्यानं च कवचं सर्वं पूजाविधिक्रमम् ॥ २ ॥
पुरा केन स्तुतादौ सा तन्मे व्याख्यातुमर्हसि ॥ ३ ॥

नारायण उवाच ।

पुरा दुर्वाससः शापात् भ्रष्टश्रीकः पुरन्दरः ।

बभूव देवसंघश्च मर्त्यलोकश्च नारद ॥ ४ ॥
लक्ष्मीः स्वर्गादिकं त्यक्त्वा रुष्टा परमदुःखिता ।
गत्वा लीना च वैकुण्ठे महालक्ष्म्याञ्च नारद ॥ ५ ॥
तदा शोकाद्ययुर्देवा दुःखिता ब्रह्मणः सभाम् ।
ब्रह्माणञ्च पुरस्कृत्य ययुर्वैकुण्ठमेव च ॥ ६ ॥
वैकुण्ठे शरणापन्ना देवा नारायणे परे ।
अतीवदैन्ययुक्ताश्च शुष्ककण्ठौष्ठतालुकाः ॥ ७ ॥
तदा लक्ष्मीश्च कलया पुरा नारायणाज्ञया ।
बभूव सिन्धुकन्या सा शक्रसम्पत्स्वरूपिणी ॥ ८ ॥
तदा मथित्वा क्षीरोदं देवा दैत्यगणैः सह ।
संप्रापुश्च वरं लक्ष्म्या दद्दृशुस्ताञ्च तत्र हि ॥ ९ ॥
सुरादिभ्यो वरं दत्त्वा वरमालाञ्च विष्णवे ।
ददौ प्रसन्नवदना तुष्टा क्षीरोदशायिने ॥ १० ॥
देवाश्चाप्यसुरग्रस्तं राज्यं प्रापुश्च तद्वरात् ।
तां संपूज्य च संस्तूय सर्वत्र च निरापदः ॥ ११ ॥

नारद उवाच ।

कथं शशाप दुर्वासा मुनिश्रेष्ठः पुरन्दरम् ।
केन दोषेण वा ब्रह्मन् ब्रह्मिष्ठं ब्रह्मवित् पुरा ॥ १२ ॥
ममन्थे केन रूपेण जलधिस्तैः सुरादिभिः ।
केन स्तोत्रेण सा देवी शक्रसाक्षाद् बभूव ह ॥ १३ ॥
को वा तयोश्च संवादो बभूव तद्वद प्रभो ॥ १४ ॥

नारायण उवाच ।

मधुपानप्रमत्तश्च त्रैलोक्याधिपतिः पुरा ।
क्रीड़ां चकार रहसि रम्भया सह कामुकः ॥ १५ ॥

कृत्वा क्रीडां तया सार्द्धं कामुक्याहृतचेतनः ।
तस्थौ तत्र महारण्ये कामोन्मथितचेतनः ॥ १६ ॥
कैलासशिखरं यान्तं वैकुण्ठादृषिपुङ्गवम् ।
दुर्वाससं ददर्शेन्द्रो ज्वलन्तं ब्रह्मतेजसा ॥ १७ ॥
ग्रीष्ममध्याह्नमार्त्तण्डसहस्रप्रभमीश्वरम् ।
प्रतप्तकाञ्चनाकारं जटाभारं महोज्ज्वलम् ॥ १८ ॥
शुक्लयज्ञोपवीतञ्च चीरं दण्डं कमण्डलुम् ।
महोज्ज्वलञ्च तिलकं बिभ्रतं चन्द्रसन्निभम् ॥ १९ ॥
समन्वितं शिष्यवर्गैर्वेदवेदाङ्गपारगैः ।
दृष्ट्वा ननाम शिरसा सम्भ्रमात्तं पुरन्दरः ॥ २० ॥
शिष्यवर्गञ्च भक्त्या च तुष्टाव च मुदान्वितः ।
मुनिना च सशिष्येण तस्मै दत्तं शुभाशिषम् ॥ २१ ॥
विष्णुदत्तं पारिजातपुष्पञ्च सुमनोहरम् ।
जरामृत्युरोगशोकहरं मोक्षकरं परम् ॥ २२ ॥
शक्रः पुष्पं गृहीत्वा च प्रमत्तो राजसम्पदा ।
भ्रमेण स्थापयामास तदेव हस्तिमस्तके ॥ २३ ॥
हस्ती तत्स्पर्शमात्रेण रूपेण च गुणेन च ।
तेजसा वयसा कान्त्या विष्णुतुल्यो बभूव सः ॥ २४ ॥
त्यक्त्वा शक्रं गजेन्द्रश्च जगाम घोरकाननम् ।
न शशाक महेन्द्रस्तं रक्षितुं तेजसा मुने ॥ २५ ॥
तत् पुष्पं त्यक्तवन्तञ्च दृष्ट्वा शक्रं मुनीश्वरः ।
तमुवाच महारुष्टः शशाप स रुषान्वितः ॥ २६ ॥

मुनिरुवाच ।

अरे श्रिया प्रमत्तस्त्वं कथं मामवमन्यसे ।

महत्तपुष्पं दत्तञ्च गर्वेण हस्तिमस्तके ॥ २७ ॥
विष्णोर्निवेदितं पुष्पं नैवेद्यं वा फलं जलम् ।
प्राप्तिमात्रेण भोक्तव्यं त्यागेन ब्रह्महा जनः ॥ २८ ॥
भ्रष्टश्रीर्भ्रष्टबुद्धिश्च भ्रष्टज्ञानो भवेन्नरः ।
यस्त्यजेद्विष्णुनैवेद्यं भाग्येनोपस्थितं शुभम् ॥ २९ ॥
प्राप्तिमात्रेण यो भुङ्क्ते भक्त्या विष्णुनिवेदितम् ।
पुंसां शतं समुद्धृत्य जीवन्मुक्तः स्वयं भवेत् ॥ ३० ॥
विष्णुनैवेद्यभोजी यो नित्यन्तु प्रणमेद्धरिम् ।
पूजयेत् स्तौति वा भक्त्या स विष्णुसदृशो भवेत् ॥ ३१॥
तत्स्पर्शवायुना सद्यः तीर्थौघश्च विशुध्यति ।
तत्पादरजसा मूढ़ सद्यः पूता वसुन्धरा ॥ ३२ ॥
पुंश्चल्यन्नमवीरान्नं शूद्रश्राद्धान्नमेव च ।
यद्धरेरनिवेद्यञ्च वृथामांसमभक्षकम् ॥ ३३ ॥
शिवलिङ्गप्रदत्तान्नं यदन्नं शूद्रयाजिनाम् ।
चिकित्सकद्विजानाञ्च देवलान्नं तथैव च ॥ ३४ ॥
कन्याविक्रयिणामन्नं यदन्नं योनिजीविनाम् ।
अनुष्णान्नं पर्युषितं सर्वभक्ष्यावशेषितम् ॥ ३५ ॥
शूद्रापति द्विजान्नञ्च वृषवाहद्विजान्नकम् ।
अदीक्षितद्विजान्नञ्च यदन्नं शवदाहिनाम् ॥ ३६ ॥
अगम्यागामिनाञ्चैव द्विजानामन्नमेव च ।
मित्रद्रुहां कृतघ्नानामन्नं विश्वासघातिनाम् ॥ ३७ ॥
मिथ्यासाक्षिप्रदानाञ्च ब्राह्मणानां तथैव च ।
एतत्सर्वं विशुद्धेत विष्णुनैवेद्यभक्षणात् ॥ ३८ ॥
विष्णुसेवी च श्वपचो वंशानां कोटिमुद्धरेत् ।

हरेरभक्तो विप्रश्च स्वञ्च रक्षितुमक्षमः ॥ ३९ ॥
अज्ञानाद् यदि गृह्णाति विष्णोर्निर्माल्यमेव च ।
सप्तजन्मार्जितात् पापात् मुच्यते नात्र संशयः ॥ ४० ॥
ज्ञात्वा भक्त्या च गृह्णाति विष्णोर्नैवेद्यमेव च ।
कोटिजन्मार्जितात् पापात् मुच्यते नात्र संशयः ॥४१॥
यस्मात् संस्थापितं पुष्पं गर्वेण हस्तिमस्तके ।
तस्माद् युष्मान् परित्यज्य यातु लक्ष्मीर्हरेः पदम् ॥४२॥
नारायणस्य भक्तोऽहं न बिभेमीश्वरं विधिम् ।
कालं मृत्युं जराञ्चैव कानन्यान् गणयामि च ॥ ४३ ॥
किं करिष्यति ते तातः कश्यपश्च प्रजापतिः ।
बृहस्पतिर्गुरुश्चैव निःशङ्कस्य च मे हरे ॥ ४४ ॥
इदं पुष्पं यस्य मूर्ध्नि तस्यैव पूजनं पुरः ।
मूर्ध्नि च्छिन्ने शिवशिशोश्छित्वेदं योजयिष्यति ॥ ४५ ॥
इति श्रुत्वा महेन्द्रश्च धृत्वा तच्चरणद्वयम् ।
उच्चैररोद शोकार्त्तः तमुवाच भयाकुलः ॥ ४६ ॥

इन्द्र उवाच ।

दत्तः समुचितः शापो मह्यं मत्ताय हे प्रभो ।
हृता त्वया चेत् सम्पत्तिः कियत् ज्ञानञ्च देहि मे ॥४७॥
ऐश्वर्यं विपदां बीजं प्रच्छन्नज्ञानकारणम् ।
मुक्तिमार्गार्गलं दार्ढ्यं हरिभक्तिव्यवायकम् ॥ ४८ ॥
जन्ममृत्युजरारोगशोकदुःखाङ्कुरं परम् ।
सम्पत्तितिमिरान्धश्च मुक्तिमार्गं न पश्यति ॥ ४९ ॥
सम्पन्मत्तः मूढ़श्च सुरामत्तः सचेतनः ।
बान्धवैर्वेष्टितः सोऽपि बन्धुद्वेषकरो मुने ॥ ५० ॥

सम्पन्मदे प्रमत्तश्च विषयान्धश्च विह्वलः ।
महाकामी राजसिकः सत्त्वमार्गं न पश्यति ॥ ५१ ॥
द्विविधो विषयान्धश्च राजसस्तामसः स्मृतः ।
अशास्त्रज्ञस्तामसश्च शास्त्रज्ञो राजसः स्मृतः ॥ ५२ ॥
शास्त्रे च द्विविधं मार्गं निर्दिष्टं मुनिपुङ्गव ।
प्रवृत्ति वीजमेकञ्च निवृत्तेः कारणं परम् ॥ ५३ ॥
चरन्ति जीविनश्चादौ प्रवृत्तौ दुःखवर्त्मनि ।
स्वच्छन्दे च प्रसन्ने च निर्विरोधे च सन्ततम् ॥ ५४ ॥
आपातमधुरे लोभात् क्लेशे च सुखमानिनः ।
परिणामनाशवीजे जन्ममृत्युजराकरे ॥ ५५ ॥
अनेकजन्मपर्य्यन्तं कृत्वा च भ्रमणं मुदा ।
स्वकर्मविहितायाञ्च नानायोन्यां क्रमेण च ॥ ५६ ॥
ततः कृष्णानुग्रहाच्च सत्सङ्गं लभते जनः ।
सहस्रेषु शतेष्वेको भवाब्धि पारकारणम् ॥ ५७ ॥
साधुः सत्त्वप्रदीपेन मुक्तिमार्गं प्रदर्शयेत् ।
तदा करोति यत्नञ्च जीवी बन्धनखण्डने ॥ ५८ ॥
अनेकजन्मयोगेन तपसानशनेन च ।
तदा लभेन्मुक्तिमार्गं निर्विघ्नं सुखदं परम् ॥ ५९ ॥
इदं श्रुतं गुरोर्वक्त्रात् प्रसङ्गावसरेण च ।
न हि पृष्ट मतोऽन्यच्च भवजञ्जालवेष्टितः ॥ ६० ॥
अधुना विधिना दत्तौ विपत्तौ ज्ञानसागरः ।
सम्पद्रूपा विपदियं मम निस्तारकारिणी ॥ ६१ ॥
ज्ञानसिन्धो दीनबन्धो मह्यं दीनाय साम्प्रतम् ।
देहि किञ्चित् ज्ञानसारं भवपारं दयानिधे ॥ ६२ ॥

इन्द्रस्य वचनं श्रुत्वा प्रहस्य ज्ञानिनां गुरुः।
ज्ञानं कथितु मारेभे ह्यतितुष्टः सनातनः॥ ६३॥

मुनिरुवाच।

अहो महेन्द्र माङ्गल्यं मार्गेष्टं द्रष्टुमिच्छसि।
आपातदुःखवीजञ्च परिणाम सुखावहम्॥ ६४॥
स्वगर्भयातनानाशपीड़ाखण्डनकारणम्।
दुष्पारासारदुर्वार-संसारार्णवतारणम्॥ ६५॥
कर्मवृक्षाङ्कुरच्छेदकारणं सर्वतारणम्।
सन्तोषसन्ततिकरं प्रवरं सर्ववर्त्मनाम्॥ ६६॥
दानेन तपसा वापि व्रतेनानशनादिना।
कर्मणा स्वर्गभोगादिसुखं भवति जीविनाम्॥ ६७॥
पूर्वकाम्यकर्मणाञ्च मूलं संछिद्य यत्नतः।
अधुनेदं मोक्षवीजं संकल्पाभाव एव च॥ ६८॥
यत्कर्म सात्विकं कुर्यादसंकल्पितमेव च।
सर्वं कृष्णार्पणं कृत्वा परे ब्रह्मणि लीयते॥ ६९॥
संसारिकाणामेतत्तु निर्वाणमोक्षणं विदुः।
नेच्छन्ति वैष्णवास्तत्तु सेवा विरहकातराः। ७०॥
सेवां कुर्वन्ति ते नित्यं विधाय देहमुत्तमम्।
गोलोके वापि वैकुण्ठे तस्यैव परमात्मनः॥ ७१॥
हरिसेवादिरूपाञ्च मुक्तिमिच्छन्ति वैष्णवाः।
जीवन्मुक्ताश्च ते शक्र स्वकुलोद्धारकारिणः॥ ७२॥
स्मरणं कीर्त्तनं विष्णोरर्चनं पादसेवनम्।
वन्दनं स्तवनं नित्यं भक्त्या नैवेद्यभक्षणम्॥ ७३॥
चरणोदकपानञ्च तन्मन्त्रजपनं परम्।

इदं निस्तारवीजञ्च सर्वेषामीप्सितं भवेत् ॥ ७४ ॥
इदं मृत्युञ्जयं ज्ञानं दत्तं मृत्युञ्जयेन मे ।
तच्छिष्योऽहञ्च निःशङ्कः तत् प्रसादाच्च सर्वतः ॥७५॥
स जन्मदाता स गुरुः स च बन्धुः सतां परः ।
यो ददाति हरेर्भक्तिं त्रैलोक्ये च सुदुर्लभाम् ॥७६॥
दर्शयेदन्यमार्गञ्च श्रीकृष्णसेवनं विना ।
स च तं नाशयत्येव ध्रुवं तद्वधभाग् भवेत् ॥ ७७ ॥
सन्ततं जगतां कृष्णनाम मङ्गलकारणम् ।
मङ्गलं वर्द्धते नित्यं न भवेदायुषो व्ययः ॥ ७८ ॥
तेभ्योऽप्यपैति कालश्च मृत्युश्च रोग एव च ।
सन्तापश्चैव शोकश्च वैनतेयादिवोरगाः ॥ ७९ ॥
कृष्णमन्त्रोपासकश्च ब्राह्मणः श्वपचोऽपि वा ।
ब्रह्मलोकं समुल्लङ्घ्य याति गोलोकमुत्तमम् ॥ ८० ॥
ब्रह्मणा पूजितः सोऽपि मधुपर्कादिना च वै ।
स्तुतः सुरैश्च सिद्धैश्च परमानन्दभावनः ॥ ८१ ॥
ज्ञानसारं तपःसारं ब्रह्मसारं परं शिवम् ।
शिवेनोक्तं योगसारं श्रीकृष्णपादसेवनम् ॥ ८२ ॥
ब्रह्मादितृणपर्य्यन्तं सर्वं मिथ्यैव स्वप्नवत् ।
भज सत्यं परं ब्रह्म राधेशं प्रकृतेः परम् ॥ ८३ ॥
अतीव सुखदं सारं भक्तिदं मुक्तिदं परम् ।
सिद्धियोगप्रदञ्चैव दातारं सर्वसम्पदाम् ॥ ८४ ॥
योगिनामपि सिद्धानां यतीनाञ्च तपस्विनाम् ।
सर्वेषां कर्मभागोऽस्ति न नारायणसेविनाम् ॥ ८५
भक्तस्मात् भवेत् पापं यदुपस्पर्शमात्रतः ।

ज्वलदग्नौ पातितञ्च यथा शुष्केन्धनं तथा ॥ ८६ ॥
ततो रोगा हि वेपन्ते पापानि च भयानि च ।
दूरतश्च पलायन्ते यमदूता यतो भयात् ॥ ८७ ॥
तावन्निबद्धः संसारे कारागारे विधेर्जनः ।
न यावत् कृष्णमन्त्रञ्च प्राप्नोति गुरुवक्त्रतः ॥ ८८ ॥
कृतकर्मभोगरूप निगड़च्छेदकारणम् ।
मायाजालोच्छेदकरं मायापाश निकृन्तनम् ॥८९॥
गोलोकमार्गसोपानं निस्तारवीजकारणम् ।
भक्त्यङ्कुरस्वरूपञ्च नित्यं हृष्टमनश्वरम् ॥ ९० ॥
सारञ्च सर्वतपसां योगानाञ्च तथैव च ।
सिद्धीनां वेदपाठानां व्रतादीनाञ्च निश्चितम् ॥९१॥
दानानां तीर्थस्नानानां यज्ञादीनां पुरन्दर ।
पूजानामुपवासाना मित्याह कमलोद्भवः ॥ ९२ ॥
पुंसां लक्षपितॄणाञ्च शतं मातामहस्य च ।
पूर्वं परञ्च तत् संख्यं पितरं मातरं गुरुम् ॥ ९३ ॥
सहोदरं कलत्रञ्च बन्धुं शिष्यञ्च किङ्करम् ।
समुद्धरेच्च श्वशुरं श्वश्रूं कन्याञ्च तत् सुतम् ॥ ९४ ॥
स्वात्मानञ्च सतीर्थञ्च गुरुपत्नीं गुरोः सुतम् ।
समुद्धरेद् बलवान् भक्तो मन्त्रग्रहणमात्रतः ॥ ९५ ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ।
तत्स्पर्शपूतस्तीर्थौघः सद्यःपूता वसुन्धरा ॥ ९६ ॥
अनेकजन्मपर्य्यन्तं दीक्षाहीनो भवेन्नरः ।
तदन्यदेवमन्त्रञ्च लभते पुण्ययोगतः ॥ ९७ ॥
सप्तजन्मोपदेवानां कृत्वा सेवां स्वकर्मतः ।

लभते च रवेर्मन्त्रं साक्षिणः सर्वकर्म्मणाम् ॥ ९८ ॥
जन्मत्रयं भास्करञ्च निषेव्य मानवः शुचिः ।
लभेद्गणेशमन्त्रञ्च सर्वविघ्नहरं परम् ॥ ९९ ॥
जन्मत्रयं तं निषेव्य निर्विघ्नश्च भवेन्नरः ।
विघ्नेशस्य प्रसादेन दिव्यज्ञानं लभेन्नरः ॥ १०० ॥
तदा ज्ञानप्रदीपेन समालोच्य महामतिः ।
अज्ञानान्धतमश्छित्वा महामायां भजेन्नरः ॥ १०१ ॥
विष्णुमायाञ्च प्रकृतिं दुर्गां दुर्गतिनाशिनीम् ।
सिद्धिदां सिद्धिरूपाञ्च परमां सिद्धियोगिनीम् ॥१०२॥
वाणीरूपाञ्च पद्माञ्च भद्रां कृष्णप्रियात्मिकाम् ।
नानारूपां तां निषेव्य जन्मनां शतकं नरः ॥१०३॥
तत्प्रसादाल्लभेत् ज्ञानी ज्ञानानन्दं तदा भजेत् ।
कृष्णज्ञानाधिदेवञ्च महादेवं सनातनम् ॥ १०४ ॥
शिवं शिवस्वरूपञ्च शिवदं शिवकारणम् ।
परमानन्दरूपञ्च परमानन्ददायिनम् ॥ १०५ ॥
सुखदं मोक्षदं चैव दातारं सर्वसम्पदाम् ।
अमरत्वप्रदञ्चैव दीर्घमायुष्प्रदं परम् ॥ १०६ ॥
इन्द्रत्वञ्च मनुत्वञ्च दातुं शक्तञ्च लीलया ।
राजेन्द्रत्वप्रदञ्चैव ज्ञानदं हरिभक्तिदम् ॥ १०७ ॥
जन्मत्रयं तमाराध्य चाशुतोषप्रसादतः ।
सर्वदस्य प्रसादेन शङ्करस्य महात्मनः ॥ १०८ ॥
वरदस्य वरेणैव हरिभक्तिं लभेद् ध्रुवम् ।
तदा तद्भक्तसंसर्गात् कृष्णमन्त्रं लभेद् ध्रुवम् ॥१०९॥
निर्म्मलज्ञानदीपेन प्रदीप्तेन च तत्त्ववित् ।

ब्रह्मादितृणपर्य्यन्तं सर्वं मिथ्यैव पश्यति ॥ ११० ॥
दयानिधेः प्रसादेन निर्म्मलज्ञानमालभेत् ।
वरदस्य वरेणैव हरिभक्तिं लभेद् ध्रुवम् ॥ १११ ॥
तदा निवृत्तिं माप्नोति सारात्सारां परात्परम् ।
यत्र देहे लभेन्मन्त्रं तद्देहावधि भारते ॥ ११२ ॥
तत्पाञ्चभौतिकं त्यक्त्वा बिभर्त्ति दिव्यरूपकम् ।
करोति दास्यं गोलोके वैकुण्ठे वा हरेः पदे ॥११३॥
परमानन्दसंयुक्तो मोहादिषु विवर्जितः ।
न विद्यते पुनर्जन्म पुनरागमनं हरे ॥ ११४ ॥
पुनश्च न पिबेत् क्षीरं दृत्वा मातृस्तनं परम् ।
विष्णुमन्त्रोपासकानां गङ्गादितीर्थसेविनाम् ॥ ११५ ॥
स्वधर्म्मिणाञ्च भिक्षूणां पुनर्जन्म न विद्यते ।
तीर्थे परित्यजेत् पापं क्रियां कृत्वा हरिं भजेत् ॥११६॥
अयं निरूपितो धात्रा स्वधर्मस्तीर्थसेविनाम् ।
तन्नाममन्त्रं प्रजपेत् तत्सेवादिषु तत्परः ॥ ११७ ॥
तद्व्रतोपवासरत इत्युक्तो विष्णुसेविनाम् ।
सदन्ने वा कदन्ने वा लोष्ट्रे वा काञ्चने तथा ॥ ११८ ॥
समबुद्धिर्यस्य शश्वत् स सन्न्यासीति कीर्त्तितः ।
दण्डं कमण्डलुं रक्तवस्त्रमात्रञ्च धारयेत् ॥ ११९ ॥
नित्यं प्रवासी नैकत्र स सन्न्यासीति कीर्त्तितः ।
शुद्धाचारद्विजान्नञ्च भुङ्क्ते लोभादिवर्जितः ॥ १२० ॥
किन्तु किञ्चिन्न याचेत स सन्न्यासीति कीर्त्तितः ।
न व्यापारी नाश्रमी च सर्वकर्मविवर्जितः ॥ १२१ ॥
ध्यायेन्नारायणं शश्वत् स सन्न्यासीति कीर्त्तितः ।

शश्वन्मौनी ब्रह्मचारी संभाषापरिवर्जितः ॥ १२२ ॥
सर्वं ब्रह्ममयं पश्येत् स सन्न्यासीति कीर्त्तितः ।
सर्वत्र समबुद्धिश्च हिंसामायादिवर्जितः ॥ १२३ ॥
क्रोधाहङ्काररहितः स सन्न्यासीति कीर्त्तितः ।
अयाचितोपस्थितञ्च मिष्टामिष्टञ्च भुक्तवान् ॥ १२४ ॥
न याचते भक्षणार्थी स सन्न्यासीति कीर्त्तितः ।
न च पश्येन्मुखं स्त्रीणां न तिष्ठेत्तत्समीपतः ॥ १२५ ॥
दारवीमपि योषाञ्च न स्पृशेत् यः स भिक्षुकः ।
अयं सन्न्यासिनां धर्म इत्याह कमलोद्भवः ॥ १२६ ॥
विपर्य्यये विनाशश्च जन्म याम्यं भयं भवेत् ।
जन्मदुःखं याम्य दुःखं जीविनामतिदारुणम् ॥ १२७॥
सुरशूकरयोनौ वा गर्भे दुःखं समं सुर ।
योनौ वा क्षुद्रजन्तूनां पश्वादीनां तथैव च ॥ १२८ ॥
गर्भे स्मरन्ति सर्वे ते कर्म्म जन्मशतोद्भवम् ।
विस्मरेन्निर्गतो जीवो गर्भाच्च विष्णुमायया ।
स्वदेहं पाति यत्नेन सुरो वा कीट एव वा ॥ १२९ ॥
योनेरभ्यन्तरे शुक्रे पतिते पुरुषस्य च ।
शुक्रः शोणितयुक्तश्च सहसा तत्क्षणं भवेत् ॥ १३० ॥
रक्ताधिके मातृसमश्चेतरे पितुराकृतिः ।
युग्माहे च भवेत् पुत्रः कन्यका तद्विपर्य्यये ॥ १३१ ॥
रविभौमगुरूणाञ्च वारे चेत्तद्भवेत् सुतः ।
अयुग्माहे तदितरे वारे च कन्यका भवेत् ॥ १३२ ॥
प्रथमप्रहरे जन्म यस्य सोऽल्पायुरेव च ।
द्वितीये मध्यमश्चैव तृतीये तत्परो भवेत् ॥ १३३ ॥

चतुर्थे चिरजीवी च क्षणानुरूपको भवेत्।
दुःखी वाथ सुखी वापि पूर्वकर्मानुरूपतः॥ १३४॥
यादृशे च क्षणे जन्म प्रसवस्तादृशे भवेत्।
प्रसूतिक्षणचर्चाञ्च कुर्वन्त्येव विचक्षणाः॥ १३५॥
कललन्त्वेकरात्रेण वर्द्धयेच्च दिने दिने।
सप्तमे वदराकारो मासे गण्डुसमो भवेत्॥ १३६॥
मासत्रये मांसपिण्डो हस्तपादादिवर्जितः।
सर्वावयवसम्पन्नो देही मासे च पञ्चमे॥ १३७॥
भवेत्तु जीवसञ्चारः षण्मासे सर्वतत्त्ववित्।
दुःखी स्वल्पस्थलस्थायी शकुन्त इव पिञ्जरे॥ १३८॥
मातृजग्धान्नपानञ्च भुङ्क्ते मेध्यस्थले स्थितः।
हाहेति शब्दं कृत्वा च चिन्तयेदीश्वरं परम्॥ १३९॥
एवञ्च चतुरो मासान् भुक्त्वा परमयातनाम्।
प्रेरितो वायुना काले गर्भाच्च निर्गतो भवेत्॥ १४०॥
दिग्देशकालाव्युत्पन्नो विस्मृतो विष्णुमायया।
शश्वद्दिवसमूत्रसंयुक्तः शिशुश्च शैशवावधि॥ १४१॥
पराधीनोऽप्यक्षमश्च मशकादिनिवारणे।
कीटादिभुक्तो दुःखी च रौति तत्र पुनः पुनः॥१४२॥
स्तनान्धोऽप्यसमर्थश्च याच्ञां कर्त्तुमभीप्सिताम्।
न वाणी निःसरेत्तस्य पौगण्डावधि प्रस्फुटा॥१४३॥
पौगण्डे यातनां भुक्त्वा प्राप्नोति यौवनं पुनः।
न स्मरेन्मायया देही गर्भादियातनां पुनः॥ १४४॥
आहारमैथुनार्त्तश्च नानामोहादिवेष्टितः।
पुत्रं कलत्रमतुलं यत्नेन परिपालयेत्॥ १४५॥

एवं यावत् समर्थश्च तावदेव हि पूजितः।
असमर्थञ्च मन्यन्ते बान्धवा गोजरं यथा॥ १४६॥
यदातीव जरायुक्तो जड़ोऽतिबधिरो भवेत्।
कासश्वासादियुक्तश्च परायत्तोऽतिमूढ़वत्॥ १४७॥
तदन्तरेऽनुतापञ्च करोति सन्ततं पुनः।
न सेवितो हरेस्तीर्थं सत्सङ्गश्चापि कामतः॥ १४८॥
पुनश्च मानवीं योनिं लभामि भारते यदि।
तदा तीर्थं गमिष्यामि भजामि कृष्णमित्यहो॥१४९॥
इत्येवमादि मनसि कुर्वन्तं तं जड़ं सुर।
गृह्णाति यमदूतश्च काले प्राप्तेऽतिदारुणः॥ १५०॥
स पश्येद्यमदूतञ्च पाशहस्तञ्च दण्डिनम्।
अतीवकोपरक्ताक्षं विकृताकारमुल्वणम्॥ १५१॥
दुर्निवार्य्यमुपायैश्च बलिष्ठञ्च भयङ्करम्।
दुर्दृष्टं सर्वसिद्धिघ्नं सर्वादृष्टं पुरः स्थितम्॥ १५२॥
दृष्टिमात्रान्महाभीतो विण्मूत्रञ्च समुत्सृजेत्।
तदा प्राणांस्त्यजेत् सद्यो देहञ्च पाञ्चभौतिकम्॥१५३॥
अङ्गुष्ठमात्रं पुरुषं गृहीत्वा यमकिङ्करः।
विन्यस्य भोगदेहे च स्वस्थानं प्रापयेत् द्रुतम्॥ १५४॥
जीवो गत्वा यमं पश्येत् सर्वधर्मज्ञमेव च।
रत्नसिंहासनस्थञ्च सस्मितं सुस्थिरं परम्॥ १५५॥
धर्माधर्मविचारज्ञं सर्वज्ञं सर्वतोमुखम्।
विश्वे विकाधिकारञ्च विधात्रा निर्मितं पुरा॥ १५६॥
वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम्।
वेष्टितं पार्षदगणैर्दूतैश्चापि त्रिकोटिभिः॥ १५७॥

जपन्तं श्रीकृष्णनाम शुद्धस्फाटिकमालया ।
ध्यायमानं तत्पदाब्जं पुलकाङ्कितविग्रहम् ॥१५८॥
सगद्गदं साश्रुनेत्रं सर्वत्र समदर्शिनम् ।
अतीव कमनीयञ्च शश्वत्सुस्थिरयौवनम् ॥ १५९ ॥
स्वतेजसा प्रज्वलन्तं सुखदृश्यं विचक्षणम् ।
शरत्पार्वणचन्द्राभं चित्रगुप्त पुरःस्थितम् ॥ १६० ॥
पुण्यात्मनां शान्तरूपं पापिनाञ्च भयङ्करम् ।
तं दृष्ट्वा प्रणमेद्देही महाभीतश्च तिष्ठति ॥ १६१ ॥
चित्रगुप्तविचारेण येषां यदुचितं फलम् ।
शुभाशुभञ्च कुरुते तदेव रविनन्दनः ॥ १६२ ॥
एवं तेषां गतायाते निवृत्तिर्नास्ति जीविनाम् ।
निवृत्तिहेतुरूपञ्च श्रीकृष्णपादसेवनम् ॥ १६३ ॥
इत्येवं कथितं सर्वं वरं प्रार्थय वाञ्छितम् ।
सर्वं दास्यामि ते वत्स न मेऽसाध्यञ्च किञ्चन ॥ १६४ ॥

महेन्द्र उवाच ।

इन्द्रत्वञ्च गतं भद्रं किमैश्वर्य्यं प्रयोजनम् ।
कल्पवृक्ष मुनिश्रेष्ठ देहि मे परमं पदम् ॥ १६५ ॥
महेन्द्रस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः ।
तमुवाच वचः सत्यं वेदोक्तं सारमेव च ॥ १६६ ॥

मुनिरुवाच ।

परं पदं विषयिणां महेन्द्रातिसुदुर्लभम् ।
मुक्तिर्यद्विधानाञ्च न लये प्राकृतेऽपि च ॥ १६७ ॥
आविर्भावः सृष्टिविधौ तिरोभावो लयेऽपि च ।

यथा जागरणं सुप्तिर्भवत्येव क्रमेण च ॥ १६८ ॥
यथा भ्रमति कालश्च तथा विषयिणो ध्रुवम् ।
चक्रनेमिक्रमेणैव नित्यमेवेश्वरेच्छया ॥ १६९ ॥
पलमेकं भवेदेव यथा विपलषष्टिभिः ।
षष्टिभिश्च पलैर्दण्डो मुहूर्त्तो द्विगुणात्ततः ॥ १७० ॥
त्रिंशद्भिश्च मुहूर्त्तैश्च भवेदेव दिवानिशम् ।
दशपञ्चदिवारात्रिः पक्षमेकं विदुर्बुधाः ॥ १७१ ॥
पक्षाभ्यां शुक्लकृष्णाभ्यां मास एव विधीयते ।
ऋतुर्द्वाभ्याञ्च मासाभ्यां संख्याविद्भिः प्रकीर्त्तितः ॥१७२
ऋतुत्रयेणायनञ्च ताभ्यां द्वाभ्याञ्च वत्सरः ।
विंशसहस्राधिकैव त्रिचत्वारिंशल्लक्षकैः ॥ १७३ ॥
वत्सरैर्नरमानैश्च युगाश्चत्वार एव च ।
षष्ठ्यधिके पञ्चशते सहस्रे पञ्चविंशती ।
युगे नराणां शक्रायुर्मनोरायुः प्रकीर्त्तितम् ॥ १७४ ॥
दिग्वतेन्द्रनिपातेऽष्टसहस्राधिक एव च ॥ १७५ ॥
निपातो ब्रह्मणस्तत्र भवेत् प्राकृतिको लयः ।
लये प्राकृतिके वत्स कृष्णस्य परमात्मनः ॥ १७६ ॥
चक्षुर्निमेषः सृष्टिश्च पुनरुन्मीलने तथा ।
ब्रह्मसृष्टिलयानाञ्च संख्या नास्ति श्रुतौ श्रुतम् ॥१७७॥
यथा पृथिव्या रेणूनामित्याह चन्द्रशेखरः ।
एतेषां मोक्षणं नास्ति कथितानि च यानि च ॥१७८॥
सृष्टिसूत्रस्वरूपं हि चान्यत् वृणु वरं सुर ।
मुनीन्द्रस्य वचः श्रुत्वा देवेन्द्रो विस्मितो मुने ॥ १७९ ॥
आत्मनः पूर्वमैश्वर्य्यं वरयामास तत्र वै ।

तत् प्राप्सास्य चिरेणैवेत्युक्ता स प्रययौ गृहम् ॥ १८० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे मुनीन्द्र-
सुरेन्द्रसंवादे लक्ष्म्युपाख्याने
षट्त्रिंशोऽध्यायः ।

---

## सप्तत्रिंशोऽध्यायः ।

---

नारद उवाच ।

हरेर्गुणं समाकर्ण्य ज्ञानं प्राप्य पुरन्दरः ।
किञ्चकार गृहं गत्वा तन्मे व्याख्यातुमर्हसि ॥ १ ॥

नारायण उवाच ।

श्रीकृष्णस्य गुणं श्रुत्वा वीतरागो बभूव सः ।
वैराग्यं वर्द्धयामास तदा ब्रह्मन् दिने दिने ॥ २ ॥
मुनिस्थानाद् गृहं गत्वा स ददर्शामरावतीम् ।
दैत्यैरसुरसङ्घैश्च समाकीर्णां भयाकुलाम् ॥ ३ ॥
विषमस्थान्धवां कुत्र बन्धुहीनाञ्च कुत्रचित् ।
पितृमातृकलत्रादि विहीनामतिचञ्चलाम् ॥ ४ ॥
श्रवदुश्त्राञ्च तां दृष्ट्वा जगाम वाक्पतिं प्रति ।
शक्रो मन्दाकिनीतीरे ददर्श गुरुमीश्वरम् ॥ ५ ॥
ध्यायमानं परं ब्रह्म गङ्गातोये स्थितं परम् ।
सूर्याभिसंमुखं पूर्वमुखञ्च विश्वतोमुखम् ॥ ६ ॥

साश्रुनेत्रं पुलकितं परमानन्दसंयुतम् ।
वरिष्ठञ्च गरिष्ठञ्च धर्मिष्ठमिष्टसेविनम् ॥ ७ ॥
श्रेष्ठञ्च बन्धुवर्गाणामतिश्रेष्ठञ्च ज्ञानिनाम् ।
ज्येष्ठञ्च बन्धुवर्गाणां नेष्टञ्च सुरवैरिणाम् ॥ ८ ॥
दृष्ट्वा गुरुं जगन्तञ्च तत्र तस्थौ सुरेश्वरः ।
प्रहरान्ते गुरुं दृष्ट्वा चोत्थितं प्रणनाम सः ॥ ९ ॥
प्रणम्य चरणाम्भोजे रुरोदोच्चैर्मुहुर्मुहुः ।
वृत्तान्तं कथयामास ब्रह्मशापादिकं तथा ॥ १० ॥
पुनर्वरो मया लब्धो ज्ञानप्राप्तिं सुदुर्लभाम् ।
वैरग्रस्ताञ्च स्वपुरीं क्रमेणैव सुरेश्वरः ॥ ११ ॥
शिष्यस्य वचनं श्रुत्वा सतां बुद्धिमतां वरः ।
बृहस्पतिरुवाचेदं कोपरक्ताक्तलोचनः ॥ १२ ॥

गुरुरुवाच ।

श्रुतं सर्वं सुरश्रेष्ठ मारोदीर्वचनं शृणु ।
न कातरो हि नीतिज्ञो विपत्तौ च कदाचन ॥१३॥
सम्पत्तिर्वा विपत्तिर्वा नश्वरा स्वप्नरूपिणी ।
पूर्वं स्वकर्मायत्ता च स्वयं कर्त्ता तयोरपि ॥ १४ ॥
सर्वेषाञ्च भ्रमत्येव शश्वज्जन्मनि जन्मनि ।
चक्रनेमि क्रमेणैव तत्र का परिदेवना ॥ १५ ॥
भुङ्क्ते हि स्वकृतं कर्म सर्वत्र चापि भारते ।
शुभाशुभञ्च यत् किञ्चित् स्वकर्मफलभुक् पुमान् ॥ १६ ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ १७ ॥

इत्येवमुक्तं वेदे च कृष्णेन परमात्मना ।
साम्नि कौथुमशाखायां संबोध्य स्वकुलोद्भवम् ॥ १८ ॥
जन्मभोगावशेषे च सर्वेषां कृतकर्मणाम् ।
अनुरूपञ्च तेषाञ्च भारतेऽन्यत्र चैव हि ॥ १९ ॥
कर्मणा ब्रह्मशापञ्च कर्मणा च शुभाशिषम् ।
कर्मणा च महालक्ष्मीं लभेत् दैन्यञ्च कर्मणा ॥ २० ॥
कोटिजन्मार्जितं कर्म जीविनामनुगच्छति ।
न हि त्यजेद्विना भोगात् तं छायेव पुरन्दर ॥ २१ ॥
कालभेदे देशभेदे पात्रभेदे च कर्मणाम् ।
न्यूनताधिकता वापि भवेदेव हि कर्मणाम् ॥ २२ ॥
वस्तुदाने च वस्तूनां समं पुण्यं समे दिने ।
दिनभेदे कोटिगुणमसंख्यं वाधिकं ततः ॥ २३ ॥
समे देशे च वस्तूनां दाने पुण्यं समं सुर ।
देशभेदे कोटिगुणमसंख्यं वाधिकं ततः ॥ २४ ॥
समे पात्रे समं पुण्यं वस्तूनां कर्त्तुरेव च ।
पात्रभेदे शतगुणमसंख्यं वा ततोऽधिकम् ॥ २५ ॥
यथा फलन्ति शस्यानि न्यूनानि वाधिकानि च ।
कृषकाणां क्षेत्रभेदे पात्रभेदे फलं तथा ॥ २६ ॥
सामान्यदिवसे विप्रे दानं समफलं भवेत् ।
अमायां रविसंक्रान्त्यां फलं शतगुणं भवेत् ।
चातुर्मास्यां पौर्णमास्यामनन्तफलमेव च ॥ २७ ॥
ग्रहणे शशिनः कोटिगुणञ्च फलमेव च ।
सूर्य्यस्य ग्रहणे चापि ततो दशगुणं फलम् ॥ २८ ॥
अक्षयायामक्षयञ्च वासंख्यं फलमुच्यते ।

एवमन्यत्र पुण्याहे फलाधिक्यं भवेदिह ॥ २९ ॥
यथा दाने तथा स्नाने जपेऽन्य पुण्यकर्मसु ।
एवं सर्वत्र बोद्धव्यं नराणां कर्मणां फलम् ॥ ३० ॥
सामान्यदेशे दानञ्च विप्रे समफलं भवेत् ।
तीर्थे देवगृहे चैव फलं शतगुणं स्मृतम् ॥ ३१ ॥
गङ्गायाञ्च कोटिगुणं क्षेत्रे नारायणेऽव्ययम् ।
कुरुक्षेत्रे वदर्य्याञ्च काश्यां कोटिगुणं तथा ॥ ३२ ॥
यथा चैव कोटिगुणं तथा च विष्णुमन्दिरे ।
केदारे च लक्षगुणं हरिद्वारे तथा फलम् ॥ ३३ ॥
पुष्करे भास्करक्षेत्रे दशलक्षगुणं फलम् ।
एवं सर्वत्र बोद्धव्यं फलाधिक्यं क्रमेण च ॥ ३४ ॥
सामान्यब्राह्मणे दानं सममेव फलं लभेत् ।
लक्षं त्रिसन्ध्यपूते च पण्डिते च जितेन्द्रिये ॥ ३५ ॥
विष्णुमन्त्रोपासके च बुधे कोटिगुणं फलम् ।
एवं सर्वत्र बोध्यव्यं फलाधिक्यं गुणाधिके ॥ ३६ ॥
यथा दण्डेन सूत्रेण शरावेण जलेन च ।
कुम्भं निर्माति चक्रेण कुम्भकारी सदा भुवि ॥ ३७ ॥
तथैव कर्मसूत्रेण फलं धाता ददाति च ।
यस्याज्ञया सृष्टिविधौ तञ्च नारायणं भज ॥ ३८ ॥
स विधाता विधातुश्च पातुः पाता जगत्त्रये ।
स्रष्टुः स्रष्टा च संहर्त्तुः संहर्त्ता कालकालकः ॥ ३९ ॥
महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम् ।
विपत्तौ तस्य सम्पत्तिर्भवेदित्याह शङ्करः ॥ ४० ॥
इत्येवं श्रुत्वा जीवश्च दत्वा शिक्षां सुरेश्वरम् ।

दत्वा शुभाशिषं चेष्टं बोधयामास नारद ॥ ४१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदीये बृहस्पतिमहेन्द्रसंवादे महालक्ष्म्यु-
पाख्याने सप्तत्रिंशत्तमोऽध्यायः ।

---

## अष्टत्रिंशोऽध्यायः ।

---

नारायण उवाच ।

हरिं ध्यात्वा हरिर्ब्रह्मन् जगाम ब्रह्मणः सभाम् ।
बृहस्पतिं पुरस्कृत्य सर्वैः सुरगणैः सह ॥ १ ॥
शीघ्रं गत्वा ब्रह्मलोकं दृष्ट्वा च कमलोद्भवम् ।
प्रणेमुर्देवताः सर्वाः गुरुणा सह नारद ॥ २ ॥
वृत्तान्तं कथयामास सुराचार्य्यो विधिं विभुम् ।
प्रहस्योवाच तत् श्रुत्वा महेन्द्रं कमलोद्भवः ॥ ३ ॥

ब्रह्मोवाच ।

वत्स मद्वंशजातोऽसि प्रपौत्रो मे विचक्षणः ।
बृहस्पतेश्च शिष्यस्त्वं सुराणामधिपः स्वयम् ॥ ४ ॥
मातामहस्ते दक्षश्च विष्णुभक्तः प्रतापवान् ।
कुलत्रयं यच्छुद्धञ्च कथं सोऽहङ्कृतो भवेत् ॥ ५ ॥
माता पतिव्रता यस्य पिता शुद्धो जितेन्द्रियः ।
मातामहो मातुलश्च कथं सोऽहङ्कृतो भवेत् ॥ ६ ॥

जनः पैतृकदोषेण दोषान्मातामहस्य च ।
गुरोर्दोषान्नीतिदोषैर्हरिद्वेषी भवेद् ध्रुवम् ॥ ७ ॥
सर्वान्तरात्मा भगवान् सर्वदेहेष्ववस्थितः ।
यस्य देहात् स प्रयाति स शवस्तत्क्षणं भवेत् ॥ ८ ॥
मनोऽहमिन्द्रियेशश्च ज्ञानरूपो हि शङ्करः ।
विष्णुः प्राणाश्च प्रकृतिर्बुद्धिर्भगवती सती ॥ ९ ॥
निद्रादयः शक्तयश्च ताः सर्वाः प्रकृतेः कला ।
आत्मनः प्रतिबिम्बश्च जीवो भोगी शरीरभृत् ॥ १० ॥
आत्मनीशे गते देहात् सर्वे यान्ति ससंभ्रमात् ।
यथा वर्त्मनि गच्छन्तं नरदेवमिवानुगाः ॥ ११ ॥
अहं शिवश्च शेषश्च विष्णुर्धर्मो महान् विराट् ।
वयं यदंशा भक्ताश्च तत्पुष्पं न्यक्कृतं त्वया ॥ १२ ॥
शिवेन पूजितं पादपद्मं पुष्पेण येन च ।
तच्च दुर्वाससा दत्तं दैवेन न्यक्कृतं सुर ॥ ३१ ॥
तत् पुष्पं मस्तके यस्य कृष्णपादाब्जप्रच्युतम् ।
सर्वेषाञ्च सुराणाञ्च तत् पूजा पुरतो भवेत् ॥ १४ ॥
दैवेन वञ्चितस्त्वञ्च दैवञ्च बलवत्तरम् ।
भाग्यहीनं जनं मूढं कोवा रक्षितुमीश्वरः ॥ १५ ॥
कृष्णं न मन्यते यो हि श्रीनाथं सर्ववन्दितम् ।
प्रयाति रुष्टा तद्दासी महालक्ष्मीर्विहाय ताम् ॥ १६ ॥
शतयज्ञेन या लब्धा दीक्षितेन त्वया पुरा ।
सा श्रीर्गताधुना कोपात् कृष्णनिर्माल्यवर्जनात् ॥१७॥
अधुना गच्छ वैकुण्ठं मया च गुरुणा सह ।
निषेव्य तत्र श्रीनाथं श्रियं प्राप्स्यसि तद्वरात् । १८ ॥

इत्येवमुक्त्वा स ब्रह्मा सर्वैः सुरगणैः सह ।
शीघ्रं जगाम वैकुण्ठं यत्र श्रीशस्तया सह ॥ १९ ॥
तत्र गत्वा परं ब्रह्म भगवन्तं सनातनम् ।
दृष्ट्वा तेजस्वरूपञ्च प्रज्वलन्तं स्वतेजसा ॥ २० ॥
ग्रीष्ममध्याह्नमार्त्तण्ड शतकोटिसमप्रभम् ।
शान्तञ्चानादिमध्यान्तं लक्ष्मीकान्तमनन्तकम् ॥२१॥
चतुर्भुजैः पार्षदैश्च सरस्वत्या स्तुतं नतम् ।
भक्त्या चतुर्भिर्वेदैश्च गङ्गया परिसेवितम् ॥ २२ ॥
तं प्रणेमुः सुराः सर्वे मूर्द्ध्ना ब्रह्मपुरोगमाः ।
भक्तिनम्राः साश्रुनेत्रास्तुष्टुवुः पुरुषोत्तमम् ॥ २३ ॥
वृत्तान्तं कथयामास स्वयं ब्रह्मा कृताञ्जलिः ।
रुरुदुर्देवताः सर्वाः स्वाधिकारच्युताश्च ताः ॥ २४ ॥
स ददर्श सुरगणं विपद्ग्रस्तं भयाकुलम् ।
वस्त्रभूषणशून्यञ्च वाहनादिविवर्जितम् ॥ २५ ॥
शोभाशून्य हतश्रीकमतिनिष्प्रभं परम् ।
उवाच कातरं दृष्ट्वा विपन्नभयभञ्जनः ॥ २६ ॥

नारायण उवाच ।

माभैर्ब्रह्मन् हे सुराश्च भय किं वो मयि स्थिते ।
दास्यामि लक्ष्मीमचलां परमैश्वर्यवर्द्धिनीम् ॥ २७ ॥
किञ्च मद्वचनं किञ्चित् श्रूयतां समयोचितम् ।
हितं सत्यं सारभूतं परिणामसुखावहम् ॥ २८ ॥
जनाश्च [illegible] सर्वे मदधीनाः सन्ततम् ।
यथा [illegible] : पराधीनः स्वतन्त्रकः ॥ २९ ॥
यो यो [illegible] हि नरतं मत्परो हि निरङ्कुशः ।

तद् गृहेऽहं न तिष्ठामि पद्मया सह निश्चितम् ॥३०॥
दुर्वासा शङ्करांशश्च वैष्णवो मत्परायणः।
तत् शापादागतोऽहञ्च सश्रीको वो गृहादपि ॥ ३१ ॥
यत्र शङ्खध्वनिर्नास्ति तुलसी च शिलार्चनम्।
न भोजनञ्च विप्राणां न पद्मा तत्र तिष्ठति ॥ ३२ ॥
मद्भक्तानाञ्च मन्निन्दा यत्र यत्र भवेत् सुराः।
महारुष्टा महालक्ष्मीस्ततो याति पराभवात् ॥ ३३ ॥
मद्भक्तिहीनो यो मूढ़ो यो भुङ्क्ते हरिवासरे।
मम जन्मदिने चापि याति श्रीः तद्गृहादपि ॥३४॥
मन्नामविक्रयी यश्च विक्रीणाति स्वकन्यकाम्।
यत्रातिथिर्न भुंक्ते च मत्प्रिया याति तद्गृहात् ॥३५॥
पापिनां यो गृहं याति शूद्रश्राद्धान्नभोजिनाम्।
महारुष्टा ततो याति मन्दिरात् कमलालया ॥ ३६ ॥
शूद्राणां शवदाही च भाग्यहीनश्च ब्राह्मणः।
याति रुष्टा तद्गृहाच्च देवी कमलवासिनी ॥ ३७ ॥
शूद्राणां सूपकारो यो ब्राह्मणो वृषवाहकः।
तत्तोयपानभीता च कमला याति तद्गृहात् ॥३८॥
विप्रो यवनसेवी च देवलः शूद्रयाजकः।
तत्तोयपानभीता च वैष्णवी याति तद्गृहात् ॥ ३९ ॥
विश्वासघाती मित्रघ्नो नरघाती कृतघ्नकः।
योऽगम्यागामुको विप्रो मद्भार्य्या याति तद्गृहात् ॥४०॥
अशुद्धहृदयः क्रूरो हिंसको निन्दको द्विजः।
ब्राह्मण्यां शूद्रजातश्च याति देवी च तद्गृहात् ॥ ४१ ॥
यो विप्रः पुंश्चलीपुत्रो महापापी च तत्पतिः।

अवीरान्नञ्च यो भुङ्क्ते तस्माद्याति जगत्प्रसूः ॥४२॥
तृणं छिनत्ति नखरैस्तैर्वा यो हि लिखेन्महीम् ।
जिह्मो वा मलवासाश्च सा प्रयाति च तद्गृहात् ।४३॥
सूर्य्योदये च द्विर्भोजी दिवाशायी च ब्राह्मणः ।
दिवामैथुनकारी च तस्माद् याति हरिप्रिया ॥ ४४ ॥
आचारहीनो यो विप्रः यश्च शूद्रप्रतिग्रही ।
अदीक्षितो हि यो मूढ़स्तस्मात् लीला प्रयाति च ॥४५॥
स्निग्धपादश्च नग्नो वा यः शेते ज्ञानदुर्बलः ।
शश्वद्वर्मातिवाचालो यात्येव तद्गृहात् सती ॥ ४६ ॥
शिरः स्नातश्च तैलेन योऽन्यदङ्गमुपस्पृशेत् ।
स्वाङ्के च वादयेद्वाद्यं रमा याति च तद्गृहात् ॥ ४७ ॥
व्रतोपवासहीनो यः सन्ध्याहीनोऽशुचिर्द्विजः ।
विष्णुभक्तिविहीनो यस्तस्माद्याति हरिप्रिया ॥ ४८ ॥
ब्राह्मणं निन्दयेद् यो हि तांश्च द्वेष्टि च सन्ततम् ।
जीवहिंसी दयाहीनो याति सर्वप्रसूस्ततः ॥ ४९ ॥
यत्र तत्र हरेरर्चा हरेरुत्कीर्त्तनं शुभम् ।
तत्र तिष्ठति सा देवी कमला सर्वमङ्गला ॥ ५० ॥
यत्र प्रशंसा कृष्णस्य तद्भक्तस्य पितामह ।
सा च कृष्णप्रिया देवी तत्र तिष्ठति सन्ततम् ॥ ५१ ॥
यत्र शङ्खध्वनिः शङ्खः शिला च तुलसीदलम् ।
तत्सेवा वन्दनं ध्यानं तत्र सा परितिष्ठति ॥ ५२ ॥
शिवलिङ्गार्चनं यत्र तस्य चोत्कीर्त्तनं शुभम् ।
दुर्गार्चनं तद्गुणाश्च तत्र पद्मनिवासिनी ॥ ५३ ॥
विप्राणां सेवनं यत्र तेषाञ्च भोजनं शुभम् ।

अर्चनं सर्वदेवानां तत्र पद्ममुखी सती ॥ ५४ ॥
इत्युक्त्वा च सुरान् सर्वान् रमामाह रमापतिः ।
क्षीरोदसागरे जन्म कलया च लभेति च ॥ ५५ ॥
इत्युक्त्वा तान् जगन्नाथो ब्रह्माणं पुनराह च ।
मथित्वा सागरं लक्ष्मीं देवेभ्यो देहि पद्मज ॥ ५६ ॥
इत्युक्त्वा कमलाकान्तो जगामाभ्यन्तरं मुने ।
देवाश्चिरेण कालेन ययुः क्षीरोदसागरम् ॥ ५७ ॥
मन्थानं मन्दरं कृत्वा कूर्मं कृत्वा च भाजनम् ।
कृत्वा शेषं मन्थपाशं सुराश्चक्रुश्च घर्षणम् ॥ ५८ ॥
धन्वन्तरिञ्च पीयूषमुच्चैःश्रवसमीप्सितम् ।
नानारत्नं हस्तिरत्नं प्रापुर्लक्ष्म्याश्च दर्शनम् ॥ ५९ ॥
वनमालां ददौ सा च क्षीरोदशायिने मुने ।
सर्वेश्वराय रम्याय विष्णवे वैष्णवी सती ॥ ६० ॥
देवैस्तुता पूजिता च ब्रह्मणा शङ्करेण च ।
ददौ दृष्टिं सुरगृहे ब्रह्मशापविमोचने ॥ ६१ ॥
प्रापुर्देवाः स्वविषयं दैत्यग्रस्तं भयङ्करैः ।
महालक्ष्मीप्रसादेन वरदानेन नारद ॥ ६२ ॥
इत्येवं कथितं सर्वं लक्ष्म्युपाख्यानमुत्तमम् ।
सुखदं सारभूतञ्च किं भूयः श्रोतुमिच्छसि ॥ ६३ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे
लक्ष्म्युपाख्यानेऽष्टत्रिंशोऽध्यायः ।

———

# ऊनचत्वारिंशोऽध्यायः ।

—o—

नारद उवाच ।

हरेरुत्कीर्त्तनं भद्रं श्रुतं तज्ज्ञानमुत्तमम् ।
ईप्सितं लक्ष्म्युपाख्यानं ध्यानं स्तोत्रादिकं वद ॥ १ ॥
हरिणा पूजिता पूर्वं ततो ब्रह्मादिभिस्तथा ।
शक्रेण भ्रष्टराज्येन सार्द्धं सुरगणेन च ॥ २ ॥
पूजिता केन ध्यानेन विधिना केन वा पुरा ।
स्तुता वा केन स्तोत्रेण तन्मे व्याख्यातुमर्हसि ॥ ३ ॥

श्रीनारायण उवाच ।

स्नात्वा तीर्थे पुरा शक्रो धृत्वा धौते च वाससी ।
घटं संस्थाप्य क्षीरोदे देवषट्कञ्च पूजितः ॥ ४ ॥
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
एतान् भक्त्या समभ्यर्च्य पुष्पगन्धादिभिस्तथा ॥ ५ ॥
तत्रावाह्य महालक्ष्मीं परमैश्वर्य्यरूपिणीम् ।
पूजाञ्चकार देवेशो ब्रह्मणा च पुरोधसा ॥ ६ ॥
पुरःस्थितेषु मुनिषु ब्राह्मणेषु गुरौ तथा ।
देवादिषु च देवेशे ज्ञानानन्दे शिवे मुने ॥ ७ ॥
पारिजातस्य पुष्पञ्च गृहीत्वा चन्दनोक्षितम् ।
ध्यात्वा देवीं महालक्ष्मीं पूजयामास नारद ॥ ८ ॥
ध्यानञ्च सामवेदोक्तं यदुक्तं ब्रह्मणे पुरा ।
हरिणा तेन ध्यानेन तन्निबोध वदामि ते ॥ ९ ॥

सहस्रदलपद्मस्य कर्णिकावासिनीं पराम् ।
शरत्पार्वणकोटीन्दुप्रभाजुष्टकरां वराम् ॥ १० ॥
स्वतेजसा प्रज्वलन्तीं सुखदृश्यां मनोहराम् ।
प्रतप्तकाञ्चननिभां शोभां मूर्त्तिमतीं सतीम् ॥ ११ ॥
रत्नभूषणभूषाढ्यां शोभितां पीतवाससा ।
ईषद्धास्यप्रसन्नास्यां शश्वत्सुस्थिरयौवनाम् ॥ १२ ॥
सर्वसम्पत्प्रदात्रीञ्च महालक्ष्मीं भजे शुभाम् ।
ध्यानेनानेन तां ध्यात्वा नानोपहारसंयुतः ॥ १३ ॥
सम्पूज्य ब्रह्मवाक्येन चोपहाराणि षोड़श ।
ददौ भक्त्या विधानेन प्रत्येकं मन्त्रपूर्वकम् ॥ १४ ॥
प्रशंस्यानि प्रहृष्टानि दुर्लभानि वराणि च ।
अमूल्यरत्नसारञ्च निर्मितं विश्वकर्मणा ।
आसनञ्च विचित्रञ्च महालक्ष्मि प्रगृह्यताम् ॥ १५ ॥
शुद्धं गङ्गोदकमिदं सर्ववन्दितमीप्सितम् ।
पापेध्मवह्निरूपञ्च गृह्यतां कमलालये ॥ १६ ॥
पुष्पचन्दनदूर्वादिसंयुतं जाह्नवीजलम् ।
शङ्खगर्भस्थितं शुद्धं गृह्यतां पद्मवासिनि ॥ १७ ॥
सुगन्धि विष्णुतैलञ्च सुगन्धामलकीजलम् ।
देहसौन्दर्य्यवीजञ्च गृह्यतां श्रीहरिप्रिये ॥ १८ ॥
वृक्षनिर्यासरूपञ्च गन्धद्रव्यादिसंयुतम् ।
कृष्णकान्ते पवित्रञ्च धूपञ्च प्रतिगृह्यताम् ॥ १९ ॥
मलयाचलसंभूतं वृक्षसारं मनोहरम् ।
सुगन्धियुक्तं सुखदं चन्दनं देवि गृह्यताम् ॥ २० ॥
जगच्चक्षुः स्वरूपञ्च ध्वान्तप्रध्वंसकारणम् ।

प्रदीपं शुद्धरूपञ्च गृह्यतां परमेश्वरि ॥ २१ ॥
नानोपहाररूपञ्च नानारससमन्वितम् ।
नानास्वादुकरञ्चैव नैवेद्यं प्रतिगृह्यताम् ॥ २२ ॥
अन्नब्रह्मस्वरूपञ्च प्राणरक्षणकारणम्
तुष्टिदं पुष्टिदञ्चैव मन्नञ्च प्रतिगृह्यताम् ॥ २३ ॥
शाल्यन्नं सुपक्वञ्च शर्करागव्यसंयुतम् ।
सुस्वादुयुक्तं पद्मे च परमान्नं प्रगृह्यताम् ॥ २४ ॥
शर्करा गव्यपक्वञ्च सुस्वादु सुमनोहरम् ।
मया निवेदितं लक्ष्मि स्वस्तिकं प्रतिगृह्यताम् ॥ २५ ॥
नानाविधानि रम्याणि पक्वानि च फलानि च ।
स्वादु युक्तानि कमले गृह्यतां फलदानि च ॥ २६ ॥
सुरभीस्तनसम्भूतं सुस्वादु सुमनोहरम् ।
मर्त्यामृतञ्च गव्यञ्च गृह्यतामच्युतप्रिये ॥ २७ ॥
सुस्वादु रससंयुक्तमिक्षुवृक्षरसोद्भवम् ।
अग्निपक्वमपक्वं वा गुड़ञ्च देवि गृह्यताम् ॥ २८ ॥
यवगोधूमशस्यानां चूर्णरेणुसमुद्भवम् ।
सुपक्व गुड़गव्याक्तं मिष्टान्नं देवि गृह्यताम् ॥ २९ ॥
शस्यचूर्णोद्भवं पक्वं स्वस्तिकादि समन्वितम् ।
मया निवेदितं देवि पिष्टकं प्रतिगृह्यताम् ॥ ३० ॥
पार्थिवं वृक्षभेदञ्च विविधं द्रव्यकारणम् ।
सुस्वादुरससंयुक्त मिक्षुञ्च प्रतिगृह्यताम् ॥ ३१ ॥
शीतवायुप्रदञ्चैव दाहे च सुखदं परम् ।
कमले गृह्यताञ्चेदं व्यजनं श्वेतचामरम् ॥ ३२ ॥
ताम्बूलञ्च वरं रम्यं कर्पूरादि सुवासितम् ।

जिह्वाजाड्यच्छेदकरम् ताम्बूलं देवि गृह्यताम् ॥३३॥
सुवासितं शीतलञ्च पिपासानाशकारणम् ।
जगज्जीवनरूपञ्च जीवनं देवि गृह्यताम् ॥ ३४ ॥
देहसौन्दर्य्य वीजञ्च सदा शोभाविवर्द्धनम् ।
कार्पासजञ्च कृमिजं वसनं देवि गृह्यताम् ॥ ३५ ॥
रत्न स्वर्ण विकारञ्च देहभूषाविवर्द्धनम् ।
शोभाधानं श्रीकरञ्च भूषणं प्रतिगृह्यताम् ॥ ३६ ॥
नानाकुसुमनिर्माणं बहुशोभाप्रदं परम् ।
सुरभूपप्रियं शुद्धं माल्यं देवि प्रगृह्यताम् ॥ ३७ ॥
पुण्यतीर्थोदकञ्चैव विशुद्धं शुद्धिदं सदा ।
गृह्यतां कृष्णकान्ते च रम्यमाचमनीयकम् ॥ ३८ ॥
रत्नसारादिनिर्माणं पुष्पचन्दनसंयुतम् ।
रत्नभूषणभूषाढ्यं सुतल्पं प्रतिगृह्यताम् ॥ ३९ ॥
यद्यद् द्रव्यमपूर्वञ्च पृथिव्यामतिदुर्लभम् ।
देवभूषार्हभोग्यञ्च तद् द्रव्यं देवि गृह्यताम् ॥ ४० ॥
द्रव्याण्येतानि दत्त्वा च मूलेन देवपुङ्गव ।
मूलं जजाप भक्त्या च दशलक्षं विधानतः ॥ ४१ ॥
जपेन दशलक्षेण मन्त्रसिद्धिर्बभूव ह ।
मन्त्रश्च ब्रह्मणा दत्तः कल्पवृक्षश्च सर्वदः ॥ ४२ ॥
लक्ष्मीर्माया कामवाणी ततः कमलवासिनी ।
स्वाहान्तो वैदिकोमन्त्र राजोऽयं द्वादशाक्षरः ॥ ४३ ॥
कुवेरोऽनेन मन्त्रेण सर्वैश्वर्य्यमवाप्तवान् ।
राजराजेश्वरो दक्षः सावर्णिर्मनुरेव च ॥ ४४ ॥
मङ्गलोऽनेन मन्त्रेण सप्तद्वीपवतीपतिः ।

प्रियव्रतोत्तानपादौ केदारो नृप एव च ॥ ४५ ॥
एते च सिद्धा राजेन्द्रा मन्त्रेणानेन नारद ।
सिद्धे मन्त्रे महालक्ष्मीः शक्राय दर्शनं ददौ ॥ ४६ ॥
रत्नेन्द्रसारनिर्माणविमानस्था वरप्रदा ।
सप्तद्वीपवतीं पृथ्वीं छादयन्ती त्विषा च सा ॥ ४७ ॥
श्वेतचम्पकवर्णाभा रत्नभूषणभूषिता ।
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा ॥ ४८ ॥
बिभ्रती रत्नमालाञ्च कोटिचन्द्रसमप्रभा ।
दृष्ट्वा जगत्प्रसूं शान्तां तुष्टाव तां पुरन्दरः ॥ ४९ ॥
पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रः कृताञ्जलिः ।
ब्रह्मणा च प्रदत्तेन स्तोत्रराजेन संयतः ।
सर्वाभीष्टप्रदेनैव वैदिकेनैव तत्र च ॥ ५० ॥

इन्द्र उवाच ।

ओं नमो महालक्ष्म्यै ।

ओं नमः कमलवासिन्यै नारायण्यै नमो नमः ।
कृष्णप्रियायै सारायै पद्मायै च नमो नमः ॥ ५१ ॥
पद्मपत्रेक्षणायै च पद्मास्यायै नमो नमः ।
पद्मासनायै पद्मिन्यै वैष्णव्यै च नमो नमः ॥ ५२ ॥
सर्वसम्पत्स्वरूपायै सर्वदात्र्यै नमो नमः ।
सुखदायै मोक्षदायै सिद्धिदायै नमो नमः ॥ ५३ ॥
हरिभक्तिप्रदात्र्यै च हर्षदात्र्यै नमो नमः ।
कृष्णवक्षःस्थितायै च कृष्णेशायै नमो नमः ॥ ५४ ॥
कृष्णशोभास्वरूपायै रत्नपद्मे च शोभने ।

सम्पत्त्यधिष्ठातृदेव्यै महादेव्यै नमो नमः ॥ ५५ ॥
शस्याधिष्ठातृदेव्यै च शस्यायै च नमो नमः ।
नमो बुद्धिस्वरूपायै बुद्धिदायै नमो नमः ॥ ५६ ॥
वैकुण्ठे या महालक्ष्मीः लक्ष्मीः क्षीरोदसागरे ।
स्वर्गलक्ष्मीरिन्द्रगेहे राजलक्ष्मीर्नृपालये ॥ ५७ ॥
गृहलक्ष्मीश्च गृहिणां गेहे च गृहदेवता ।
सुरभी सा गवां माता दक्षिणा यज्ञकामिनी ॥ ५८ ॥
अदितिर्देवमाता त्वं कमला कमलालये ।
स्वाहा त्वञ्च हविर्दाने कव्यदाने स्वधा स्मृता ॥ ५९ ॥
त्वंहि विष्णुस्वरूपा च सर्वाधारा वसुन्धरा ।
शुद्धसत्त्वस्वरूपा त्वं नारायणपरायणा ॥ ६० ॥
क्रोधहिंसावर्जिता च वरदा च शुभानना ।
परमार्थप्रदा त्वञ्च हरिदास्यप्रदा परा ॥ ६१ ॥
यया विना जगत् सर्वं भस्मीभूतमसारकम् ।
जीवन्मृतञ्च विश्वञ्च शवतुल्यं यया विना ॥ ६२ ॥
सर्वेषाञ्च परा त्वं हि सर्वबान्धवरूपिणी ।
यया विना न संभाष्यो बान्धवैर्बान्धवः सदा ॥ ६३ ॥
त्वया हीनो बन्धुहीनः त्वया युक्तः सबान्धवः ।
धर्मार्थकाममोक्षाणां त्वञ्च कारणरूपिणी ॥ ६४ ॥
यथा माता स्तनान्धानां शिशूनां शैशवे यथा ।
तथा त्वं सर्वदा माता सर्वेषां सर्वविश्वतः ॥ ६५ ॥
मातृहीनस्तनत्यक्तः स चेज्जीवति दैवतः ।
त्वया हीनो जनः कोऽपि न जीवत्येव निश्चितम् ॥६६॥
सुप्रसन्नस्वरूपा त्वं मां प्रसन्ना भवाम्बिके ।

वैरिग्रस्तञ्च विषयं देहि मह्यं सनातनि ॥ ६७ ॥
वयं यावत् त्वया हीना बन्धुहीनाश्च भिक्षुकाः ।
सर्वसम्पद्विहीनाश्च तावदेव हरिप्रिये ॥ ६८ ॥
राज्यं देहि श्रियं देहि बलं देहि सुरेश्वरि ।
कीर्त्तिं देहि धनं देहि यशो मह्यं च देहि वै ॥६९॥
कामं देहि मतिं देहि भोगान् देहि हरिप्रिये ।
ज्ञानं देहि च धर्मञ्च सर्वसौभाग्यमीप्सितम् ॥ ७० ॥
प्रभावञ्च प्रतापञ्च सर्वाधिकारमेव च ।
जयं पराक्रमं युद्धे परमैश्वर्य्यमेव च ॥ ७१ ॥
इत्युक्त्वा च महेन्द्रश्च सर्वैः सुरगणैः सह ।
प्रणनाम साश्रुनेत्रो मूर्द्ध्ना चैव पुनः पुनः ॥ ७२ ॥
ब्रह्मा च शङ्करश्चैव शेषो धर्मश्च केशवः ।
सर्वे चक्रुः परिहारं सुरार्थे च पुनः पुनः ॥ ७३ ॥
देवेभ्यश्च वरं दत्त्वा पुष्पमालां मनोहराम् ।
केशवाय ददौ लक्ष्मीं सन्तुष्टा सुरसंसदि ॥ ७४ ॥
ययुर्देवाश्च सन्तुष्टा स्वं स्वं स्थानञ्च नारद ॥ ७५ ॥
देवी ययौ हरेः क्रोड़ं हृष्टा क्षीरोदशायिनः ।
ययतुश्चैव स्वगृहं ब्रह्मेशानौ च नारद ।
दत्त्वा शुभाशिषं तौ च देवेभ्यः प्रीतिपूर्वकम् ॥ ७६ ॥
इदं स्तोत्रं महापुण्यं त्रिसन्ध्यं यः पठेन्नरः ।
कुवेरतुल्यः सः भवेत् राजराजेश्वरो महान् ॥ ७७ ॥
सिद्धस्तोत्रं यदि पठेत् सोऽपि कल्पतरुर्नरः ।
पञ्चलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ॥ ७८ ॥
सिद्धिस्तोत्रं यदि पठेत् मासमेकञ्च संयतः ।

महादुःखी च राजेन्द्रो भविष्यति न संशयः ॥ ७९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे महालक्ष्मी-
स्तोत्रं समाप्तम् ।

नारद उवाच ।

पुष्पं दुर्वाससा दत्त मस्त्येव यस्य मस्तके ।
तस्य सर्वपुरः पूजेत्युक्तं पूर्वं त्वया प्रभो ॥ ८० ॥
तदेव स्थापितं पुष्पं गजेन्द्रस्यैव मस्तके ।
कुतो जन्म गणेशस्य स च मत्तो वनं गतः ॥ ८१ ॥
मूर्द्धि च्छिन्ने गणपतेः शनेर्दृष्ट्या पुरा मुने ।
तत् स्कन्धे योजयामास हस्तिमस्तं हरिः स्वयम् ॥८२॥
अधुनोक्तं देवषट्कं संपूज्य च पुरन्दरः ।
पूजयामास लक्ष्मीञ्च क्षीरोदे च सुरैः सह ॥ ८३ ॥
अहो पुराणवक्तॄणां दुर्बोधं वचनं नृणाम् ।
सुव्यक्त मस्य सिद्धान्तं वद वेदविदांवर ॥ ८४ ॥

श्रीनारायण उवाच ।

यदा शशाप शक्रञ्च दुर्वासा मुनिपुङ्गवः ।
तदा नास्त्येव तज्जन्म पूजाकाले बभूव सः ॥ ८५ ॥
सुचिरं दुःखिता देवा बभ्रमुर्ब्रह्मशापतः ।
पश्चात् प्रापुश्च तां लक्ष्मीं वरेण च हरेर्मुने ॥ ८६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे लक्ष्म्युपाख्यानं नाम
ऊनचत्वारिंशत्तमोऽध्यायः ।

——

# चत्वारिंशत्तमोऽध्यायः ।

———०———

नारद उवाच ।

नारायण महाभाग नारायणसमः प्रभो ।
रूपेण च गुणेनैव यशसा तेजसा त्विषा ॥ १ ॥
त्वमेव ज्ञानिनां श्रेष्ठः सिद्धानां योगिनां तथा ।
तपस्विनां मुनीनाञ्च परो वेदविदां तथा ।
महालक्ष्म्या उपाख्यानं विज्ञातं महदद्भुतम् ॥ २ ॥
अन्यत् किञ्चिदुपाख्यानं निगूढं वद साम्प्रतम् ।
अतीव गोपनीयं यदुपयुक्तञ्च सर्वतः ।
अप्रकाश्यं पुराणेषु वेदोक्तं धर्मसंयुतम् ॥ ३ ॥

श्री नारायण उवाच ।

नानाप्रकारमाख्यानमप्रकाश्यं पुराणतः ।
श्रुतौ कतिविधं गूढमास्ते ब्रह्मन् सुदुर्लभम् ॥ ४ ॥
तेषु यत् सारभूतञ्च श्रोतुं किं वा त्वमिच्छसि ।
तन्मे ब्रूहि महाभाग पश्चाद्वक्ष्यामि तत् पुनः ॥ ५ ॥

नारद उवाच ।

स्वाहा देवहविर्दाने प्रशस्ता सर्वकर्मसु ।
पितृदाने स्वधा शस्ता दक्षिणा सर्वतो वरा ॥ ६ ॥
एतासां चरितं जन्म फलं प्राधान्यमेव च ।
श्रोतुमिच्छामि त्वद्वक्त्रात् वद वेदविदांवर ॥ ७ ॥

सौतिरुवाच ।

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः ।

कथां कथयितुमारेभे पुराणोक्तां पुरातनीम् ॥ ८ ॥

नारायण उवाच ।

सृष्टेः प्रथमतो देवाश्चाहारार्थं ययुः पुरा
ब्रह्मलोके ब्रह्मसभामगम्यां सुमनोहराम् ॥ ९ ॥
गत्वा निवेदनञ्चक्रुराहारहेतुकं मुने ।
ब्रह्मा श्रुत्वा प्रतिज्ञाय सिषेवे श्रीहरेः पदम् ॥ १० ॥
यज्ञोरूपो हि भगवान् कलया च बभूव सः ।
यज्ञे यद्यद्धविर्दानं दत्तं तेभ्यश्च ब्रह्मणा ॥ ११ ॥
हविर्ददति विप्राश्च भक्त्या च क्षत्रियादयः ।
सुरा नैव प्राप्नुवन्ति तद्दानं मुनिपुङ्गव ॥ १२ ॥
देवाः विषस्रास्ते सर्वे तत्सभाञ्च पुनर्ययुः ।
गत्वा निवेदनञ्च क्रुराहाराभाव हेतुकम् ॥ १३ ॥
ब्रह्मा श्रुत्वा तु ध्यानेन श्रीकृष्णं शरणं ययौ ।
पूजयामास प्रकृतिं ध्यानेनैव तदाज्ञया ॥ १४ ॥
प्रकृतिः कलया चैव सर्वशक्तिस्वरूपिणी ।
बभूव दाहिकाशक्तिरग्नेः स्वाहास्वरूपिणी ॥ १५ ॥
ग्रीष्ममध्याह्नमार्त्तण्डप्रभाच्छादनकारिणी ।
अतीव सुन्दरी रामा रमणीया मनोहरा ॥ १६ ॥
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा ।
उवाचेति विधेरग्रे पद्मयोने वरं वृणु ॥ १७ ॥
विधिस्तद्वचनं श्रुत्वा सम्भ्रमात् समुवाच ताम् ॥ १८ ॥

ब्रह्मोवाच ।

त्वमग्नेर्दाहिका शक्तिर्भवपत्नी च सुन्दरी ।
दग्धुं न शक्तस्त्वकृती हुताशश्च त्वया विना ॥ १९ ॥

त्वन्नामोच्चार्य्य मन्त्रान्ते यद् दास्यति हविर्नरः ।
सुरेभ्यस्तत् प्राप्नुवन्ति सुराः सानन्दपूर्वकम् ॥ २० ॥
अग्नेः सम्पत् स्वरूपा च श्रीरूपा च गृहेश्वर ।
देवानां पूजिता शश्वन्नरादीनां भवाम्बिके ॥ २१ ॥
ब्रह्मणश्च वचः श्रुत्वा सा विषण्णा बभूवह ।
तमुवाच स्वयं देवी स्वाभिप्रायं स्वयम्भुवम् ॥ २२ ॥

स्वाहोवाच।

अहं कृष्णं भजिष्यामि तपसा सुचिरेण च ।
ब्रह्मन् तदन्यत् यत्किञ्चित् स्वप्नवत् भ्रममेव च ॥२३॥
विधाता जगतां त्वञ्च शम्भुर्मृत्युञ्जयः प्रभुः ।
विभर्त्ति शेषो विश्वञ्च धर्म्मः साक्षी च देहिनाम् ॥२४॥
सर्व्वाद्यपूज्यो देवानां गणेषु च गणेश्वरः ।
प्रकृतिः सर्व्वसूः सर्व्वपूजिता यत्प्रसादतः ॥ २५ ॥
ऋषयोमुनयश्चैव पूजिता यं निषेव्य च ।
तत्पादपद्मं पद्मैकं भावेन चिन्तयाम्यहम् । २६ ॥
पद्मास्या पाद्ममित्युक्ता पद्मलाभानुसारतः ।
जगाम तपसा पार्श्वे पद्मादीशस्य पद्मजा ॥ २७ ॥
तपस्तेपे लक्षवर्षमेकपादेन पाद्मजा ।
तदा ददर्श श्रीकृष्णं निर्गुणं प्रकृतेः परम् ॥ २८ ॥
अतीव कमनीयञ्च रूपं दृष्ट्वा च सुन्दरी ।
मूर्च्छां सम्प्राप कामेन कामेशस्य च कामुकी । २९ ॥
विज्ञाय तदभिप्रायं सर्व्वज्ञस्तामुवाच सः ।
समुत्तिष्ठ वराक्रोड़े क्षीणाङ्गीं तपसा चिरम् ॥ ३० ॥

श्रीकृष्ण उवाच।

वराहे च त्वमंशेन मम पत्नी भविष्यति।
नाम्ना नाग्नजिती कन्या कान्ते नग्नजितस्य च ॥ ३१॥
अधुनाग्नेर्दाहिका त्वं भवपत्नी च भाविनि।
मन्त्राङ्गरूपा पूता च मत्प्रसादात् भविष्यति ॥ ३२ ॥
वह्निस्त्वां भक्तिभावेन सम्पूज्य च गृहेश्वरीम्।
रमिष्यते त्वया सार्द्धं रामया रमणीयया ॥ ३३ ॥
इत्युक्तान्तर्दधे देवो देवीमाश्वास्य नारद।
तत्राजगाम सन्त्रस्तो वह्निर्ब्रह्मनिदेशतः ॥ ३४ ॥
ध्यानैश्च सामवेदोक्तैर्ध्यात्वा तां जगदम्बिकाम्।
सम्पूज्य परितुष्टाव पाणिं जग्राह मन्त्रतः ॥ ३५ ॥
तदा दिव्यं वर्षशतं स रेमे रामया सह।
अतीव निर्जने रम्ये सम्भोगसुखदे सदा ॥ ३६ ॥
बभूव गर्भं तस्याश्च हुताशस्य च तेजसा।
तद्दधार च सा देवी दिव्यं द्वादशवत्सरम् ॥ ३७ ॥
ततः सुषाव पुत्रांश्च रमणीयान्मनोहरान्।
दक्षिणाग्निगार्हपत्य हवनीयान् क्रमेण च ॥ ३८ ॥
ऋषयोमुनयश्चैव ब्राह्मणाः क्षत्रियादयः।
स्वाहान्तं मन्त्रमुच्चार्य्य हविर्ददति नित्यशः ॥ ३९ ॥
स्वाहायुक्तञ्च मन्त्रञ्च यो गृह्णाति प्रशस्तकम्।
सर्वसिद्धिर्भवेत्तस्य ब्रह्मन् ग्रहणमात्रतः ॥ ४० ॥
विषहीनो यथा सर्पो वेदहीनो यथा द्विजः।
पतिसेवाविहीना स्त्री विद्याहीनो यथा नरः ॥ ४१ ॥
फलशाखाविहीनश्च यथा वृक्षो हि निन्दितः।

स्वाहाहीन स्तथा मन्त्रो न हुतं फलदायकः ॥ ४२ ॥
परितुष्टा द्विजाः सर्वे देवाः संप्रापुराहुतिम्।
स्वाहान्तेनैव मन्त्रेण सफलं सर्वकर्म च ॥ ४३ ॥
इत्येवं वर्णितं सर्वं स्वाहोपाख्यानमुत्तमम्।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ ४४ ॥

नारद उवाच।

स्वाहापूजाविधानञ्च ध्यानं स्तोत्रं मुनीश्वर।
संपूज्य वह्निस्तुष्टाव येन तां वद मे प्रभो ॥ ४५ ॥

नारायण उवाच।

ध्यानञ्च सामवेदोक्तं स्तोत्रं पूजाविधानकम्।
वदामि श्रूयतां ब्रह्मन् सावधानं निशामय ॥ ४६ ॥
सर्वयज्ञारम्भकाले शालग्रामे घटेऽथवा।
स्वाहां संपूज्य यत्नेन यज्ञं कुर्य्यात् फलाप्तये ॥ ४७ ॥
स्वाहां मन्त्राङ्गयुताञ्च मन्त्रसिद्धिस्वरूपिणीम्।
सिद्धाञ्च सिद्धिदां नृणां कर्मणां फलदां भजे ॥ ४८ ॥
इति ध्यात्वा च मूलेन दत्वा पाद्यादिकं नरः।
सर्वसिद्धिं लभेत् स्तुत्वा मूलं स्तोत्रं मुने शृणु ॥४९॥
श्रीं ह्रीं श्रीं वह्निजायायै देव्यै स्वाहेत्यनेनन च।
यः पूजयेच्च तां देवीं सर्वेष्टं लभते ध्रुवम् ॥ ५० ॥

वह्निरुवाच।

स्वाहाद्या प्रकृतेरंशा मन्त्रतन्त्राङ्गरूपिणी।
मन्त्राणां फलदात्री च धात्री च जगतां सती ।५१॥
सिद्धिस्वरूपा सिद्धा च सिद्धिदा सर्वदा नृणाम्।
हुताश दाहिकाशक्तिस्तत्प्राणाधिकरूपिणी ॥ ५२॥

संसारसाररूपा च घोरसंसारतारिणी ।
देवजीवनरूपा च देवपोषणकारिणी ॥ ५३ ॥
षोड़शैतानि नामानि य पठेत् भक्तिसंयुतः ।
सर्व्वसिद्धिर्भवेत्तस्य चेहलोके परत्र च ॥ ५४ ॥
नाङ्गहीनो भवेत्तस्य सर्व्वकर्म्मसु शोभनम् ।
अपुत्त्रो लभते पुत्त्रमभार्य्यो लभते प्रियाम् ॥ ५५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे स्वाहोपाख्यानं नाम
चत्वारिंशत्तमोऽध्यायः ।

---

## एकचत्वारिंशत्तमोऽध्यायः ।

—००—

नारायण उवाच ।

शृणु नारद वक्ष्यामि स्वधोपाख्यानमुत्तमम् ।
पितॄणाञ्च तृप्तिकरं श्राद्धानां फलवर्द्धनम् ॥ १ ॥
सृष्टेरादौ पितृगणान् ससर्ज जगतां विधिः ।
चतुरश्च मूर्त्तिमत स्त्रींश्च तेजस्वरूपिणः ॥ २ ॥
दृष्ट्वा सप्तपितृगणान् सिद्धिरूपान्मनोहरान् ।
आहारं ससृजे तेषां श्राद्धतर्पणपूर्व्वकम् ॥ ३ ॥
स्नानं तर्पणपर्य्यन्तं श्राद्धान्तं देवपूजनम् ।
आह्निकञ्च त्रिसन्ध्यान्तं विप्राणाञ्च श्रुतौ श्रुतम् ॥४॥
नित्यं न कुर्य्याद् यो विप्रस्त्रिसन्ध्यं श्राद्धतर्पणम् ।
बलिं वेदध्वनिं सोऽपि विषहीनो यथोरगः ॥ ५ ॥

हरिसेवा विहीनश्च श्रीहरेरनिवेद्यभुक् ।
भस्मान्तं सूतकं तस्य न कर्मार्हः स नारद ॥ ६ ॥
ब्रह्मा श्राद्धादिकं सृष्ट्वा जगाम पितृहेतवे ।
न प्राप्नुवन्ति पितरो ददति ब्राह्मणादयः ॥ ७ ॥
सर्वे प्रजग्मुः क्षुधिता विषण्णा ब्रह्मणः सभाम् ।
सर्वं निवेदनञ्चक्रुस्तमेव जगतां विधिम् ॥ ८ ॥
ब्रह्मा च मानसीं कन्यां ससृजे तां मनोहराम् ।
रूपयौवनसम्पन्नां शरच्चन्द्रसमप्रभाम् ॥ ९ ॥
विद्यावतीं गुणवतीमतिरूपवतीं सतीम् ।
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ॥ १० ॥
विशुद्धां प्रकृतेरंशां सस्मितां वरदां शुभाम् ।
स्वधाभिधानां सुदतीं लक्ष्मीलक्षणसंयुताम् ॥ ११ ॥
शतपद्मपदन्यस्तपादपद्मञ्च बिभ्रतीम् ।
पत्नीं पितॄणां पद्मास्यां पद्मजां पद्मलोचनाम् ॥ १२ ॥
पितृभ्यस्तां ददौ कन्यां तुष्टेभ्य तुष्टिरूपिणीम् ।
ब्राह्मणांश्चोपदेशञ्च चकार गोपनीयकम् ॥ १३ ॥
स्वधान्तं मन्त्रमुच्चार्य्य पितृभ्यो देहि चैति च ।
क्रमेण तेन विप्राश्च पितृे दानं ददुः पुरा ॥ १४ ॥
स्वाहा शस्ता देवदाने पितृदाने स्वधा वरा ।
सर्वत्र दक्षिणा शस्ता हतयज्ञस्त्वदक्षिणः ॥ १५ ॥
पितरो देवता विप्रा मुनयो मानवास्तथा ।
पूजाञ्चक्रुः स्वधां शान्तां तुष्टाव परमादरम् ॥ १६ ॥
देवादयश्च सन्तुष्टा परिपूर्णमनोरथा ।
विप्रादयश्च पितरः स्वधादेवीवरेण च ॥ १७ ॥

इत्येवं कथितं सर्वं स्वधोपाख्यानमुत्तमम् ।
सर्वेषाञ्च तुष्टिकरं किं भूयः श्रोतुमिच्छसि ॥ १८ ॥

नारद उवाच ।

स्वधापूजा विधानञ्च ध्यानं स्तोत्रं महामुने ।
श्रोतुमिच्छामि यत्नेन वद वेदविदां वर ॥ १९ ॥

नारायण उवाच ।

ध्यानं स्तवनं ब्रह्मन् वेदोक्तं सर्वसम्मतम् ।
सर्वं जानासि च कथं ज्ञातुमिच्छसि हृदये ॥ २० ॥
शरत्कृष्णत्रयोदश्यां मघायां श्राद्धवासरे ।
स्वधां संपूज्य यत्नेन ततः श्राद्धं समाचरेत् ॥ २१ ॥
स्वधां नाभ्यर्च्य यो विप्रः श्राद्धं कुर्य्यादहं मतिः ।
न भवेत् फलभाक् सत्यं श्राद्धस्य तर्पणस्य च ॥ २२ ॥
ब्रह्मणो मानसीं कन्यां शश्वत् सुस्थिरयौवनाम् ।
पूज्यां पितॄणां देवानां श्राद्धानां फलदां भजे ॥ २३ ॥
इति ध्यात्वा शालग्रामेऽप्यथवा शोभने घटे ।
दद्यात् पाद्यादिकं तस्यै मूलेनेति श्रुतौ श्रुतम् ॥२४॥
ओं ह्रीं श्रीं क्लीं स्वधादेव्यै स्वाहेति च महामनुम् ।
समुच्चार्य्य च संपूज्य स्तुत्वा तां प्रणमेत् द्विजः ॥२५॥
स्तोत्रं शृणु मुनिश्रेष्ठ ब्रह्मपुत्र विशारद ।
सर्ववाञ्छाप्रदं नृणां ब्रह्मणा यत्कृतं पुरा ॥ २६ ॥

ब्रह्मोवाच

स्वधोच्चारण मात्रेण तीर्थस्नायी भवेन्नरः ।
मुच्यते सर्वपापेभ्यो वाजपेय फलं लभेत् ॥ २७ ॥
स्वधा स्वधा स्वधेत्येवं यदि वारत्रयं स्मरेत् ।

श्राद्धस्य फलमाप्नोति कालस्य तर्पणस्य च ॥ २८ ॥
श्राद्धकाले स्वधास्तोत्रं यः शृणोति समाहितः ।
लभेत् श्राद्धशतानाञ्च पुण्यमेव न संशयः ॥ २९ ॥
स्वधा स्वधा स्वधेत्येवं त्रिसन्ध्यं यः पठेन्नरः ।
प्रियां विनीतां स लभेत् साध्वीं पुत्रं गुणान्वितम् ॥३०
पितॄणां प्राणतुल्या त्वं द्विजजीवनरूपिणी ।
श्राद्धाधिष्ठातृदेवी च श्राद्धादीनां फलप्रदा ॥ ३१ ॥
वहिर्गच्छ मन्मनसः पितॄणां तुष्टिहेतवे ।
संप्रीतये द्विजातीनां गृहिणां वृद्धिहेतवे ॥ ३२ ॥
नित्या त्वं नित्यरूपासि गुणरूपासि सुव्रते ।
आविर्भावस्तिरोभाव सृष्टौ च प्रलये तव ॥ ३३ ॥
ओं स्वस्ति च नमः स्वाहा स्वधा त्वं दक्षिणा तथा ।
निरूपिताश्चतुर्वेदे षट् प्रशस्ताश्च कर्मिणाम् ॥ ३४ ॥
पुरासीत् त्वं स्वधा गोपी गोलोके राधिकासखी ।
धृतोरसि स्वधात्मानं कृतं तेन स्वधा स्मृता ॥ ३५ ॥
ध्वस्ता त्वं राधिकाशापात् गोलोकाद्विश्वमागता ।
कृष्णाश्लिष्टा तया दृष्टा पुरा वृन्दावने वने ॥ ३६ ॥
कृष्णालिङ्गनपुण्येन भूता मे मानसी सुता ।
अतृप्ता सुरतौ तेन चतूर्णां स्वामिनां प्रिया ॥ ३७ ॥
स्वाहा सा सुन्दरी गोपी पुरासीद्राधिकासखी ।
स्वयं कृष्णमाह रतौ तेन स्वाहा प्रकीर्त्तिता ॥ ३८ ॥
कृष्णेन सार्द्धं सुचिरं वसन्ते रासमण्डले ।
प्रमत्ता सुरते श्लिष्टा दृष्टा सा राधया पुरा ॥ ३९ ॥
तस्याः शापेन प्रध्वस्ता गोलोकाद्विश्वमागता ।

कृष्णालिङ्गनपुण्येन बभूव वह्निकामिनी ॥ ४० ॥
पवित्ररूपा परमा देवानां वन्दिता नृणाम् ।
यन्नामोच्चारणेनैव नरो मुच्येत पातकात् ॥ ४१ ॥
या सुशीलाभिधा गोपी पुरासीत् राधिकासखी ।
उवास दक्षिणे क्रोड़े कृष्णस्य राधिकाग्रतः ॥ ४२ ॥
प्रध्वस्ता सा च तच्छापात् गोलोकाद्विश्वमागता ।
कृष्णालिङ्गन पुण्येन सा बभूव च दक्षिणा ॥ ४३ ॥
सुप्रेयसी रतौ दक्षा प्रशस्ता सर्वकर्मसु ।
उवास दक्षिणे भर्त्तुर्दक्षिणा तेन कीर्त्तिता ॥ ४४ ॥
बभूवुस्तिस्रो गोप्यश्च स्वधा स्वाहा च दक्षिणा ।
कर्मिणां कर्मपूर्णार्थं पुराचैवेश्वरेच्छया ॥ ४५ ॥
इत्येवमुक्त्वा स ब्रह्मा ब्रह्मलोके च संसदि ।
तस्थौ च सहसा सद्यः स्वधा साविर्बभूव ह ॥ ४६ ॥
तदा पितृभ्यः प्रददौ तामेव कमलाननाम् ।
तां संप्राप्य ययुस्ते च पितरश्च प्रहर्षिताः ॥ ४७ ॥
स्वधास्तोत्रमिदं पुण्यं यः शृणोति समाहितः ।
सस्नातः सर्वतीर्थेषु वेदपाठफलं लभेत् ॥ ४८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे स्वधोपाख्यानं नाम
एकचत्वारिंशोऽध्यायः ।

———

# द्विचत्वारिंशोऽध्यायः ।

—०—

नारायण उवाच ।

उक्तं स्वाहा स्वधाख्यानं प्रशस्तं मधुरं परम् ।
वक्ष्यामि दक्षिणाख्यानं सावधानं निशामय ॥ १ ॥
गोपी सुशीला गोलोके पुरासीत् प्रेयसी हरेः ।
राधाप्रधाना सध्रीची धन्या मान्या मनोहरा ।
अतीवसुन्दरी रामा सुभगा सुदती सती ॥ २ ॥
विद्यावती गुणवती सती रूपवती तथा ।
कलावती कोमलाङ्गी कान्ता कमललोचना ॥ ३ ॥
सुश्रोणी सुस्तनी श्यामा न्यग्रोधपरिमण्डला ।
ईषद्धास्यप्रसन्नास्या रत्नालङ्कारभूषिता ॥ ४ ॥
श्वेतचम्पकवर्णाभा बिम्बोष्ठी मृगलोचना ।
कामशास्त्रसुनिष्णाता कामिनी हंसगामिनी ॥ ५ ॥
भावानुरक्ता भावज्ञा कृष्णस्य प्रियभाविनी ।
रसज्ञा रसिका रासे रासेशस्य रसोत्सुका ॥ ६ ॥
उवास दक्षिणे क्रोड़े राधायाः पुरतः पुरा ।
संबभूवानम्रमुखो भयेन मधुसूदनः ॥ ७ ॥
दृष्ट्वा राधाञ्च पुरतो गोपीनां प्रवरां वराम् ।
मानिनीं रक्तवदनां रक्तपङ्कजलोचनाम् ॥ ८ ॥
कोपेन कम्पिताङ्गीञ्च कोपनां कोपदर्शनाम् ।
कोपेन निष्टुरं वक्तुमुद्यतां स्फुरिताधराम् ॥ ९ ॥

आगच्छन्तीञ्च वेगेन विज्ञाय तदनन्तरम् ।
विरोधभीतो भगवानन्तर्द्धानं चकार सः ॥ १० ॥
पलायन्तञ्च तं शान्तं सत्त्वाधारं सुविग्रहम् ।
विलोक्य कम्पिता गोपी सुशीलान्तर्दधौ भिया ॥११॥
विलोक्य सङ्कटं तत्र गोपीनां लक्षकोटयः ।
पुटाञ्जलियुता भीता भक्तिनम्रात्मकन्धराः ॥ १२ ॥
रक्ष रक्षेत्युक्तवत्यो हे देवीति पुनः पुनः ।
ययुर्भयेन शरणं तस्याश्चरणपङ्कजे ॥ १३ ॥
त्रिलक्षकोटयो गोपाः सुदामादय एव च ।
ययुर्भयेन शरणं तत् पादाब्जे च नारद ॥ १४ ॥
पलायन्तञ्च कान्तञ्च विज्ञाय परमेश्वरी ।
पलायन्तीं सहचरीं सुशीलाञ्च शशाप सा ॥ १५ ॥
अद्य प्रभृति गोलोकं सा चेदायाति गोपिका ।
सद्यो गमनमात्रेण भस्मसाच्च भविष्यति ॥ १६ ॥
इत्येवमुक्त्वा तत्रैव देवदेवीश्वरी रुषा ।
रासेश्वरी रासमध्ये रासेशमाजुहाव ह ॥ १७ ॥
नालोक्य पुरतः कृष्णं राधा विरहकातरा ।
युगकोटिसमं मेने क्षणभेदेन सुव्रता ॥ १८ ॥
हे कृष्ण हे प्राणनाथागच्छ प्राणाधिकप्रिय ।
प्राणाधिष्ठातृदेवेह प्राणा यान्ति त्वया विना ॥१९॥
स्त्रीगर्वः पतिसौभाग्याद्वर्द्धते च दिने दिने ।
सुखी चेद्विभवो यस्मात् तं भजेद्धर्मतः सदा ॥ २० ॥
पतिर्बन्धुः कुलस्त्रीणामधिदेवः सदागतिः ।
परं सम्पत्स्वरूपश्च सुखरूपश्च मूर्त्तिमान् ॥ २१ ॥

धर्मदः सुखदः शश्वत् प्रीतिदः शान्तिदः सदा ।
सम्मानदो मानदश्च मान्यश्च मानखण्डनः ॥ २२ ॥
सारात् सारतमः स्वामी बन्धूनां बन्धुवर्द्धनः ।
न च भर्त्तुः समो बन्धुः सर्वबन्धुषु दृश्यते ॥ २३ ॥
भरणादेव भर्त्तायं पालनात् पतिरुच्यते ।
शरीरेशाच्च सः स्वामी कामदात् कान्त एव च ॥२४॥
बन्धुश्च सुखबन्धाच्च प्रीतिदानात् प्रियः परः ।
ऐश्वर्य्यदानादीशश्च प्राणेशात् प्राणनाथकः ॥ २५ ॥
रतिदानाच्च रमणः प्रियो नास्ति प्रियात् परः ।
पुत्रस्तु स्वामिनः शुक्राज्जायते तेन स प्रियः ॥ २६ ॥
शतपुत्रात् परः स्वामी कुलजानां प्रियः सदा ।
असत्कुलप्रसूता या कान्तं विज्ञातुमक्षमा ॥ २७ ॥
स्नानञ्च सर्वतीर्थेषु सर्वयज्ञेषु दीक्षणम् ।
प्रादक्षिण्यं पृथिव्याश्च सर्वाणि च तपांसि च ॥ २८ ॥
सर्वाण्येव व्रतादीनि महादानानि यानि च ।
उपोषणानि पुण्यानि यान्यन्यानि च विश्वतः ॥२९॥
गुरुसेवा विप्रसेवा देवसेवादिकञ्च यत् ।
स्वामिनः पादसेवायाः कलां नार्हन्ति षोड़शीम् ॥३०॥
गुरुविप्रेष्टदेवेषु सर्वेभ्यश्च पतिर्गुरुः ।
विद्यादाता यथा पुंसां कुलजानां तथा प्रियः ॥ ३१ ॥
गोपी विलक्षकोटीनां गोपानाञ्च तथैव च ।
ब्रह्माण्डानामसंख्यानां तत्स्थानां तथैव च ॥३२
रमादि गोलकान्तानामीश्वरी यत् प्रसादतः ।
अहं नजाने तं कान्तं स्त्रीस्वभावो दुरत्ययः ॥ ३३ ॥

इत्युक्त्वा राधिका कृष्णं तत्र दध्यौ सुभक्तितः।
आरात् संप्राप तं तेन विजहार च तत्र वै ॥ ३४ ॥
अथ सा दक्षिणा देवी ध्वस्ता गोलोकतो मुने।
सुचिरञ्च तपस्तप्त्वा विवेश कमलातनौ ॥ ३५ ॥
अथ देवादयः सर्वे यज्ञं कृत्वा सुदुष्करम्।
न लभन्ते फलं तेषां विषस्णाः प्रययुर्विधिम् ॥ ३६ ॥
विधिर्निवेदनं श्रुत्वा देवादीनां जगत्पतिः।
दध्यौ सुचिन्तितो भक्त्या तत् प्रत्यादेशमाप सः ॥३७॥
नारायणश्च भगवान् महालक्ष्म्याश्च देहतः।
विनिष्कृष्य मर्त्त्यलक्ष्मीं ब्रह्मणे दक्षिणां ददौ ॥ ३८ ॥
ब्रह्मा ददौ तां यज्ञाय पूर्णार्थं कर्मणां सताम्।
यज्ञः संपूज्य विधिवत्तां तुष्टाव रमां मुदा ॥ ३९ ॥
तप्तकाञ्चनवर्णाभां चन्द्रकोटिसमप्रभाम्।
अतीवकमनीयाञ्च सुन्दरीं सुमनोहराम् ॥ ४० ॥
कमलास्यां कोमलाङ्गीं कमलायतलोचनाम्।
कमलासनपूज्याञ्च कमलाङ्गसमुद्भवाम् ॥ ४१ ॥
वह्निशुद्धांशुकाधानां विम्बोष्ठीं सुदतीं सतीम्।
विभ्रतीं कवरीभारं मालतीमाल्यभूषितम् ॥ ४२ ॥
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्।
सुवेशाढ्याञ्च सुस्नातां मुनिमानसमोहिनीम् ॥ ४३ ॥
कस्तूरीविन्दुभिः सार्द्धं सुगन्धिचन्दनादिभिः।
सिन्दूरविन्दुनात्यन्तमलकाधः स्थलोज्ज्वलाम् ॥ ४४ ॥
सुप्रशस्तनितम्बाढ्यां वृहच्छ्रोणिपयोधराम्।
कामदेवाधाररूपां कामबाणप्रपीड़िताम् ॥ ४५ ॥

तां दृष्ट्वा रमणीयाञ्च यज्ञो मूर्च्छामवाप ह ।
पत्नीं तामेव जग्राह विधिबोधितपूर्वकम् ॥ ४६ ॥
दिव्यं वर्षशतञ्चैव तां गृहीत्वा सुनिर्जने ।
यज्ञो रेमे मुदायुक्तो रामया रमया सह ॥ ४७ ॥
गर्भं दधार सा देवी दिव्यं द्वादशवत्सरम् ।
ततः सुषाव पुत्रञ्च फलञ्च सर्वकर्मणाम् ॥ ४८ ॥
कर्मणां फलदाता च दक्षिणा कर्मिणां सताम् ।
परिपूर्णे कर्मणि च तत्पुत्रः फलदायकः ॥ ४९ ॥
यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च ।
कर्मणां फलदाता चेत्येवं वेदविदो विदुः ॥ ५० ॥
यज्ञश्च दक्षिणां प्राप्य पुत्रञ्च फलदायकम् ।
फलं ददौ च सर्वेभ्यः कर्मिभ्य इति नारद ॥ ५१ ॥
तदा देवादयस्तुष्टाः परिपूर्णमनोरथाः ।
स्वस्थानं प्रययुः सर्वे धर्मवक्त्रादिदं श्रुतम् ॥ ५२ ॥
कृत्वा कर्म च कर्त्ता च तूर्णं दद्याच्च दक्षिणाम् ।
तत्क्षणं फलमाप्नोति वेदैरुक्तमिदं मुने ॥ ५३ ॥
कर्मी कर्मणि पूर्णे च तत्क्षणात् यदि दक्षिणाम् ।
न दद्यात् ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा ॥ ५४ ॥
मुहूर्त्ते समतीते च द्विगुणा सा भवेत् ध्रुवम् ॥ ५५ ॥
एकरात्र व्यतीते तु भवेत् रसगुणा च सा ।
त्रिरात्रे च दशगुणं सप्ताहे द्विगुणा ततः ॥ ५६ ॥
मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते ।
संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवेत् ॥ ५७ ॥
कर्म्म तद् यजमानानां सर्वञ्च निष्फलं भवेत् ।

स च ब्रह्मस्वापहारी न कर्मार्होऽशुचिर्नरः ॥ ५८ ॥
दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी ।
तद्गृहाद् याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम् ॥५९॥
पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम् ।
एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम् ॥ ६० ॥
दाता न दीयते दानं गृहीता तन्न याचते ।
उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः ॥ ६१ ॥
नार्पयेद् यजमानश्चेद् याचितारञ्च दक्षिणाम् ।
भवेद् ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद् ध्रुवम् ॥६२॥
वर्षलक्षं वसेत्तत्र यमदूतेन ताड़ितः ।
ततो भवेत् स चण्डालो व्याधियुक्तो दरिद्रकः ॥६३॥
पातयेत् पुरुषान् सप्त पूर्वांश्च पूर्वजन्मनः ।
इत्येवं कथितं विप्र किं भूयः श्रोतुमिच्छसि ॥ ६४ ॥

नारद उवाच ।

यत्कर्म दक्षिणाहीनं को भुङ्क्ते तत्फलं मुने ।
पूजाविधिं दक्षिणायाः पुरा यज्ञकृतं वद ॥ ६५ ॥

नारायण उवाच ।

कर्मणोऽदक्षिणस्यैव कुत एव फलं मुने ।
सदक्षिणे कर्मणि च फलमेव प्रवर्त्तते ॥ ६६ ॥
या या कर्मणि सामग्री बलिर्भुङ्क्ते च तां मुने ।
बलये तत् प्रदत्तञ्च वामनेन पुरा मुने ॥ ६७ ॥
अश्रोत्रियं श्राद्धद्रव्यमश्राद्धं दानमेव च ।
वृषलीपतिविप्राणां पूजाद्रव्यादिकञ्च यत् ॥ ६८ ॥
ऋत्विजा न कृतं यज्ञमशुचेः पूजनञ्च यत् ।

गुरावभक्तस्य कर्म्म बलिर्भुङ्क्ते न संशयः ॥ ६९ ॥
दक्षिणायाश्च यद्ध्यानं स्तोत्रं पूजाविधिक्रमम् ।
तत्सर्वं काण्वशाखोक्तं प्रवक्ष्यामि निशामय ॥ ७० ॥
पुरा संप्राप्य तां यज्ञः कर्म्मदक्षाञ्च दक्षिणाम् ।
मुमोह तस्या रूपेण तुष्टाव कामकातरः ॥ ७१ ॥

यज्ञ उवाच ।

पुरा गोलोकगोपी त्वं गोपीनां प्रवरापरा ।
राधासमा तत् सखी च श्रीकृष्णप्रेयसी प्रिये ॥ ७२ ॥
कार्त्तिकीपूर्णिमायान्तु रासे राधामहोत्सवे ।
आविर्भूता दक्षिणांशात् कृष्णस्य तेन दक्षिणा ॥७३॥
पुरा त्वञ्च सुशीलाख्या शीलेन शोभनेन च ।
कृष्णदक्षांशवासाच्च राधाशापाच्च दक्षिणा ॥ ७४ ॥
गोलोकात् त्वं परिध्वस्ता मम भाग्यादुपस्थिता ।
कृपां कुरु त्वमेवाद्य स्वामिनं कुरु मां प्रिये ॥ ७५ ॥
कर्म्मिणां कर्म्मणां देवी त्वमेव फलदा सदा ।
त्वया विना च सर्व्वेषां सर्व्वं कर्म्म च निष्फलम् ॥७६॥
फलशाखाविहीनश्च यथा वृक्षो महीतले ।
त्वया विना तथा कर्म्म कर्म्मिणाञ्च न शोभते ॥ ७७ ॥
ब्रह्मविष्णुमहेशाश्च दिक्पालादय एव च ।
कर्म्मणश्च फलं दातुं न शक्ताश्च त्वया विना ॥ ७८ ॥
कर्म्मरूपी स्वयं ब्रह्मा फलरूपी महेश्वरः ।
यज्ञरूपी विष्णुरहं त्वमेषां साररूपिणी ॥ ७९ ॥
फलदाता परं ब्रह्म निर्गुणः प्रकृतेः परः ।
स्वयं कृष्णश्च भगवान् न च शक्तस्त्वया विना ॥ ८० ॥

त्वमेव शक्तिः कान्ते मे शश्वज्जन्मनि जन्मनि ।
सर्वकर्मणि शक्तोऽहं त्वया सह वरानने ॥ ८१ ॥
इत्युक्त्वा तत्पुरस्तस्थौ यज्ञाधिष्ठातृदेवकः ।
तुष्टा बभूव सा देवी भेजे तं कमलाकला ॥ ८२ ॥
इदञ्च दक्षिणास्तोत्रं यज्ञकाले च यः पठेत् ।
फलञ्च सर्वयज्ञानां लभते नात्र संशयः ॥ ८३ ॥
राजसूये वाजपेये गोमेधे नरमेधके ।
अश्वमेधे लाङ्गले च विष्णुयज्ञे यशस्करे ॥ ८४ ॥
धनदे भूमिदे फल्गौ पुत्रेष्टौ गजमेधके ।
लौहयज्ञे स्वर्णयज्ञे पटले व्याधिखण्डने ॥ ८५ ॥
शिवयज्ञे रुद्रयज्ञे शत्रुयज्ञे च बन्धके ।
इष्टौ वरुणयागे च कन्दुके वैरिमर्दने ॥ ८६ ॥
शुचियागे धर्मयागे रेचने पापमोचने ।
बन्धने कर्मयागे च मणियागे सुभद्रके ॥ ८७ ॥
एतेषाञ्च समारम्भे इदं स्तोत्रञ्च यः पठेत् ।
निर्विघ्नेन च तत् कर्म साङ्गं भवति निश्चितम् ॥ ८८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे दक्षिणास्तोत्रं
समाप्तम् ।

---

इदं स्तोत्रञ्च कथितं ध्यानं पूजाविधानकम् ।
शालग्रामे घटेवापि दक्षिणां पूजयेत् सुधीः ॥ ८९ ॥
लक्ष्मीदक्षांशसम्भूतां दक्षिणां कमलाकलाम् ।
सर्वकर्मसु दक्षाञ्च फलदां सर्वकर्मणाम् ॥ ९० ॥

विष्णोः शक्तिस्वरूपाञ्च सुशीलां शुभदां भजे ।
ध्यात्वाऽनेनैव वरदां मूलेन पूजयेत् सुधीः ॥ ९१ ॥
दत्त्वा पाद्यादिकं देव्यै वेदोक्तेन च नारद ।
श्रीं ह्रीं क्लीं ह्रीं दक्षिणायै स्वाहेति च विचक्षणः ॥९२॥
पूजयेद्विधिवद्भक्त्या दक्षिणां सर्वपूजिताम् ।
इत्येवं कथितं सर्वं दक्षिणाख्यानमुत्तमम् ॥ ९३ ॥
सुखदं प्रीतिदं चैव फलदं सर्वकर्मणाम् ।
इदञ्च दक्षिणाख्यानं यः शृणोति समाहितः ॥ ९४ ॥
अङ्गहीनञ्च तत् कर्म न भवेद्भारते भुवि ।
अपुत्रो लभते पुत्रं निश्चितञ्च गुणान्वितम् ॥ ९५ ॥
भार्य्याहीनो लभेद्भार्य्यां सुशीलां सुन्दरीं पराम् ।
वरारोहां पुत्रवतीं विनीतां प्रियवादिनीम् ॥ ९६ ॥
पतिव्रतां सुव्रताञ्च शुद्धाञ्च कुलजां वराम् ।
विद्याहीनो लभेद्विद्यां धनहीनो धनं लभेत् ॥ ९७ ॥
भूमिहीनो लभेद्भूमिं प्रजाहीनो लभेत् प्रजाम् ।
सङ्कटे बन्धुविच्छेदे विपत्तौ बन्धने तथा ॥ ९८ ॥
मासमेकमिदं श्रुत्वा मुच्यते नात्र संशयः ॥ ९९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे दक्षिणोपाख्यानं
नाम द्विचत्वारिंशत्तमोऽध्यायः ।



# त्रिचत्वारिंशोऽध्यायः।

नारद उवाच।

अनेकासाञ्च देवीनां श्रुतमाख्यानमुत्तमम्।
अन्यासां चरितं ब्रह्मन् वद वेदविदांवर ॥ १ ॥

नारायण उवाच।

सर्वासां चरितं विप्र वेदेष्वस्ति पृथक् पृथक्।
पूर्वोक्तानाञ्च देवीनां त्वं कासां श्रोतुमिच्छसि ॥ २ ॥

नारद उवाच।

षष्ठी मङ्गलचण्डी च मनसा प्रकृतेः कला।
व्युत्पत्तिमासां चरितं श्रोतुमिच्छामि तत्त्वतः ॥३॥

नारायण उवाच।

षष्ठांशा प्रकृतेर्या च सा च षष्ठी प्रकीर्त्तिता।
बालकाधिष्ठातृ देवी विष्णुमाया च बालदा ॥ ४ ॥
मातृकासु च विख्याता देवसेनाभिधा च सा।
प्राणाधिकप्रिया साध्वी स्कन्दभार्य्या च सुव्रता ॥ ५ ॥
आयुः प्रदा च बालानां धात्री रक्षणकारिणी।
सन्ततं शिशुपार्श्वस्था योगेन सिद्धियोगिनी ॥ ६ ॥
तस्याः पूजाविधौ ब्रह्मन्नितिहासविधिं शृणु।
यत् श्रुतं धर्म्मवक्त्रेण सुखदं पुत्त्रदं परम् ॥ ७ ॥
राजा प्रियव्रतश्चासीत् स्वायम्भुवमनोः सुतः।
योगीन्द्रो नोद्वहेद्भार्य्यां तपस्यासु रतः सदा ॥ ८ ॥

ब्रह्माज्ञया च यत्नेन कृतदारो बभूव सः ।
सुचिरं कृतदारश्च न लेभे तनयं मुने ॥ ९ ॥
पुत्त्रेष्टि यज्ञं तञ्चापि कारयामास कश्यपः ।
मालिन्यै तस्य कान्तायै मुनिर्यज्ञचरुं ददौ ॥ १० ॥
भुक्त्वा चरुञ्च तस्याश्च सद्यो गर्भो बभूव ह ।
दधार तञ्च सा देवी दैवं द्वादशवत्सरम् ॥ ११ ॥
ततः सुषाव सा ब्रह्मन् कुमारं कनकप्रभम् ।
सर्वावयवसम्पन्नं मृतमुत्तारलोचनम् ॥ १२ ॥
तं दृष्ट्वा रुरुदुः सर्वा नार्य्यश्च बान्धवस्त्रियः ।
मूर्च्छामवाप तन्माता पुत्त्रशोकेन सुव्रता ॥ १३ ॥
श्मशानञ्च ययौ राजा गृहीत्वा बालकं मुने ।
रुरोद तत्र कान्तारे पुत्रं कृत्वा स्ववक्षसि ॥ १४ ॥
नोत्सृज्य बालकं राजा प्राणां स्त्यक्तुं समुद्यतः ।
ज्ञानयोगं विसस्मार पुत्त्रशोकात् सुदारुणात् ॥ १५ ॥
एतस्मिन्नन्तरे तत्र विमानञ्च ददर्श ह ।
शुद्धस्फटिकसङ्काशं मणिराजविराजितम् ॥ १६ ॥
तेजसा ज्वलितं शश्वत् शोभितं क्षौमवाससा ।
नानाचित्रविचित्राढ्यं पुष्पमालाविराजितम् ॥ १७ ॥
ददर्श तत्र देवीञ्च कमनीयां मनोहराम् ।
श्वेतचम्पकवर्णाभां शश्वत्सुस्थिरयौवनाम् ॥ १८ ॥
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम् ।
कृपामयीं योगसिद्धां भक्तानुग्रहकातराम् ॥ १९ ॥
दृष्ट्वा तां पुरतो राजा तुष्टाव परमादरम् ।
चकार पूजनं तस्या विहाय बालकं भुवि ॥ २० ॥

पप्रच्छ राजा तां दृष्ट्वा ग्रीष्मसूर्य्यसमप्रभाम्।
तेजसा ज्वलितां शान्तां कान्तां स्कन्दस्य नारद ॥२१॥

प्रियव्रत उवाच।

कथं सुशोभने कान्ते कस्य कान्तासि सुव्रते।
कस्य कन्या वरारोहे धन्या मान्या च योषिताम् ॥२२॥
नृपेन्द्रस्य वचः श्रुत्वा जगन्मङ्गलदायिनी।
उवाच देवसेना सा देवरक्षणकारिणी ॥ २३ ॥
देवानां दैत्यग्रस्तानां पुरा सेना बभूव सा।
जयं ददौ च तेभ्यश्च देवसेना च तेन सा ॥ २४ ॥

देवसेनोवाच।

ब्रह्मणो मानसी कन्या देवसेनाहमीश्वरी।
सृष्ट्वा मां मनसो धाता ददौ स्कन्दाय भूमिप ॥ २५ ॥
मातृकासु च विख्याता स्कन्दसेना च सुव्रता।
विश्वे षष्ठीति विख्याता षष्ठांशा प्रकृतेर्यतः ॥ २६ ॥
अपुत्राय पुत्रदाऽहं प्रियदाता प्रियाय च।
धनदा च दरिद्रेभ्यो कर्मिणे शुभकर्मदा ॥ २७ ॥
सुखं दुःखं भयं शोकं हर्षं मङ्गलमेव च।
सम्पत्तिश्च विपत्तिश्च सर्वं भवति कर्मणा ॥ २८ ॥
कर्मणा बहुपुत्री च वंशहीनश्च कर्मणा।
कर्मणा रूपवांश्चैव रोगी शश्वत् स्वकर्मणा ॥ २९ ॥
कर्मणा मृतपुत्रश्च कर्मणा चिरजीविनः।
कर्मणा गुणवन्तश्च कर्मणा चाङ्गहीनकः ॥ ३० ॥
तस्मात् कर्मपरं राजन् सर्वेभ्यश्च श्रुतौ श्रुतम्।
कर्मरूपी च भगवान् तद्द्वारा फलदो हरिः ॥ ३१ ॥

इत्येवमुक्त्वा सा देवी गृहीत्वा बालकं मुने।
महाज्ञानेन सहसा जीवयामास लीलया॥ ३२॥
राजा ददर्श तं बालं सस्मितं कनकप्रभम्।
देवसेना च पश्यन्तं नृपमम्बरमेव च॥ ३३॥
गृहीत्वा बालकं देवी गगनं गन्तुमुद्यता।
पुनस्तुष्टाव तां राजा शुष्ककण्ठौष्ठतालुकः॥ ३४॥
नृपस्तोत्रेण सा देवी परितुष्टा बभूव ह।
उवाच तं नृपं ब्रह्मन् वेदोक्तं कर्मनिर्मितम्॥ ३५॥

देवसेनोवाच।

त्रिषु लोकेषु राजा त्वं स्वायम्भुव मनोः सुतः।
मम पूजाञ्च सर्वत्र कारयित्वा स्वयं कुरु॥ ३६॥
तदा दास्यामि पुत्रन्ते कुलपद्मं मनोहरम्।
सुव्रतं नामविख्यातं गुणवन्तं सुपण्डितम्॥ ३७॥
जातिस्मरञ्च योगीन्द्रं नारायणपरायणम्।
शतक्रतुकरं श्रेष्ठं क्षत्रियाणाञ्च वन्दितम्॥ ३८॥
मत्तमातङ्गलक्षाणां धृतवन्तं बलं शुभम्।
धन्विनं गुणिनं शुद्धं विदुषां प्रियमेव च॥ ३९॥
योगिनं ज्ञानिनञ्चैव सिद्धरूपं तपस्विनम्।
यशस्विनञ्च लोकेषु दातारं सर्वसम्पदाम्॥ ४०॥
इत्येवमुक्त्वा सा देवी तस्मै तद्बालकं ददौ।
राजा चकार स्वीकारं तत्पूजार्थञ्च सुव्रतः॥ ४१॥
जगाम देवी स्वर्गञ्च दत्त्वा तस्मै शुभं वरम्।
आजगाम महाराजा स्वगृहं हृष्टमानसः।
आगत्य कथयामास वृत्तान्तं पुत्रहेतुकम्॥ ४२॥

तुष्टा बभूवुः सन्तुष्टा नरनार्य्यश्च नारद ।
मङ्गलं कारयामास सर्वत्र पुत्रहेतुकम् ।
देवीञ्च पूजयामास ब्राह्मणेभ्यो धनं ददौ ॥ ४३ ॥
राजा च प्रतिमासेषु शुक्लषष्ठ्यां महोत्सवम् ।
षष्ठ्यादेव्याश्च यत्नेन कारयामास सर्वतः ॥ ४४ ॥
बालानां सूतिकागारे षष्ठाहे यत्नपूर्वकम् ।
तत्पूजां कारयामास चैकविंशतिवासरे ॥ ४५ ॥
बालानां शुभकार्य्ये च शुभान्नप्राशने तथा ।
सर्वत्र वर्द्धयामास स्वयमेव चकार ह ॥ ४६ ॥
ध्यानं पूजाविधानञ्च स्तोत्रं मत्तो निशामय ।
यत्श्रुतं धर्मवक्त्रेण कौथुमोक्तञ्च सुव्रत ॥ ४७ ॥
शालग्रामे घटेवाथ वटमूलेऽथवा मुने ।
भित्त्यां पुत्तलिकां कृत्वा पूजयेद् वा विचक्षणः ॥४८॥
षष्ठांशां प्रकृतेः शुद्धां सुप्रतिष्ठां च सुव्रताम् ।
सुपुत्रदाञ्च शुभदां दयारूपां जगत्प्रसुम् ॥ ४९ ॥
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ।
पवित्ररूपां परमां देवसेनां परां भजे ॥ ५० ॥
इति ध्यात्वा स्वशिरसि पुष्पं दत्वा विचक्षणः ।
पुनर्ध्यात्वा च मूलेन पूजयेत् सुव्रतां सतीम् ॥ ५१ ॥
पाद्यार्घ्याचमनीयैश्च गन्धधूपप्रदीपकैः ।
नैवेद्यैर्विविधैश्चापि फलेन शोभनेन च ॥ ५२ ॥
मूलं ओं ह्रीं षष्ठीदेव्यै स्वाहेति विधिपूर्वकम् ।
अष्टाक्षरं महामन्त्रं यथाशक्ति जपेन्नरः ॥ ५३ ॥
तत्र स्तुत्वा च प्रणमेत् भक्तियुक्तः समाहितः ।

स्तोत्रञ्च सामवेदोक्तं धनपुत्रफलप्रदम् । ५४ ॥
अष्टाक्षरं महामन्त्रं लक्षधा यो जपेन्मुने ।
स पुत्रं लभते नूनमित्याह कमलोद्भवः ॥ ५५ ॥
स्तोत्रं शृणु मुनिश्रेष्ठ सर्वेषाञ्च शुभावहम् ।
वाञ्छाप्रदञ्च सर्वेषां गूढ़ं वेदे च नारद ॥ ५६ ॥

प्रियव्रत उवाच ।

नमो देव्यै महादेव्यै सिद्ध्यै शान्त्यै नमो नमः ।
शुभायै देवसेनायै षष्ठीदेव्यै नमो नमः ॥ ५७ ॥
वरदायै पुत्रदायै धनदायै नमो नमः ।
सुखदायै मोक्षदायै षष्ठीदेव्यै नमो नमः ॥ ५८ ॥
शक्तेः षष्ठांशरूपायै सिद्धायै च नमो नमः ।
मायायै सिद्धयोगिन्यै षष्ठीदेव्यै नमो नमः ॥ ५९ ॥
परायै पारदायै च षष्ठीदेव्यै नमो नमः ।
सारायै सारदायै च पारायै सर्वकर्मणाम् ॥ ६० ॥
बालाधिष्ठातृदेव्यै च षष्ठीदेव्यै नमो नमः ।
कल्याणदायै कल्याण्यै फलदायै च कर्मणाम् ॥ ६१ ॥
प्रत्यक्षायै च भक्तानां षष्ठीदेव्यै नमो नमः ।
पूज्यायै स्कन्दकान्तायै सर्वेषां सर्वकर्मसु ॥ ६२ ॥
देवरक्षणकारिण्यै षष्ठीदेव्यै नमो नमः ।
शुद्धसत्त्वस्वरूपायै वन्दितायै नृणां सदा ॥ ६३ ॥
हिंसाक्रोधवर्जितायै षष्ठीदेव्यै नमो नमः ।
धनं देहि प्रियां देहि पुत्रं देहि सुरेश्वरि ॥ ६४ ॥
धर्मं देहि यशो देहि षष्ठीदेव्यै नमो नमः ।
भूमिं देहि प्रजां देहि देहि विद्यां सुपूजिते ॥ ६५ ॥

कल्याणञ्च जयं देहि षष्ठीदेव्यै नमो नमः ।
इति देवीञ्च संस्तूय लेभे पुत्रं प्रियव्रतः ॥ ६६ ॥
यशस्विनञ्च राजेन्द्रं षष्ठीदेवीप्रसादतः ।
षष्ठीस्तोत्रमिदं ब्रह्मन् यः शृणोति च वत्सरम् ॥ ६७ ॥
अपुत्रो लभते पुत्रं वरं सुचिरजीविनम् ।
वर्षमेकञ्च या भक्त्या संयतेदं शृणोति च ॥ ६८ ॥
सर्वपापाद्विनिर्मुक्ता महावन्ध्या प्रसूयते ।
वीरपुत्रञ्च गुणिनं विद्यावन्तं यशस्विनम् ॥ ६९ ॥
सुचिरायुष्मन्तमेव षष्ठीमातृप्रसादतः ।
काकवन्ध्या च या नारी मृतापत्या च या भवेत् ॥७०॥
वर्षं श्रुत्वा लभेत् पुत्रं षष्ठीदेवीप्रसादतः ।
रोगयुक्ते च बाले च पिता माता शृणोति च ॥७१॥
मासञ्च मुच्यते बालः षष्ठीदेवीप्रसादतः ॥ ७२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद
संवादे प्रकृतिखण्डे षष्ठ्युपाख्याने
षष्ठीस्तोत्रं त्रिचत्वारिंशत्तमोऽध्यायः ।

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

---

नारायण उवाच ।

कथितं षष्ठ्युपाख्यानं ब्रह्मपुत्र यथागमम् ।
देवी मङ्गलचण्डी च तदाख्यानं निशामय ॥ १ ॥

तस्याः पूजादिकं सर्वं धर्मवक्त्राच्च यत्श्रुतम् ।
श्रुतिसम्मतमेवेष्टं सर्वेषां विदुषामपि ॥ २ ॥
दक्षायां वर्त्तते चण्डी कल्याणेषु च मङ्गलम् ।
मङ्गलेषु च या दक्षा सा च मङ्गलचण्डिका ॥ ३ ॥
दुर्गायां विद्यते चण्डी मङ्गलोऽपि महीसुते ।
मङ्गलाभीष्टदेवी या सा वा मङ्गलचण्डिका ॥ ४ ॥
मङ्गलो मनुवंशश्च सप्तद्वीपावनीपतिः ।
तस्य पूज्याभीष्टदेवी तेन मङ्गलचण्डिका ॥ ५ ॥
मूर्त्तिभेदेन सा दुर्गा मूलप्रकृतिरीश्वरी ।
कृपारूपातिप्रत्यक्षा योषितामिष्टदेवता ॥ ६ ॥
प्रथमे पूजिता सा च शङ्करेण पुरा परा ।
त्रिपुरस्य वधे घोरे विष्णुना प्रेरितेन च ॥ ७ ॥
ब्रह्मन् ब्रह्मोपदेशे च दुर्गप्रस्थे च सङ्कटे ।
आकाशात् पतिते याने दैत्येन पातिते रुषा ॥ ८ ॥
ब्रह्मविष्णूपदिष्टश्च दुर्गां तुष्टाव शङ्करः ।
सा च मङ्गलचण्डी च बभूव रूपभेदतः ॥ ९ ॥
उवाच पुरतः शम्भोर्भयं नास्तीति ते प्रभो ।
भगवान् वृषरूपश्च सर्वेशश्च बभूव ह ॥ १० ॥
युद्धशक्तिस्वरूपाहं भविष्यामि तदाज्ञया ।
मयात्मना च हरिणा सहायेन वृषध्वज ॥ ११ ॥
जहि दैत्यञ्च देवेश सुराणां पदघातकम् ।
इत्युक्त्वान्तर्हिता देवी शम्भोः शक्तिर्बभूव सा ॥ १२ ॥
विष्णुदत्तेन शस्त्रेण जघान तमुमापतिः ।
मुनीन्द्र पतिते दैत्ये सर्वे देवा महर्षयः ॥ १३ ॥

तुष्टुवुः शङ्करं देवा भक्तिनम्रात्मकन्धराः ।
सद्यः शिरसि शम्भोश्च पुष्पवृष्टिर्बभूव ह ॥ १४ ॥
ब्रह्मा विष्णुश्च सन्तुष्टौ ददौ तस्मै शुभाशिषम् ।
ब्रह्माविष्णूपदिष्टश्च सुस्नातः शङ्करः शुचिः ॥ १५ ॥
पूजयामास तां शक्तिं देवीं मङ्गलचण्डिकाम् ।
पाद्यार्घ्याचमनीयैश्च बलिभिर्विविधैरपि ॥ १६ ॥
पुष्पचन्दननैवेद्यैर्भक्त्या नानाविधैर्मुने ।
छागैर्मेषैश्च महिषैर्गण्डैर्मायातिभिर्वरैः ॥ १७ ॥
वस्त्रालङ्कारमाल्यैश्च पायसैः पिष्टकैरपि ।
मधुभिश्च सुधाभिश्च पक्वैर्नानाविधैः फलैः ॥ १८ ॥
सङ्गीतैर्नर्त्तनैर्वाद्यैरुत्सवैः कृष्णकीर्त्तनैः ।
ध्यात्वा माध्यन्दिनोक्तेन ध्यानेन भक्तिपूर्वकम् ॥ १९ ॥
ददौ द्रव्याणि मूलेन मन्त्रेणैव च नारद ।
ओं ह्रीं श्रीं क्लीं सर्वपूज्ये देवि मङ्गलचण्डिके ।
ऐं क्रूं फट् स्वाहेत्येवं चाप्येकविंशाक्षरो मनुः ॥२० ॥
पूज्यः कल्पतरुश्चैव भक्तानां सर्वकामदः ।
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥ २१ ॥
मन्त्रसिद्धिर्भवेद्यस्य स विष्णुः सर्वकामदः ।
ध्यानञ्च श्रूयतां ब्रह्मन् वेदोक्तं सर्वसम्मतम् ॥ २२ ॥
देवीं षोड़शवर्षीयां शश्वत्सुस्थिरयौवनाम् ।
सर्वरूपगुणाढ्याञ्च कोमलाङ्गीं मनोहराम् ॥ २३ ॥
श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम् ।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥ २४ ॥
बिभ्रतीं कवरीभारं मल्लिकामाल्यभूषितम् ।

बिम्बोष्ठीं सुदतीं शुद्धां शरत्पद्मनिभाननाम् ॥ २५ ॥
ईषद्धास्यप्रसन्नास्यां सुनीलोत्पललोचनाम् ।
जगद्धात्रीञ्च दात्रीञ्च सर्वेभ्यः सर्वसम्पदाम् ॥ २६ ॥
संसारसागरे घोरे पोतरूपां वरां भजे ॥ २७ ॥
देव्याश्च ध्यानमित्येवं स्तवनं श्रूयतां मुने ।
प्रयतः सङ्कटग्रस्तो येन तुष्टाव शङ्करः ॥ २८ ॥

शङ्कर उवाच ।

रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके ।
हारिके विपदां राशिं हर्षमङ्गलकारिके ॥ २९ ॥
हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके ।
शुभे मङ्गलदक्षे च शुभमङ्गलचण्डिके ॥ ३० ॥
मङ्गले मङ्गलार्हे च सर्वमङ्गलमङ्गले ।
सतां मङ्गलदे देवि सर्वेषां मङ्गलालये ॥ ३१ ॥
पूज्या मङ्गलवारे च मङ्गलाभीष्टदेवते ।
पूज्ये मङ्गलभूपस्य मनुवंशस्य सन्ततम् ॥ ३२ ॥
मङ्गलाधिष्ठातृदेवी मङ्गलानाञ्च मङ्गले ।
संसारमङ्गलाधारे मोक्षमङ्गलदायिनि ॥ ३३ ॥
सारे च मङ्गलाधारे पारे च सर्वकर्मणाम् ।
प्रति मङ्गलवारे च पूज्ये च मङ्गलप्रदे ॥ ३४ ॥
स्तोत्रेणानेन शम्भुश्च स्तुत्वा मङ्गलचण्डिकाम् ।
प्रति मङ्गलवारे च पूजां कृत्वा गतः शिवः ॥ ३५ ॥
देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ।
तन्मङ्गलं भवेच्छश्वन्नभवेत्तदमङ्गलम् ॥ ३६ ॥
प्रथमे पूजिता देवी शिवेन सर्वमङ्गला ।

द्वितीये पूजिता देवी मङ्गलेन ग्रहेण च ॥ ३७ ॥
तृतीये पूजिता भद्रा मङ्गलेन नृपेण च ।
चतुर्थे मङ्गलेवारे सुन्दरीभिश्च पूजिता ।
पञ्चमे मङ्गलाकाङ्क्षैर्नरैर्मङ्गलचण्डिका ॥ ३८ ॥
पूजिता प्रतिविश्वेषु विश्वेशपूजिता सदा ।
ततः सर्वत्र संपूज्या सा बभूव सुरेश्वरी ॥ ३९ ॥
देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने ।
देव्याश्च मङ्गलस्तोत्रं यः शृणोति समाहितः ॥ ४० ॥
तन्मङ्गलं भवेच्छश्वन्नभवेत्तदमङ्गलम् ।
वर्द्धन्ते तत् पुत्रपौत्रा मङ्गलञ्च दिने दिने ॥ ४१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे मङ्गलोपाख्यानं तत् स्तोत्रकथनं
नाम चतुश्चत्वारिंशत्तमोऽध्यायः ।

---

## पञ्चचत्वारिंशत्तमोऽध्यायः ।

—०—

नारायण उवाच ।

उक्तं द्वयोरुपाख्यानं ब्रह्मपुत्र यथागमम् ।
श्रूयतां मनसाख्यानं यत् श्रुतं धर्मवक्त्रतः ॥ १ ॥
कन्या सा च भगवती कश्यपस्य च मानसी ।
तेनेयं मनसा देवी मनसा या च दीव्यति ॥ २ ॥
मनसा ध्यायते या वा परमात्मानमीश्वरम् ।

तेन सा मनसादेवी योगेन तेन दीव्यति ॥ ३ ॥
आत्मारामा च सा देवी वैष्णवी सिद्धयोगिनी।
त्रियुगञ्च तपस्तप्ता कृष्णस्य परमात्मनः ॥ ४ ॥
जरत्कारु शरीरञ्च दृष्ट्वा यां चीणमीश्वरः।
गोपीपतिर्नामचक्रे जरत्कारु रिति प्रभुः ॥ ५ ॥
वाञ्छितञ्च ददौ तस्यै कृपया च कृपानिधिः।
पूजाञ्च कारयामास चकार च पुनः स्वयम् ॥ ६ ॥
स्वर्गे च नागलोके च पृथिव्यां ब्रह्मलोकतः।
भृशं जगत्सु गौरी सा सुन्दरी च मनोहरा ॥ ७ ॥
जगद्गौरीतिविख्याता तेन सा पूजिता सती।
शिवशिष्या च सा देवी तेन शैवीति कीर्त्तिता ॥ ८ ॥
विष्णुभक्तातीव शश्वद्वैष्णवी तेन नारद।
नागानां प्राणरक्षित्री यज्ञे जन्मेजयस्य च ॥ ९ ॥
नागेश्वरीतिविख्याता सा नागभगिनी तथा।
विषं संहर्त्तुमीशा सा तेन विषहरीति सा ॥ १० ॥
सिद्धं योगं हरात् प्राप तेनातिसिद्धयोगिनी।
महाज्ञानञ्च गोप्यञ्च मृतसञ्जीविनीं पराम् ॥ ११ ॥
महाज्ञानयुतां ताञ्च प्रवदन्ति मनीषिणः।
आस्तिकस्य मुनीन्द्रस्य माता सा च तपस्विनः ॥१२॥
आस्तीकमाता विख्याता जगत्सु सुप्रतिष्ठिता।
प्रियामुनेर्जरत्कारोर्मुनीन्द्रस्य महात्मनः ॥ १३ ॥
योगिनो विश्वपूज्यस्य जरत्कारोः प्रिया ततः ॥ १४ ॥

ओँ नमो मनसायै।

जरत्कारुर्जगद्गौरी मनसा सिद्धयोगिनी।

वैष्णवी नागभगिनी शैवी नागेश्वरी तथा ॥ १५ ॥
जरत्कारु प्रियास्तीक माता विषहरीति च ।
महाज्ञानयुता चैव सा देवी विश्वपूजिता ॥ १६ ॥
द्वादशै तानि नामानि पूजाकाले च यः पठेत् ।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥ १७ ॥
नागभीते च शयने नागग्रस्ते च मन्दिरे ।
नागक्षते महादुर्गे नागवेष्टितविग्रहे ॥ १८ ॥
इदं स्तोत्रं पठित्वा तु मुच्यते नात्रसंशयः ।
नित्यं पठेत् यस्तं दृष्ट्वा नागवर्गः पलायते ॥ १९ ॥
दशलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ।
स्तोत्रसिद्धो भवेद् यस्य स विषं भोक्तुमीश्वरः ॥ २० ॥
नागौघं भूषणं कृत्वा स भवेन्नागवाहनः ।
नागासनो नागतल्पो महासिद्धो भवेन्नरः ॥ २१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद
सम्वादे प्रकृतिखण्डे मनसोपाख्यानं
मनसास्तोत्रं नाम पञ्चचत्वा-
रिंशत्तमोध्यायः ।

---

# षट्चत्वारिंशत्तमोऽध्यायः ।

---

नारायण उवाच ।

पूजाविधानं स्तोत्रञ्च श्रूयतां मुनिपुङ्गव ।
ध्यानञ्च सामवेदोक्तं देवीपूजाविधानकम् ॥ १ ॥
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ।
वह्निशुद्धांशुकाधानां नागयज्ञोपवीतिनीम् ॥ २ ॥
महाज्ञानयुताञ्चैव प्रवरां ज्ञानिनां सताम् ।
सिद्धाधिष्ठातृदेवीञ्च सिद्धां सिद्धिप्रदाम्भजे ॥ ३ ॥
इति ध्यात्वा च तां देवीं मूलेनैव प्रपूजयेत् ।
नैवेद्यैर्विविधैर्दीपैः पुष्पैर्धूपानुलेपनैः ॥ ४ ॥
मूलमन्त्रश्च वेदोक्तो भक्तानां वाञ्छितप्रदः ।
मूलकल्पतरुर्नाम सुसिद्धो द्वादशाक्षरः ॥ ५ ॥
ओं ह्रीं श्रीं क्लीं ऐं मनसादेव्यै स्वाहेति कीर्त्तितः ।
पञ्चलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥ ६ ॥
मन्त्रसिद्धिर्भवेद् यस्य स सिद्धो जगतीतले ।
सुधासमं विषं तस्य धन्वन्तरिसमो भवेत् ॥ ७ ॥
ब्रह्मन्नाषाढ़ संक्रान्त्यां गुढ़ाशाखासु यत्नतः ।
आवाह्य देवीं मासान्तं पूजयेद् यो हि भक्तितः ॥ ८ ॥
पञ्चम्यां मनसाख्यायां देव्यै दद्याच्च यो बलिम् ।
धनवान् पुत्रवांश्चैव कीर्त्तिमान् स भवेत् ध्रुवम् ॥ ९ ॥
पूजाविधानं कथितं तदाख्यानं निशामय ।
कथयामि महाभाग यत् श्रुतं धर्म्मवक्त्रतः ॥ १० ॥

पुरा नागभयाक्रान्ता बभूवुर्म्मानवा भुवि ।
यान् यान् खादन्ति नागाश्च न ते जीवन्ति नारद ॥ ११ ॥
मन्त्रांश्च ससृजे भीतः कश्यपो ब्रह्मणार्थितः ।
वेदवीजानुसारेण चोपदेशेन ब्रह्मणः ॥ १२ ॥
मन्त्राधिष्ठातृदेवीं तां मनसा ससृजे ततः ।
तपसा मनसा तेन बभूव मनसा च सा ॥ १३ ॥
कुमारी सा च संभूय जगाम शङ्करालयम् ।
भक्त्या सम्पूज्य कैलासे तुष्टाव चन्द्रशेखरम् ॥ १४ ॥
दिव्यं वर्षसहस्रञ्च तं सिषेवे मुनेः सुता ।
आशुतोषो महेशश्च ताञ्च तुष्टो बभूवह ॥ १५ ॥
महाज्ञानं ददौ तस्यै पाठयामास साम च ।
कृष्णमन्त्रं कल्पतरुं ददावष्टाक्षरं मुने ॥ १६ ॥
लक्ष्मीर्मायाकामवीजं ङेन्तं कृष्णपदं तथा ।
त्रैलोक्यमङ्गलं नाम कवचं पूजनक्रमम् ॥ १७ ॥
सर्वपूज्यञ्च स्तवनं ध्यानं भुवनपावनम् ।
पुरश्चर्य्याक्रमञ्चापि वेदोक्तं सर्वसम्मतम् ॥ १८ ॥
प्राप्य मृत्युञ्जयात् ज्ञानं परं मृत्युञ्जयं सती ।
जगाम तपसे साध्वी पुष्करं शङ्कराज्ञया ॥ १९ ॥
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः ।
सिद्धा बभूव सा देवी ददर्श पुरतः प्रभुम् ॥ २० ॥
दृष्ट्वा कृशाङ्गीं बालाञ्च कृपया च कृपानिधिः ।
पूजाञ्चकारयामास चकार च हरिः स्वयम् ॥ २१ ॥
वरञ्च प्रददौ तस्यै पूजिता त्वं भवे भव ।
वरं दत्त्वा च कल्याण्यै सद्यश्चान्तर्दधे विभुः ॥ २२ ॥

प्रथमे पूजिता सा च कृष्णेन परमात्मना ।
द्वितीये शङ्करेणैव कश्यपेन सुरेण च ॥ २३ ॥
मनुना मुनिना चैव नागेन मानवादिना ।
बभूव पूजिता सा च त्रिषु लोकेषु सुव्रता ॥ २४ ॥
जरत्कारु मुनीन्द्राय कश्यप स्तां ददौ पुरा ।
अयाचितो मुनिश्रेष्ठो जग्राह ब्रह्मणाज्ञया ॥ २५ ॥
कृत्वोद्वाहं महायोगी विश्रान्तस्तपसा चिरम् ।
सुष्वाप देव्या जघने वटमूले च पुष्करे ॥ २६ ॥
निद्रां जगाम स मुनिः स्मृत्वा निद्रेशमीश्वरम् ।
जगामास्तं दिनकरः सायंकाल उपस्थितः ॥ २७ ॥
संचिन्त्य मनसा तत्र मनसा च पतिव्रता ।
धर्म्मलोपभयेनैव चकारालोचनं सती ॥ २८ ॥
अकृत्वा पश्चिमां सन्ध्यां नित्याञ्चैव द्विजन्मनाम् ।
ब्रह्महत्यादिकं पापं लभिष्यति पतिर्मम ॥ २९ ॥
नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स च एवाशुचिर्नित्यं ब्रह्महत्यादिकं लभेत् ॥ ३० ॥
वेदोक्तमिति संचिन्त्य बोधयामास तं मुनिम् ।
स च बुध्वा मुनिश्रेष्ठश्चुकोप तां भृशं मुनिः ॥ ३१ ॥

जरत्कारुरुवाच ।

कथं मे सुव्रते साध्वि निद्राभङ्गः कृतस्त्वया ।
व्यर्थं व्रतादिकं तस्या या भर्त्तुर्य्यापकारिणी ॥ ३२ ॥
तपश्चानशनञ्चैव व्रतं दानादिकञ्च यत् ।
भर्त्तुरप्रियकारिण्याः सर्वं भवति निष्फलम् ॥ ३३ ॥
यया पतिः पूजितश्च श्रीकृष्णः पूजितस्तया ।

पतिव्रता व्रतार्थञ्च पतिरूपी हरिः स्वयम् ॥ ३४ ॥
सर्वदानं सर्वयज्ञः सर्वतीर्थनिषेवणम् ।
सर्वं तपो व्रतं सर्वमुपवासादिकञ्च यत् ॥ ३५ ॥
सर्वधर्मश्च सत्यञ्च सर्वदेव प्रपूजनम् ।
तत् सर्वं स्वामिसेवायाः कलां नार्हन्ति षोड़षीम् ॥ ३६ ॥
सुपुण्ये भारते वर्षे पतिसेवां करोति या ।
वैकुण्ठं स्वामिना सार्द्धं सा याति ब्रह्मणः शतम् ॥ ३७ ॥
विप्रियं कुरुते भर्त्तुर्विप्रियं वदति प्रियम् ।
असत्कुलप्रजाता या तत्फलं श्रूयतां सति ॥ ३८ ॥
कुम्भीपाकं व्रजेत् सा च यावच्चन्द्रदिवाकरौ ।
ततो भवति चाण्डाली पतिपुत्त्रविवर्जिता ॥ ३९ ॥
इत्युक्त्वा च मुनिश्रेष्ठो बभूव स्फूरिताधरः ।
चकम्पे मनसा साध्वी भयेनोवाच तं पतिम् ॥ ४० ॥

मनसोवाच ।

सन्ध्यालोपभयेनैव निद्राभङ्गः कृतस्तव ।
कुरु शान्तिं महाभाग दुष्टाया मम सुव्रत ॥ ४१ ॥
शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च ।
स व्रजेत् कालसूत्रञ्च स्वामिनश्च विशेषतः ॥ ४२ ॥
इत्युक्त्वा मनसादेवी स्वामिनश्चरणाम्बुजे ।
पपात भक्त्या भीता च रुरोद च पुनः पुनः ॥ ४३ ॥
कुपितञ्च मुनिं दृष्ट्वा श्रीसूर्य्यं शप्तुमुद्यतम् ।
तत्राजगाम भगवान् सन्ध्यया सह नारद ॥ ४४ ॥
तत्रागत्य मुनिश्रेष्ठ मुवाच भास्करः स्वयम् ।
विनयेन च भीतश्च तया सह यथोचितम् ॥ ४५ ॥

श्रीसूर्य्य उवाच ।

सूर्य्यास्तसमयं दृष्ट्वा धर्मलोपभयेन च ।
बोधयामास त्वां विप्र नाहमस्तं गतस्तदा ॥ ४६ ॥
क्षमस्व भगवन् ब्रह्मन् मां शप्तुं नोचितं मुने ।
ब्राह्मणानाञ्च हृदयं नवनीतसमं सदा ॥ ४६ ॥
तेषां क्षणार्द्धं क्रोधश्च ततो भस्म भवेज्जगत् ।
पुनः स्रष्टुं द्विजः शक्तो न तेजस्वी द्विजात् परः ॥४८॥
ब्रह्मणो वंशसम्भूत. प्रज्वलन् ब्रह्मतेजसा ।
श्रीकृष्णं भावयेन्नित्यं ब्रह्मज्योतिः सनातनम् ॥ ४९ ॥
सूर्य्यस्य वचनं श्रुत्वा द्विजस्तुष्टो बभूव ह ।
सूर्य्यो जगाम स्वस्थानं गृहीत्वा ब्राह्मणाशिषम् ॥ ५० ॥
तत्याज सनसां विप्रः प्रतिज्ञापालनाय च ।
रुदन्तीं शोकयुक्ताञ्च हृदयेन विदूयता ॥ ५१ ॥
सा सस्मार गुरुं शम्भुमिष्टदेवं हरिं विधिम् ।
कश्यपं जन्मदातारं विपत्तौ भयकर्षिता ॥ ५२ ॥
तत्राजगाम भगवान् गोपीशः शम्भुरेव च ।
विधिश्च कश्यपश्चैव मनसा परिचिन्तितः ॥ ५३ ॥
स च दृष्ट्वाभीष्टदेवं निर्गुणं प्रकृतेः परम् ।
तुष्टाव परया भक्त्या प्रणनाम मुहुर्मुहुः ॥ ५४ ॥
नमश्चकार शम्भुञ्च ब्रह्माणं कश्यपं तथा ।
कथमागमनन्तत्र इति प्रश्नं चकार सः ॥ ५५ ॥
ब्रह्मा तद्वचनं श्रुत्वा सहसा समयोचितम् ।
तमुवाच नमस्कृत्य हृषीकेशपदाम्बुजम् । ५६ ॥

ब्रह्मोवाच ।

यदि त्यक्ता धर्मपत्नी धर्मिष्ठा मनसा सती ।
कुरुष्वास्यां सुतोत्पत्तिं स्वधर्मपालनाय वै ॥ ५७ ॥
यति र्वा ब्रह्मचारी वा भिक्षुर्वनचरोऽपि वा ।
जायायाञ्च सुतोत्पत्तिं कृत्वा पश्चाद् भवेन्मुनिः ॥५८॥
अकृत्वा तु सुतोत्पत्तिं वैरागी यस्त्यजेत् प्रियाम् ।
स्रवेत्तपस्तत् पुण्यञ्च चालन्याञ्च यथा जलम् ॥ ५६ ॥
ब्रह्मणो वचनं श्रुत्वा जरत्कारुर्मुनीश्वरः ।
चकार तत्राभिस्पर्शं योगेण मन्त्रपूर्वकम् ॥ ६० ॥
तस्मै शुभाशिषं दत्त्वा ययुर्देवामुदान्विताः ।
मुदान्विता च मनसा जरत्कारुर्मुदान्वितः ॥ ६१ ॥
मुनेः करस्पर्शमात्रात् सद्यो गर्भो बभूव ह ।
मनसायां मुनिश्रेष्ठ मुनिश्रेष्ठ उवाच ताम् ॥ ६२ ॥

जरत्कारुरुवाच ।

गर्भेणानेन मनसे तव पुत्रो भविष्यति ।
जितेन्द्रियाणां प्रवरो धर्मिष्ठो वैष्णवाग्रणी ॥ ६३ ॥
तेजस्वी च तपस्वी च यशस्वी च गुणान्वितः ।
वरो वेदविदाञ्चैव योगिनां ज्ञानिनां तथा ॥ ६४ ॥
स च पुत्रो विष्णुभक्तो धार्मिकः कुलमुद्धरेत् ।
नृत्यन्ति पितरः सर्वे यज्जन्ममात्रतो मुदा ॥ ६५ ॥
पतिव्रता सुशीला या सा प्रिया प्रियवादिनी ।
धर्मिष्ठापुत्रमाता च कुलजा कुलपालिका ॥ ६६ ॥
हरिभक्तिप्रदो बन्धुर्न्नाभीष्टं यत् सुखप्रदम् ।
यो बन्धच्छित् स च पिता हरिवर्त्म प्रदर्शकः ॥ ६७ ॥

सा गर्भधारिणी या च गर्भवासविमोचनी ।
विष्णुमन्त्र प्रदाता च स गुरुर्विष्णुभक्तिदः ॥ ६८ ॥
गुरुश्च ज्ञानदाता च तज्ज्ञानं कृष्णभावनम् ।
आब्रह्मस्तम्बपर्य्यन्तं यतो विश्वं चराचरम् ॥ ६९ ॥
आविर्भूतं तिरोभूतं किं वा ज्ञानं तदन्यतः ।
वेदजं योगजं यद् यत्तत्सारं हरिसेवनम् ॥ ७० ॥
तत्त्वानां सारभूतञ्च हरेरन्यद्विड़म्बनम् ।
दत्तं ज्ञानं मया तुभ्यं स स्वामी ज्ञानदोहि यः ॥ ७१ ॥
ज्ञानात् प्रमुच्यते बन्धात् स रिपुर्यो हि बन्धदः ।
विष्णुभक्तियुतं ज्ञानं नो ददाति हि यो गुरुः ।
स रिपुः शिष्यघाती च यतो बन्धान्न मोचयेत् ॥ ७२ ॥
जननीगर्भजात् क्लेशात् यमताड़नजात्तथा ।
न मोचयेत् यः स कथं गुरुस्तातोहि बान्धवः ॥ ७३ ॥
परमानन्दरूपञ्च कृष्णमार्गमनश्वरम् ।
न दर्शयेद् यः स कथं कीदृशो बान्धवो नृणाम् ।
भज साध्वि परं ब्रह्माच्युतं कृष्णञ्च निर्गुणम् ॥ ७४ ॥
निर्मूलञ्च पुराकर्म भवेद् यत् सेवया ध्रुवम् ।
मया छलेन त्वं त्यक्ता चम दोषं मम प्रिये ॥ ७५ ॥
चमायुतानां साध्वीनां सत्वात् क्रोधो न विद्यते ।
पुष्करे तपसे यामि गच्छ देवि यथा सुखम् ॥ ७६ ॥
श्रीकृष्णचरणाम्भोजे ध्यान विच्छेद कातरः ।
धनादिषु स्त्रियां प्रीतिः प्रवृत्तिवर्त्मगच्छताम् ॥ ७७ ॥
श्रीकृष्णचरणाम्भोजे निस्पृहाणां मनोरथाः ॥७८॥
जरत्कारु वचः श्रुत्वा मनसा शोककातरा ।

सा साश्रुनेत्रा विनयादुवाच प्राणवल्लभम् ॥ ७९ ॥

मनसोवाच ।

दोषेणाहं त्वया त्यक्ता निद्राभङ्गेन ते प्रभो ।
यत्र स्मरामि त्वां बन्धो तत्र मामागमिष्यसि ॥ ८० ॥
बन्धुभेदः क्लेशतमः पुत्रभेद स्ततः परः ।
प्राणेशभेदः प्राणानां विच्छेदात् सर्वतः परः ॥ ८१ ॥
पतिः पतिव्रतानाञ्च शतपुत्राधिकः प्रियः ।
सर्वस्माच्च प्रियःस्त्रीणां प्रियस्तेनोच्यते बुधैः ॥ ८२ ॥
पुत्रे यथैकपुत्राणां वैष्णवानां यथा हरौ ।
नेत्रे यथैकनेत्राणां तृषितानां यथा जले ॥ ८३ ॥
क्षुधितानां यथान्ने च कामुकानां यथा स्त्रियाम् ।
यथा परस्वे चौराणां यथा जारे कुयोषिताम् ॥ ८४ ॥
विदुषाञ्च यथा शास्त्रे वाणिज्ये वणिजां यथा ।
तथा शश्वन्मनः कान्ते साध्वीनां योषितां प्रभो ॥८५॥
इत्युक्त्वा मनसादेवी पपात स्वामिनः पदे ।
क्षणञ्चकार क्रोडे तां कृपया च कृपानिधिः ॥ ८६ ॥
नेत्रोदकेन मनसां स्नापयामास तां मुनिः ।
साश्रुणा च मुनेः क्रोड़ं सिषेच भेदकातरा ॥ ८७ ॥
तदा ज्ञानेन तौ द्वौ च विशोकौच बभूवतुः ।
स्मारं स्मारं पदाम्भोजं कृष्णस्य परमात्मनः ॥ ८८ ॥
जगाम तपसे विप्रः स कान्तां सुप्रबोध्य च ।
जगाम मनसा शम्भोः कैलासं मन्दिरं गुरोः ॥ ८९ ॥
पार्वती बोधयामास मनसां शोककर्षिताम् ।
शिवश्चातीव ज्ञानेन शिवेन च शिवालये ॥ ९० ॥

सुप्रशस्ते दिने साध्वी सुषाव मङ्गले क्षणे।
नारायणांशं पुत्रञ्च ज्ञानिनां योगिनां गुरुम्॥ ९१॥
गर्भस्थितो महाज्ञानं श्रुत्वा शङ्करवक्त्रतः।
स बभूव च योगीन्द्रो योगिनां ज्ञानिनां गुरुः॥ ९२॥
जातकं कारयामास वाचयामास मङ्गलम्।
वेदांश्च पाठयामास शिवाश्च च शिवः शिशोः॥ ९३॥
रत्नत्रिकोटिलक्षञ्च ब्राह्मणेभ्यो ददौ शिवः।
पार्वती च गवां लक्षं रत्नानि विविधानि च॥ ९४॥
शम्भुश्च चतुरो वेदान् वेदाङ्गानितरां स्तथा।
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम्॥ ९५॥
भक्तिरास्ते स्वकान्ते चाभीष्टे देवे हरौ गुरौ।
यस्यास्तेन च तत्पुत्रो बभूवास्तीक एव च॥ ९६॥
जगाम तपसे विष्णोः पुष्करं शङ्कराज्ञया।
संप्राप्य च महामन्त्रं तपश्च परमात्मनः॥ ९७॥
दिव्यं वर्षत्रिलक्षञ्च तपस्तप्त्वा तपोधनः।
आजगाम महायोगी नमस्कर्त्तुं शिवं प्रभुम्॥ ९८॥
शङ्करञ्च नमस्कृत्य कृत्वा च बालकं पुरः।
सा चाजगाम मनसा कश्यपस्याश्रमं पितुः॥ ९९॥
तां सपुत्रां सुतां दृष्ट्वा मुदं प्राप प्रजापतिः।
शतलक्षञ्च रत्नानां ब्राह्मणेभ्यो ददौ मुने॥ १००॥
ब्राह्मणान् भोजयामास असंख्यान् श्रेयसे शिशोः।
अदितिश्च दितिश्चान्या मुदं प्रापुः परं तथा॥ १०१॥
सा सपुत्रा च सुचिरं तस्थौ तातालये तदा।
तदीयं पुनराख्यानं वक्ष्यामि तन्निशामय॥ १०२॥

अथाभिमन्युतनये ब्रह्मशापः परीक्षिते ।
बभूव सहसा ब्रह्मन् दैवदोषेण कर्मणा ॥ १०३ ॥
सप्ताहे समतीते तु तक्षकस्त्वाञ्च भोक्ष्यति ।
शशाप शृङ्गीवेतीदं कौशिक्याश्च जलेन च ॥ १०४ ॥
राजा श्रुत्वा तत्प्रवृत्तिं गङ्गाद्वारं जगाम सः ।
तत्र तस्थौ च सप्ताहं शुश्राव धर्मसंहिताम् ॥ १०५ ॥
सप्ताहे समतीते तु गच्छन्तं तक्षकं पथि ।
धन्वन्तरिर्नृपं भोक्तुं ददर्श गामुकोनृपम् ॥ १०६ ॥
तयोर्बभूव संवादः सुप्रीतिश्च परस्परम् ।
धन्वन्तरिर्मणिं प्राप तक्षकः स्वेच्छया ददौ ॥ १०७ ॥
स ययौ तं गृहीत्वा तु तुष्टः प्रहृष्टमानसः ।
तक्षको भक्षयामास नृपञ्च मञ्चकस्थितम् ॥ १०८ ॥
राजा जगाम वैकुण्ठं स्मारं स्मारं हरिं गुरुम् ।
सत्कारं कारयामास पितुर्जन्मेजयः शुचा ॥ १०९ ॥
राजा चकार यज्ञञ्च सर्पसत्रं ततो मुने ।
प्राणांस्तत्याज सर्पाणां समूहो ब्रह्मतेजसा ॥ ११० ॥
स तक्षकश्च भीतश्च महेन्द्रं शरणं ययौ ।
सेन्द्रञ्च तक्षकं हन्तुं विप्रवर्गः समुद्यतः ॥ १११ ॥
अथ देवाश्च मुनयश्चाययुर्मनसान्तिकम् ।
तां तुष्टाव महेन्द्रश्च भयकातरविह्वलः ॥ ११२ ॥
तत्र आस्तीक आगत्य यज्ञञ्च मातुराज्ञया ।
महेन्द्रं तक्षकं प्राणान् ययाचे भूमिपं वरम् ॥ ११३ ॥
ददौ वरं नृपश्रेष्ठः कृपया ब्राह्मणाज्ञया ।
यज्ञं समाप्य विप्रेभ्यो दक्षिणाञ्च ददौ मुदा ॥ ११४ ॥

विप्राश्च मुनयो देवा गत्वा च मनसान्तिकम् ।
मनसां पूजयामासु स्तुष्टुवुश्च पृथक् पृथक् ॥ ११५ ॥
शक्रः संभृतसंभारो भक्तियुक्तः सदा शुचिः ।
मनसां पूजयामास तुष्टाव परमादरम् ॥ ११६ ॥
दत्त्वा षोड़शोपचारैर्बलिञ्च तत् प्रियं तदा ।
प्रददौ परितुष्टश्च ब्रह्मविष्णु सुराज्ञया ॥ ११७ ॥
संपूज्य मनसादेवीं प्रययुः स्वालयञ्च ते ।
इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ ११८ ॥

नारद उवाच ।

केन स्तोत्रेण तुष्टाव महेन्द्रो मनसां सतीम् ।
पूजाविधिक्रमं तस्याः श्रोतुमिच्छामि तत्वतः ॥११९॥

नारायण उवाच ।

सुस्नातः शुचिराचान्तो धृत्वा धौते च वाससी ।
रत्नसिंहासने देवीं वासयामास भक्तितः ॥ १२० ॥
स्वर्गगङ्गाजलेनैव रत्नकुम्भस्थितेन च ।
स्नापयामास मनसां महेन्द्रो वेदमन्त्रतः ॥ १२१ ॥
वाससी वासयामास वह्निशुद्धे मनोरमे ।
सर्वाङ्गे चन्दनं दत्त्वा पाद्यार्घ्यं भक्तिसंयुतः ॥१२२॥
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
संपूज्य देवषट्कञ्च पूजयामास तां सतीम् ॥ १२३ ॥
ओं ह्रीं श्रीं मनसादेव्यै स्वाहेत्येवञ्च मन्त्रतः ।
दशाक्षरेण मन्त्रेण ददौ सर्वं यथोचितम् ॥ १२४ ॥

दत्त्वा षोड़शोपचारं भक्तितो दुर्लभं हरिः ।
पूजयामास भक्त्या च ब्रह्मणा प्रेरितो मुदा ॥ १२५ ॥
वाद्यं नानाप्रकारञ्च वादयामास तत्र वै ।
बभूव पुष्पवृष्टिश्च नभसो मनसोपरि । १२६ ॥
देवो विप्राज्ञया तत्र ब्रह्मविष्णुशिवाज्ञया ।
तुष्टाव साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥ १२७ ॥

महेन्द्र उवाच ।

देवि त्वां स्तोतुमिच्छामि साध्वीनां प्रवरां वराम् ।
परापराञ्च परमां न हि स्तोतुं क्षमोऽधुना ॥ १२८ ॥
स्तोत्राणां लक्षणं वेदे स्वभावाख्यानतःपरम् ।
न क्षमः प्रकृतिं वक्तुं गुणानां तव सुव्रते ॥ १२९ ॥
शुद्धसत्त्वस्वरूपा त्वं कोपहिंसाविवर्जिता ।
न च शप्तो मुनिस्तेन त्यक्तया च त्वया यतः ।
त्वं मया पूजिता साध्वि जननी च यथादितिः ॥१३०॥
दयारूपा च भगिनी क्षमारूपा यथा प्रसूः ।
त्वया मे रक्षिताः प्राणाः पुत्त्रदाराः सुरेश्वरि ॥१३१॥
अहं करोमि त्वां पूज्यां प्रीतिश्च वर्द्धते मम ।
नित्यं यद्यपि त्वं पूज्या भवेऽत्र जगदम्बिके ॥ १३२ ॥
तथापि तवपूजाञ्च वर्द्धयामि च सर्वतः ।
ये त्वामाषाढ़संक्रान्त्यां पूजयिष्यन्ति भक्तितः ॥१३३॥
पञ्चम्यां मनसाख्यायामिषान्तं वा दिने दिने ।
पुत्त्रपौत्रादयस्तेषां वर्द्धन्ते च धनानि च ॥ १३४ ॥
यशस्विनः कीर्त्तिमन्तो विद्यावन्तो गुणान्विताः ।

ये त्वां न पूजयिष्यन्ति निन्दन्त्यज्ञानतो जनाः ॥१३५॥
लक्ष्मीहीना भविष्यन्ति तेषां नागभयं सदा ।
त्वं स्वर्गलक्ष्मीः स्वर्गे च वैकुण्ठे कमलाकला ॥ १३६ ॥
नारायणांशो भगवान् जरत्कारुर्मुनीश्वरः ।
तपसा तेजसा त्वाञ्च मनसा ससृजे पिता ॥ १३७॥
अस्माकं रक्षणायैव तेन त्वं मनसाभिधा ।
मनसा देवितुं शक्ता आत्मना सिद्धयोगिनी ॥ १३८ ॥
तेन त्वं मनसादेवी पूजिता वन्दिता भवे ।
यां भक्त्या मनसा देवाः पूजयन्त्यनिशं भृशम् ॥१३९॥
तेन त्वां मनसादेवीं प्रवदन्ति पुराविदः ।
सत्वरूपा च देवी त्वं शश्वत् सत्वनिषेवया ॥ १४० ॥
यो हि यद्भावयेन्नित्यं शतं प्राप्नोति तत्समम् ।
इन्द्रश्च मनसां स्तुत्वा गृहीत्वा भगिनीञ्च ताम् ॥१४१॥
प्रजगाम स्वभवनं भूषा वास परिच्छदाम् ।
पुत्त्रेण सार्द्धं सा देवी चिरं तस्थौ पितुर्गृहे ॥ १४२॥
भ्रातृभिः पूजिता शश्वन्मान्या वन्द्या च सर्वतः ।
गोलोकात् सुरभी ब्रह्मन् तत्रागत्य सुपूजिताम् ॥१४३॥
तां स्नापयित्वा क्षीरेण पूजयामास सादरम् ।
ज्ञानञ्च कथयामास सुगोप्यं सर्वदुर्लभम् ।
तदा देवैः पूजिता सा स्वर्गलोकं पुनर्ययौ ॥१४४॥
इदं स्तोत्रं पुण्यबीजं तां संपूज्य च यः पठेत् ।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥ १४५ ॥
विषं भवेत् सुधातुल्यं सिद्धस्तोत्रं यदा पठेत् ।
पञ्चलक्षजपेनैव सिद्धस्तोत्रो भवेन्नरः ॥ १४६ ॥

सर्पघाती भवेत् सोऽपि निश्चितं सर्पवाहनः ॥१४७॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद
संवादे प्रकृतिखण्डे मनसोपाख्याने
स्तोत्र कथनं नाम षट्चत्वा-
रिंशत्तमोऽध्यायः ।

---

## सप्तचत्वारिंशत्तमोऽध्यायः ।

---

नारद उवाच ।

का वा सा सुरभीदेवी गोलोकादागता च या ।
तज्जन्म चरितं ब्रह्मन् श्रोतुमिच्छामि तत्वतः ॥ १ ॥

नारायण उवाच ।

गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः ।
गवां प्रधाना सुरभी गोलोके च समुद्भवा ॥ २ ॥
सर्वादिसृष्टेः कथनं कथयामि निशामय ।
बभूव तेन तज्जन्म पुरा वृन्दावने वने ॥ ३ ॥
एकदा राधिकानाथो राधया सह कौतुकात् ।
गोपाङ्गनापरिवृतः पुण्यं वृन्दावनं ययौ ॥ ४ ॥
सहसा तत्र रहसि विजहार च कौतुकात् ।
बभूव क्षीरपानेच्छा तदा सेच्छामयस्य च ॥ ५ ॥
ससृजे सुरभीं देवो लीलया वामपार्श्वतः ।
वत्सयुक्तां दुग्धवतीं वत्सानाञ्च मनोरमाम् ॥ ६ ॥

दृष्ट्वा सवत्सां सुदामा रत्नभाण्डे दुदोह च ।
क्षीरं सुधातिरिक्तञ्च जन्ममृत्युहरं परम् ॥ ७ ॥
तदुष्णञ्च पयः स्वादु पपौ गोपीपतिः स्वयम् ।
सरो बभूव पयसा भाण्ड विस्रंसनेन च ॥ ८ ॥
दीर्घे च विस्तृते चैव परितः शतयोजनम् ।
गोलोकेषु प्रसिद्धश्च स च क्षीरसरोवरः ॥ ९ ॥
गोपिकानाञ्च राधायाः क्रीड़ा वापी बभूव सा ।
रत्नेन रचिता तूर्णं भूता वापीश्वरेच्छया ॥ १० ॥
बभूव कामधेनूनां सहसा लक्षकोटयः ।
तावन्तो हि च वत्साश्च सुरभी लोमकूपतः ॥ ११ ॥
तासां पुत्त्राश्च पौत्राश्च संबभूवुरसंख्यकाः ।
कथिता च गवां सृष्टिस्तया च पूरितं जगत् ॥ १२ ॥
पूजाञ्चकार भगवान् सुरभ्याश्च पुरा मुने ।
ततो बभूव तत्पूजा त्रिषु लोकेषु दुर्लभा ॥ १३ ॥
दीपान्वितापरदिने श्रीकृष्णस्याज्ञया भवे ।
बभूव सुरभी पूजा धर्म्मवक्त्रादिति श्रुतम् ॥ १४ ॥
ध्यानं स्तोत्रं मूलमन्त्रं यद् यत् पूजा विधिक्रमम् ।
वेदोक्तञ्च महाभाग निबोध कथयामि ते ॥ १५ ॥
ओँ सुरभ्यैनम इति मन्त्रस्य च षड़क्षरः ।
सिद्धो लक्षजपेनैव भक्तानां कल्पपादपः ॥ १६ ॥
ध्यानञ्च यजुर्वेदोक्तं पूजनं सर्वसम्मतम् ।
ऋद्धिदां वृद्धिदाञ्चैव मुक्तिदां सर्वकामदाम् ॥ १७ ॥
लक्ष्मीस्वरूपां परमां राधासहचरीं पराम् ।
गवामधिष्ठातृदेवीं गवामाद्यां गवां प्रसूम् ॥ १८ ॥

पवित्ररूपां पूज्याञ्च भक्तानां सर्व्वकामदाम् ।
यया पूतं सर्व्वविश्वं तां देवीं सुरभीं भजे ॥ १९ ॥
घटे वा धेनुशिरसि बद्धस्तम्भे गवाञ्च वा ।
शालग्रामे जलेऽग्नौ वा सुरभीं पूजयेद्द्विजः ॥ २० ॥
दीपान्वितापरदिने पूर्व्वाह्णे भक्तिसंयुतः ।
यः पूजयेच्च सुरभीं स च पूज्यो भवेद् भुवि ॥ २१ ॥
एकदा त्रिषु लोकेषु वाराहे विष्णुमायया ।
क्षीरं जहार सहसा चिन्तिताश्च सुरादयः ॥ २२ ॥
ते गत्वा ब्रह्मलोकञ्च ब्रह्माणं तुष्टुवुस्तदा ।
तदाज्ञया च सुरभीं तुष्टाव पाकशासनः ॥ २३ ॥

महेन्द्र उवाच ।

नमो देव्यै महादेव्यै सुरभ्यै च नमो नमः ।
गवां वीजस्वरूपायै नमस्ते जगदम्बिके ॥ २४ ॥
नमो राधाप्रियायै च पद्मांशायै नमो नमः ।
नमः कृष्णप्रियायै च गवां मात्रे नमो नमः ।
कल्पवृक्षस्वरूपायै सर्व्वेषां सन्ततं परम् ॥ २५ ॥
श्रीदायै धनदायै च वृद्धिदायै नमो नमः ।
शुभदायै प्रसन्नायै गोप्रदायै नमो नमः ॥ २६ ॥
यशोदायै कीर्त्तिदायै धर्म्मज्ञायै नमो नमः ।
स्तोत्रश्रवणमात्रेण तुष्टा हृष्टा जगत्प्रसूः ॥ २७ ॥
आविर्बभूव तत्रैव ब्रह्मलोके सनातनी ।
महेन्द्राय वरं दत्वा वाञ्छितञ्चापि दुर्लभम् ॥ २८ ॥
जगाम सा च गोलोकं ययुर्देवादयो गृहम् ।
बभूव विश्वं सहसा दुग्धपूर्णञ्च नारद ॥ २९ ॥

दुग्धात् घृतं ततो यज्ञस्ततः प्रीतिः सुरस्य च।
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत्॥ ३०॥
स गोमान् धनवांश्चैव कीर्त्तिमान् पुण्यवान् भवेत्।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः॥ ३१॥
इह लोके सुखं भुक्त्वा यात्यन्ते कृष्णमन्दिरम्।
सुचिरं निवसेत्तत्र करोति कृष्णसेवनम्॥ ३२॥
न पुनर्भवनं तस्य ब्रह्मपुत्त्र भवे भवेत्॥ ३३॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद
संवादे प्रकृतिखण्डे सुरभ्युपाख्यानं
नाम सप्तचत्वारिंशत्तमोऽध्यायः।

---

## अष्टचत्वारिंशत्तमोऽध्यायः।

---

नारद उवाच।

नारायण महाभाग नारायणपरायण।
नारायणांश भगवन् ब्रूहि नारायणीं कथाम्॥ १॥
श्रुतं सुरभ्युपाख्यानम् अतीव सुमनोहरम्।
गोप्यं सर्वपुराणेषु पुराविद्भिः प्रशंसितम्॥ २॥
अधुना श्रोतुमिच्छामि राधिकाख्यानमुत्तमम्।
तदुत्पत्तिश्च तद्ध्यानं स्तोत्रं कवचमुत्तमम्॥ ३॥

श्रीनारायण उवाच।

पुरा कैलासशिखरे भगवन्तं सनातनम्।

सिद्धेशं सिद्धिदं सर्वं स्वरूपं शङ्करं परम् ॥ ४ ॥
प्रफुल्लवदनं प्रीतं सस्मितं मुनिभिःस्तुतम् ।
कुमाराय प्रोचन्तं कृष्णस्य परमात्मनः ।
रासोत्सवरसाख्यानं रासमण्डलवर्णनम् ॥ ५ ॥
तदाख्यानावसाने च प्रस्तावावसरे सती ॥ ६ ॥
पप्रच्छ पार्वती स्मीता सस्मिता प्राणवल्लभम् ।
स्तवनं कुर्वती भीता प्राणेशेन प्रसादिता ॥ ७ ॥
प्रोवाच तं महादेवं महादेवी सुरेश्वरी ।
अपूर्वं राधिकाख्यानं पुराणेषु सुदुर्लभम् ॥ ८ ॥

श्रीपार्वत्युवाच ।

आगमं निखिलं नाथ श्रुतं सर्वमनुत्तमम् ।
पञ्चरात्रादिकं नीतिशास्त्रं योगञ्च योगिनाम् ॥ ९ ॥
सिद्धानां सिद्धिशास्त्रञ्च नानातन्त्रं मनोहरम् ।
भक्तानां भक्तिशास्त्रञ्च कृष्णस्य परमात्मनः ॥ १० ॥
देवीनामपि सर्वासां चरितं त्वन्मुखाम्बुजात् ।
अधुना श्रोतुमिच्छामि राधिकाख्यानमुत्तमम् ॥ ११ ॥
श्रुतौ श्रुतं प्रशंसा च राधायाश्च समासतः ।
त्वन्मुखात् काण्वशाखायां व्यासेन तां वदाधुना ॥१२॥
आगमाख्यान काले च भवता स्वीकृतं पुरा ।
नहीश्वर व्याहृतिश्च मिथ्या भवितुमर्हति ॥ १३ ॥
तदुत्पत्तिञ्च तद्ध्यानं नाम्नो माहात्म्यमुत्तमम् ।
पूजाविधानं चरितं स्तोत्रं कवचमुत्तमम् ॥ १४ ॥
आराधन विधानञ्च पूजापद्धति मीप्सितम् ।
सम्प्रतं ब्रूहि भगवन् मां भक्तां भक्तवत्सल ॥ १५ ॥

कथं न कथितं पूर्वमागमाख्यान कालतः ।
पार्वतीवचनं श्रुत्वा नम्रवक्त्रो बभूव सः ॥ १६ ॥
पञ्चवक्त्रश्च भगवान् शुष्ककण्ठोष्ठ तालुकः ।
स्वसत्यभङ्गभीतश्च मौनी भूतो हि चिन्तितः ॥ १७ ॥
सस्मार कृष्णं ध्यानेनाभीष्टदेवं कृपानिधिम् ।
तदनुज्ञाञ्च संप्राप्य स्वार्द्धाङ्गीं तामुवाच सः ॥ १८ ॥
निषिद्धोऽहं भगवता कृष्णेन परमात्मना ।
आगमारम्भ समये राधाख्यान प्रसङ्गतः ॥ १९ ॥
मदर्द्धाङ्गस्वरूपा त्वं न मद्भिन्ना स्वरूपतः ।
अतोऽनुज्ञां ददौ कृष्णः मह्यं वक्तुं महेश्वरि ॥ २० ॥
मदीष्ट देवकान्तायाः राधायाश्चरितं सति ।
अतीव गोपनीयञ्च सुखदं कृष्णभक्तिदम् ॥ २१ ॥
जानामि तदहं दुर्गे सर्वं पूर्वापरं वरम् ।
यज्जानामि रहस्यञ्च न तत् ब्रह्मा फणीश्वरः ॥ २२ ॥
न तत् सनत्कुमारश्च न च धर्मः सनातनः ।
न देवेन्द्रो मुनिन्द्राश्च सिद्धेन्द्राः सिद्धपुङ्गवाः ॥ २३ ॥
मत्तो बलवती त्वञ्च प्राणां स्त्यक्तुं समुद्यता ।
अतस्त्वां गोपनीयञ्च कथयामि सुरेश्वरि ॥ २४ ॥
शृणु दुर्गे प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
चरितं राधिकायाश्च दुर्लभञ्च सुपुण्यदम् ॥ २५ ॥
पुरा वृन्दावने रम्ये गोलके रासमण्डले ।
शतशृङ्गैकदेशे च मालतीमल्लिकावने ॥ २६ ॥
रत्नसिंहासने रम्ये तस्थौ तत्र जगत्पतिः ।
स्वेच्छामयश्च भगवान् बभूव रमणोत्सुकः ॥ २७ ॥

रमणं कर्त्तुमिच्छा च तद्बभूव सुरेश्वरी ।
इच्छया च भवेत् सर्वं तस्य स्वेच्छामयस्य च ॥ २८ ॥
एतस्मिन्नन्तरे दुर्गे द्विधारूपी बभूव सः ।
दक्षिणाङ्गश्च श्रीकृष्णः वामार्द्धाङ्गश्च राधिका ॥ २९ ॥
बभूव रमणी रम्या रासेशा रमणोत्सुका ।
अमूल्यरत्नाभरणा रत्नसिंहासनस्थिता ॥ ३० ॥
वह्निशुद्धांशुकाधाना कोटिपूर्णशशिप्रभा ।
तप्तकाञ्चनवर्णाभा राजिता च स्वतेजसा ॥ ३१ ॥
सस्मिता सुदती शुद्धा शरत्पद्मनिभानना ।
बिभ्रती कबरीं रम्यां मालतीमाल्यमण्डिताम् ॥ ३२ ॥
रत्नमालाञ्च दधती ग्रीवा सूर्य्यसमप्रभाम् ।
मुक्ताहारेण शुभ्रेण गाङ्गधारानिभेन च ॥ ३३ ॥
संयुक्तं वर्त्तुलोत्तुङ्गं सुमेरुगिरिसन्निभम् ।
कठिनं सुन्दरं दृश्यं कस्तूरी पत्र चिह्नितम् ॥ ३४ ॥
माङ्गल्यं मङ्गलार्हञ्च स्तनयुग्मञ्च बिभ्रती ।
नितम्बश्रोणिभारार्त्ता नवयौवनसंयुता ॥ ३५ ॥
कामातुरां सस्मितां तां ददर्श रसिकेश्वरः ।
दृष्ट्वा कान्तां जगत्कान्तो बभूव रमणोत्सुकः ॥ ३६ ॥
दृष्ट्वाचैवं सुकान्तञ्च सा दधार हरेः पुरः ।
तेन राधा समाख्याता पुराविद्भिर्महेश्वरि ॥ ३७ ॥
राधा भजति श्रीकृष्णं स च ताञ्च परस्परम् ।
उभयोः सर्वसाम्यञ्च सदा सन्तोवदन्ति च ॥ ३८ ॥
भवनं धावनं रासे स्मरत्यालिङ्गनं जपेत् ।
तेन जल्पति सङ्केतं तत्र राधां स ईश्वरः ॥ ३९ ॥

राशब्दोच्चारणाद्भक्तो याति मुक्तिं सुदुर्लभाम् ।
धाशब्दोच्चारणात् दुर्गे धावत्येव हरेः पदम् ॥ ४० ॥
कृष्णवामांश सम्भूता राधा रासेश्वरी पुरा ।
तस्याश्चांशांश कलया बभूवुर्देवयोषितः ॥ ४१ ॥
रा इत्यादानवचनो धा च निर्वाणवाचकः ।
ततोऽवाप्नोति मुक्तिञ्च सा च राधा प्रकीर्त्तिता ॥४२॥
बभूव गोपीसंघश्च राधाया लोमकूपतः ।
श्रीकृष्णलोमकूपेभ्यः बभूवुः सर्व्वबल्लवाः ॥ ४३ ॥
राधावामांशभागेन महालक्ष्मीर्बभूव सा ।
शस्याधिष्ठातृदेवी सा गृहलक्ष्मीर्बभूव सा ॥ ४४ ॥
चतुर्भुजस्य सा पत्नी देवी वैकुण्ठवासिनी ।
तदंशा राजलक्ष्मीश्च राजसम्पत् प्रदायिनी ॥ ४५ ॥
तदंशा मर्त्त्यलक्ष्मीश्च गृहिणाञ्च गृहे गृहे ।
शस्याधिष्ठातृदेवी च सा एव गृहदेवती ॥ ४६ ॥
स्वयं राधा कृष्णपत्नी कृष्णवक्षःस्थलस्थिता ।
प्राणाधिष्ठातृदेवी च तस्यैव परमात्मनः ॥ ४७ ॥
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं मिथ्यैव पार्व्वति ।
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात् परम् ॥ ४८ ॥
परं प्रधानं परमं परमात्मानमीश्वरम् ।
सर्व्वाद्यं सर्व्वपूज्यञ्च निरीहं प्रकृतेः परम् ॥ ४९ ॥
स्वेच्छामयं नित्यरूपं भक्तानुग्रहविग्रहम् ।
तद्भिन्नानाञ्च देवानां प्राकृतं रूपमेव च ॥ ५० ॥
तस्य प्राणाधिका राधा बहु सौभाग्यसंयुता ।
महाविष्णोः प्रसूः सा च मूल प्रकृतिरीश्वरी ॥ ५१ ॥

मानिनीं राधिकां सन्तः सदा सेवन्ति नित्यशः ।
सुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम् ॥ ५२ ॥
स्वप्ने राधा पदाम्भोजं न हि पश्यन्ति वल्लवाः ।
स्वयं देवी हरेः क्रोड़े छायारूपेण कामिनी ॥ ५३ ॥
स च द्वादश गोपानां रायाणः प्रवरः प्रिये ।
श्रीकृष्णांशश्च भगवान् विष्णुतुल्यपराक्रमः ॥ ५४ ॥
सुदाम शापात् सा देवी गोलोकादागता महीम् ।
वृकभानुगृहे जाता तन्माता च कलावती ॥ ५५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे हरगौरी संवादे
राधोपाख्यानं नाम अष्टचत्वा-
रिंशत्तमोऽध्यायः ।

---

## एकोनपञ्चाशत्तमोऽध्यायः ।

---

पार्वत्युवाच ।

कथं सुदामशापञ्च सा च देवी ललाभ ह ।
कथं शशाप भृत्यो हि स्वाभीष्टदेवकामिनीम् ॥ १ ॥

श्रीभगवानुवाच ।

शृणु देवि प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
गोप्यं सर्वपुराणेषु शुभदं भक्तिमुक्तिदम् ॥ २ ॥

एकदा राधिकेशश्च गोलोके रासमण्डले
शतशृङ्ग पर्वतैकदेशे वृन्दावने वने ॥ ३ ॥
गृहीत्वा विरजां गोपीं सौभाग्यां राधिकासमाम्।
क्रीड़ाञ्चकार भगवान् रत्नभूषणभूषितः ॥ ४ ॥
रत्नप्रदीपसंयुक्ते रत्ननिर्माणमण्डले ॥।
अमूल्यरत्ननिर्माण तल्पे चम्पकचर्चिते ॥ ५ ॥
कस्तूरी कुङ्कुमासक्ते सुगन्धिचन्दनार्चिते।
सुगन्धिमालतीमाला समूहपरिशोभिते ॥ ६ ॥
सुरतेर्विरतिर्नास्ति दम्पती रतिपण्डितौ।
तौ द्वौ परस्परासक्तौ सुखसम्भोग तन्त्रितौ ॥ ७ ॥
मन्वन्तराणां लक्षञ्च कालः परिमितो गतः।
गोलोकस्य स्वल्पकाले जन्मादिरहितस्य च ॥ ८ ॥
दूत्यश्चतस्रो ज्ञात्वा च कथयामासुः राधिकाम्।
श्रुत्वा परमरुष्टा सा तत्याज हारमीश्वरी ॥ ९ ॥
प्रबोधिता च सखिभिः कोपरक्तास्यलोचना।
विहाय रत्नालंङ्कारं वह्निशुद्धांशुके शुभे ॥ १० ॥
क्रीड़ापद्मञ्च सद्रत्न मूल्यदर्पणमुज्ज्वलम्।
चकार लोपं वस्त्रेण सिन्दूरं चित्रपत्रकम् ॥ ११ ॥
प्रक्षाल्य तोयाञ्जलिभिर्मुखरागमलक्तकम्।
विस्रस्तकवरीभारा मुक्तकेशी प्रकम्पिता ॥ १२ ॥
शुक्लवस्त्रपरीधाना रूक्षा वेशादिवर्जिता।
ययौ यानान्तिकं तूर्णं प्रियालीभिर्निवारिता ॥ १३ ॥
आजुहाव सखीसंघं रोषविस्फुरिताधरा।
अशश्वत् कम्पान्विताङ्गी सा गोपीभिः परिवारिता ॥१४॥

स्तुता सा पूजिता राधा श्रीकृष्णेन पुरा श्रुति ॥ ६२ ॥
संपूजिता द्वितीये च धात्रा एवं क्रमेण च ।
त्वद्वरेण च संप्राप्य विधाता वेदमातरम् ॥ ६३ ॥
नारायणो महालक्ष्मीं प्राप संपूज्य भारतीम् ।
गङ्गाञ्च तुलसीञ्चैव परां भुवन पावनीम् ॥ ६४ ॥
विष्णुः क्षीरोदशायी च प्राप सिन्धुसुतां तथा ।
मृतायां दक्षकन्यायां मया कृष्णाज्ञया पुरा ॥ ६५ ॥
त्वमेव दुर्गा सम्प्राप्ता पूजिता पुष्करे च सा ।
अदितिं कश्यपः प्राप चन्द्रः संप्राप रोहिणीम् ॥६६॥
कामो रतिञ्च संप्राप धर्मोमूर्त्तिं पतिव्रताम् ॥ ६७ ॥
देवाश्च मुनयश्चैव यां संपूज्य पतिव्रताम् ।
संप्रापुर्यद्वरेणैव धर्मं कामार्थं मोक्षकम् ।
एवं पूजाविधानञ्च कथितञ्च स्तवं शृणु ॥ ६८ ॥

श्रीमहेश्वर उवाच ।

एकदा मानिनी राधा बभूवादर्शना प्रभोः ।
संसक्तस्य तुलस्याञ्च गोप्याञ्च तुलसीवने ।
सा संहृत्य समूर्त्तीश्च कलाः सर्वाश्च लीलया ॥ ६९ ॥
सर्वे बभूवुर्देवाश्च ब्रह्मविष्णुशिवादयः ॥ ७० ॥
भ्रष्टैश्वर्य्याश्च निश्रीका भार्य्याहीनाश्च पद्रुताः ।
ते च सर्वे समालोच्य श्रीकृष्णं शरणं ययुः ॥ ७१ ॥
तेषां स्तोत्रेण सन्तुष्टः स्नात्वा संपूज्य तां शुचिः ।
तुष्टाव परमात्मा स सर्वेषां राधिकां सतीम् ॥ ७२ ॥

श्रीकृष्ण उवाच ।

त्वमेव प्रियोऽहन्ते प्रमोदमेव ते मयि ।

सुव्यक्तं मद्य कापथ्य वचनन्ते वरानने ॥ ७३ ॥
हे कृष्ण त्वं मम प्राणा जीवात्मेति च सन्ततम् ।
यद्ब्रूहि नित्यं प्रेमृणा च साम्प्रतन्तद् गतं द्रुतम् ॥७४॥
तस्मात् सर्वमलीकन्ते वचनं जगदम्बिके ।
क्षुरधारञ्च हृदयं स्त्रीजातीनाञ्च सर्वतः ॥ ७५ ॥
अस्माकं वचनं सत्यं यद्ब्रवीमीति तद्ध्रुवम् ।
पञ्चप्राणाधिदेवी त्वं राधा प्राणाधिकेति मे ॥ ७६ ॥
शक्तो न रक्षितुं त्वाञ्च यान्ति प्राणास्त्वया विना ।
विनाधिष्ठातृदेवीञ्च को वा कुत्र च जीवति ॥ ७७ ॥
महाविष्णोश्च माता त्वं मूलप्रकृतिरीश्वरी ।
सगुणा त्वञ्च कलया निर्गुणा स्वयमेव तु ॥ ७८ ॥
ज्योतीरूपा निराकारा भक्तानुग्रहविग्रहा ।
भक्तानां रुचिवैचित्र्या नानामूर्त्तीश्च विभ्रती ॥ ७९ ॥
महालक्ष्मीश्च वैकुण्ठे भारती च सतां प्रसूः ।
पुण्यक्षेत्रे भारते च सती च पार्वती तथा ॥ ८० ॥
तुलसी पुण्यरूपा च गङ्गा भुवनपावनी ।
ब्रह्मलोके च सावित्री कलया त्वं वसुन्धरा ॥ ८१ ॥
गोलोके राधिका त्वञ्च सर्वगोपालकेश्वरी ।
त्वया विनाहं निर्जीवो ह्यशक्तः सर्वकर्म्मसु ॥८२॥
शिवः शक्तस्त्वया शक्त्या शवाकारस्त्वया विना ।
वेदकर्त्ता स्वयं ब्रह्मा वेदमाता त्वया सह ॥ ८३ ॥
नारायणस्त्वया लक्ष्म्या जगत्पाता जगत्पतिः ।
फलं ददाति यज्ञश्च त्वया दक्षिणया सह ॥ ८४ ॥
विभर्त्ति सृष्टिं शेषश्च त्वां कृत्वा मस्तके भुवम् ।

विभर्त्ति गङ्गारूपां त्वां मूर्द्ध्नि गङ्गाधरः शिवः ॥ ८५ ॥
शक्तिमच्च जगत् सर्वं शवरूपं त्वया विना ।
वक्ता सर्वस्त्वया वाण्या मृतो मूकस्त्वयाविना ॥ ८६ ॥
यथा मृदा घटं कर्त्तुं कुलालः शक्तिमान् सदा ।
सृष्टिं स्रष्टुं तथाहञ्च प्रकृत्या च त्वया सह ॥ ८७ ॥
त्वया विना जड़श्चाहं सर्वत्र च न शक्तिमान् ।
सर्वशक्तिस्वरूपा त्वं त्वमागच्छ समान्तिकम् ॥ ८८ ॥
वह्नौ त्वं दाहिका शक्तिर्नाग्निशक्तस्त्वया विना ।
शोभास्वरूपा चन्द्रे त्वं त्वां विना न स सुन्दरः ॥८९॥
प्रभारूपा हि सूर्य्ये त्वं त्वां विना न स भानुमान् ।
न कामः कामिनीवन्धुस्त्वया रत्या विना प्रिये ॥ ९० ॥
इत्येवं स्तवनं कृत्वा तां संप्राप जगत् प्रभुः ।
देवा बभूवुः सश्रीकाः सभार्य्याः शक्तिसंयुताः ॥ ९१ ॥
सस्त्रीकञ्च जगत् सर्वं बभूव शैलकन्यके ।
गोपीपूर्णश्च गोलोको बभूव तत्प्रसादतः ॥ ९२ ॥
राजा जगाम गोलोक मिति स्तुत्वा हरिप्रियाम् ।
श्रीकृष्णेन कृतं स्तोत्रं राधाया यः पठेन्नरः ॥ ९३ ॥
कृष्णभक्तिञ्च तद्दास्यं स प्राप्नोति न संशयः ।
स्त्रीविच्छेदे यः शृणोति मासमेकमिदं शुचिः ॥ ९४ ॥
अचिराल्लभते भार्य्यां सुशीलां सुन्दरीं सतीम् ।
भार्य्याहीनो भाग्यहीनो वर्षमेकं शृणोति यः ॥ ९५ ॥
अचिराल्लभते भार्य्यां सुशीलां सुन्दरीं सतीम् ।
पुरा मया च त्वं प्राप्ता स्तोत्रेणानेन पार्वति ॥ ९६ ॥
मृतायां दक्षकन्यायामाज्ञया परमात्मनः ।

स्तोत्रेणानेन संप्राप्ता सावित्री ब्रह्मणा पुरा ॥ ९७
पुरा दुर्वाससः शापान्निश्रीके देवतागणे।
स्तोत्रेणानेन देवैस्तैः संप्राप्ता श्रीः सुदुर्लभा ॥ ९८ ॥
शृणोति वर्षमेकञ्च पुत्रार्थी लभते सुतम्।
महाव्याधिरोगमुक्तो भवेत्स्तोत्रप्रसादतः ॥ ९९ ॥
कार्त्तिकीपूर्णिमायान्तु तां संपूज्य पठेत्तु यः।
अचलां श्रियमाप्नोति राजसूयफलं लभेत् ॥ १०० ॥
नारी शृणोति चेत् स्तोत्रं स्वामिसौभाग्यतां लभेत्।
भक्त्या शृणोति यः स्तोत्रं बन्धनान्मुच्यते ध्रुवम् ॥१०१॥
नित्यं पठति यो भक्त्या राधां संपूज्य भक्तितः।
स प्रयाति च गोलोकं निर्मुक्तो भवबन्धनात् ॥ १०२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे हरगौरीसंवादे श्रीराधिकोपाख्याने
राधापूजास्तोत्रं नाम पञ्चपञ्चा-
शत्तमोऽध्यायः।

---

## षट्पञ्चाशत्तमोऽध्यायः।

---

श्रीपार्वत्युवाच।

पूजाविधानं स्तोत्रञ्च श्रुतमत्यद्भुतं मया।
अधुना कवचं ब्रूहि श्रोष्यामि त्वत्प्रसादतः ॥ १ ॥

श्रीमहेश्वर उवाच ।

शृणु वक्ष्यामि हे दुर्गे कवचं परमाद्भुतम् ।
पुरा मह्यं निगदितं गोलोके परमात्मना ॥ २ ॥
अतिगुह्यं परं तत्त्वं सर्वमन्त्रौघ विग्रहम् ।
यद्धृत्वा पठनाद् ब्रह्मा संप्राप वेदमातरम् ॥ ३ ॥
यद्धृत्वाहं तव स्वामी सर्वमातुः सुरेश्वरि ।
नारायणश्च यद्धृत्वा महालक्ष्मी मवाप सः ॥ ४ ॥
यद्धृत्वा परमात्मा च निर्गुणः प्रकृतेः परः ।
बभूव शक्तिमान् कृष्णः सृष्टिं स्रष्टुं पुरा विभुः ॥५॥
विष्णुःपाता च यद्धृत्वा संप्राप सिन्धुकन्यकाम् ।
शेषोविभर्त्ति ब्रह्माण्डं मूर्द्ध्नि सर्षपवद् यतः ॥ ६ ॥
लोमकूपेषु प्रत्येकं ब्रह्माण्डानि महान् विराट् ।
विभर्त्ति धारणाद् यस्य सर्वाधारो बभूव सः ॥ ७ ॥
यद्धारणाच्च पठनाद्धर्मः साक्षी च सर्वतः ।
यद्धारणात् कुवेरश्च धनाध्यक्षश्च भारते ॥ ८ ॥
इन्द्रः सुराणामीशश्च पठनाद्धारणाद् यतः ।
नृपाणां मनुरीशश्च पठनाद् धारणाद् यतः ॥ ९ ॥
श्रीमांश्चन्द्रश्च यद्धृत्वा राजसूयं चकार सः ।
स्वयं सूर्य्यस्त्रिलोकेश पठनाद्धारणाद् यतः ॥ १० ॥
यद्धृत्वा पठनादग्निर्जगत्पूतं करोति च ।
यद्धृत्वा वाति वातोऽयं पुनाति भुवनत्रयम् ॥ ११ ॥
यद्धृत्वा च स्वतन्त्रो हि मृत्युश्चरति जन्तुषु ।
त्रिःसप्त कृत्वा निःक्षत्रां चकार च वसुन्धराम् ॥१२॥
जामदग्न्यश्च रामश्च पठनाद्धारणाद् यतः ।

पपौ समुद्रं यद्धृत्वा पठनात् कुम्भसम्भवः ॥ १३ ॥
सनत्कुमारो भगवान् यद्धृत्वा ज्ञानिनां गुरुः ।
जीवन्मुक्तौ च सिद्धौ च नरनारायणावृषी ॥ १४ ॥
यद्धृत्वा पठनात् सिद्धो वशिष्ठो ब्रह्मपुत्रकः ।
सिद्धेशः कपिलो यस्मात् यस्माद्दक्षः प्रजापतिः ॥ १५ ॥
यस्माद्भृगुश्च मां द्वेष्टि कूर्म्मः शेषं बिभर्त्ति च ।
सर्वाधारो यतो वायुर्वरुणः पवनो यतः ॥ १६ ॥
ईशानो दिक्पतिश्चैव यमः शास्ता यतः शिवे ।
कालः कालाग्निः रुद्रश्च संहर्त्ता जगतां यतः ॥ १७ ॥
यद्धृत्वा गौतमः सिद्धः कश्यपश्च प्रजापतिः ।
वसुदेवसुतां प्राप चैकांशेनतु तत्कलाम् ।
पुरा स्वजायाविच्छेदे दुर्वासामुनिपुङ्गवः ॥ १८ ॥
संप्राप रामः सीताञ्च रावणेन हृतां पुरा ॥ १९ ॥
पुरा नलश्च संप्राप दमयन्तीं यतः सतीम् ।
शङ्खचूड़ो महावीरो दैत्यानामीश्वरो यतः ॥ २० ॥
वृषो वहति मां दुर्गे यतो हि गरुड़ो हरिम् ।
एवं संप्राप संसिद्धिं सिद्धाश्च मुनयः पुरा ॥ २१ ॥
यद्धृत्वा च महालक्ष्मीः प्रदात्री सर्वसम्पदाम् ।
सरस्वती सतां श्रेष्ठा यतः क्रीड़ावती रतिः ॥ २२ ॥
सावित्री वेदमाता च यतः सिद्धिमवाप्नुयात् ।
सिन्धुकन्या मर्त्यलक्ष्मीर्यतो विष्णुमवाप सा ॥ २३ ॥
यद्धृत्वा तुलसी पूता गङ्गा भुवनपावनी ।
यद्धृत्वा सर्वशस्याढ्या सर्वाधारा वसुन्धरा ॥ २४ ॥
यद्धृत्वा मनसादेवी सिद्धा च विश्वपूजिता ।

यद्धृत्वा देवमाता च विष्णुं पुत्र मवाप सा ॥ २५ ॥
पतिव्रता च यद्धृत्वा लोपामुद्राप्यरुन्धती ।
लेभे च कपिलं पुत्रं देवहुती यतः सती ॥ २६ ॥
प्रियव्रतोत्तानपादौ सुतौ प्राप च तत् प्रसूः ।
त्वन्माता चापि संप्राप त्वां देवीं गिरिजां यतः ॥२७॥
एवं सर्वे सिद्धगणाः सर्वैश्वर्य्य मवाप्नुयुः ।
श्रीजगन्मङ्गलस्यास्य कवचस्य प्रजापतिः ॥ २८ ॥
ऋषिश्छन्दोऽस्य गायत्री देवी रासेश्वरी स्वयम् ।
श्रीकृष्ण भक्तिसंप्राप्तौ विनियोगः प्रकीर्त्तितः ॥ २९ ॥
शिष्याय कृष्णभक्ताय ब्राह्मणाय प्रकाशयेत् ।
शठाय परशिष्याय दत्वा मृत्यु मवाप्नुयात् ॥ ३० ॥
राज्यं देयं शिरोदेयं न देयं कवचं शिवे ।
कण्ठे धृतमिदं भक्त्या कृष्णेन परमात्मना ॥ ३१ ॥
मया दृष्टञ्च गोलोके ब्रह्मणा विष्णुना पुरा ।
ओं राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च ॥ ३२ ॥
कृष्णेनोपासितो मन्त्रः कल्पवृक्षः शिरोऽवतु ।
ओं ह्रीं श्रीं राधिकाङेन्तं वह्निजायान्तमेव च ॥३३॥
कपालं नेत्रयुग्मञ्च श्रोत्रयुग्मं सदाऽवतु ।
ओं रां ह्रीं श्रीं राधिकेति ङेन्तं वह्निजायान्तमेव च ३४
मस्तकं केशसंघांश्च मन्त्रराजः सदावतु ।
ओं रां राधेति चतुर्थ्यन्तं वह्निजायान्तमेव च ॥ ३५
सर्वसिद्धिप्रदः पातु कपोलं नासिकां मुखम् ।
क्लीं श्रीं कृष्णप्रियाङेन्तं कण्ठं पातु नमोऽन्तकम् ॥३६॥
ओं रां रासेश्वरीङेन्तं स्कन्धं पातु नमोऽन्तकम् ।

श्रीं रां रासविलासिन्यै पृष्ठं पातु सदावतु ॥ ३७ ॥
वृन्दावन विलासिन्यै स्वाहावक्षः सदावतु।
तुलसीवनवासिन्यै स्वाहा पातु नितम्बकम् ॥ ३८ ॥
कृष्णप्राणाधिकाङेन्तं स्वाहान्तं प्रणवादिकम् ।
पादयुग्मञ्च सर्वाङ्गं सन्ततं पातु सर्वतः ॥ ३९ ॥
राधा रक्षतु प्राच्याञ्च वह्नौ कृष्णप्रियावतु ।
दक्षे रासेश्वरी पातु गोपीशा नैरृतेऽवतु ॥ ४० ॥
पश्चिमे निर्गुणा पातु वायव्ये कृष्णपूजिता ।
उत्तरे सन्ततं पातु मूलप्रकृतिरीश्वरी ॥ ४१ ॥
सर्वेश्वरी सदैश्यानां पातु मां सर्वपूजिता ।
जले स्थले चान्तरीक्षे स्वप्ने जागरणे तथा ॥ ४२ ॥
महाविष्णोश्च जननी सर्वतः पातु सन्ततम् ।
कवचं कथितं दुर्गे श्रीजगन्मङ्गलं परम् ॥ ४३ ॥
यस्मै कस्मै न दातव्यं गूढ़ाद् गूढ़तरं परम् ।
तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित् ॥ ४४ ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कार चन्दनैः ।
कण्ठे वा दक्षिणे बाहौ धृत्वा विष्णुसमो भवेत् ॥ ४५ ॥
शतलक्षजपेनैव सिद्धञ्च कवचं भवेत् ।
यदि स्यात् सिद्धकवचो न दग्धो वह्निना भवेत् ॥ ४६ ॥
एतस्मात् कवचात् दुर्गे राजा दुर्य्योधनः पुरा ।
विशारदो जलस्तम्भे वह्निस्तम्भे च निश्चितम् ॥ ४७ ॥
मया सनत्कुमाराय पुरा दत्तञ्च पुष्करे ।
सूर्य्यपर्वणि मेरौ च स सान्दीपनये ददौ ॥ ४८ ॥
बलाय तेन दत्तञ्च ददौ दुर्य्योधनाय सः ।

कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ ४९ ॥
नित्यं पठति भक्त्येदं तन्मन्त्रोपासकश्च यः ।
विष्णुतुल्यो भवेन्नित्यं राजसूयफलं लभेत् ॥ ५० ॥
स्नानेन सर्वतीर्थानां सर्वदानेन यत् फलम् ।
सर्वव्रतोपवासे च पृथिव्याश्च प्रदक्षिणे ॥ ५१ ॥
सर्वयज्ञेषु दीक्षायां नित्यञ्च सत्यरक्षणे ।
नित्यं श्रीकृष्णसेवायां कृष्णनैवेद्य भक्षणे ॥ ५२ ॥
पाठे चतुर्णां वेदानां यत्फलञ्च लभेन्नरः ।
तत्फलं लभते नूनं पठनात् कवचस्य च ॥ ५३ ॥
राजद्वारे श्मशाने च सिंहव्याघ्रान्विते वने ।
दावाग्नौ संकटेचैव दस्युचौरान्विते भये ॥ ५४ ॥
कारागारे विपद् ग्रस्ते घोरे च दृढ़बन्धने ।
व्याधियुक्तो भवेन्मुक्तो धारणात् कवचस्य च ॥ ५५ ॥
इत्येतत्कथितं दुर्गे तवैवेदं महेश्वरि ।
त्वमेव सर्वरूपा मां माया पृच्छसि मायया ॥ ५६ ॥

श्रीनारायण उवाच ।

इत्युक्त्वा राधिकाख्यानं स्मारं स्मारञ्च माधवम् ।
पुलकाञ्चित सर्वाङ्गः साश्रुनेत्रो बभूव सः ॥ ५७ ॥
न कृष्णसदृशो देवो न गङ्गा सदृशी सरित् ।
न पुष्करात् समं तीर्थं नाश्रमो ब्राह्मणात् परः ॥ ५८ ॥
परमाणु परं सूक्ष्मं महाविष्णोः परो महान् ।
नभःपरञ्च विस्तीर्णं यथा नास्त्येव नारद ॥ ५९ ॥
यथा न वैष्णवात् ज्ञानी योगीन्द्रः शङ्करात् परः ।
कामक्रोधलोभमोहा जितास्तेनैव नारद ॥ ६० ॥

स्वप्ने जागरणे शश्वत् कृष्णध्यान रत: शिव: ।
यथा कृष्णस्तथा शम्भुर्न भेदो माधवेशयो: ॥ ६१ ॥
यथा शम्भुर्वैष्णवेषु यथा देवेषु माधव: ।
तथेदं कवचं वत्स कवचेषु प्रशस्तकम् ॥ ६२ ॥
शिरिति मङ्गलार्थञ्च वकारोदातृवाचक: ।
मङ्गलानां प्रदाता य: स शिव: परिकीर्त्तित: ॥ ६३ ॥
नराणां सन्ततं विश्वे शं कल्याणं करोति य: ।
कल्याणं मोक्षवचनं स एव शङ्कर: स्मृत: ॥ ६४ ॥
ब्रह्मादीनां सुराणाञ्च मुनीनां वेदवादिनाम् ।
तेषाञ्च महतां देवो महादेव: प्रकीर्त्तित: ॥ ६५ ॥
महती पूजिता विश्वे मूलप्रकृतिरीश्वरी ।
तस्या: देव पूजितश्च महादेव: स च स्मृत: ॥ ६६ ॥
विश्वस्थानाञ्च सर्वेषां महतामीश्वर: स्वयम् ।
महेश्वरञ्च तेनेमं प्रवदन्ति मनीषिण: ॥ ६७ ॥
हे ब्रह्मपुत्र धन्योऽसि यद्गुरुश्च महेश्वर: ।
श्रीकृष्ण भक्तिदाता यो भवान् पृच्छति माञ्च किम् ॥ ६८

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद संवादे
प्रकृतिखण्डे राधिकोपाख्यानं नाम
षट्पञ्चाशत्तमोऽध्याय: ।

———

# सप्तपञ्चाशत्तमोऽध्यायः ।

नारद उवाच ।

सर्वाख्यानं श्रुतं ब्रह्मन्नतीव परमाद्भुतम् ।
अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमुत्तमम् ॥ १ ॥
दुर्गा नारायणीशाना विष्णुमाया शिवा सती ।
नित्या सत्या भगवती सर्वाणी सर्वमङ्गला ॥ २ ॥
अम्बिका वैष्णवी गौरी पार्वती च सनातनी ।
नामानि कौथुमोक्तानि सर्वेषां शुभदानि च ॥ ३ ॥
अर्थं षोड़शनाम्नां च सर्वेषामीप्सितं वरम् ।
ब्रूहि वेदविदां श्रेष्ठ वेदोक्तं सर्वसम्मतम् ॥ ४ ॥
केन वा पूजिता साद्दौ द्वितीये केन वा पुरा ।
तृतीये वा चतुर्थे वा केन सर्वत्र पूजिता ॥ ५ ॥

नारायण उवाच ।

अर्थं षोड़शनाम्नाञ्च विष्णुर्वेदे चकार सः ।
पुनः पृच्छसि ज्ञात्वा त्वं कथयामि यथागमम् ॥ ६ ॥
दुर्गोदैत्ये महाविघ्ने भवबन्धे च कर्म्मणि ।
शोके दुःखे च नरके यमदण्डे च जन्मनि ॥ ७ ॥
महाभयेऽति रोगेचाप्या शब्दोहन्तृवाचकः ।
एतान् हन्त्येव या देवी सा दुर्गा परिकीर्त्तिता ॥८॥
यशसा तेजसा रूपैर्नारायणसमा गुणैः ।
शक्तिर्नारायणस्येयं तेन नारायणी स्मृता ॥ ९ ॥
ईशानः सर्वसिद्ध्यर्थे चाशब्दो दातृवाचकः ।

सर्वसिद्धि प्रदात्री या सापीशाना प्रकीर्त्तिता ॥१०॥
सृष्टा माया पुरा सृष्टौ विष्णुना परमात्मना ।
मोहितं मायया विश्वं विष्णुमाया प्रकीर्त्तिता ॥११॥
शिवे कल्याणरूपा च शिवदा च शिवप्रिया ।
प्रिये दातरि चा शब्दो शिवा तेन प्रकीर्त्तिता ॥१२॥
सद्बुद्ध्यधिष्ठातृदेवी विद्यमाना युगे युगे ।
पतिव्रता सुशीला च सा सती परिकीर्त्तिता। १३ ॥
यथा नित्योहि भगवान् नित्या भगवती तथा ।
स्व मायया तिरोभूता तत्रेशे प्राकृते लये ॥ १४ ॥
आब्रह्मस्तम्बपर्य्यन्तं सर्वं मिथ्यैव कृत्रिमम् ।
दुर्गा सत्यस्वरूपा सा प्रकृतिर्भगवान् यथा ॥ १५ ॥
सिद्धैश्वर्य्यादिकं सर्वं यस्यामस्ति युगे युगे ।
सिद्धादिके भगोज्ञेय स्तेन भगवती स्मृता ॥१६॥
सर्वान् मोक्षं प्रापयति जन्म मृत्यु जरादिकम् ।
चराचरांश्च विश्वस्थान् सर्वाणी तेन कीर्त्तिता ॥१७॥
मङ्गलं मोक्षवचनं चा शब्दो दातृवाचकः ।
सर्वान् मोक्षान् या ददाति सा एव सर्वमङ्गला ॥१८
हर्षे सम्पदि कल्याणे मङ्गलं परिकीर्त्तितम् ।
तान् ददाति या देवी सा एव सर्वमङ्गला ॥ १९ ॥
अम्बेति मातृवचनो वन्दने पूजने सदा ।
पूजिता वन्दिता माता जगतां तेन साम्बिका ॥२०॥
विष्णुभक्ता विष्णुरूपा विष्णोः शक्तिस्वरूपिणी ।
सृष्टौ च विष्णुना सृष्टा वैष्णवी तेन कीर्त्तिता ॥ २१
गौरः पीते च निर्लिप्ते परे ब्रह्मणि निर्म्मले ।

तस्यात्मनः शक्तिरियं गौरी तेन प्रकीर्त्तिता ॥ २२ ॥
गुरुः शम्भुश्च सर्वेषां तस्य शक्तिः प्रिया सती ।
गुरुः कृष्णश्च तन्माया गौरी तेन प्रकीर्त्तिता ॥ २३ ॥
तिथिभेदे सर्वभेदे कल्पभेदे प्रभेदतः ।
ख्यातौ तेषु च विख्याता पार्वती तेन कीर्त्तिता ॥२४॥
महोत्सवविशेषे च पर्वन्निति प्रकीर्त्तिता ।
तस्याधिदेवी या सा च पार्वती परिकीर्त्तिता ॥२५॥
पर्वतस्य सुता देवी साविर्भूता च पर्वते ।
पर्वताधिष्ठातृदेवि पार्वती तेन कीर्त्तिता ॥ २६ ॥
सर्वकाले सना प्रोक्ता विद्यमाने तनीति च ।
सर्वत्र सर्वकाले च विद्यमाना सनातनी ॥ २७ ॥
अर्थः षोड़शनाम्नाञ्च कीर्त्तितश्च महामुने ।
यथागमञ्च वेदोक्तोपाख्यानञ्च निशामय ॥ २८ ॥
प्रथमे पूजिता सा च कृष्णेन परमात्मना ।
वृन्दावने च सृष्ट्यादौ गोलोके रासमण्डले ॥ २९ ॥
मधुकैटभभीतेन च ब्रह्मणा सा द्वितीयतः ।
त्रिपुर प्रेरितेनैव तृतीये त्रिपुरारिणा ॥ ३० ॥
भ्रष्टश्रिया महेन्द्रेण शापाद् दुर्वाससः पुरा ।
चतुर्थे पूजिता देवी भक्त्या भगवती सती ॥ ३१ ॥
तदा मुनीन्द्रैः सिद्धेन्द्रैर्देवैश्च मुनिपुङ्गवैः ।
पूजिता सर्वविश्वेषु बभूव सर्वतः सदा ॥ ३२ ॥
तेजःसु सर्वदेवानां साविर्भूता पुरा मुने ।
सर्वेदेवा ददुस्तस्यै शस्त्राणि भूषणानि च ॥ ३३ ॥
दुर्गादयश्च दैत्याश्च निहता दुर्गया तया ।

दत्तं स्वराज्यं देवेभ्यो वरञ्च यदभीप्सितम् ॥ २४ ॥
कल्पान्तरे पूजिता सा सुरथेन महात्मना ।
राज्ञा मेधस शिष्येण मृण्मय्याञ्च सरित्तटे ॥ २५ ॥
मेषादिभिश्च महिषैः कृष्णसारैश्च गण्डकैः ।
छागैरिक्षुक कुष्माण्डैः पक्षिभिर्वलिभिर्मुने ॥ २६ ॥
वेदोक्तानि च दत्त्वैवमुपचाराणि षोडश ।
ध्यात्वा च कवचं धृत्वा संपूज्य च विधानतः ॥ २७ ॥
राजा कृत्वा परीहारं वरं प्राप यथेप्सितम् ।
मुक्तिं संप्राप वैश्यश्च संपूज्य च सरित्तटे ॥ २८
तुष्टाव राजा वैश्यश्च साश्रुनेत्रपुटाञ्जलिः ।
विससर्ज मृण्मयीं तां गभीरे निर्मले जले ॥ २९ ॥
मृण्मयीं तादृशीं दृष्ट्वा जलधौतां नराधिपः ।
रुरोद च तदा वैश्य स्ततः स्थानान्तरं ययौ ॥ ४०
त्यक्त्वा देहञ्च वैश्यश्च पुष्करे दुष्करं तपः ॥ ४१ ॥
कृत्वा जगाम गोलोकं दुर्गादेवीवरेण सः ।
राजा ययौ स्वराज्यञ्च पूज्यो निष्कण्टकं बली ॥४२॥
भोगञ्च बुभुजे भूपः षष्टिं वर्षसहस्रकम् ।
भार्य्यां स्वराज्यं संन्यस्य पुत्रे च कालयोगतः ॥४३॥
मनुर्बभूव सावर्णिस्तप्त्वा च पुष्करे तपः ।
इत्येवं कथितं वत्स समासेन यथागमम् ॥ ४४ ॥
दुर्गाख्यानं मुनिश्रेष्ठ किं भूयः श्रोतुमिच्छसि ॥४५॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद
संवादे प्रकृतिखण्डे दुर्गोपाख्यानं नाम
सप्तपञ्चाशत्तमोऽध्यायः ।

# अष्टपञ्चाशत्तमोऽध्यायः ।

नारद उवाच ।

कस्य वंशोद्भवो राजा सुरथो धर्म्मिणां वरः ।
कथं संप्राप ज्ञानञ्च मेधसाद् ज्ञानिनां वरात् ॥ १ ॥
कस्य वंशोद्भवो ब्रह्मन् मेधसो मुनिसत्तमः ।
बभूव कुत्र संवादो नृपस्य मुनिना सह ॥ २ ॥
बभूव कुत्र साचाद्वा भगवन् नृपवैश्ययोः ।
व्यासेन श्रोतुमिच्छामि वद वेदविदांवर ॥ ३ ॥

नारायण उवाच ।

अत्रिश्च ब्रह्मणः पुत्रस्तस्य पुत्रो निशाकरः ।
स च कृत्वा राजसूयं द्विजराजो बभूव ह ॥ ४ ॥
गुरुपत्न्याञ्च तारायां तस्याभूच्च बुधः सुतः ।
बुधपुत्रस्तु चैत्रश्च तत् पुत्रः सुरथः स्मृतः ॥ ५ ॥

नारद उवाच ।

गुरुपत्न्याञ्च तारायां बभूव तत् सुतः कथम् ।
अहो व्यतिक्रमं ब्रूहि वेदस्य च महामुने ॥ ६ ॥

नारायण उवाच ।

सम्पमत्तो महाकामी ददर्श जाह्नवीतटे ।
तारां सुरगुरोः पत्नीं धर्म्मिष्ठाञ्च पतिव्रताम् ॥ ७ ॥
सुस्नातां सुन्दरीं रम्यां पीनोन्नतपयोधराम् ।
सुश्रोणीं सुनितम्बाञ्च मध्यक्षीणां मनोहराम् ॥ ८ ॥

सुदतीं कोमलाङ्गीञ्च नवयौवनसंयुताम् ।
सूक्ष्मवस्त्रपरीधानां रत्नभूषणभूषिताम् ॥ ९ ॥
कस्तूरीविन्दुना सार्द्धमधश्चन्दनविन्दुना ।
सिन्दूरविन्दुना चारुभालमध्यस्थलोज्ज्वलाम् ॥१०॥
वायुनाधोवस्त्रहीनां सकामां रक्तलोचनाम् ।
शरत्पार्वणचन्द्रास्यां पक्वविम्बाधरां वराम् ॥ ११ ॥
सस्मितां नम्रवक्त्राञ्च लज्जया चन्द्रदर्शनात् ।
गच्छन्तीं स्वगृहं हर्षात् गजेन्द्रमन्दगामिनीम् ॥१२॥
तां दृष्ट्वा मन्मथाक्रान्तं चन्द्रो लज्जां जहौ मुने ।
पुलकाङ्कितसर्वाङ्गः सकामस्ताम् उवाच स ॥ १३ ॥

चन्द्र उवाच ।

योषिच्छ्रेष्ठे क्षणं तिष्ठ वरिष्ठे रसिकासु च ।
सुविदग्धे विदग्धानां मनोहरसि सन्ततम् ॥ १४ ॥
निषेव्य प्रकृतिं जन्मसहस्रं कामसागरे ।
तपःफलेन त्वां प्राप वृहत्श्रोणिं वृहस्पतिः ॥१५॥
अहो तपस्विना सार्द्धमविदग्धेन वेधसा ।
योजिता त्वं रसवती शश्वत् कामातुरा वरा ॥ १६ ॥
किंवा सुखञ्च विज्ञातमविज्ञेषु समागमे ।
विदग्धाया विदग्धेन सङ्गमः सुखसागरः ॥ १७ ॥
कामेन कामिनी त्वञ्च दग्धासि व्यर्थमीश्वरि ।
कर्मणोरात्मदोषाद्वा को जानाति मनस्त्रियाः ॥ १८ ॥
दिने दिने वृथा याति दुर्लभं नवयौवनम् ।
नवीनयौवनस्थाया वृद्धेन स्वामिना तव ॥ १९ ॥
शश्वत्तपस्यायुक्तश्च स क्षणमात्मानीप्सितम् ।

स्वप्ने जागरणे वापि ध्यायते च वृहस्पतिः ॥ २० ॥
सर्वकामरसज्ञा त्वं निष्कामं काममीप्सितम् ।
कामुकी ध्यायते शश्वद्यूना शृङ्गारमात्मनि ॥ २१ ॥
अन्यत्र त्वन्मनः कामोभिन्नं त्वङ्गंन्तुरीप्सितम् ।
का प्रीतिः सङ्गमे कान्ते द्वयोर्विषयभिन्नयोः ॥ २२ ॥
वासन्तीपुष्पतल्पे च गन्धचन्दनचर्चिते ।
वसन्ते मां गृहीत्वा च मोदस्व माधवीवने ॥ २३ ॥
निर्जने चन्दनवने सुगन्धिपुष्पचर्चिते ।
भवती युवती भाग्यवती तत्रैव मोदताम् ॥ २४ ॥
चन्दने चम्पकवने शीतचम्पकवायुना ।
रम्ये चम्पकतल्पे च क्रीड़ां कुरु मया सह ॥ २५ ॥
इत्युक्त्वा मदनोन्मत्तो मदनाधिकसुन्दरः ।
पपात चरणे देव्या मन्दो मन्दाकिनीतटे ॥ २६ ॥
निरुद्धमार्गा चन्द्रेण शुष्ककण्ठोष्ठतालुका ।
अभीतोवाच कोपेन रक्तपङ्कजलोचना ॥ २७ ॥

तारा उवाच ।

धिक् त्वां चन्द्र तृणं मन्ये परस्त्रीलम्पटं शठम् ।
अत्रेरभाग्यात् त्वं पुत्रो व्यर्थन्ते जन्म जीवनम् ॥ २८ ॥
अरे कृत्वा राजसूयमात्मानं मन्यसे वली ।
बभूव पुण्यं ते व्यर्थं विप्रस्त्रीषु च यन्मनः ॥ २९॥
यस्य चित्तं परस्त्रीषु सोऽशुचिः सर्वकर्मसु ।
न कर्मफलभाक् पापी निन्द्यो विश्वेषु सर्वतः ॥ ३० ॥
हंसि चेन्मे सतीत्वञ्च यक्ष्मग्रस्तो भविष्यसि ।
अत्युच्छ्रितोनिपतनं प्राप्नोतीति श्रुतौ श्रुतम् ॥ ३१ ॥

दुष्टानां दर्पहा कृष्णो दर्पन्ते निहनिष्यति ।
त्यज मां मातरं वत्स यदि ते शं भविष्यति ॥ ३२ ॥
इत्युक्ता तारका साध्वी रुरोद च मुहुर्मुहुः ।
चकार साक्षिणं धर्मं सूर्य्यं वायुं हुताशनम् ॥ ३३ ॥
ब्रह्माणं परमात्मानम् आकाशं पवनं धराम् ।
दिनं रात्रिञ्च सन्ध्याञ्च सर्वं सुरगणं मुने ॥ ३४ ॥
तारकावचनं श्रुत्वा न भीतः स चुकोपह ।
करे धृत्वा रथे तूर्णं स्थापयामास सुन्दरीम् ॥ ३५ ॥
रथञ्च चालयामास मनोयायी मनोहरम् ।
मनोहरां गृहीत्वा तां स च रेमे मनोहरम् ॥ ३६ ॥
विस्यन्दके सुरवने चन्दने पुष्पभद्रके ।
पुष्करे च नदीतीरे पुष्पिते पुष्पकानने ॥ ३७ ॥
सुगन्धिपुष्पतल्पे च पुष्पचन्दनवायुना ।
निर्जने मलयद्रोण्यां स्निग्धचन्दनचर्चिते ॥ ३८ ॥
शैले शैले नदे नद्यां शृङ्गारं कुर्वतस्तयोः ।
गतं वर्षशतं हर्षान्मुहूर्त्तमिव नारद ॥ ३९ ॥
बभूव शरणापन्नो भीतो दैत्येषु चन्द्रमाः ।
तेजस्विनि तथा शुक्रे तेषाञ्च बलिनां गुरौ ॥ ४० ॥
अभयञ्च ददौ तस्मै कृपया भृगुनन्दनः ।
गुरुं जहास देवानां सुविपक्षं बृहस्पतिम् ॥ ४१ ॥
सभायां जहसुर्हृष्टा बलिनो दितिनन्दनाः ।
अभयञ्च ददुस्तस्मै भीताय च कलङ्किने ॥ ४२ ॥
सती सतीत्व ध्वंसेन पापेन चन्द्रमण्डले ।
बभूव शशरूपञ्च कलङ्कं निर्मले मलम् ॥ ४३ ॥

उवाच तं महाभीतं शुक्रो वेदविदांवरः ।
हितं तथ्यं वेदयुक्तं परिणामसुखावहम् ॥ ४४ ॥

शुक्र उवाच ।

त्वमहो ब्रह्मणः पौत्रोऽप्यत्रेर्भगवतः सुतः ।
दुर्नीतं कर्म ते पुत्र नीचवन्न यशस्करम् ॥ ४५ ॥
राजसूय पुण्यफले निर्मले कीर्त्तिमण्डले ।
सुधाराशौ सुराविन्दुरूपमङ्कमुपार्जितम् ॥ ४६ ॥
त्यज देव गुरोः पत्नीं प्रसूमिव महासतीम् ।
धर्मिष्ठस्य वरिष्ठस्य ब्राह्मणानां बृहस्पतेः ॥ ४७ ॥
शम्भोः सुराणामीशस्य गुरुपुत्रस्य ब्रह्मणः ।
पौत्रस्याङ्गिरसः शश्वज्ज्वलतो ब्रह्मतेजसा ॥ ४८ ॥
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
इति सद्वंशजातानां स्वभावश्च सतामपि ॥ ४९ ॥
स शत्रुर्मे सुरगुरुः परो विश्वे निशाकर ।
तथापि सहजाख्यानं वर्णितं धर्मसंसदि ।
यत्र लोकाश्च धर्मिष्ठा स्तत्र धर्मः सनातनः ॥ ५० ॥
यतोधर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ।
गौरिकं पश्च च व्याघ्री सिंही सम प्रसूयते ॥ ५१ ॥
हिंसकाः प्रलयं यान्ति धर्मो रक्षति धार्मिकम् ।
देवाश्च गुरवो विप्राः शक्ता यद्यपि रक्षितुम् ॥ ५२ ॥
तथापि न हि रक्षन्ति धर्मघ्नं पापिनं जनम् ।
कुलटा विप्रपत्नीनां गमने सुरविप्रयोः ॥ ५३ ॥
ब्रह्महत्या षोड़शांश पातकञ्च भवेद् ध्रुवम् ।
तासा मुपस्थितानाञ्च गमने तच्चतुर्थकम् । ५४ ॥

विप्रपत्नी सतीनाञ्च गमनेन बलेन चेत्।
ब्रह्महत्याशतं पापं भवेदेव श्रुतौ श्रुतम् ॥ ५५ ॥
धर्म्मेश्वर महाभाग ब्राह्मणीं त्यज साम्प्रतम्।
कृत्वानुतापं पापाच्च निवृत्तिस्तु महाफला ॥ ५६ ॥
उपायेन च ते पापं दूरीभूतं करोम्यहम्।
शरणागतस्य भीतस्य मयि देवस्य धर्मतः ॥
शस्त्रहीनञ्च भीतञ्च दीनञ्च शरणार्थिनम्।
यो न रक्षत्यधर्मिष्ठः कुम्भीपाके वसेद् ध्रुवम् ॥ ५८ ॥
राजसूयशतानाञ्च रक्षिता लभते फलम्।
परमैश्वर्य्ये युक्तश्च धर्म्मेण स भवेदिह ॥ ५९ ॥
इत्युक्त्वा च दैत्यगुरुः स्वर्गे मन्दाकिनी तटे।
स्नात्वा तं स्नापयामास विष्णुपूजाञ्चकार सः ॥ ६० ॥
विष्णुपादोदकं पुण्यं तन्नैवेद्यं शुभप्रदम्।
गङ्गोदकञ्च पुण्यञ्च भोजयामास चन्द्रकम् ॥ ६१ ॥
क्रोड़े कृत्वा तु तं भीतं लज्जितं पापकर्म्मणा।
कुशहस्त इत्युवाच स्मारं स्मारं हरिं मुने ॥ ६२ ॥

शुक्र उवाच।

यद्यस्ति मे तपः सत्यं सत्यं पूजाफलं हरेः।
सत्यं व्रतफलञ्चैव सत्यं सत्य वचः फलम् ॥ ६३ ॥
तीर्थस्नानफलं सत्यं सत्यं दानफलं यदि।
उपवासफलं सत्यं पापान्मुक्तो भवान् भवेत् ॥ ६४ ॥
त्रिसन्ध्याहीनं विप्रञ्च विष्णुपूजाविहीनकम्।
तं गच्छतु महाघोरं चन्द्रपापं सुदारुणम् ॥ ६५ ॥
स्वभार्य्यां वञ्चनं कृत्वा यः प्रयाति परस्त्रियम्।

स यातु नरकं घोरं चन्द्रपापेन पातकी ॥ ६६ ॥
वाचा वा ताड़येत् कान्तं दुःशीला दुर्मुखा च या ।
सा युगं चन्द्रपापेन यातु लालामुखं ध्रुवम् ॥६७॥
अनैवेद्यं वृथान्नञ्च यश्च भुङ्क्ते हरेर्द्विजः ।
स यातु कालसूत्रञ्च चन्द्रपापाच्चतुर्युगम् ॥ ६८ ॥
अम्बुवाच्यां भू खननं करोति यो नराधमः ।
चन्द्रपापात् युगशतं कालसूत्रं स गच्छतु ॥ ६९ ॥
स्वकान्तं वञ्चनं कृत्वा या याति परपूरुषम् ।
सा यातु वह्निकुण्डञ्च चन्द्रपापाच्चतुर्युगम् ॥ ७० ॥
कीर्त्तिं करोति रजसा परकीर्त्तिं विलुप्य च ।
स युगं चन्द्रपापेन कुम्भीपाकञ्च गच्छतु ॥ ७१ ॥
पितरं मातरं भार्य्यां यो न पुष्णाति पातकी ।
स्वगुरुं चन्द्रपापेन यातु चाण्डालतां ध्रुवम् ॥ ७२ ॥
कुलटान्नमवीरान्नं ऋतुस्नातान्नमेव च ।
योऽश्नाति चन्द्रपापञ्च तं यातु पापिनं ध्रुवम् ॥७३॥
स यातु तेन पापेन कुम्भीपाकं चतुर्युगम् ।
तस्मादुत्तीर्य्य चाण्डालीं योनिमाप्नोति पातकी ॥७४॥
दिवसे यो ग्राम्यधर्मं महापापी करोति च ।
यो गच्छेत् कामतः कामी गुर्विणीं वा रजस्वलाम् ॥७५॥
तं यातु चन्द्रपापञ्च महाघोरञ्च पापिनम् ।
स यातु तेन पापेन कालसूत्रं चतुर्युगम् ॥ ७६ ॥
मुखं योनिं स्तनञ्चापि यो पश्यति परस्त्रियाः ।
कामतः कामदग्धश्च तं यातु चन्द्रकल्मषम् ॥ ७७ ॥
स यातु लालाभक्ष्यञ्च चन्द्रपापाच्चतुर्युगम् ।

तस्मादुत्तीर्य्य भवतु चाण्डालान्धो नपुंसकः ॥ ७८ ॥
कुहूपूर्णेन्दुसंक्रान्त्यां चतुर्दश्याष्टमीषु च ।
मासं मसूरं लकुचं यश्च भुङ्क्ते रवेर्दिने ॥ ७९ ॥
कुरुते ग्राम्यधर्म्मञ्च तं यातु चन्द्रकिल्बिषम् ।
चतुर्युगं कालसूत्रं तेन पापेन गच्छतु ॥ ८० ॥
तस्मादुत्तीर्य्य चाण्डालीं योनिमाप्नोति पातकी ।
सप्तजन्म महारोगी दरिद्रः कुब्ज एव च ॥ ८१ ॥
एकादश्याञ्च यो भुङ्क्ते कृष्णजन्माष्टमीदिने ।
शिवरात्रौ महापापी तं यातु चन्द्रपातकम् ॥ ८२ ॥
स यातु कुम्भीपाकञ्च यावदिन्द्राश्चतुर्दश ।
तेन पापेन प्राप्नोतु चाण्डालीं योनिमेव च ॥ ८३ ॥
ताम्रस्थं दुग्धमाध्वीकमुच्छिष्टे घृतमेव च ।
नारिकेलोदकं कांस्ये दुग्धं सलवणं तथा ॥८४॥
पीतशेषजलञ्चैव भक्तावशेषमोदनम् ।
ओदनमसकृद् भुङ्क्ते सूर्य्येनास्तं गते द्विजः ॥८५॥
तं यातु चन्द्रपापञ्च दुर्निवारञ्च दारुणम् ।
स यातु तेन पापेन चान्धकूपं चतुर्युगम् ॥ ८६ ॥
स्वकन्याविक्रयी विप्रो देवलो वृषवाहकः ।
शूद्राणां शवदाही च तेषाञ्च सूपकारकः ॥ ८७ ॥
अश्वत्थतरुघाती च विष्णुवैष्णवनिन्दकः ।
तं यातु चन्द्रपापञ्च दारुणं पापिनं भृशम् ॥ ८८ ॥
स यातु तस्मात् पापाच्च तप्तशूर्मीञ्च पातकी ।
प्रदग्धो भवतु स यावदिन्द्राश्चतुर्दश ॥ ८९ ॥
तस्मादुत्तीर्य्य चाण्डालीं योनिं प्राप्नोति पातकी ।

सप्तजन्म स चाण्डालो वृषश्च जन्मपञ्च च। ९० ॥
गर्द्दभो जन्मशतकं शूकरो जन्मसप्त च।
तीर्थध्वाङ्क्षो जन्मसप्त विट्क्रिमिर्जन्मपञ्च च।
जलौका जन्मशतकं शुचिर्भवतु तत्परम्। ९१ ॥
वृथा मांसं यो भुङ्क्ते स्वार्थपाकान्नमेव च।
तददत्तं महापापी प्राप्नोतु चन्द्रपातकम्॥ ९२ ॥
स यातु चन्द्रपापेन चासीपत्रं चतुर्युगम्।
ततो भवतु सर्पश्च पशुश्च सप्तजन्म च॥ ९३ ॥
विप्रो वार्द्धुषिको यो हि योनिजीवी चिकित्सकः।
हरेर्नाम्नाञ्च विक्रेता यश्च वा स्वाङ्गविक्रयी॥ ९४ ॥
स्वधर्म्मकथकश्चैव यश्च स्वात्मप्रशंसकः।
मसीजीवी धावकश्च कुलटापोष्य एव च॥ ९५ ॥
तं यातु चन्द्रपापञ्च चन्द्रो भवतु विज्वरः।
स यातु तेन पापेन शूलप्रोतं सुदारुणम्॥ ९६ ॥
तत्र विद्धो भवतु स यावदिन्द्राश्चतुर्द्दश।
ततो दरिद्रो रोगी च दीक्षाहीनो नरः पशुः॥ ९७ ॥
लाक्षामांसरसानाञ्च तिलानां लवणस्य च।
अश्वानाञ्चैव लौहानां विक्रेता नरघातकः॥९८॥
चौरश्च विप्रो षट्टीशस्तं यातु चन्द्रपातकम्।
स यातु तेन पापेन क्षुरधारं सुदुःसहम्। ९९ ॥
तत्र छिन्नो भवतु स यावदिन्द्रसहस्रकम्।
तस्मादुत्तीर्य्य भवतु शृगालः सप्तजन्मसु। १००॥
सप्तजन्म च मार्जारो महिषो जन्मपञ्चकम्।
सप्तजन्म च भल्लूकः कुक्कुरो सप्तजन्म च॥ १०१ ॥

मत्स्यश्च जन्मशतकं कर्कटी जन्मपञ्चकम् ।
गोधिका जन्मशतकं गर्द्दभः सप्तजन्मसु ॥ १०२ ॥
सप्तजन्म च मण्डूकस्ततश्च मानवोऽधमः ।
चर्म्मकारश्च रजकस्तैलकारश्च वार्द्धकी ॥ १०३ ॥
नाविकः शवजीवी च व्याधश्च स्वर्णकारकः ।
कुम्भकारो लौहकारस्ततः चत्रस्ततो द्विजः ॥ १०४ ॥
इति चन्द्रं शुचिं कृत्वा समुवाच तु तारकाम् ।
त्यक्त्वा चन्द्रं महासाध्वि गच्छ कान्तम् इति द्विजः॥१०
प्रायश्चित्तं विना पूता त्वमेव शुद्धमानसा ।
अकामा या बलिष्ठेन न स्त्री जारेण दुष्यति ॥ १०६ ॥
इत्येवमुक्त्वा शुक्रश्च चन्द्रञ्च तारकां सतीम् ।
सस्मितां सस्मितञ्चैव चकार च शुभाशिषम् ॥ १०७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद
संवादे प्रकृतिखण्डे दुर्गोपाख्यानं
नाम अष्टपञ्चाशत्तमोऽध्यायः ।

---

## एकोनषष्टितमोऽध्याय ।

---

नारद उवाच ।

बृहस्पतिः किञ्चकार तारकाहरणान्तरे ।
कथं संप्राप तां साध्वीं तन्मे व्याख्यातु मर्हसि ॥ १

श्रीनारायण उवाच ।

दृष्ट्वा विलम्बं ताराया स्नान्त्याश्चापि गुरुः स्वयम् ।
प्रस्थापयामास शिष्यमन्वेषार्थञ्च स्वर्णदीम् ॥ २ ॥
शिष्यो गत्वा स्वर्णदीञ्च संप्राप्य लोकवक्त्रतः ।
रुदन्नुवाच स्वगुरुं ताराहरणं मुने ॥ ३ ॥
श्रुत्वा सुरगुरुर्वार्तां शशिना च प्रियां हृताम् ।
मुहूर्त्तं प्राप मूर्च्छाञ्च ततः संप्राप चेतनाम् ॥ ४ ॥
रुरोदोच्चैः सशिष्यश्च हृदयेन विदूयता ।
शोकेन लज्जया विप्रो विललाप मुहुर्मुहुः ॥ ५ ॥
उवाच शिष्यान् सम्बोध्य नीतिञ्च श्रुतिसम्मताम् ।
साश्रुनेत्रः साश्रुनेत्रान् शोकार्त्तः शोककर्षितान् ॥ ६ ॥

बृहस्पतिरुवाच ।

हे वत्सा केन शप्तोऽहं न जाने कारणं परम् ।
दुःखं धर्म्मविरुद्धो यः संप्राप्नोति न संशयः ॥ ७ ॥
यस्य नास्ति सतीभार्य्या गृहेषु प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ८ ॥
भावानुरक्ता वनिता हृता यस्य च शत्रुणा ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ९ ॥
सुशीला सुन्दरी भार्य्या गता यस्य गृहाद्गृही ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ १० ॥
दैवेनापहृता यस्य पतिसाध्वी पतिव्रता ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ११ ॥
यस्य माता गृहे नास्ति गृहिणी वा सुशासिता ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ १२ ॥

प्रियाहीनं गृहं यस्य पूर्णं द्रविणबन्धुभिः ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ १३ ॥
भार्य्याशून्या वनसमाः सभार्य्याश्च गृहा गृहाः ।
गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते ॥ १४ ॥
अशुचिः स्त्रीविहीनश्च दैवे पैत्रे च कर्मणि ।
यदह्ना कुरुते कर्म न तस्य फलभाग् भवेत् ॥ १५ ॥
दाहिकाशक्तिहीनश्च यथा मन्दो हुताशनः ।
प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा शशी ॥ १६ ॥
शक्तिहीनो यथा जीवो यथा चात्मा तनुं विना ।
विनाधारं यथा धेयो यथेशः प्रकृतिं विना ॥ १७ ॥
न च शक्तो यथा यज्ञः फलदां दक्षिणां विना ।
कर्मणाञ्च फलं दातुं सामग्री मूलमेव च ॥ १८ ॥
विना स्वर्णं स्वर्णकारो यथाशक्तः स्वकर्मणि ।
यथाशक्तः कुलालश्च मृत्तिकाञ्च विना द्विजाः ॥ १९ ॥
तथा गृही न शक्तश्च सन्ततं सर्वकर्मणि ।
भार्य्यामूलाः क्रियाः सर्वाः भार्य्यामूला गृहास्तथा ॥२०॥
भार्य्यामूलं सुखं सर्वं गृहस्थानां गृहे सदा ।
भार्य्यामूलः सदाहर्षो भार्य्यामूलञ्च मङ्गलम् ॥ २१ ॥
भार्य्यामूलञ्च संसारो भार्य्यामूलञ्च सौरभम् ।
यथा रथञ्च रथिनां गृहिणाञ्च तथा गृहम् ॥ २२ ॥
सारथिस्तु यथा तेषां गृहिणाञ्च तथा प्रिया ।
सर्वरत्नप्रधाना च स्त्रीरत्नं दुष्कुलादपि ॥ २३ ॥
गृहीता सा गृहस्थेन वेत्याह कमलोद्भवः ।
यथा जलं विना पद्मं पद्मं शोभा विना यथा ॥ २४ ॥

तथैव च गृहसुखं गृहिणां गृहिणीं विना ।
इत्येव मुक्त्वा स गुरुः प्रविवेश गृहं मुहुः ॥ २५ ॥
गृहाद्‌ वहिर्निःससार भूयोभूयः शुचान्वितः ।
मुहुर्मुहुश्च मूर्च्छाञ्च चेतनां समवाप सः ॥ २६ ॥
भूयोभूयो रुरोदोच्चैः स्मारं स्मारं प्रियागुणान् ।
अथान्तरं महाज्ञानी ज्ञानिभिश्च प्रबोधितः ॥ २७ ॥
सच्छिष्यैर्मुनिभिश्चान्यैः पुरन्दरगृहं ययौ ।
स गुरुः पूजितस्तेन चातिथ्येन मरुत्वता ॥ २८ ॥
तमुवाच स्ववृत्तान्तं हृदि शल्यमिवाप्रियम् ।
बृहस्पतिवचःश्रुत्वा रक्तपङ्कजलोचनः ॥ २९ ॥
तमुवाच महेन्द्रश्च कोपप्रस्फुरिताधरः ॥ ३० ॥

महेन्द्र उवाच ।

दूतानाञ्च सहस्रञ्च गच्छतु चारकर्मणि ।
अतीव निपुणं दक्षं तत्प्राप्तिनिमित्तकम् ॥ ३१ ॥
यत्रास्ति पातकी चन्द्रो मन्माद्यो तारया सह ।
गच्छामि तत्र सन्नद्धः सर्वैर्देवगणैः सह ॥ ३२ ॥
त्यज चिन्तां महाभाग सर्वं भद्रं भविष्यति ।
भद्रवीजं दुर्गमिदं कस्य सम्पद्विपद्विना ॥ ३३ ॥
इत्युक्त्वा च सुनाशीरो दूतानाञ्च सहस्रकम् ।
तूर्णं प्रस्थापयामास तत्कर्मनिपुणं मुने ॥ ३४ ॥
ते दूताश्च वपंगतं ययुर्निर्जनमेव च ।
सुदुर्लङ्घ्याञ्च विश्वेषु भ्रमित्वा गन्धमाययुः ॥ ३५ ॥
चन्द्रञ्च शुक्रभवने तत्प्रपन्नञ्च [illegible]रम् ।
दृष्ट्वा सतारकं भीतं कथयामासु[illegible]रम् ॥ ३६ ॥

इति श्रुत्वा सुनाशीरो नतवक्त्रो बृहस्पतिम् ।
उवाच शोकसन्तप्तो हृदयेन विदूयता ॥ ३७ ॥

महेन्द्र उवाच ।

शृणु नाथ प्रवक्ष्यामि परिणामसुखावहम् ।
भयं त्यज महाभाग सर्वं भद्रं भविष्यति ॥ ३८ ॥
त्वया न हि जितः शुक्रो न मया दितिनन्दनः ।
एतदालोच्य चन्द्रश्च जगाम शरणं कविम् ॥ ३९ ॥
गच्छ शीघ्रं ब्रह्मलोकमस्माभिः सार्द्धमेव च ।
ब्रह्मणा सह यास्यामः कैलासे शङ्करं वयम् ॥ ४० ॥
इत्युक्त्वा तु महेन्द्रश्च सन्तप्तो गुरुणा सह ।
जगाम ब्रह्मलोकञ्च सुखदृश्यं निरामयम् ॥ ४१ ॥
तत्र दृष्ट्वा च ब्रह्माणं ननाम गुरुणा सह ।
प्रोवाच सर्ववृत्तान्तं देवानामीश्वरं परम् ॥ ४२ ॥
महेन्द्रवचनं श्रुत्वा जहास कमलोद्भवः ।
हितं तथ्यं नीतिसारम् उवाच विनयान्वितः ॥ ४३ ॥

ब्रह्मोवाच ।

यो ददाति परस्मै च दुःखमेव च सर्वतः ।
तस्मै ददाति दुःखञ्च शास्ता कृष्णः सनातनः ॥ ४४ ॥
अहं स्रष्टा च सृष्टेश्च पाता विष्णुः सनातनः ।
तथा रुद्रश्च संहर्त्ता ददाति च शिवं शिवः ॥ ४५ ॥
निरन्तरं सर्वसाक्षी धर्म्मश्च सर्वकारणः ।
सर्वे देवा विषयिणः कृष्णाज्ञापरिपालकाः ॥ ४६ ॥
बृहस्पतिरुतथ्यश्च संवर्त्तश्च जितेन्द्रियः ।
त्रयश्चाङ्गिरसः पुत्रा वेदवेदाङ्गपारगाः ॥ ४७ ॥

संवर्त्ताय कनिष्ठाय न च किञ्चिद्ददौ गुरुः ।
स बभूव तपस्वी च ध्यायते कृष्णमीश्वरम् ॥ ४८ ॥
उतथ्यस्य मध्यमस्य भार्य्याञ्च गुर्विणीं सतीम् ।
जहार कामतस्ताञ्च भ्रातृजायामकामुकीम् ॥ ४९ ॥
यो हरेद् भ्रातृजायाञ्च कामी कामादकामुकीम् ।
ब्रह्महत्यासहस्रञ्च लभते नात्र संशयः ॥ ५० ॥
स याति कुम्भीपाकञ्च यावच्चन्द्रदिवाकरौ ।
भ्रातृजायापहारी च मातृगामी भवेन्नरः ॥ ५१ ॥
तस्मादुत्तीर्य्य पापी च विष्ठायां जायते कृमिः ।
वर्षकोटिसहस्राणि तत्र स्थित्वा च पातकी ॥ ५२ ॥
ततो भवेन्महापापी वर्षकोटिसहस्रकम् ।
पुंश्चलीयोनिगर्त्ते च कृमिश्चैव पुरन्दर ॥ ५३ ॥
शश्वत्कोटिसहस्राणि शतजन्मनि कुक्कुरः ।
भ्रातृजायापहरणाच्छतजन्मनि शूकरः ॥ ५४ ॥
यो न ददाति दायञ्च वलिष्ठो दुर्बलाय च ।
स याति कुम्भीपाकञ्च यावच्चन्द्रदिवाकरौ ॥ ५५ ॥
मा भुङ्क्ते क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ५६ ॥
जगद्गुरोः शिवस्यापि गुरुपुत्त्रो वृहस्पतिः ।
शान्तं करोतु वृत्तान्तमीश्वरं बलिनां वरम् ॥ ५७ ॥
सर्व्वे समूहाः देवानां सन्नद्धाश्च सवाहनाः ।
मध्यस्था मुनयश्चैव तिष्ठन्तु नर्म्मदातटे ॥ ५८ ॥
पश्चादहञ्च यास्यामि पुण्यञ्च नर्म्मदातटम् ।
गुरुस्तत् गुरुपुत्त्रोऽपि शीघ्रं यातु शिवालयम् ॥५९॥

महेन्द्र उवाच ।

कथं वा वेदकर्त्तुश्च सिद्धानां योगिनां गुरोः ।
मृत्युञ्जयस्य शम्भोश्च गुरुपुत्रो वृहस्पतिः ॥ ६० ॥
अङ्गिरास्तवपुत्रश्च तत् पुत्रश्च वृहस्पतिः ।
त्वत्तोज्ञानी महादेवः कथं शिष्यो गुरोः पितुः ॥ ६१ ॥

ब्रह्मोवाच ।

कथेयमतिगुप्ता च पुराणेषु पुरन्दर ।
इमां पुरा प्रवृत्तिञ्च कथयामि निशामय ॥ ६२ ॥
मृतवत्सा कर्म्मदोषाद्भार्य्याचाङ्गिरसः पुरा ।
व्रतं चकार सा चैवं कृष्णस्य परमात्मनः ॥ ६३ ॥
व्रतं पुंसवनं नाम वर्षमेकं चकार सा ।
सनत्कुमारो भगवान् कारयामास तां व्रतम् ॥६४॥
तदागत्य च गोलोकात् परमात्मा कृपामयः ।
स्वेच्छामयं परं ब्रह्म भक्तानुग्रहविग्रहः ॥ ६५ ॥
सुव्रताञ्च सलक्ष्मीकां तामुवाच कृपानिधिः ।
प्रणतां साश्रुनेत्राञ्च विनीताञ्च तथा स्तुतः ॥ ६६ ॥

श्रीकृष्ण उवाच ।

गृहाणेदं व्रतफलं मम तेजःसमन्वितम् ।
भुङ्क्ष्व मद्वरतः पुत्रो भविष्यति मदंशतः ॥ ६७ ॥
पतिर्गुरुश्च देवानां वृहतां ज्ञानिनां वरः ।
पुत्रस्ते भविता साध्वि मद्वरेण वृहस्पतिः ॥ ६८ ॥
मद्वरेण भवेद्योहि स च मद्वरपुत्रकः ।
त्वद्गर्भे मम पुत्रोऽयं चिरजीवी भविष्यति ॥ ६९ ॥
वरजो वीर्य्यजश्चैव क्षेत्रजः पालकस्तथा ।

विद्यामन्त्र सुतौ चैव गृहीतः सप्तमः सुतः ॥ ७० ॥
इत्युक्त्वा राधिकानाथः स्वलोकञ्च जगाम सः ।
श्रीकृष्णवरपुत्त्रोऽयं ज्ञानीश्वरगुरुः स्वयम् ।
मृत्युञ्जयं महाज्ञानं शिवाय प्रददौ पुरा ॥ ७१ ॥
दिव्यं वर्षत्रिलक्षञ्च तपश्चक्रे हिमालये ।
स्वयोगं ज्ञानमखिलं तेजः स्वात्मसमं परम् ।
स्वशक्तिं विष्णुमायाञ्च स्वांशञ्च वाहनं वृषम् ॥७२॥
स्वशूलञ्च स्वकवचं स्वमन्त्रं द्वादशाक्षरम् ।
कृपामयः सुतस्तेन श्रीकृष्णस्य परात्परः ।
शिवलोके शिवा सा च विष्णुमाया शिवप्रिया ॥ ७३ ॥
शक्तिर्नारायणस्येयं साविर्भूता सनातनी ।
तेजःसु सर्वदेवानां साविर्भूता सनातनी ॥ ७४ ॥
जघान दैत्यनिकरं देवेभ्यः प्रददौ पदम् ।
कल्पान्ते दक्षकन्या च सा मूलप्रकृतिः सती ॥ ७५ ॥
पितृयज्ञे तनुं त्यक्त्वा योगेन सिद्धयोगिनी ।
बभूव शैलकन्या सा साध्वी च भर्तृनिन्दया ॥ ७६ ॥
कालेन कृष्णतपसा शङ्करं प्राप सुन्दरी ।
श्रीकृष्णोहि गुरुः शम्भोः परमात्मा परात्परः ॥ ७७ ॥
कृष्णस्य वरपुत्त्रोऽयं स्वयमेव बृहस्पतिः ।
अतोहेतो सुरगुरुर्गुरुपुत्त्रः शिवस्य च ॥ ७८ ॥
इत्येवं कथितं सर्वं अतिगुह्यं पुरातनम् ।
इति ययातिरुस्कन्धः सुतस्च कथितो मया ॥ ७९ ॥
पारम्पारिक ग्रन्थञ्च कथयामि निशामय ।
दुर्वासा शङ्करस्यैव शङ्करांशः प्रतापवान् ॥ ८० ॥

शिष्यौचाङ्गिरसस्तौ द्वौ गुरुपुत्त्रोऽथवा ततः ।
प्राणाधिकायां सत्याञ्च मृतायां दक्षशापतः ॥ ८१ ॥
स्वज्ञानं स्वञ्च भगवान् विसस्मार स्वमोहतः ।
स्मरणं कारयामास क्षणेन प्रेरितोऽङ्गिराः ॥ ८२ ॥
अतो हेतो गुरुश्चैव शिवस्य मत् सुतश्च सः ।
शीघ्रं गच्छतु कैलासं स्वयमेव बृहस्पतिः ॥ ८३ ॥
त्वं गच्छ तत्र सन्नद्धः सदेवो नर्म्मदातटम् ।
इत्युक्त्वा जगतां धाता विरराम च नारद ॥ ८४ ॥
गुरुर्ययौ च कैलासं महेन्द्रो नर्म्मदातटम् ॥ ८५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद
संवादे प्रकृतिखण्डे दुर्गोपाख्याने
एकोनषष्टितमोऽध्यायः ।

---

## षष्टितमोऽध्यायः ।

---

नारद उवाच ।

नारायण महाभाग वेदवेदाङ्गपारग ।
निपीतञ्च सुधाख्यानं त्वन्मुखेन्दुविनिःसृतम् ॥ १ ॥
अधुना श्रोतुमिच्छामि किमुवाच बृहस्पतिः ।
शिवञ्च गत्वा कैलासं दातारं सर्वसम्पदाम् ॥ २ ॥
जगत्कर्त्ता विधाता च किं वा तं प्रत्युवाच सः ।
एतत् सर्वं समालोच्य वद वेदविदां वर ॥ ३ ॥

नारायण उवाच ।

शीघ्रं गत्वा च कैलासं भ्रष्टश्रीः शङ्करं गुरुः ।
प्रणम्य तस्थौ पुरतो लज्जा मलिनविग्रहः ॥ ४ ॥
दृष्ट्वा गुरुस्तं शम्भुरुदतिष्ठत् कुशासनात् ।
आलिङ्गनं ददौ तस्मै शीघ्रं मङ्गलमाशिषम् ॥ ५ ॥
स्वासने वासयित्वा च प्रपच्छ कुशलं वचः ।
उवाच मधुरं वाक्यं भीतं तं लज्जितं शिवः ॥ ६ ॥

श्रीशङ्कर उवाच ।

कथमेवं विधस्त्वञ्च दुःखी मलिनविग्रहः ।
साश्रुनेत्रो लज्जितश्च भ्रातस्तत् कारणं वद ॥ ७ ॥
किं वा तपस्या हीना ते सन्ध्याहीनाऽथवा मुने ।
किं वा श्रीकृष्णसेवा च विहीना दैवदोषतः ॥ ८ ॥
किंवा गुरौ भक्तिहीनोऽभीष्टदेवेऽथवा गुरौ ।
किंवा न रक्षितुं शक्तः प्रपन्नं शरणागतम् ॥ ९ ॥
किं वाऽतिथिस्ते विमुखः किंवा पोष्याः बुभुक्षिताः ।
किंवा स्वतन्त्रा स्त्री वा ते किंवा पुत्रोऽवचस्करः ॥१०॥
सुशासितो न शिष्यो वा किं भृत्याश्चोत्तरप्रदाः ।
किंवा ते विमुखा लक्ष्मीः किंवा रुष्टो गुरुस्तव ॥ ११ ॥
गरिष्ठश्च वरिष्ठश्च शश्वत् सन्तुष्टमानसः ।
गुरुस्तव वशिष्ठश्च श्रेष्ठः श्रेष्ठः सतामहो ॥ १२ ॥
किंवा रुष्टोऽभीष्टदेवः किंवा रुष्टाश्च ब्राह्मणाः ।
किंवा रुष्टा वैष्णवाश्च किंवा ते प्रबलो रिपुः ॥ १३ ॥
किंवा ते बन्धुविच्छेदो विग्रहो बलिना सह ।
किंवा पदं परग्रस्तं किंवा बन्धुधनञ्च वा ॥ १४ ॥

केन ते वा कृता निन्दा खलेन पापिना मुने ।
केन वा त्वं परित्यक्तः प्रियेन बान्धवेन वा ॥ १५ ॥
बन्धुस्त्यक्त स्त्वया किंवा वैराग्येण क्रुधाथवा ।
किंवा तीर्थे न हि स्नातं न दत्तं पुण्यवासरे ॥ १६ ॥
गुरुनिन्दा बन्धुनिन्दा खलवक्त्रात् श्रुताथवा ।
गुरुनिन्दा हि साधूनां मरणादतिरिच्यते ॥ १७ ॥
असद्वंशप्रजातानां खलानां निन्दनं तथा ।
दुःशीलमेवमसतां शश्वन्नारकिणामिह ॥ १८ ॥
परप्रशंसकाः सन्तः पुण्यवन्तो हि भारते ।
शश्वन्मङ्गलयुक्ताश्च राजन्ते मनसा सदा ॥ १९ ॥
पुत्रे यशसि तोये च समृद्धे च पराक्रमे ।
ऐश्वर्य्ये वा प्रतापे च प्रजाभूमि धनेषु च ॥ २० ॥
वचनेषु च बुद्धौ च स्वभावे च चरित्रतः ।
आचारे व्यवहारे च ज्ञायते हृदयं नृणाम् ॥ २१ ॥
यादृग् येषाञ्च हृदयं तादृक् तेषाञ्च मङ्गलम् ।
यादृग् येषां पूर्वपुण्यं तादृक् तेषाञ्च मानसम् ॥ २२ ॥
इत्युक्त्वा च महादेवो विरराम स्वसंसदि ।
तमुवाच महावक्ता स्वयमेव बृहस्पतिः ॥ २३ ॥

बृहस्पतिरुवाच ।

अकथ्यमेव वृत्तान्तं कथयामि किमीश्वर ।
लोकाः कर्मवशीभूतास्तत्कर्म यत्कृतं पुरा ॥ २४ ॥
स्वकर्मणां फलं भुङ्क्ते जन्तुर्जन्मनि जन्मनि ।
न हि नष्टञ्च तत्कर्म विना भोगाच्च भारते ॥ २५ ॥
सुखं दुःखं भयं शोकं नराणां भारते प्रभो ।

केचिद्वदन्तीह भवे स्वकृतेन च कर्मणा ॥ २६ ॥
केचिद्वदन्ति दैवेन स्वभावेनेति केचन ।
त्रिविधाश्च मता वेदे वेदवेदाङ्गपारग ॥ २७ ॥
स्वयञ्च कर्मजनकस्तत्कर्म दैवकारणम् ।
स्वभावो जायतो नृणाम् स्वात्मनः पूर्वकर्मणः ॥ २८ ॥
स्वकर्मणाञ्च सर्वेषां जन्तूनां प्रतिजन्मनि ।
सुखं दुःखं भयं शोकम् स्वात्मनश्च प्रजायते ॥ २९ ॥
स्वकर्मफलभोक्ता च जीवो हि सगुणः सदा ।
आत्मा भोजयिता साक्षी निर्गुणः प्रकृते परः ॥ ३० ॥
स एवात्मा सर्वसेव्यः सर्वेषाञ्च फलप्रदः ।
स च सृजति दैवञ्च स्वभावं कर्म एव च ॥ ३१ ॥
कर्मणा च नृणां लज्जा प्रशंसा च प्रफुल्लता ।
लज्जावीजञ्च वृत्तान्तं तथापि कथयामि ते ॥ ३२ ॥
इत्युक्ता सर्ववृत्तान्तम् उवाच तं वृहस्पतिः ।
श्रुत्वा बभूव नम्रास्यो गौरीशो लज्जया तदा ॥ ३३ ॥
जपमाला करात् भ्रष्टा कोपाविष्टस्य शूलिनः ।
बभूव सद्यः कम्पश्च रक्तपङ्कजलोचने ॥ ३४ ॥
संहर्त्तुरीशो रुद्रस्य विष्णोः पातुः सखा शिवः ।
स्रष्टुस्तुल्यश्च मान्यश्च स्वात्मनः परमात्मनः ॥ ३५ ॥
निर्गुणस्य च कृष्णस्य प्रकृतीशस्य नारद ।
कोपात् प्रवक्तुमारेभे शुष्ककण्ठोष्ठतालुकः ॥ ३६ ॥

शिव उवाच ।

शिवमस्तु च साधूनां वैष्णवानां सतामिह ।
अवैष्णवानामसतामशिवञ्च पदे पदे ॥ ३७ ॥

ददाति वैष्णवेभ्यश्च यो दुःखं सुस्थितो जनः ।
श्रीकृष्णस्तस्य संहर्त्ता विघ्नस्तस्य पदे पदे ॥ ३८ ॥
अवैष्णवानां हृदयं न हि शुद्धं सदामलम् ।
श्रीकृष्णमन्त्र स्मरणं मनोनैर्मल्य कारणम् ॥ ३९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यते सर्वसंशयः ।
विष्णुमन्त्रोपासनया चीयते कर्म तत् नृणाम् ॥ ४० ॥
अहो श्रीकृष्णदासानां कः स्वभावः सुनिर्मलः ।
हृतभार्य्ये मूर्च्छितश्च न शशाप रिपुं गुरुः ॥ ४१ ॥
गुरुर्यस्य वशिष्ठश्च क्रोधहीनश्च धार्मिकः ।
हन्तारञ्च पुत्रशतं न शशाप रिपुं मुनिः ॥ ४२ ॥
निश्वासेन सुरगुरोर्भ्रातुर्मम बृहस्पतेः ।
भस्मीभूतो निमेषेण शतचन्द्रो भवेद् ध्रुवम् ॥ ४३ ॥
तथापि तं न शशाप धर्म्मभङ्गभयेन च ।
तपस्या हीयते शम्भुः कोपाविष्टस्य नित्यशः ॥ ४४ ॥
अहो ह्यत्रेरसत्पुत्रः परस्त्रीलुब्धकः शठः ।
तपस्विनो वैष्णवस्य ब्रह्मपुत्रस्य धर्मिणः ॥ ४५ ॥
धर्मिष्ठा ब्रह्मणः पुत्रा वैष्णवा ब्राह्मणास्तथा ।
केचिद्देवा द्विजा दैत्याः पौत्राश्च विविधा मताः ॥४६॥
ये सात्त्विका ब्राह्मणास्ते देवा राजसिकास्तथा ।
दैत्यास्तामसिका रौद्रा बलिष्ठाः चोद्धताः सदा ॥४७॥
स्वधर्म्मनिरता विप्रा नारायणपरायणाः ।
शैवाः शाक्ताश्च ते देवा दैत्याः पूजाविवर्जिताः ॥४८॥
मुमुक्षवो विष्णुभक्ता ब्राह्मणा दास्यलिप्सवः ।
ऐश्वर्य्यलिप्सवो देवाश्चासुरास्तामसास्तथा ॥ ४९ ॥

ब्राह्मणानां स्वधर्म्मश्च कृष्णस्यार्च्चनमीप्सितम् ।
निष्कामानां निर्गुणस्य परस्य प्रकृतेरपि ॥ ५० ॥
ये ब्राह्मणा वैष्णवाश्च स्वतन्त्राः परमं पदम् ।
यान्त्यन्योपासकाश्चान्ये सार्द्धञ्च प्राकृते लये ॥ ५१ ॥
वर्णानां ब्राह्मणाः श्रेष्ठाः साधवो वैष्णवा यदि ।
विष्णुमन्त्रविहीनेभ्यो द्विजेभ्यः श्वपचो वरः ॥ ५२ ॥
परिपक्वा विपक्वा वा वैष्णवाः साधवश्च ते ।
सन्ततं पाति तांश्चैव विष्णुचक्रं सुदर्शनम् ॥ ५३ ॥
यथा वह्नौ शुष्कतृणं भस्मीभूतं भवेत् सदा ।
तथा पापं वैष्णवेषु काष्ठानीव हुताशने ॥ ५४ ॥
गुरुवक्त्रात् विष्णुमन्त्रो यस्य कर्णे प्रवेक्ष्यति ।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥ ५५ ॥
पुंसां शतं पितृणाञ्च शतं मातामहस्य च ।
स्वसोदराञ्च जननीमुद्धरन्त्येव वैष्णवाः ॥ ५६ ॥
गयायां पिण्डदानेन पिण्डदाः पिण्डभोजिनम् ।
समुद्धरन्ति पुंसाञ्च वैष्णवाश्च शतं शतम् ॥ ५७ ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ।
यमस्तस्मान्महाभीतो वैनतेयादिवोरगः ॥ ५८ ॥
निष्पुनन्त्येव तीर्थानि गङ्गादीनि च भारते ।
कृष्णमन्त्रोपासकाश्च स्पर्शमात्रेण वाक्पते ॥ ५९ ॥
पापानि पापिनां तीर्थे यावन्ति प्रभवन्ति च ।
नश्यन्ति तानि सर्वाणि वैष्णवस्पर्शमात्रतः ॥ ६० ॥
कृष्णमन्त्रोपासकानां रजसा पादपद्मयोः ।
सद्यो मुक्ता पातकेभ्यः कृत्स्ना पूतावसुन्धरा ॥ ६१ ॥

वायुश्च पवनो वह्निः सूर्य्यः सर्वं पुनाति च ।
एते पूता वैष्णवानां स्पर्शमात्रेण लीलया ॥ ६२ ॥
अहं ब्रह्मा च शेषश्च धर्मः साक्षी च कर्म्मणाम् ।
एते दृष्टाश्च वाञ्छन्ति वैष्णवानां समागमम् ॥ ६३ ॥
फलं कर्मानुरूपेण सर्वेषां भारते भवेत् ।
न भवेत्तद्वैष्णवे च सिद्धधान्ये यथाङ्कुरम् ॥ ६४ ॥
हन्ति तेषां कर्म्म पूर्वं भक्तानां भक्तवत्सलः ।
कृपया स्वपदं तेभ्यो ददात्येव कृपानिधिः ॥ ६५ ॥
तेजस्विनाञ्च प्रवरं वैष्णवं भृगुनन्दनम् ।
स चन्द्रो दुर्बलो भीतः शुक्रञ्च शरणं ययौ ॥ ६६ ॥
सुदर्शनाद् वलिष्ठञ्च शुक्रं जेतुं न शक्तिमान् ।
तथापि चोद्धरिष्यामि तारां मन्त्रणया गुरो ॥ ६७ ॥
भजसत्यं परं ब्रह्म कृष्णमात्मानमीश्वरम् ।
सुप्रसन्ने भगवति पत्नीं प्राप्स्यसि लीलया ॥ ६८ ॥
मन्त्रं तस्य प्रदास्यामि भ्रातः कल्पतरुं परम् ।
कोटिजन्माघ निघ्नञ्च सर्वमङ्गलकारणम् ॥ ६९ ॥
ब्रह्मादिस्तम्बपर्य्यन्तं नश्वरं जलविम्बवत् ।
शरणं याहि गोविन्दं परमात्मानमीश्वरम् ।
तावद्भवेच्छा भोगेच्छा स्त्रीसुखेच्छा नृणामिह ॥ ७० ॥
यावद्गुरुमुखाम्भोजान्न प्राप्नोति मनुं हरेः ।
संप्राप्य दुर्लभं मन्त्रं विलक्षणो हि भवेन्नरः ॥ ७१ ॥
इन्द्रत्वममरत्वञ्च न हि वाञ्छन्ति वैष्णवाः ।
न हि वाञ्छन्ति मोक्षञ्च दास्यं भक्तिं विना हरेः ॥७२॥
भक्तिनिर्मञ्छनं भक्तो न करोति च मोक्षणम् ।

ज्ञानं मृत्युञ्जयत्वञ्च सर्वसिद्धित्वमीप्सितम् ॥ ७३ ॥
वाक्सिद्धित्वञ्च ब्रह्मत्वं भक्तानां न हि वाञ्छितम्।
भक्तिं विहाय कृष्णस्य विभवं यो हि वाञ्छति॥ ७४ ॥
विषमत्ति सुधां त्यक्त्वा वञ्चितो विष्णुमायया॥ ७५ ॥
अहं ब्रह्मा च विष्णुश्च धर्मोऽनन्तश्च कश्यपः।
कपिलश्च कुमारश्च नरनारायणावृषी।
स्वायम्भुवो मनुश्चैव प्रह्लादश्च पराशरः॥ ७६ ॥
भृगुः शुक्रश्च दुर्वासा वशिष्ठःक्रतुरङ्गिराः।
वलिश्च वालिखिल्याश्च वरुणश्च हुताशनः॥ ७७ ॥
वायुः सूर्य्यश्च गरुड़ो दक्षो गणपतिः स्वयम्।
एते परा भक्तवराः कृष्णस्य परमात्मनः॥ ७८ ॥
ये च तस्य कलाः श्रेष्ठास्ते तद्भक्तिपरायणाः।
इत्युक्ता शङ्करस्तस्मै ददौ कल्पतरुं मनुम्॥ ७९ ॥
लक्ष्मीमायाकामवीजं ङेन्तं कृष्णपदं मुने।
परं पूजाविधानञ्च स्तोत्रञ्च कवचं मुने॥ ८० ॥
तत्पुरश्चरणं ध्यानं सिद्धे मन्दाकिनीतटे।
गुरुः संप्राप्य तं मन्त्रं शङ्कराच्च जगद्गुरोः॥ ८१ ॥
विलग्नो हि भवाब्धौ च बभूव तमुवाच ह॥ ८२ ॥

बृहस्पतिरुवाच।

आज्ञां कुरु जगन्नाथ यामि तप्तुं हरेस्तपः।
तारा तिष्ठतु तत्रैव न तया मे प्रयोजनम्॥ ८३ ॥
पश्यामि विषतुल्यञ्च सर्वं नश्वरमीश्वर।
श्रीकृष्णं शरणं यामि सत्यं नित्यञ्च निर्गुणम्॥ ८४ ॥

श्रीमहादेव उवाच।

परग्रस्तां स्त्रियं त्यक्त्वा न प्रशंस्यं तपो मुने।
सम्भावितस्य दुष्कीर्त्ति मरणादतिरिच्यते॥ ८५॥
पुरो गच्छ महाभाग तमेव नर्मदातटम्।
यत्र ब्रह्मादयो देवास्तत्राहं यामि सत्वरम्॥ ८६॥
शिवस्य वचनं श्रुत्वा ययौ सुरगुरुः स्वयम्।
आययौ च महाभागः शङ्करो नर्मदातटम्॥ ८७॥
समणं शङ्करं दृष्ट्वा प्रसन्नवदनेक्षणम्।
प्रणेमुर्द्देवताः सर्वा मनवो मुनयस्तथा॥ ८८॥
ननाम शम्भुः शिरसा विष्णुञ्च कमलोद्भवम्।
ददौ विष्णुर्महेशाय प्रेमस्वालिङ्गनमाशिषम्॥ ८९॥
एतस्मिन्नन्तरे तत्र चागमच्च वृहस्पतिः।
प्रणनाम महादेवं विष्णुञ्च कमलोद्भवम्॥ ९०॥
सूर्य्यं धर्ममनन्तञ्च नरं मान्य मुनीश्वरान्।
स्वगुरुं पितरं भक्त्या चोवास तत्र संसदि॥ ९१॥
सञ्चिन्त्य मनसा युक्तिमुवाच तत्र संसदि।
स्वयं विष्णुश्च भगवान् ब्रह्माणं चन्द्रशेखरम्॥ ९२॥

विष्णुरुवाच।

युवाञ्च मुनयश्चैव समुद्रपुलिनं त्वरा।
शुक्रं कञ्चिच्च मध्यस्थं प्रस्थापयितुमर्हसि॥ ९३॥
विग्रहेणैव विषमं भविष्यति न संशयः।
मदाशिषा सुरगुरुस्तारां प्राप्स्यति निश्चितम्॥ ९४॥
सुरैस्मातश्च सन्तुष्टः शुक्राचार्य्यो भविष्यति।
पुरः [illegible] उग्रचक्रेण रक्षितः॥ ९५॥

युवाभ्यां प्रार्थ्यमानोऽहं युवयोः स्तवनेन च ।
श्वेतद्वीपादागतोऽस्मि परितुष्टस्तवेन च ।
शुक्राश्रमसमीपञ्च सर्वा गच्छन्तु देवताः ॥ ९६ ॥
रिपुर्बलिष्ठः स्तोत्रेण वशीभूत इति श्रुतिः ।
इत्युक्ता जगतां नाथ स्तवैवान्तरधीयत ॥ ९७ ॥
स्तुतो ब्रह्मादिभिर्देवैः प्रणतैः परिपूजितः ।
गते च जगतां नाथे श्वेतद्वीपञ्च नारद । ९८ ।
चिन्तिताश्च सुराः सर्वे विषसमानसास्तथा ।
मुनीन् देवांश्च संबोध्य ब्रह्मा च तत्र संसदि ॥ ९९ ॥
उवाच नीतिसारञ्च सम्मतः शङ्करेण स ॥ १०० ॥

ब्रह्मोवाच ।

मम शश्वोश्च विष्णोश्च धर्मस्य सर्वसाक्षिणः ।
अस्माकञ्च समः स्नेहो दैत्ये देवे च पुत्रकाः ।१०१॥
दैत्यानाञ्च गुरौ शुक्रे प्रपन्नश्च निशाकरः ।
न जितश्च सुरैः शुक्रः पूजितो दितिनन्दनैः ॥ १०२ ॥
तारा हेतोरहं यामि शुक्रस्य भवनं सुराः ।
सर्वे समुद्रपुलिनं यान्तु विष्णोर्निदेशतः ॥ १०३ ॥
इत्युक्ता जगतां धाता जगाम शुक्रसन्निधिम् ।
प्रययुर्देवता विप्राः समुद्रपुलिनं मुने ॥ १०४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे तारोद्धारणप्रस्तावे
षष्टितमोऽध्यायः ।

——

# एकषष्टितमोऽध्यायः ।

नारद उवाच ।

ततः परं किं रहस्यं बभूवासुरदेवयोः ।
श्रोतुमिच्छामि भगवन् परं कौतूहलं मम ॥ १ ॥

नारायण उवाच ।

ब्रह्मा जगाम निलयं शुक्रस्य च महात्मनः ।
नानादैत्यगणाकीर्णं रत्नमन्दिरभूषितम् ॥ २ ॥
पञ्चाशत्कोटिभिः शिष्यैः परीतं ब्रह्मवादिभिः ।
सप्तभिः परिखाभिश्च वेष्टितं दुर्गमेव च ॥ ३ ॥
रचितं रचकगणैर्दैत्यैश्च शतकोटिभिः ॥ ४ ॥
पद्मरागविरचितैः प्राचीरैः परिशोभितम् ।
ददर्श जगतां धाता सभायां भृगुनन्दनम् ॥ ५ ॥
स्तुतं मुनिगणैर्दैत्यै रत्नसिंहासनस्थितम् ।
जपन्तं परमं ब्रह्म कृष्णमात्मानमीश्वरम् ॥ ६ ॥
शतसूर्य्यप्रभं शश्वज्ज्वलन्तं ब्रह्मतेजसा ।
दृष्ट्वा पौत्रं प्रभायुक्तं विधाता हृष्टमानसः ॥ ७ ॥
आत्मानं कृतिनं मेने पुत्त्रं पौत्रञ्च नारद ।
दृष्ट्वा पितामहं शुक्रो धातारं जगतां प्रभुम् ॥ ८ ॥
उत्थाय सहसा भीतः प्रणनाम पुटाञ्जलिः ।
प्रदाय पूजयामास चोपचाराणि षोड़श ॥ ९ ॥
तुष्टाव परया भक्त्या सम्भ्रमेण यथागमम् ।

विद्यामन्त्रप्रदातारं दातारं सर्वसम्पदाम्॥ १० ॥
स्वकर्म्मणाञ्च फलदं सर्वेषां बिभ्रतो वरम्।
शुक्रस्य स्तवनेनैव सन्तुष्टो जगतां पतिः॥ ११ ॥
अवरुह्य रथात् तूर्णमुवास तत्र संसदि।
शुक्रेण शिरसा दत्ते रत्नसिंहासने वरे॥ १२ ॥
तेजसा ज्वलिते रम्ये निर्म्मिते विश्वकर्म्मणा।
शुक्रः प्रणम्य ब्रह्माणं कुमारं शकुनं क्रतुम्॥ १३ ॥
वशिष्ठञ्च मरीचञ्च सनन्दञ्च सनातनम्।
कपिलञ्च पञ्चशिखं वोढ़ु मङ्गिरसं मुने॥ १४ ॥
धर्मं माञ्च नरं भक्त्या प्रणनाम पुटाञ्जलिः।
प्रत्येकं पूजयामास सादरञ्च यथोचितम्॥ १५ ॥
सिंहासनेषु रत्नेषु वासयामास धार्मिकः।
प्रहृष्टवदनाः सर्वे प्रणेमुर्दितिनन्दनाः॥ १६ ॥
ऋषिसंघाञ्च ब्रह्माणं तुष्टुवुश्च यथा गमम्।
सर्व्वान् संस्तूय स कविरुवाच सम्पुटाञ्जलिः॥ १७ ॥
साश्रुनेत्रः सपुलकः प्रणतो विनयान्वितः॥ १८ ॥

शुक्र उवाच।

अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्।
स्वयं विधाता भगवान् साक्षाद् दृष्टः स्वमन्दिरे॥१९॥
साक्षाद् दृष्टाश्च तत् पुत्त्रा भगवन्तः सनातनाः।
तुष्टः कृष्णोऽद्य मामेवं परमात्मा परात्परः॥ २० ॥
कृतार्थं कर्त्तुमीशानां युष्माभिः स्वागतं शिवम्।
स्वात्मारामेषु कुशलं प्रश्नमेव विड़म्बनम्॥ २१ ॥
सविलं कर्त्तुमीशानां हेतुरागमने तव।

अपरं ब्रूहि किं वापि शाधि नः करवाम किम् ॥२२॥

ब्रह्मोवाच ।

उद्विग्नाश्चिरविच्छेदात् त्वां पौत्रं द्रष्टुमागतः ।
विच्छेदः पुत्रपौत्राणां मरणादतिरिच्यते ॥२३॥
कुशलं ते मुनिश्रेष्ठ पुत्त्रयोश्चापि योषितः ।
कुशलं ते स्वधर्माणां काम्यानां तपसामपि ॥ २४ ॥
दिने दिने परिच्छिन्नं श्रीकृष्णार्चनमीप्सितम् ।
स्वगुरोः सेवनं नित्यमविच्छिन्नं भवेत्तव ॥ २५ ॥
गुर्विष्टयोः पूजनञ्च सर्वमङ्गलकारणम् ।
पापाधिरोगशोकघ्नं पुण्यहर्षप्रदं शुभम् ॥ २६ ॥
अभीष्टदेवः सन्तुष्टो गुरौ तुष्टे नृणामिह ।
इष्टदेवे च सन्तुष्टे सन्तुष्टाः सर्वदेवताः ॥ २७ ॥
गुरुविप्रः सुरोरुष्टो येषां पातकिनामिह ।
तेषाञ्च कुशलं नास्ति विघ्नस्तस्य पदे पदे ॥ २८ ॥
तुष्टश्च सन्ततं वत्स श्रीकृष्णः प्रकृतेः परः ।
सर्वान्तरात्मा भगवां स्तव भक्त्या च निर्गुणः ॥ २९ ॥
तव तुष्टो गुरुरहं विधाता जगतामपि ।
मयि तुष्टे हरिस्तुष्टो हरौ तुष्टे तु देवताः ॥ ३० ॥
साम्प्रतं शृणु मे हेतुं गमनस्य मुनीश्वर ।
प्रेषितस्य सुराणाञ्च विघ्नसंहर्त्तुरेव च ॥ ३१ ॥
शिवस्य गुरुपुत्त्रस्य साध्वीं तारां वृहस्पतेः ।
अपहृत्य निशानाथस्तवैव शरणागतः ॥ ३२ ॥
मम्भुर्धर्मस्य सूर्य्यस्य शक्रोऽनन्तस्य पुत्त्रक ।
आदित्या वसवो रुद्रा दिक्पालाश्च दिगीश्वराः ॥३३॥

युद्धायायान्ति सन्नद्धास्तिस्रः कोट्यश्च देवताः ।
नागाः किम्पुरुषाश्चैव यक्षराक्षसगुह्यकाः ॥ ३४ ॥
भूताः प्रेताः पिशाचाश्च कुष्माण्डा ब्रह्मराक्षसाः ।
किरातश्चैव गन्धर्वा समुद्रपुलिनेऽधुना ॥ ३५ ॥
तारकामय संग्रामे मध्यस्थोऽहं सुतैः सह ।
देहि तारां रणं किं वा त्यज चन्द्रञ्च कामिनम् ॥३६॥

शुक्र उवाच ।

आगच्छन्तु सुराः सर्वे सन्नद्धा रणदुर्मदाः ।
योत्स्ये विना महेशञ्च सर्वेषाञ्च गुरुं परम् । ३५ ॥

दैत्या ऊचुः ।

उभयेषां गुरुः शम्भुर्मान्यो वन्द्यश्च सर्वदा ।
धर्मश्च साक्षो सर्वेषां त्वमेव च पितामह ॥ ३८ ॥
अन्यांश्च तृणतुल्यांश्च न हि मन्यामहे वयम् ।
आगच्छन्तु च योत्स्यामो व्रज ब्रूहि जगद्गुरो ॥३९॥
कृपया गुरुपुत्रस्य यद्यायाति महेश्वरः ।
अग्रे नास्त्रं विधास्यामः पश्चाद्योत्स्यामहे प्रभो ॥४०॥

ब्रह्मोवाच ।

कालाग्निरुद्रः संहर्त्ता विश्वस्य बलिनां वरः ।
हे वत्सास्तेन सार्द्धञ्च को वा युद्धं करिष्यति ॥ ४१ ॥
भद्रकाली जगन्माता खड्गखर्परधारिणी ।
तया दुर्द्धर्षया सार्द्धं को वा युद्धं करिष्यति ॥ ४२ ॥
सा सहस्रभुजा देवी मुण्डमालाविभूषणा ।
योजनायतवक्त्रा च दशयोजनविस्तृता ॥ ४३ ॥
सप्ततालप्रमाणाश्च यस्या दन्ता भयानकाः ।

क्रोशप्रमाणजिह्वा च महालोला भयङ्करी ॥ ४४ ॥
अतीव रौद्राः सन्नद्धा भीमाः शङ्करकिङ्कराः ।
अतिभीमा भैरवाश्च नन्दी च रक्तकर्कशः ॥ ४५ ॥
शिवस्य पार्षदाः सर्वे महाबलपराक्रमाः ।
वीरभद्रादयः शूरा शतसूर्य्यसमप्रभाः ॥ ४६ ॥
सहस्रमूर्ध्नः शेषस्य फणैकदेशकोणतः ।
विश्वं सर्षपतुल्यञ्च को वा योद्धा च तत्समः ।
कालाग्निरुद्रः संहर्त्ता यस्य शम्भोश्च किङ्करः ॥ ४७ ॥
शूलिनस्त्रिपुरघ्नस्य ज्वलतो ब्रह्मतेजसा ।
यस्य पाशुपतास्त्रेण दुर्निवार्य्येण पुत्रकाः ॥ ४८ ॥
भस्मीभूतं भवेद्विश्वं दैत्यानाञ्चैव का कथा ।
यस्य शूलेन भिन्नश्च शङ्खचूड़ः प्रतापवान् ॥ ४९ ॥
सुदामा पार्षदवरः कृष्णस्य परमात्मनः ।
त्रिकोटिसूर्य्यसदृशस्तेजस्वी परमाद्भुतः ॥ ५० ॥
राधाकवचकण्ठश्च सर्वदैत्यजनेश्वरः ।
मधुकैटभयोर्हन्ता हिरण्यकशिपोश्च यः ॥ ५१ ॥
स च विष्णुः समायाति श्वेतद्वीपात् स्वयं प्रभुः ।
इत्युक्त्वा जगतां धाता विरराम च संसदि ॥ ५२ ॥
प्रहृष्टोवाच प्रह्लादो दानवानामधीश्वरः ॥ ५३ ॥

प्रह्लाद उवाच ।

नमस्तुभ्यं जगद्धातः सर्वेषां प्राक्तनेश्वर ।
सर्वपूज्य सर्वनाथ किं वक्ष्यामि तवाग्रतः ॥ ५४ ॥
हिरण्यकशिपोर्हन्ता मधुकैटभयोश्च यः ।
स कला यस्य कृष्णस्य परिपूर्णतमस्य च ॥ ५५ ॥

सर्वान्तरात्मानन्तस्य चक्रं नाम सुदर्शनम् ।
अस्माकं लोकमस्मांश्च शश्वद्रक्षति दुःसहम् ॥ ५६ ॥
ततो न बलवान् शम्भुर्न च पाशुपतं विधे ।
न च काली न शेषश्च न च रुद्रादयः सुराः ॥ ५७ ॥
यस्य लोमसु विश्वानि निखिलानि जगत्पते ।
सर्वाधारस्य च विभोः स्थूलात् स्थूलतरस्य च ॥ ५८ ॥
षोड़शांशो भगवतः स एव च महान् विराट् ।
अनन्तो नहि तत्स्थूलो न काली बृहती ततः ॥५९॥
आगच्छन्तु सुराः सर्वे युद्धं कुर्वन्तु साम्प्रतम् ।
न बिभेमि शरेभ्यश्च न च पाशुपताद्वरात् ॥ ६० ॥
नमस्तस्मै भगवते शिवाय शिवरूपिणे ।
नमोऽनन्ताय साधुभ्यो वैष्णवेभ्यः प्रजापते ॥ ६१ ॥
श्रीकृष्णस्य प्रसादेन निर्भयोऽहं निरामयः ।
न मे स्वात्मबलं ब्रह्मं स्वद्द बलं यत् प्रभोर्बलम् ॥६२॥
स्वपापेन मृतस्तातो पुरावै विष्णुनिन्दया ।
निर्बन्धाच्छङ्खचूड़श्च दर्पाच्च मधुकैटभौ । ६३ ॥
त्रिपुरः किङ्करोऽस्माकं वीरत्वेन न गण्यते ।
तथापि प्रेरितस्तेन स रथस्थो महेश्वरः ॥ ६४ ॥
इत्युक्त्वा दानवश्रेष्ठो विरराम च संसदि ।
उवाच जगतां धाता पुनरेव च नारद ॥ ६५ ॥

ब्रह्मोवाच ।

विनाशकारणं युद्धमुभयोर्दैत्यदेवयोः ।
सुप्रीताचरणं वत्स सर्वमङ्गलकारणम् ॥ ६६ ॥
तारां भिक्षां देहि मह्यं भिक्षुकाय च ब्रह्मणे ।

विमुखे भिक्षुके राजन् गृहस्थः सर्वपापभाक् । ६७ ॥

सनत्कुमार उवाच ।

स्वकीर्त्तिं रक्ष राजेन्द्र सिंहस्त्वं सुरदैत्ययोः ।
यस्य भिक्षुर्जगद्दाता तस्य कीर्त्तिश्च का कथा ॥६८॥

सनातन उवाच ।

न जितस्त्वं सुरेन्द्रैश्च ब्रह्मेशानपुरोगमैः ।
रक्षितः कृष्णचक्रेण वैष्णवः पुण्यवान् शुचिः ॥६९॥

सनन्द उवाच ।

यस्येष्टदेवः सर्वात्मा श्रीकृष्णः प्रकृतेः परः ।
गुरुश्च वैष्णवः शुक्रः स च केन जितो महान् ॥ ७० ॥

सनक उवाच ।

पुण्यवान् न जितः केन जितः पापी स्वपातकैः ।
पुण्यदीपो न निर्वाति पाषण्डेनैव वायुना ॥ ७१ ॥

ऋषय ऊचुः ।

देहि तारां महाभाग चन्द्रं प्राणाधिकं गुरोः ।
स्वकीर्त्तिं रक्ष सुचिरं प्रार्थयामः पुनः पुनः ॥७२॥

प्रह्लाद उवाच ।

स्थिते महीश्वरे साक्षान्नहि भृत्यो विराजते ।
कर्त्तारं ब्रूहि मन्नाथं गुरुं शुक्रं सतां वरम् ॥ ७३ ॥
शिष्याणामाधिपत्ये च साधूनां गुरुरीश्वरः ।
गुरौ समर्पितं पूर्वं सर्वैश्वर्य्यं मुनीश्वरे ॥ ७४ ॥
वयं भृत्याश्च पोष्याश्च स्वगुरोः परिचारकाः ।
ते च शिष्याः कुशलिनो गुर्वाज्ञां पालयन्ति ये ॥ ७५ ।
प्रह्लादस्य वचः श्रुत्वा चकार प्रार्थनां कविम् ।

ददौ शुक्राय तारां तां चन्द्रश्च मलिनं मुने ॥ ७६ ॥
दत्त्वा तारां विधुं शुक्रः प्रणनाम विधेः पदे।
नमस्कृत्य मुनिभ्यश्च प्रणतः स्वपुरं ययौ।
प्रह्लादः स्वगणो भक्त्या नमस्कृत्य विधेः पदे ॥ ७७ ॥
प्रत्येकञ्च मुनिगणान् प्रणतः स्वगृहं ययौ।
ब्रह्मा ददर्श ताराञ्च प्रणतां स्वपदे सतीम्।
लज्जया नम्रवक्त्राञ्च रुदतीं गुर्विणीं मुने ॥ ७८ ॥
चन्द्रञ्च प्रणतं धाता क्रोड़े संस्थाप्य मायया।
उवाच मलिनां तारां कातराञ्च कृपामयः ॥ ७९ ॥
तारे त्यज भयं मातर्भयं किं ते मयि स्थिते।
सौभाग्ययुक्ता स्वपतौ भविष्यसि वरेण मे ॥ ८० ॥
दुर्बला बलिना ग्रस्ता निष्कामा न च्युता भवेत्।
प्रायश्चित्तेन शुद्धा सा न स्त्री जारेण दुष्यति ॥ ८१ ॥
सकामा कामतो जारं भजते स्वसुखेन च।
प्रायश्चित्तान्न शुद्धा सा स्वामिना परिवर्जिता ॥ ८२ ॥
कुम्भीपाके पच्यते सा यावच्चन्द्रदिवाकरौ।
अन्नं विष्ठा जलं मूत्रं स्पर्शनं सर्वपापदम् ॥ ८३ ॥
पापीयस्याश्च तस्याश्च साधुभिः परिवर्जितम्।
कस्य गर्भं वद शुभे गच्छ वत्से गुरोर्गृहम् ॥ ८४ ॥
त्यज लज्जां महाभागे सर्वञ्च प्राक्तनाद्भवेत्।
ब्रह्मणो वचनं श्रुत्वा समुवाच सती तदा ॥ ८५ ॥
चन्द्रस्य गर्भं हे तात बिभर्मि दैवयोगतः।
सर्वे मे साक्षिणः सन्ति दुर्बलायाः प्रजापते ॥ ८६ ॥
यदा जग्राह चन्द्रो मां दृष्ट्वा दीनञ्च दुर्मतिः।

इत्युक्का तारका देवी सुषाव कनकप्रभम् ॥ ८७ ॥
कुमारं सुन्दरं तत्र ज्वलन्तं ब्रह्मतेजसा ।
गृहीत्वा तनयं चन्द्रो नत्वा ब्रह्माणमीश्वरम् ।
जगाम स स्वभवनं ब्रह्मा सिन्धुतटं ययौ ॥ ८८ ॥
साध्वीं ताराञ्च गुरवे देवेभ्योऽप्यभयं ददौ ॥ ८९ ॥
आशिषं शम्भु धर्माभ्यां ब्रह्मलोकं ययौ विधिः ।
देवा ययुः स्वभवनं स्वगृहञ्च बृहस्पतिः ॥ ९० ॥
भावानुरक्तां वनितां संप्राप्य हृष्टमानसः ।
तारकागर्भसंभूतः स एव च बुधः स्वयम् ॥ ९१ ॥
तेजस्वी सद्ग्रहो ब्रह्मं श्चन्द्रस्य तनयो महान् ।
स एव नन्दनवने चित्रां संप्राप्य निर्जने । ९२ ॥
घृताच्या गर्भसंभूतां कुवेरस्य च रेतसा ।
दृष्ट्वा च निर्जने रम्यां कन्यां कमललोचनाम् ॥ ९३ ॥
अतीव यौवनस्थाञ्च बालां द्वादशवार्षिकीम् ।
गान्धर्वेण विवाहेन तां जग्राह विधोः सुतः ॥ ९४ ॥
तस्यामतीव रहसि वीर्य्याधानं चकार सः ।
बभूव राजा चित्रायां चैत्रश्च मण्डलेश्वरः ॥ ९५ ॥
सप्तद्वीपवतीं पृथ्वीं प्रशास्ति धार्मिको वशी ।
शतनद्यो घृतानाञ्च दध्नां नद्यः शतानि च ॥ ९६ ॥
शतानि नद्यो दुग्धानां मधुनद्यश्च षोड़श ।
दश नद्यश्च तैलानां शर्करा लवराशयः ॥ ९७ ॥
मिष्टान्नानां स्वस्तिकानां लड्डराशिश्च नित्यशः ।
पञ्चकोटि गवां मांसं सपूपं स्वान्नमेव च ॥ ९८ ॥
एतेषाञ्च नदीराशीभुञ्जते ब्राह्मणा मुने ।

गवां लक्षञ्च रत्नानां मणीनां लक्षमेव च ॥ ९९ ॥
शतलक्षं सुवर्णानां लक्षञ्च सूक्ष्मवाससाम् ।
रत्नानां भूषणं पात्रमतीव सुमनोहरम् ॥ १०० ॥
ददौ द्विजातये राजा नित्यञ्च जीवनावधि ।
तस्य चैत्रस्य पुत्रश्च राजाभिरथ एव च ॥ १०१ ॥
तस्य पुत्रश्च सुरथश्चक्रवर्त्ती बृहत्श्रवाः ।
महाज्ञानञ्च संप्राप्य मेधसात् मुनिसत्तमात् ॥ १०२ ॥
भेजे पुरा विष्णुमायां पुण्यक्षेत्रे च भारते ।
शरत्काले महापूजाञ्चकार स सरित्तटे ॥ १०३ ॥
वैश्येन सार्द्धं स महान् ज्ञानिना मुनिसत्तम ।
राजा कलिङ्गदेशस्य विराधश्च विशां वरः ॥ १०४ ॥
तस्य पुत्रो महायोगी द्रुमिणो ज्ञानिनां वरः ।
द्रुमिणो वैष्णवः प्राज्ञः पुष्करे दुष्करं तपः ॥ १०५ ॥
कृत्वा समाधिं संप्राप ज्ञानिनं वैष्णवाग्रणीम् ।
पुत्रदारैर्निरस्तश्च धनलोभात् दुरात्मभिः ॥ १०६ ॥
स च कोटिं सुवर्णञ्च नित्यं दत्त्वा जलं पपौ ।
मुक्तिं संप्राप संसेव्य विष्णुमायां सनातनीम् ॥ १०७ ॥
राजा लेभे मनुत्वञ्च राज्यं निष्कण्टकं मुने ।
उवाच मधुरं वाक्यं धाता त्रिजगतां पतिः ॥ १०८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद
संवादे प्रकृतिखण्डे दुर्गोपाख्याने
एकषष्टितमोऽध्यायः ।

———

# द्विषष्टितमोऽध्यायः ।

नारद उवाच ।

कथं राजा महाज्ञानं संप्राप मुनिसत्तमात् ।
वैश्यो मुक्तिं मेधसाच्च तन्मे व्याख्यातुमर्हसि ॥ १ ॥

श्रीनारायण उवाच ।

ध्रुवस्य पौत्रो बलवान् नन्दिरुत्कलनन्दनः ।
स्वायम्भुवमनोर्वंशः सत्यवादी जितेन्द्रियः ॥ २ ॥
अक्षौहिणीनां शतकं गृहीत्वा सैन्यमेव च ।
कोलाञ्च वेष्टयामास सुरथस्य महामतेः ॥ ३ ॥
युद्धं बभूव नियतं पूर्णमब्दञ्च नारद ।
चिरजीवी वैष्णवश्च जिगाय सुरथं नृपः ॥ ४ ॥
एकाकी सुरथो भीतो नन्दिना च बहिष्कृतः ।
निशायां हयमारुह्य जगाम गहनं वनम् ॥ ५ ॥
ददर्श तत्र वैश्यञ्च पुष्पभद्रानदीतटे ।
तयोर्बभूव संप्रीतिः कृतवान्धवयोर्मुने ॥ ६ ॥
वैश्येन सार्द्धं नृपतिर्जगाम मेधसाश्रमम् ।
पुष्करं दुष्करं पुण्यक्षेत्रञ्च भारते सताम् ॥ ७ ॥
ददर्श तत्र नृपतिर्मुनिं तं तीव्रतेजसम् ।
शिष्येभ्यश्च प्रवोचन्तं ब्रह्मतत्त्वं सुदुर्लभम् ॥ ८ ॥
राजा ननाम वैश्यश्च शिरसा मुनिपुङ्गवम् ।
मुनिस्तौ पूजयामास ददौ ताभ्यां शुभाशिषम् ॥ ९ ॥

प्रश्नं चकार कुशलं जातिं नाम पृथक् पृथक् ।
ददौ प्रत्युत्तरं राजा क्रमेण मुनिपुङ्गवम् ॥ १० ॥

सुरथ उवाच ।

राजाऽहं सुरथो ब्रह्मं श्चैत्रवंश समुद्भवः ।
वहिर्भूतः स्वराज्याच्च नन्दिना बलिनाधुना ॥ ११ ॥
किमुपायं करिष्यामि कथं राज्यं भवेन्मम ।
तन्मां ब्रूहि महाभाग त्वय्येव शरणागतम् ॥ १२ ॥
अयं वैश्यः समाधिश्च स्वगृहाच्च वहिष्कृतः ।
पुत्रैः कलत्रैर्दैवेन धनलोभेन धार्मिकः ॥ १३ ॥
ब्राह्मणाय ददौ नित्यं रत्नकोटिं दिने दिने ।
निषिद्धमानः पुत्रैश्च कलत्रैर्बान्धवैरयम् ॥ १४ ॥
कोपाद्विराकृतस्तैश्च पुनरन्वेषितः शुचा ।
अयं गृहञ्च न ययौ विरक्तो ज्ञानवान् शुचिः ॥ १५ ॥
पुत्राश्च पितृशोकेन गृहं त्यक्त्वा ययुर्वनम् ।
दत्त्वा धनानि विप्रेभ्यो विरक्ताः सर्वकर्मसु ॥ १६ ॥
सुदुर्लभं हरेर्दास्यं वैश्यस्यास्य च वाञ्छितम् ।
कथं प्राप्नोति निष्कामस्तन्मे व्याख्यातु मर्हसि ॥१७॥

श्रीमेधस उवाच ।

करोति मायया च्छन्नं विष्णुमाया दुरत्यया ।
निर्गुणस्य च कृष्णस्य त्रिगुणा विश्वमातृया ॥ १८ ॥
कृपां करोति येषां सा धर्मिणाञ्च कृपामयी ।
तेभ्यो ददाति कृपया कृष्णभक्तिं सुदुर्लभाम् ॥ १९ ॥
येषां मायाविनां माया न करोति कृपां नृप ।
मायया तान्निबध्नाति मोहजालेन दुर्गतान् ॥ २० ॥

नश्वरे नित्यसंसारे भ्रमेण वर्वराः सदा ।
कुर्वन्ति नित्यबुद्धिञ्च विहाय परमेश्वरम् ॥ २१ ॥
देवमन्यं निषेवन्ते तन्मन्त्रञ्च जपन्ति च ।
मिथ्याकिञ्चिन्निमित्तञ्च कृत्वा मनसि लोभतः ॥ २२ ॥
हरेः कलाः देवताश्च निषेव्य जन्म सप्त च ।
तदा प्रकृत्याः कृपया सेवन्ते प्रकृतिं तदा ॥ २३ ॥
निषेव्य विष्णुमायाञ्च सप्तजन्म कृपामयीम् ।
शिवे भक्तिं लभन्ते ते ज्ञानानन्दे सनातने ॥ २४ ॥
ज्ञानाधिष्ठातृदेवञ्च निषेव्य शङ्करं हरेः ।
अचिराद्विष्णुभक्तिञ्च प्राप्नुवन्ति महेश्वरात् ॥ २५ ॥
सेवन्ते सगुणं सत्त्वं विष्णुं विषयिणं तदा ।
सत्वज्ञानाच्च पश्यन्ति ज्ञानञ्च निर्म्मलं नराः ॥ २६ ॥
निषेव्य सगुणं विष्णुं सात्त्विका वैष्णवा नराः ।
लभन्ते निर्गुणे भक्तिं श्रीकृष्णे प्रकृतेः परे ॥ २७ ॥
कुर्वन्ति ग्रहणं सन्तो मन्त्रं तस्य निरामयम् ।
निषेव्य निर्गुणं देवं ते भवन्ति च निर्गुणाः ॥ २८ ॥
असंख्यब्रह्मणः पातं तं च पश्यन्ति वैष्णवाः ।
दास्यं कुर्वन्ति सततं गोलोके च निरामये ॥ २९ ॥
कृष्णभक्तात् कृष्णमन्त्रं यो गृह्णाति नरोत्तमः ।
पुरुषाणां सहस्रञ्च स्वपितॄणां समुद्धरेत् ॥ ३० ॥
मातामहानां पुरुषं सहस्रं मातरं तथा ।
दासादिकं समुद्धृत्य गोलोकं स प्रयाति च ॥ ३१ ॥
भवार्णवे महाघोरे कर्णधारस्वरूपिणी ।
पारं करोति दुर्गा तान् कृष्णभक्त्या च नौकया ॥ ३२ ॥

स्वकर्म्मबन्धनं छेत्तुं वैष्णवानाञ्च वैष्णवी ।
तीक्ष्णशस्त्रस्वरूपा सा कृष्णस्य परमात्मनः ॥ ३३ ॥
विवेचनाचावरणी शक्तिः शक्तिर्द्विधा नृप ।
पूर्वं ददाति भक्ताय चेतराय परां परा ॥ ३४ ॥
सत्यस्वरूपः श्रीकृष्णस्तस्मात् सर्व्वञ्च नश्वरम् ।
बुद्धिर्विवेचनेत्येवं वष्णवानां सनातनी ॥ ३५ ॥
नित्यरूपा ममेयं श्रीरिति चावरणी च धीः ।
अवैष्णवानामसतां कर्म्मभोगभुजामहो ॥ ३६ ॥
अहं प्रचेतसः पुत्रः पौत्रश्च ब्रह्मणो नृप ।
भजामि कृष्णमात्मानं ज्ञानं संप्राप्य शङ्करात् ॥ ३७ ॥
गच्छ राजन् नदीतीरं भज दुर्गां सनातनीम् ।
बुद्धिमावरणीं तुभ्यं देवी दास्यति कामिने ॥ ३८ ॥
निष्कामाय च वैश्याय वैष्णवाय च वैष्णवी ।
बुद्धिं विवेचनां शुद्धां दास्यत्येव कृपामयी ॥ ३९ ॥
इत्युक्त्वा च मुनिश्रेष्ठो ददौ ताभ्यां कृपानिधिः ।
पूजाविधानं दुर्गायाः स्तोत्रञ्च कवचं मनुम् ॥ ४० ॥
वैश्यो मुक्तिञ्च संप्राप तां निषेव्य कृपामयीम् ।
राजा राज्यं मनुत्वञ्च परमैश्वर्य्यमीप्सितम् ॥ ४१ ॥
इत्येवं कथितं सर्वं दुर्गोपाख्यानमुत्तमम् ।
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ ४२ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे दुर्गोपाख्याने सुरथमेधससंवादे
द्विषष्टितमोऽध्यायः ।

——

## त्रिषष्टितमोऽध्यायः।

—०—

नारद उवाच।

नारायण महाभाग वद वेदविदांवर।
राजा केन प्रकारेण सिषिवे प्रकृतिं पराम्॥ १॥
समाधिर्नाम वैश्यो वा निष्कामं निर्गुणं विभुम्।
भेजे केन प्रकारेण प्रकृतेरुपदेशतः॥ २॥
किं वा पूजाविधानञ्च ध्यानं वा मनुमेव च।
किं स्तोत्रं कवचं किंवा ददौ राज्ञे महामुनिः॥ ३॥
तस्मै वैश्याय प्रकृतिः किंवा ज्ञानं ददौ परम्।
साक्षाद् बभूव सहसा केन वा प्रकृतिस्तयोः॥ ४॥
ज्ञानं संप्राप्य वैश्यश्च किं पदं प्राप दुर्लभम्।
गतिर्बभूव राज्ञश्च का वा ताञ्च शृणोम्यहम्॥ ५॥

श्रीनारायण उवाच।

राजा मन्त्रञ्च संप्राप्य वैश्यश्च मेधसान् मुने।
स्तोत्रञ्च कवचं देव्या ध्यानञ्चैव पुरस्क्रियाम्।
जजाप परमं मन्त्रं राजा वैश्यश्च पुष्करे॥ ६॥
स्नात्वा त्रिकालं वर्षञ्च ततः शुद्धो बभूव सः।
साक्षाद् बभूव तत्रैव मूलप्रकृतिरीश्वरी॥ ७॥
राज्ञे ददौ राज्यवरं मनुत्वं वाञ्छितं सुखम्।
ज्ञानं निगूढ़ं वैश्याय ददौ याति सुदुर्लभम्॥ ८॥
यद्दत्तं शूलिने पूर्वं कृष्णेन परमात्मना।

निराहारमतिक्लिष्टं दृष्ट्वा वैश्यं कृपामयी ॥ ९ ॥
रुरोद कृत्वा क्रोड़े तमचेष्टं श्वासवर्जितम् ।
चेतनां कुरु भो वत्सेत्युच्चार्य्य च पुनः पुनः ॥ १० ॥
चेतनाञ्च ददौ तस्मै स्वयं चैतन्यरूपिणी ।
संप्राप्य चेतनां वैश्यो रुरोद प्रकृतेः पुरः ॥ ११ ॥
तमुवाच प्रसन्ना सा कृपयाऽतिकृपामयी ॥ १२ ॥

श्रीप्रकृतिरुवाच ।

वरं वृणुष्व हे वत्स यत्ते मनसि वर्त्तते ।
ब्रह्मत्वममरत्वं वा ततो वापि सुदुर्लभम् ॥ १३ ॥
इन्द्रत्वं वा मनुत्वं वा सर्वसिद्धित्वमेव च ।
तुच्छं तुभ्यं न दास्यामि नश्वरं वालवञ्चनम् ॥ १४ ॥

वैश्य उवाच ।

ब्रह्मत्वममरत्वं वा मातर्मे न हि वाञ्छितम् ।
ततोऽतिदुर्लभं किंवा न जाने तदभीप्सितम् ॥ १५ ॥
त्वय्येव शरणापन्नो देहि यद्वाञ्छितं तव ।
अनश्वरं सर्वसारं वरं मे दातुमर्हसि ॥ १६ ॥

प्रकृतिरुवाच ।

अदेयं नास्ति मे तुभ्यं दास्यामि मम वाञ्छितम् ।
यतो यास्यसि गोलोकं पदमेव सुदुर्लभम् ॥ १७ ॥
सर्वसारञ्च यज्ज्ञानं सुरर्षीणां सुदुर्लभम् ।
तद्गृहाणातो महाभाग गच्छ वत्स हरेः पदम् ॥ १८ ॥
स्मरणं वन्दनं ध्यानमर्चनं गुणकीर्त्तनम् ।
श्रवणं भावनं सेवा सर्वं कृष्णे निवेदनम् ॥ १९ ॥
एतदेव वैष्णवानां नवधा भक्तिलक्षणम् ।

जन्मसृत्युजराव्याधि यमताड़न खण्डनम् ॥ २० ॥
आयुर्हरति लोकानां रविरेव हि सन्ततम् ।
नवधा भक्तिहीनानामसतां पापिनामपि ॥ २१ ॥
भक्तास्तद्गतचित्ताश्च वैष्णवाश्चिरजीविनः ।
जीवन्मुक्ताश्च निष्पापा जन्मादिपरिवर्जिताः ॥ २२ ॥
शिवः शेषश्च धर्मश्च ब्रह्मा विष्णुर्महान् विराट् ।
सनत्कुमारः कपिलः सनकश्च सनन्दनः ॥ २३ ॥
वोढुः पञ्चशिखो दक्षो नारदश्च सनातनः ।
भृगुर्मरीचिर्दुर्वासाः कश्यपः पुलहोऽङ्गिराः ॥ २४ ॥
मेधसो लोमशः शुक्रो वशिष्ठः क्रतुरेव च ।
बृहस्पतिः कर्दमश्च शक्तिरत्रिः पराशरः ॥ २५ ॥
मार्कण्डेयो बलिश्चैव प्रह्लादश्च गणेश्वरः ।
यमः सूर्य्यश्च वरुणो वायुश्चन्द्रो हुताशनः ॥ २६ ॥
अकूपार उलूकश्च नाड़ीजङ्घश्च वायुजः ।
नरनारायणौ कूर्म्म इन्द्रद्युम्नो विभीषणः ॥ २७ ॥
नवधा भक्तियुक्तश्च कृष्णस्य परमात्मनः ।
एते महान्तो धर्मिष्ठा भक्तानां प्रवरास्तथा ॥ २८ ॥
ये तद्भक्तास्ते तदंशा जीवन्मुक्ताश्च सन्ततम् ।
पापापहारास्तीर्थानां पृथिव्याश्च विशाम्पते ॥ २९ ॥
ऊर्द्ध्वं च सप्त स्वर्गाश्च सप्तद्वीपा वसुन्धरा ।
अधःसप्त च पाताला एतद्ब्रह्माण्डमेव च ॥ ३० ॥
एवंविधानां विश्वानां संख्या नास्त्येव पुत्रक ।
एवञ्च प्रतिविश्वेषु ब्रह्मविष्णुशिवादयः ॥ ३१ ॥
देवा देवर्षयश्चैव मनवो मानवादयः ।

सर्वाश्रमाश्च सर्वत्र सन्ति वह्वाश्च मायया ॥ ३२ ॥
महद्विष्णोर्लोमकूपे सन्ति विश्वानि यस्य च ।
स षोड़शांशः कृष्णस्य चात्मनश्च महान् विराट् ॥ ३३ ॥
भज सत्यं परं ब्रह्म नित्यं निर्गुणमच्युतम् ।
प्रकृतेः परमीशानं कृष्णमात्मानमीप्सितम् ॥ ३४ ॥
निरीहञ्च निराकारं निर्विकारं निरञ्जनम् ।
निष्कामं निर्विरोधञ्च नित्यानन्दं सनातनम् ॥ ३५ ॥
स्वेच्छामयं सर्वरूपं भक्तानुग्रहविग्रहम् ।
तेजःस्वरूपं परमं दातारं सर्वसम्पदाम् ॥ ३६ ॥
ध्यानासाध्यं दुराराध्यं शिवादीनाञ्च योगिनाम् ।
सर्वेश्वरं सर्वपूज्यं सर्वस्य सर्वकामदम् ॥ ३७ ॥
सर्वाधारञ्च सर्वज्ञं सर्वानन्दकरं परम् ।
सर्वधर्मप्रदं सर्वं सर्वज्ञं प्राणरूपिणम् ॥ ३८ ॥
सर्वधर्मस्वरूपञ्च सर्वकारणकारणम् ।
सुखदं मोक्षदं सारं पररूपञ्च भक्तिदम् ॥ ३९ ॥
दास्यदं धर्मदञ्चैव सर्वसिद्धिप्रदं सताम् ।
सर्वं तदतिरिक्तञ्च नश्वरं कृत्रिमं सदा ॥ ४० ॥
परात्परतरं शुद्धं परिपूर्णतमं शिवम् ।
यथासुखं गच्छ वत्स भगवन्तमधोक्षजम् ॥ ४१ ॥
कृष्णेति द्व्यक्षरं मन्त्रं गृहाण कृष्णदास्यदम् ।
पुष्करं दुष्करं गत्वा दशलक्षमिमं जप ॥ ४२ ॥
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेत्तव ।
इत्युक्त्वा सा भगवती तत्रैवान्तरधीयत ॥ ४३ ॥
वैश्यो नत्वा च तां भक्त्या जगाम पुष्करं मुने ।

पुष्करे दुस्तरं तप्त्वा संप्राप कृष्णमीश्वरम् ।
भगवत्याः प्रसादेन कृष्णदासो बभूव सः ॥ ४४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे प्रकृतिखण्डे दुर्गोपाख्याने सुरथसमाधिमेधस-संवादे प्रकृतिवैश्यसंवादकथनं नाम त्रिषष्टितमोऽध्यायः ।

---

## चतुःषष्टितमोऽध्यायः ।

---

नारायण उवाच ।

राजा येन क्रमेणैव भेजे तां प्रकृतिं पराम् ।
तत् श्रूयतां महाभाग वेदोक्तं क्रममेव च ॥ १ ॥
स्नात्वाचम्य महाराजः कृत्वान्यासत्रयं तदा ।
स्वकराङ्गाङ्ग मन्त्राणां भूतशुद्धिं चकार सः ॥ २ ॥
प्राणायामं ततः कृत्वा कृत्वा च शङ्खशोधनम् ।
ध्यात्वा देवीञ्च मृण्मय्यां चकारावाहनं तदा ॥ ३ ॥
पुनर्ध्यात्वा च भक्त्या च पूजयामास भक्तितः ।
देव्याश्च दक्षिणे भागे संस्थाप्य कमलालयाम् ॥ ४ ॥
संपूज्य भक्तिभावेन भक्त्या परमधार्मिकः ।
देवषट्कं समावाह्य देव्याश्च पुरतो घटे ॥ ५ ॥
भक्त्या च पूजयामास विधिपूर्वञ्च नारद ।

गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ॥ ६ ॥
देवषट्कञ्च संपूज्य नमस्कृत्य विचक्षणः ।
तदा ध्यायेन्महादेवीं ध्यानेनानेन भक्तितः ॥ ७ ॥
ध्यानञ्च सामवेदोक्तं परं कल्पतरुं मुने ।
ध्यायेन्नित्यं महादेवीं मूलप्रकृतिरीश्वरीम् ॥ ८ ॥
ब्रह्मविष्णुशिवादीनां पूज्यां वन्द्यां सनातनीम् ।
नारायणीं विष्णुमायां वैष्णवीं विष्णुभक्तिदाम् ॥ ९ ॥
सर्वस्वरूपां सर्वेषां सर्वाधारां परात्पराम् ॥
सर्वविद्या सर्वमन्त्र सर्वशक्ति स्वरूपिणीम् ॥ १० ॥
सगुणां निर्गुणां सत्यां वरां स्वेच्छामयीं सतीम् ।
महाविष्णोश्च जननीं कृष्णस्यार्द्धाङ्गसम्भवाम् ॥ ११ ॥
कृष्णप्रियां कृष्णशक्तिं कृष्णबुद्ध्यधिदेवताम् ।
कृष्णस्तुतां कृष्णपूज्यां कृष्णवन्द्यां कृपामयीम् ॥ १२ ॥
तप्तकाञ्चनवर्णाभां कोटिसूर्य्यसमप्रभाम् ।
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम् ॥ १३ ॥
दुर्गां शतभुजां देवीं महद्दुर्गतिनाशिनीम् ।
त्रिलोचनप्रियां साध्वीं त्रिगुणाञ्च त्रिलोचनाम् ॥१४॥
त्रिलोचनप्राणरूपां शुद्धार्धचन्द्रशेखराम् ।
बिभ्रतीं कवरीभारं मालतीमाल्यमण्डितम् ॥ १५ ॥
वर्त्तुलं वामवक्त्रञ्च शश्वन्मानसमोहिनीम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥ १६ ॥
नासा दक्षिणभागेन बिभ्रतीं गजमौक्तिकम् ।
अमूल्यरत्नं बहुलं बिभ्रतीं स्वर्णोपरि ॥ १७ ॥
मुक्तापंक्ति विनिन्द्यैक दन्तपंक्तिसुशोभिताम् ।

पक्वविम्बाधरोष्ठीञ्च सुप्रसन्नां सुमङ्गलाम् ॥ १८ ॥
चित्रपत्रावलीरम्यकपोलयुगलोज्ज्वलाम् ।
रत्नकेयूर वलय रत्नमञ्जीर रञ्जिताम् ॥ १९ ॥
रत्नकङ्कण भूषाढ्यां रत्नपाशकशोभिताम् ।
रत्नाङ्गुरीय निकरैः कराङ्गुलिचयोज्ज्वलाम् ॥ २० ॥
पादाङ्गुलि नखासक्तालक्तरेखासुशोभनाम् ।
वह्निशुद्धांशुकाधानां गन्धचन्दनचर्च्चिताम् ॥ २१ ॥
विभ्रतीं स्तनयुग्मञ्च कस्तूरीविन्दुशोभिताम् ।
सर्वरूपगुणवतीं गजेन्द्र मन्दगामिनीम् ॥ २२ ॥
अतीव कान्तां शान्ताञ्च नीतान्तां योगसिद्धिषु ।
विधातुश्च विधात्रीञ्च सर्वधात्रीञ्च शङ्करीम् ॥ २३ ॥
शरत्पार्वणचन्द्रास्यामतीव सुमनोहराम् ।
कस्तूरीविन्दुभिः सार्द्धमधश्चन्दनविन्दुना ॥ २४ ॥
सिन्दूर विन्दुना शश्वद् भालमध्यस्थलोज्ज्वलाम् ।
शरन् मध्याह्न कमलप्रभामोचन लोचनाम् ॥ २५ ॥
चारुकज्जलरेखाभ्यां सर्वतश्च समुज्ज्वलाम् ।
कोटिकन्दर्प लावण्य लीलानिन्दितविग्रहाम् ॥ २६ ॥
रत्नसिंहासनस्थाञ्च सद्रत्नमुकुटोज्ज्वलाम् ।
सृष्टौ स्रष्टुः शिल्परूपां दयां पातुश्च पालने ॥ २७ ॥
संहारकाले संहर्त्तुः परां संहाररूपिणीम् ।
निशुम्भ शुम्भमथिनीं महिषासुरमर्दिनीम् ॥ २८ ॥
पुरा त्रिपुरयुद्धे च संस्तुतां त्रिपुरारिणा ।
मधुकैटभयोर्युद्धे विष्णुशक्तिस्वरूपिणीम् ॥ २९ ॥
सर्वदैत्य निहन्त्रीञ्च रक्तवीजविनाशिनीम् ।

नृसिंहशक्तिरूपाञ्च हिरण्यकशिपोर्वधे ॥ ३० ॥
वराहशक्तिं वाराहे हिरण्याक्षवधे तथा।
परब्रह्मस्वरूपाञ्च सर्वशक्तिं सदा भजे ॥ ३१ ॥
इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा विचक्षणः।
पुनर्ध्यात्वा चैव भक्त्या कुर्य्यादावाहनन्ततः ॥ ३२ ॥
प्रकृतेः प्रतिमां धृत्वा मन्त्रमेवं पठेन्नरः।
जीवन्यासं ततः कुर्य्यात् मनुनानेन यत्नतः ॥ ३३ ॥
एह्येहि भगवत्यम्ब शिवलोकात् सनातनि।
गृहाण मम पूजाञ्च शारदीयां सुरेश्वरि ॥ ३४ ॥
इहागच्छ जगत्पूज्ये तिष्ठ तिष्ठ महेश्वरि।
हे मातरस्यामर्चायां सन्निरुद्धा भवाम्बिके ॥ ३५ ॥
इहागच्छन्तु त्वत् प्राणाश्चाधप्राणैः सहाच्युते।
इहागच्छन्तु त्वरितं तवैव सर्वशक्तयः ॥ ३६ ॥
ओं ह्रीं श्रीं क्लीं च दुर्गायै वह्निजायान्तमेव च।
समुच्चार्य्योरसि प्राणाः सन्तिष्ठन्तु सदा शिवे ॥ ३७ ॥
सर्वेन्द्रियाधिदेवास्ते इहागच्छन्तु चण्डिके।
इहागच्छन्तु ते शक्त्य इहागच्छन्तु ईश्वराः ॥ ३८ ॥
स इहागच्छेत्यावाह्य परिहारं करोति च।
मन्त्रेणानेन विप्रेन्द्र तत् शृणुष्व समाहितः ॥ ३९ ॥
स्वागतं भगवत्यम्ब शिवलोकाच्छिवप्रिये।
प्रसादं कुरु मां भद्रे भद्रकालि नमोऽस्तु ते ॥ ४० ॥
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम।
आगतासि यतो दुर्गे माहेश्वरि मदालयम् ॥ ४१ ॥
अद्य मे सफलं जन्म सार्थकं जीवनं मम।

पूजयामि यतो दुर्गां पुण्यक्षेत्रे च भारते ॥ ४२ ॥
भारते भवतीं पूज्यां दुर्गां यः पूजयेद्बुधः ।
सोऽन्ते याति च गोलोकं परमैश्वर्य्यवानिह ॥ ४३ ॥
कृत्वा च वैष्णवीपूजां विष्णुलोकं व्रजेत् सुधीः ।
माहेश्वरीञ्च संपूज्य शिवलोकञ्च गच्छति ॥ ४४ ॥
सात्त्विकी राजसी चैव त्रिधा पूजा च तामसी ।
भगवत्याश्च वेदोक्ता चोत्तमा मध्यमाधमा ॥ ४५ ॥
सात्त्विकी वैष्णवानाञ्च शाक्तादीनाञ्च राजसी ।
अदीक्षितानामसतां मन्यानां तामसी स्मृता ॥ ४६ ॥
जीवहत्याविहीना या वरापूजा च वैष्णवी ।
वैष्णवा यान्ति गोलोकं वैष्णवीवरदानतः ॥ ४७ ॥
माहेश्वरी राजसी च बलिदानसमन्विता ।
शाक्तादयो राजसाश्च कैलासं यान्ति ते तया ॥ ४८ ॥
किराता नरकं यान्ति तामस्या पूजया तया ।
त्वमेव जगतां मातश्चतुर्वर्गफलप्रदा ॥ ४९ ॥
सर्वशक्तिस्वरूपा च कृष्णस्य परमात्मनः ।
जन्ममृत्यु जरा व्याधिहरा त्वञ्च परात्परा ॥ ५० ॥
सुखदा मोक्षदा भद्रा कृष्णभक्तिप्रदा सदा ।
नारायणि महामाये दुर्गे दुर्गतिनाशिनि ॥ ५१ ॥
दुर्गेति स्मृतिमात्रेण याति दुर्गं नृणामिह ।
इति कृत्वा परिहारं देव्या वामे च साधकः ॥ ५२ ॥
त्रिपद्या उपरिष्टात्तु कुर्य्याच्च शङ्खरक्षणम् ।
तत्र दत्वा जलं पूर्णं दूर्वां पुष्पञ्च चन्दनम् ॥ ५३ ॥
धृत्वा दक्षिणहस्तेन मन्त्रमेवं पठेन्नरः ।

पुण्यस्त्वं गङ्ग पुण्यानां मङ्गलानाञ्च मङ्गलम् ।
प्रभवः शङ्करचूड़ात्त्वं पुराकल्पे पवित्रकः ॥ ५४ ॥
ततोऽर्घ्यपात्रं संस्थाप्य विधिनानेन पण्डितः ।
दत्त्वा संपूजयेद्देवीं उपचाराणि षोड़श ॥ ५५ ॥
त्रिकोणमण्डलं कृत्वा सजलेन कुशेन च ।
कूर्मं शेषं धरित्रीञ्च संपूज्य तत्र धार्मिकः ॥ ५६ ॥
त्रिपदिं स्थापयेत्तत्र त्रिपद्यां शङ्खमेव च ।
शङ्खे त्रिभागतोयञ्च दत्त्वा संपूजयेत्ततः ॥ ५७ ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धु कावेरि चन्द्रभागे च कौशिकि॥ ५८ ॥
स्वर्णरेखे कनखले पारिभद्रे च गण्डकि ।
श्वेतगङ्गे चन्द्ररेखे पम्पे चम्पे च गोमति ॥ ५९ ॥
पद्मावति त्रिपर्णाशे विपाशे विरजे प्रभे ।
शतद्रूटे चेलगङ्गे जलेऽस्मिन् सन्निधिं कुरु ॥६०॥
वह्निं सूर्य्यञ्च चन्द्रञ्च विष्णुञ्च वरुणं शिवम् ।
पूजयेत्तत्र तोये च तुलस्या चन्दनेन च ।
नैवेद्यानि च सर्वाणि प्रोक्षयेत्तज्जलेन च ॥ ६१ ॥
ततो दद्याच्च प्रत्येकमुपचाराणि षोड़श ।
आसनं वसनं पाद्यं स्नानीयमनुलेपनम् ॥ ६२ ॥
मधुपर्कं गन्धमर्घ्यं पुष्पं नैवेद्यमीप्सितम् ।
पुनराचमनीयञ्च ताम्बूलं रत्नभूषणम् ॥ ७३ ॥
धूपं प्रदीपं तल्पञ्चेत्युपचाराणि षोड़श ॥ ६४ ॥
अमूल्य रत्ननिर्माणं नानाचित्रविराजितम् ।
वरं सिंहासनश्रेष्ठं गृह्यतां शङ्करप्रिये ॥ ६५ ॥

अनन्तसूत्र प्रभवमीश्वरेच्छा विनिर्मितम् ।
ज्वलदग्नि विशुद्धञ्च वसनं गृह्यतां शिवे ॥ ६६ ॥
अमूल्यरत्नपात्रस्थं निर्मलं जाह्नवीजलम ।
पादप्रक्षालनार्थाय दुर्गे पाद्यं प्रगृह्यताम् ॥ ६७ ॥
सुगन्धामलकी स्निग्धद्रवमेव सुदुर्लभम् ।
सुपक्वं विष्णुतैलञ्च गृह्यतां परमेश्वरि ॥ ६८ ॥
कस्तूरी कुङ्कुमाक्तञ्च सुगन्धि चन्दनद्रवम् ।
सुवासितं जगन्मात गृह्यतामनुलेपनम् ॥ ६९ ॥
माध्वीकं रत्नपात्रस्थं सुपवित्रं सुमङ्गलम् ।
मधुपर्कं महादेवि गृह्यतां प्रीतिपूर्वकम् ॥ ७० ॥
वृक्षभेद मूलचूर्णं गन्धद्रव्य समन्वितम् ।
सुपवित्रं मङ्गलार्हं देवि गन्धं गृहाण मे ॥ ७१ ॥
पवित्र शङ्खपात्रस्थं दूर्वापुष्पाक्षतान्वितम् ।
स्वर्ग मन्दाकिनी तोयमर्घ्यं चण्डि गृहाण मे । ७२ ॥
सुगन्धिपुष्पश्रेष्ठञ्च पारिजात तरूद्भवम् ।
मालत्यादि पुष्पमाल्यं गृह्यतां जगदम्बिके ॥ ७३ ॥
दिव्यं सिद्धान्नमामान्नं पिष्टकं पायसादिकम् ।
मिष्टान्नं लड्डुकफलं नैवेद्यं गृह्यतां शिवे ॥ ७४ ॥
सुवासितं शीततोयं कर्पूरादिसुसंस्कृतम् ।
मया निवेदितं भक्त्या गृह्यतां शैलकन्यके ॥ ७५ ॥
गुवाक पर्णचूर्णञ्च कर्पूरादि सुवासितम् ।
सर्वभोगवरं रम्यं ताम्बूलं देवि गृह्यताम् ॥ ७६ ॥
अत्यमूल्यरत्नसारनिर्माणमीश्वरेच्छया ।
सर्वाङ्गशोभनकरं भूषणं देवि गृह्यताम् ॥ ७७ ॥

तरुनिर्य्यास चूर्णञ्च गन्धवस्तुसमन्वितम् ।
हुताशन शिखा शुद्धं धूपञ्च देवि गृह्यताम् ॥ ७८ ॥
दिव्यरत्न विशेषञ्च सान्द्रध्वान्त निराकृतम् ।
सुपवित्रं प्रदीपञ्च गृह्यतां परमेश्वरि ॥ ७९ ॥
रत्नसार विनिर्माणं दिव्यं पर्य्यङ्कमुत्तमम् ।
सूक्ष्मवस्त्र समाकीर्णं देवि तल्पं प्रगृह्यताम् ॥ ८० ॥
एवं संपूज्य तां दुर्गां दद्यात् पुष्पाञ्जलिं मुने ।
ततोऽष्टनायिका देव्या यत्नतः परिपूजयेत् ॥ ८१ ॥
उग्रचण्डां प्रचण्डां च चण्डोग्रां चण्डनायिकाम् ।
अतिचण्डाञ्च चामुण्डां चण्डां चण्डवतीं तथा ॥ ८२ ॥
पद्मे चाष्टदले चैताः प्रागादिक्रमतस्तथा ।
पञ्चोपचारैः संपूज्य भैरवान्मध्यदेशतः ॥ ८३ ॥
आदौ महाभैरवञ्च संहारभैरवं तथा ।
असिताङ्गभैरवञ्च रुरु भैरवमेव च ॥ ८४ ॥
ततः कालभैरवञ्च क्रोधभैरवमेव च ।
ताम्रचड़ं चन्द्रचूड़मन्ते च भैरवद्वयम् ॥ ८५ ॥
एतान् संपूज्य मध्ये च नवशक्तीश्च पूजयेत् ।
तत्र पद्मे चाष्टदले मध्ये च भक्तिपूर्वकम् ॥ ८६ ॥
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा ।
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ॥ ८७ ॥
सर्वशक्तिस्वरूपाञ्च प्रधानां सर्वमङ्गलाम् ।
नवशक्तीश्च संपूज्य घटे देवांश्च पूजयेत् ॥ ८८ ॥
शङ्करं कार्त्तिकेयञ्च सूर्य्यं सोमं हुताशनम् ।
वायुञ्च वरुणञ्चैव देव्याश्चेटीं वटुन्तथा ॥ ८९ ॥

चतुःषष्टि योगिनीश्च संपूज्य विधिपूर्वकम् ।
यथाशक्ति बलिं दत्त्वा करोति स्तवनं बुधः ॥ ९० ॥
कवचञ्च गले बद्धा पठित्वा भक्तिपूर्वकम् ।
ततः कृत्वा परीहारं नमस्कुर्य्याद्विचक्षणः ॥ ९१ ॥
बलिदानविधानञ्च श्रूयतां मुनिसत्तम ।
मायातिं महिषं छागं दद्यान्मेषादिकं शुभम् ॥ ९२ ॥
सहस्रवर्षं सुप्रीता दुर्गा मायातिदानतः ।
महिषेण वर्षशतं दशवर्षञ्च छागलात् ॥ ९३ ॥
वर्षं मेषेण कुष्माण्डैः पक्षिभिर्हरिणैस्तथा ।
दशवर्षं कृष्णसारैः सहस्राब्दञ्च गण्डकैः ॥ ९४ ॥
कृत्रिमैः पिष्टनिर्माणैः षण्मासं पशुभिस्तथा ।
मासं सुपक्वादिफलै रक्ततैरिति नारद ॥ ९५ ॥
युवकं व्याधिहीनञ्च सशृङ्गं लक्षणान्वितम् ।
विशुद्धमविकाराङ्गं सुवर्णं पुष्टमेव च ॥ ९६ ॥
शिशुना पलिना दातुर्हन्ति पुत्रञ्च चण्डिका ।
वृद्धेनैव गुरुजनं कृशेण बान्धवस्तथा ॥ ९७ ॥
धनञ्चैवाधिकाङ्गेन हीनाङ्गेन प्रजास्तथा ।
कामिनीं शृङ्गभङ्गेन काणेन भ्रातरन्तथा ॥ ९८ ॥
त्रुटिकेन भवेन्मृत्युर्विप्रश्च छिन्नमस्तकैः ।
हतं मित्रं ताम्रपृष्ठैर्भ्रष्टश्रीः पुच्छहीनतः ॥ ९९ ॥
मायातीनाञ्च निर्णीतं श्रूयतां मुनिसत्तम ।
वक्ष्याम्यंसर्ववेदोक्तं फलहानिर्व्यतिक्रमे ॥ १०० ॥
पितृमातृविहीनञ्च युवकं व्याधिवर्जितम् ।
विवाहितं दीक्षितञ्च परदारविहीनकम् ॥ १०१ ॥

अजारजं विशुद्धञ्च सच्छूद्रं मूलकं वरम् ।
तद्बन्धुभ्यो धनं दत्वा क्रीतं मूल्यातिरिक्ततः ॥ १०२ ॥
स्नापयित्वा च तं धर्मी संपूज्य वस्त्रचन्दनैः ।
माल्यैर्धूपैश्च सिन्दूरैर्दधिगोरचनादिभिः ॥ १०३ ॥
तञ्च वर्षं भ्रामयित्वा चरद्वारेण यत्नतः ।
वर्षान्ते च समुत्सृज्य दुर्गायै तं निवेदयेत् ॥ १०४ ॥
अष्टमीनवमीसन्धौ दद्यान्मायातिमेव च ।
इत्येवं कथितं सर्वं बलिदानं प्रसङ्गतः ॥ १०५ ॥
बलिं दत्त्वा च स्तुत्वा च धृत्वा च कवचं बुधः ।
प्रणम्य दण्डवद्भूमौ दद्याद्विप्राय दक्षिणाम् ॥ १०६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद संवादे प्रकृतिखण्डे दुर्गोपाख्याने चतुःषष्टितमोऽध्यायः ।

---

## पञ्चषष्टितमोऽध्यायः ।

---

नारद उवाच ।

श्रुतं सर्वं महाभाग सुधाखण्डं वरम् ।
स्तवञ्च कवचं पूजाफलं कालं वद प्रभो ॥ १ ॥

नारायण उवाच ।

आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत् ।
उत्तरेणार्चनं कृत्वा श्रवणायां विसर्जयेत् ॥ २ ॥

आर्द्रायुक्तनवम्यान्तु कृत्वा देव्याश्च बोधनम् ।
पूजायाः शतवार्षिक्याः फलमाप्नोति मानवः ॥ ३ ॥
मूलायान्तु प्रवेशे च नरमेधफलं लभेत् ।
उत्तरे पूजनं कृत्वा वाजपेयफलं लभेत् ॥ ४ ॥
कृत्वा विसर्जनं देव्याः श्रवणायाञ्च मानवः ।
लक्ष्मीञ्च पुत्रपौत्राणां लभते नात्र संशयः ॥ ५ ॥
भुवः प्रदक्षिणं पुण्यं पूजायां लभते नरः ।
नक्षत्रहीने वर्षे चेत् पार्वत्याश्चैव नारद ॥ ६ ॥
नवम्यां बोधनं कृत्वा पक्षं संपूज्य मानवः ।
अश्वमेधफलं लब्ध्वा दशम्याञ्च विसर्जयेत् ॥ ७ ॥
सप्तम्यां पूजनं कृत्वा बलिं दद्याद्विचक्षणः ।
अष्टम्यां पूजनं शस्तं बलिदानविवर्जितम् ॥ ८ ॥
अष्टम्यां बलिदानेन विपत्तिर्जायते नृणाम् ।
दद्याद्विचक्षणो भक्त्या नवम्यां विधिवद्बलिम् ॥ ९ ॥
बलिदानेन विप्रेन्द्र दुर्गाप्रीतिर्भवेन्नृणाम् ।
हिंसाजन्यञ्च पापञ्च लभते नात्र संशयः ॥ १० ॥
उत्सर्गकर्त्ता दाता च छेत्ता पोष्टा च रक्षकः ।
अग्रपश्चान्निबद्धा च सप्तैते बधभागिनः ॥ ११ ॥
यो यं हन्ति स तं हन्ति चेति वेदोक्तमेव च ।
कुर्वन्ति वैष्णवीं पूजां वैष्णवास्तेन हेतुना ॥ १२ ॥
एवं संपूज्य सुरथः पूर्णं वर्षञ्च भक्तितः ।
कवचञ्च गले बद्ध्वा तुष्टाव परमेश्वरीम् ॥ १३ ॥
स्तोत्रेण परितुष्टा सा तस्य साक्षाद्बभूव ह ।
स ददर्श पुरो देवीं ग्रीष्मसूर्य्यसमप्रभाम् ॥ १४ ॥

तेजःस्वरूपां परमां सगुणां निर्गुणां वराम् ।
दृष्ट्वा तां कमनीयाञ्च तेजोमण्डलमध्यतः ॥ १५ ॥
स्वेच्छामयीं कृपारूपां भक्तानुग्रहकातराम् ।
पुनस्तुष्टाव राजेन्द्रो भक्तिनम्रात्मकन्धरः ॥ १६ ॥
स्तवेन परितुष्टा सा सस्मिता भक्तिपूर्वकम् ।
उवाच सत्यं राजेन्द्रं कृपया जगदम्बिका ॥ १७ ॥

प्रकृतिरुवाच ।

साक्षात् संप्राप्य मां राजन् वृणोषि विभवं वरम् ।
ददामि तुभ्यं विभवं सम्मतं वाञ्छितं तव ॥ १८ ॥
निर्जित्य सर्वान् शत्रूंश्च लभ राज्यमकण्टकम् ।
भविष्यसि महाराज सावर्णिरष्टमो मनुः ॥ १९ ॥
दास्यामि तुभ्यं ज्ञानञ्च परिणामे नराधिप ।
भक्तिं दास्यञ्च परमे श्रीकृष्णे परमात्मनि ॥ २० ॥
वृणोति विभवं यो हि साक्षान् मां प्राप्य मन्दधीः ।
मायया वञ्चितः सोऽपि विषमत्त्यमृतं त्यजेत् ॥२१॥
ब्रह्मादिस्तम्बपर्य्यन्तं सर्वं नश्वरमेव च ।
नित्यं सत्यं परं ब्रह्म कृष्णं निर्गुणमेव च ॥ २२ ॥
ब्रह्मविष्णुशिवादीना महमाद्या परात्परा ।
सगुणा निर्गुणा चापि वरा स्वेच्छामयी सदा ॥२३॥
नित्यानित्या सर्वरूपा सर्वकारणकारणा ।
वीजरूपा च सर्वेषां मूलप्रकृतिरीश्वरी ॥ २४ ॥
पुण्ये वृन्दावने रम्ये गोलोके रासमण्डले ।
राधा प्राणाधिकाहञ्च कृष्णस्य परमात्मनः ॥ २५ ॥
अहं दुर्गा विष्णुमाया बुद्ध्यधिष्ठातृदेवता ।

अहं लक्ष्मीश्च वैकुण्ठे स्वयं देवी सरस्वती ॥ २६ ॥
सावित्री वेदमाताऽहं ब्रह्माणी ब्रह्मलोकतः ।
अहं गङ्गा च तुलसी सर्वाधारा वसुन्धरा ॥ २७ ॥
नानाविधाहं कलया मायया सर्वयोषितः ।
साहं कृष्णेन सृष्टा च भ्रूभङ्गलीलया नृप ॥ २८ ॥
भ्रूभङ्गलीलया सृष्टो येन पुंसा महान् विराट् ।
यस्य लोम्नाञ्च कूपेषु विश्वानि सन्ति नित्यशः ॥ २९ ॥
असंख्यानि च तान्येव कृत्रिमाणि च मायया ।
अनित्येषु नित्यबुद्धिं सर्वे कुर्वन्ति सन्ततम् ॥ ३० ॥
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा ।
तदधः सप्तपातालाः स्वर्लोकाश्चैव सप्त च ॥ ३१ ॥
एवं विश्वञ्च निर्माणं ब्रह्माण्डं ब्रह्मणा कृतम् ।
प्रत्येकं सर्वब्रह्माण्डे ब्रह्मविष्णुशिवादयः ॥ ३२ ॥
सर्वेषामीश्वरः कृष्ण इति ज्ञानं परात्परम् ।
वेदानाञ्च व्रतानाञ्च तीर्थानां तपसां तथा ॥ ३३ ॥
देवानाञ्चैव पुण्यानां सारः कृष्ण इति स्मृतः ।
तद्भक्तिहीनो यो मूढ़ः स च जीवन्मृतो ध्रुवम् ॥३४॥
पवित्राणि च तीर्थानि तद्भक्तस्पर्शवायुना ।
तन्मन्त्रोपासकश्चैव जीवन्मुक्त इति स्मृतः ॥ ३५ ॥
मन्त्रग्रहणमात्रेण नरो नारायणो भवेत् ।
विना जपेन तपसा विना तीर्थेन पूजया ॥ ३६ ॥
मातामहानां शतकं पितॄणाञ्च सहस्रकम् ।
पुंसामेवं समुद्धृत्य गोलोकं स च गच्छति ॥ ३७ ॥
इदं ज्ञानं सारभूतं कथितं ते नराधिप ।

मन्वन्तरान्ते भोगान्ते भक्तिं दास्यामि ते हरौ ॥३८॥
माभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ॥ ३९ ॥
अहं य मनुगृह्लामि तस्मै दास्यामि निर्म्मलाम् ।
निश्चलां सुदृढ़ां भक्तिं श्रीकृष्णे परमात्मनि ॥ ४० ॥
करोमि वञ्चनां यं यं तेभ्यो दास्यामि सम्पदम् ।
प्रातः स्वप्न स्वरूपञ्च मिथ्येति भ्रमरूपिणीम् ॥४१॥
इति ते कथितं ज्ञानं गच्छ वत्स यथा सुखम् ।
इत्युक्ता च महादेवी तत्रैवान्तरधीयत ॥ ४२ ॥
राजा संप्राप्य राज्यञ्च नत्वा तां प्रययौ गृहम् ।
इति ते कथितं वत्स दुर्गोपाख्यानमुत्तमम् ॥४३॥
इति ब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायण-
नारदसंवादे दुर्गोपाख्याने प्रकृतिसुरथ-
संवादे ज्ञान कथनं नाम पञ्च-
षष्टितमोऽध्यायः ।

---

## षट्षष्टितमोऽध्यायः ।

---

नारद उवाच ।

श्रुतं सर्वं नावशिष्टं किञ्चिदेव हि निश्चितम् ।
प्रकृतेः कवचं स्तोत्रं ब्रूहि मे मुनिसत्तम ॥ १ ॥

नारायण उवाच ।

पुरा स्तुता सा गोलोके कृष्णेन परमात्मना ।
संपूज्य मधुमासे च प्रीतेन रासमण्डले ।
मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा ॥ २ ॥
तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसङ्कटे ।
चतुर्थे संस्तुता देवी भक्त्या च त्रिपुरारिणा ॥ ३ ॥
पुरा त्रिपुरयुद्धेन महाघोरतरे मुने ।
पञ्चमे संस्तुता देवी वृत्रासुरबधे तथा ॥ ४ ॥
शक्रेण सर्वदेवैश्च घोरे च प्राणसङ्कटे ।
तदा मुनीन्द्रैर्मनुभिर्मानवैः सुरथादिभिः ॥ ५ ॥
संस्तुता पूजिता सा च कल्पे कल्पे परात्परा ।
स्तोत्रञ्च श्रूयतां ब्रह्मन् सर्वविघ्नविनाशनम् ।
सुखदं मोक्षदं सारं भवाब्धिपारकारणम् ॥ ६ ॥

श्रीकृष्ण उवाच ।

त्वमेव सर्वजननी मूलप्रकृतिरीश्वरी ।
त्वमेवाद्या सृष्टिविधौ स्वेच्छया त्रिगुणात्मिका ॥ ७ ॥
कार्य्यार्थे सगुणा त्वञ्च वस्तुतो निर्गुणा स्वयम् ।
परब्रह्मस्वरूपा त्वं सत्या नित्या सनातनी ॥ ८ ॥
तेजःस्वरूपा परमा भक्तानुग्रहविग्रहा ।
सर्वस्वरूपा सर्वेशा सर्वाधारा परात्परा ॥ ९ ॥
सर्वबीजस्वरूपा च सर्वपूज्या निराश्रया ।
सर्वज्ञा सर्वतोभद्रा सर्वमङ्गलमङ्गला ॥ १० ॥
सर्वबुद्धिस्वरूपा च सर्वशक्तिस्वरूपिणी ।
सर्वज्ञानप्रदा देवी सर्वज्ञा सर्वभाविनी ॥ ११ ॥

त्वं स्वाहा देवदाने च पितृदाने स्वधा स्वयम् ।
दक्षिणा सर्वदाने च सर्वशक्तिस्वरूपिणी ॥ १२ ॥
निद्रा त्वञ्च दया त्वञ्च तृष्णा त्वञ्चात्मनश्च मे ।
क्षुत्क्षान्तिः शान्तिरीशा च कान्तिः सृष्टिश्च शाश्वती १३
श्रद्धा पुष्टिश्च तन्द्रा च लज्जा शोभा दया सदा ।
सतां सम्पत् स्वरूपा श्रीर्विपत्तिरसतामिह ॥ १४ ॥
प्रीतिरूपा पुण्यवतां पापिनां कलहाङ्कुरा ।
शश्वत्कर्ममयी शक्तिः सर्वदा सर्वजीविनाम् ॥ १५ ॥
देवेभ्यो स्वपदं दात्री धातुर्धात्री कृपामयी ।
हिताय सर्वदेवानां सर्वासुरविनाशिनी ॥ १६ ॥
योगनिद्रा योगरूपा योगदात्री च योगिनाम् ।
सिद्धिस्वरूपा सिद्धानां सिद्धिदा सिद्धियोगिनी ॥ १७ ॥
माहेश्वरी च ब्रह्माणी विष्णुमाया च वैष्णवी ।
भद्रदा भद्रकाली च सर्वलोक भयङ्करी ॥ १८ ॥
ग्रामे ग्रामे ग्रामदेवी गृहदेवी गृहे गृहे ।
सतां कीर्त्तिः प्रतिष्ठा च निन्दा त्वमसतां सदा ॥१९॥
महायुद्धे महामारी दुष्टसंहाररूपिणी ।
रक्षास्वरूपा शिष्टानां मातेव हितकारिणी ॥ २० ॥
वन्द्या पूज्या स्तुता त्वञ्च ब्रह्मादीनाञ्च सर्वदा ।
ब्राह्मण्यरूपा विप्राणां तपस्या च तपस्विनाम् ॥२१॥
विद्या विद्यावतां त्वञ्च बुद्धिर्बुद्धिमतां सताम् ।
मेधास्मृतिस्वरूपा च प्रतिभा प्रतिभावताम् ॥ २२ ॥
राज्ञां प्रतापरूपा च विशां वाणिज्यरूपिणी ।
सृष्टौ सृष्टिस्वरूपा त्वं रक्षारूपा च पालने ॥ २३ ॥

तथान्ते त्वं महामारी विश्वस्य विश्वपूजिते ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च मोहिनी ॥ २४ ॥
दुरत्यया मे माया त्वं यया संमोहितं जगत् ।
यया मुग्धो हि विद्वांश्च मोक्षमार्गं न पश्यति ॥२५॥
इत्यात्मना कृतं स्तोत्रं दुर्गाया दुर्गनाशनम् ।
पूजाकाले पठेद्योहि सिद्धिर्भवति वाञ्छिते ॥२६॥
बन्ध्या च काकबन्ध्या च मृतवत्सा च दुर्भगा ।
श्रुत्वा स्तोत्रं वर्षमेकं सुपुत्रं लभते ध्रुवम् ॥ २७ ॥
कारागारे महाघोरे यो बद्धो दृढ़बन्धने ।
श्रुत्वा स्तोत्रं मासमेकं बन्धनान्मुच्यते ध्रुवम् ॥२८॥
यक्ष्मग्रस्तो गलत्कुष्ठी महाशूली महाज्वरी ।
श्रुत्वा स्तोत्रं वर्षमेकं सद्यो रोगात् प्रमुच्यते ॥ २९ ॥
पुत्रभेदे प्रजाभेदे पत्नीभेदे च दुर्गतः ।
श्रुत्वा स्तोत्रं मासमेकं लभते नात्र संशयः ॥ ३० ॥
राजद्वारे श्मशाने च महारण्ये रणस्थले ।
हिंस्रजन्तुसमीपे च श्रुत्वा स्तोत्रं प्रमुच्यते ॥ ३१ ॥
गृहदाहे च दावाग्नौ दस्युसैन्यसमन्विते ।
स्तोत्रश्रवणमात्रेण लभते नात्र संशयः ॥ ३२ ॥
महादरिद्रो मूर्खश्च वर्षं स्तोत्रं पठेत्तु यः ।
विद्यावान् धनवांश्चैव स भवेन्नात्र संशयः ॥ ३३ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
प्रकृतिखण्डे दुर्गोपाख्याने दुर्गास्तोत्रं नाम
षट्षष्टितमोऽध्यायः ।

## सप्तषष्टितमोऽध्यायः ।

नारद उवाच ।

भगवन् सर्व्वधर्म्मज्ञ सर्व्वज्ञानविशारद ।
ब्रह्माण्डमोहनं नाम प्रकृतेः कवचं वद ॥ १ ॥

नारायण उवाच ।

शृणु वक्ष्यामि हे वत्स कवचञ्च सुदुर्लभम् ।
श्रीकृष्णेनैव कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥
ब्रह्मणा कथितं सर्व्वं धर्माय जाह्नवीतटे ।
धर्मेण दत्तं मह्यञ्च कृपया पुष्करे प्रभुः ॥ ३ ॥
त्रिपुरारिश्च यद्धृत्वा जघान त्रिपुरं पुरा ।
मुमोच ब्रह्मा यद् धृत्वा मधुकैटभयोर्भयम् ।
संजहार रक्तवीजं यद्धृत्वा भद्रकालिका ॥ ४ ॥
यद्धृत्वा तु महेन्द्रश्च संप्राप कमलालयाम् ।
यद्धृत्वा च महाकालश्चिरजीवी च धार्मिकः ॥ ५ ॥
यद्धृत्वा च महाज्ञानी नन्दी सानन्दपूर्वकम् ।
यद्धृत्वा च महायोद्धा रामः शत्रुभयङ्करः ॥ ६ ॥
यद्धृत्वा शिवतुल्यश्च दुर्वासा ज्ञानिनां वरः ।
ओँ दुर्गेति चतुर्थ्यन्तं स्वाहान्तो मे शिरोऽवतु ॥७॥
मन्त्रः षड़क्षरोऽयञ्च भक्तानां कल्पपादपः ।
विचारो नास्ति वेदेषु ग्रहणे च मनोर्मुने ॥ ८ ॥

मन्त्रग्रहणमात्रेण विष्णुतुल्यो भवेन्नरः ।
मम वक्त्रं सदापातु ओँ दुर्गायै नमोऽन्ततः ॥ ९ ॥
ओँ दुर्गे रक्ष इति च कण्ठं पातु सदा मम ।
ओँ ह्रीँ श्रीँ इति मन्त्रोऽयं स्कन्धं पातु निरन्तरम् ॥१०॥
ओँ ह्रीँ श्रीँ क्लीँ इति पृष्ठञ्च पातु मे सर्वतः सदा ।
ह्रीँ मे वक्षस्थलं पातु हस्तं श्रीमितिसन्ततम् ॥११॥
ओँ श्रीँ ह्रीँ श्रीँ पातु सर्वाङ्गं स्वप्ने जागरणे तथा ।
प्राच्यां मां पातु प्रकृतिः पातु वह्नौ च चण्डिका ॥१२॥
दक्षिणे भद्रकाली च नैरृते च महेश्वरी ।
वारुणे पातु वाराही वायव्यां सर्वमङ्गला ॥ १३ ॥
उत्तरे वैष्णवी पातु तथैशान्यां शिवप्रिया ।
जले स्थले चान्तरीक्षे पातु मां जगदम्बिका ॥ १४ ॥
इति ते कथितं वत्स कवचञ्च सुदुर्लभम् ।
यस्मै कस्मै न दातव्यं प्रवक्तव्यं न कस्यचित् ॥ १५ ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः ।
कवचं धारयेद्यस्तु सोऽपि विष्णुर्न संशयः ॥ १६ ॥
भ्रमणे सर्वतीर्थानां पृथिव्याश्च प्रदक्षिणे ।
यत् फलं लभते लोकस्तदेतद्धारणे मुने ॥ १७ ॥
पञ्चलक्षजपेनैव सिद्धमेतद्भवेत् ध्रुवम् ।
लोकञ्च सिद्धकवचं नास्त्रं विध्यति सङ्कटे ॥ १८ ॥
न तस्य मृत्युर्भवति जले वह्नौ विषेत् ध्रुवम् ।
जीवन्मुक्तो भवेत् सोऽपि सर्वसिद्धेश्वरः स्वयम् ॥ १९ ॥
यदि स्यात् सिद्धकवचो विष्णुतुल्यो भवेत् ध्रुवम् ।
कथितं प्रकृतेः खण्डं सुधाखण्डात् परं मुने ॥ २० ॥

या एव मूलप्रकृतिर्यस्याः पुत्रो गणेश्वरः ।
कृत्वा कृष्णव्रतं सा च लेभे गणपतिं सुतम् ॥ २१ ॥
स्वांशेन कृष्णो भगवान् बभूव च गणेश्वरः ॥ २२ ॥
श्रुत्वा च प्रकृतेः खण्डं सुश्रवञ्च सुधोपमम् ।
भोजयित्वा च दध्यन्नं तस्मै दद्याच्च काञ्चनम् ।
सवत्सां सुरभीं रम्यां दद्याच्च भक्तिपूर्वकम् ॥ २३ ॥
वासोऽलङ्काररत्नैश्च तोषयेद्वाचकं मुने ।
पुष्पालङ्कारवसनैर्नानोपाहारसंयुतैः ॥२४॥
पुस्तकं पूजयेदेवं भक्तिश्रद्धासमन्वितः ।
एवं कृत्वा यः शृणोति तस्य विष्णुः प्रसीदति ॥२५॥
वर्द्धते पुत्त्रपौत्रादिर्यशस्वी तत्प्रसादतः ।
लक्ष्मीर्वसति तद्गेहे ह्यन्ते गोलोकमाप्नुयात् ।
लभेत् कृष्णस्य दास्यं स भक्तिं कृष्णे सुनिश्चलाम् ॥२६॥

इत श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे प्रकृतिखण्डे दुर्गोपाख्याने प्रकृति
कवचं नाम सप्तषष्टित-
मोऽध्यायः ।

———•———

समाप्तश्चायं प्रकृतिखण्डः ।

# गणपतिखण्डम् ।



## प्रथमोऽध्यायः ।



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥ १ ॥

नारद उवाच ।

श्रुतं प्रकृतिखण्डं तदमृतार्णवमुत्तमम् ।
सर्वोत्कृष्टमीप्सितञ्च मूढ़ानां ज्ञानवर्द्धनम् ॥ २ ॥
अधुना श्रोतुमिच्छामि गणेशखण्डमीश्वर ।
तज्जन्मचरितं नृणां सर्वमङ्गलमङ्गलम् ॥ ३ ॥
कथं जज्ञे सुरश्रेष्ठः पार्वत्या उदरे शुभे ।
देवी केन प्रकारेण ललाभ तादृशं सुतम् ॥ ४ ॥
सर्वांशः कस्य देवस्य कथं जन्म ललाभ सः ।
अयोनिसम्भवः किं वाऽसौ योनिसम्भवः ॥ ५ ॥
किं वा तद्ब्रह्मतेजो वा किं तस्य च पराक्रमः ।
का तपस्या च किं ज्ञानं किं वा तन्निर्मलं यशः ॥६॥
कथं तस्य पुरः पूजा विश्वेषु निखिलेषु च ।
स्थिते नारायणे शम्भौ जगदीशे च ब्रह्मणि ॥ ७ ॥
पुराणेषु निगूढ़ञ्च तज्जन्म परिकीर्त्तितम् ।
कथं वा गजवक्त्रोऽयमेकदन्तो महोदरः ॥ ८ ॥

एतत् सर्वं समाचक्ष्व श्रोतुं कौतूहलं मम।
सुविस्तीर्णं महाभाग तदतीव मनोहरम्॥ ९॥

श्रीनारायण उवाच।

शृणु नारद वक्ष्यामि रहस्यं परमाद्भुतम्।
पापसन्तापहरणं सर्वविघ्नविनाशनम्॥ १०॥
सर्वमङ्गलदं सारं सर्वश्रुतिमनोहरम्।
सुखदं मोक्षबीजञ्च पापमूलनिकृन्तनम्॥ ११॥
दैत्यार्दितानां देवानां तेजोराशिसमुद्भवा।
देवी संहृत्य दैत्यौघान् दक्षकन्या बभूव ह॥ १२॥
सा च नाम्ना सती देवी स्वामिनो निन्दया पुरा।
देहं संत्यज्य योगेन जाता शैलप्रियोदरे॥ १३॥
शङ्कराय ददौ ताञ्च पार्वतीं पर्वतो मुदा।
तां गृहीत्वा महादेवो जगाम निर्जनं वनम्॥ १४॥
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम्।
स रेमे नर्मदातीरे पुष्पोद्याने तया सह॥ १५॥
सहस्रवर्षपर्य्यन्तं देवमानेन नारद।
तयोर्बभूव शृङ्गारं विपरीतादिकं परम्॥ १६॥
दुर्गाङ्गस्पर्शमात्रेण कामेन मूर्च्छितः शिवः।
मूर्च्छिता सा शिवस्पर्शाद् बुबुधे न दिवानिशम्॥१७॥
हंसकारण्डवाकीर्णे पुंस्कोकिलरुतश्रुते।
नानापुष्पविकसिते भ्रमरध्वनिसंयुते॥ १८॥
सुगन्धिकुसुमासक्तेन वायुना सुरभीकृते।
अतीव सुखदे तत्र सर्वजन्तुविवर्जिते॥ १९॥
दृष्ट्वा तयोस्तच्छृङ्गारं चिन्तां प्रापुः सुराः पराम्।

ब्रह्माणञ्च पुरस्कृत्य ययुर्नारायणान्तिकम् ॥ २० ॥
तं नत्वा कथयामास ब्रह्मा वृत्तान्तमीप्सितम् ।
संतस्थुर्देवताः सर्वाश्चित्रपुत्तलिका यथा ॥ २१ ॥

ब्रह्मोवाच ।

सहस्रवर्षपर्य्यन्तं देवमानेन शङ्करः ।
रतौ रतश्च निश्चेष्टो न योगी विरराम ह ॥ २२ ॥
मैथुनस्य विरामे च दम्पत्यो र्जगदीश्वर ।
किम्भूतं भवितापत्यं तथ्यं कथितु मर्हसि ॥ २३ ॥

श्रीभगवानुवाच ।

चिन्ता नास्ति जगद्धातः सर्वं भद्रं भविष्यति ।
मयि ये शरणापन्नास्तेषां दुःखं कुतो विधे ॥ २४ ॥
येनोपायेन तद्वीर्य्यं भूमौ पतति निश्चितम् ।
तत् कुरुष्व प्रयत्नेन सार्द्धं देवगणेन च ॥ २५ ॥
यदा च शम्भोर्वीर्य्यन्तत् पार्वत्या उदरे पतेत् ।
ततोऽपत्यञ्च भविता सुरासुरविमर्दकम् ॥ २६ ॥
ततः शक्रादयः सर्वे सुरा नारायणाज्ञया ।
प्रययुर्नर्म्मदातीरं ययौ ब्रह्मा निजालयम् ॥ २७ ॥
तत्रैव पर्वतद्रोणीवह्निर्देशे सुराः पराः ।
विषण्णवदनाः सर्वे बभूवुर्भयकातराः ॥ २८ ॥
शक्रोराजा कुवेरञ्च कुवेरो वरुणन्तथा ।
समीरणं च वरुणो यमं समीरणस्तथा ॥ २९ ॥
हुताशनं यमश्चैव भास्करञ्च हुताशनः ।
चन्द्रं तथा भास्करश्च ईशानं चन्द्र एव च ॥ ३० ॥
एवं देवाः प्रेरयन्ति देवांश्च रतिभञ्जने ।

हरः शृङ्गारभङ्गञ्च कुर्व्वीत्युक्ता परस्परम् ॥ ३१ ॥
द्वारस्थितो वक्रशिराः शक्रः प्राह महेश्वरम् ॥ ३२ ॥

इन्द्र उवाच ।

किङ्करोषि महादेव योगीश्वर नमोऽस्तु ते ।
जगदीश जगद्दीज भक्तानां भयभञ्जन ॥ ३३ ॥
हरिर्जगामेत्युक्तैवमाजगाम च भास्करः ।
उवाच भीतो द्वारस्थो भयार्त्तो वक्रचक्षुषा ॥ ३४ ॥

श्रीसूर्य्य उवाच ।

किङ्करोषि महादेव जगतां परिपालक ।
सुरश्रेष्ठ महाभाग पार्वतीश नमोऽस्तु ते ॥ ३५ ॥
इत्येव मुक्ता श्रीसूर्य्यः प्रजगाम भयात्ततः ।
आजगाम तथा चन्द्र उवाच वक्रकन्धरः ॥ ३६ ॥

चन्द्र उवाच ।

किङ्करोषि त्रिलोकेश त्रिलोचन नमोऽस्तु ते ।
आत्माराम पूर्णकाम पुण्यश्रवणकीर्त्तन ॥ ३७ ॥
इत्येव मुक्ता भीतश्च विरराम निशापतिः ।
संवीच्योवाच द्वारस्थः स्वयमेव समीरणः ॥ ३८ ॥

पवन उवाच ।

किङ्करोषि जगन्नाथ जगद्बन्धो नमोऽस्तु ते ।
धर्म्मार्थ काम मोक्षाणां वीजरूप सनातन ॥ ३९ ॥
इत्येवं स्तवनं श्रुत्वा योगज्ञानविशारदः ।
त्यक्तुकामो न तत्याज शृङ्गारं पार्वतीभयात् ॥ ४० ॥
दृष्ट्वा सुरान् भयार्त्तांश्च पुनः स्तोतुं समुद्यतान् ।
विजहौ सुखसम्भोगं कण्ठलग्नाञ्च पार्वतीम् ॥ ४१ ॥

उत्तिष्ठतो महेशस्य त्रस्तस्य लज्जितस्य च।
भूमौ पपात तद्वीर्य्यं ततःस्कन्दो बभूव ह॥ ४२॥
पश्चात्तां कथयिष्यामि कथामतिमनोहराम्।
स्कन्दजन्म प्रसङ्गे च साम्प्रतं वाञ्छितं शृणु॥ ४३॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारयण नारद
संवादे गणपतिखण्डे प्रथमोऽध्यायः।

---

## द्वितीयोऽध्यायः।

---

नारायण उवाच।

त्यक्त्वा रतिं महादेवो ददर्श पुरतः सुरान्।
पलायध्वमित्युवाच कृपया पार्वतीभयात्॥ १॥
देवाः पलायिता भीताः पार्वतीशापहेतुना।
ब्रह्माण्डसर्वसंहर्त्ता चकम्पे पार्वतीभयात्॥ २॥
तल्पादुत्थाय सा दुर्गा न च दृष्ट्वा पुरःसुरान्।
समुत्थितं कोपवह्निं स्तम्भयामास देहतः॥ ३॥
अद्य प्रभृति ते देवा व्यर्थ वीर्य्या भवन्त्विति।
शशाप देवी तान्देवानतिरुष्टा बभूव ह॥ ४॥
ततः शिवः शिवां दृष्ट्वा क्रोधसंरक्तलोचनाम्।
रुदन्तीं नम्रवदनां लिखन्तीं धरणीतलम्॥ ५॥
शिवस्तां दुःखितां दृष्ट्वा क्रोधसंरक्तलोचनाम्।
हस्ते गृहीत्वा देवेशो वासयामास वक्षसि॥ ६॥

अतीव भीतःसंत्रस्त उवाच मधुरं वचः ॥ ७ ॥

शङ्कर उवाच।

कथं रुष्टा गिरिश्रेष्ठकन्ये धन्ये मनोहरे।
मम सौभाग्यरूपे च प्राणाधिष्ठातृदेवते।
किन्तेऽभीष्टं करिष्यामि वद मां जगदम्बिके ॥ ८ ॥
ब्रह्माण्डसङ्घनिखिले किमसाध्यमिहावयोः।
अहो निरपराधं मां प्रसन्ना भव सुन्दरि ॥ ९ ॥
दैवादज्ञातदोषस्य शान्तिं मे कर्त्तुमर्हसि।
त्वया युक्तः शिवोऽहञ्च सर्वेषां शिवदायकः ॥ १० ॥
त्वया विना हीश्वरश्च शवतुल्योऽशिवः सदा।
प्रकृतिस्त्वञ्च बुद्धिस्त्वं शक्तिस्त्वञ्च क्षमा दया ॥ ११ ॥
तुष्टिस्त्वञ्च तथा पुष्टिः शान्तिस्त्वं क्षान्तिरेव च।
क्षुत्त्वं छाया तथा निद्रा तन्द्रा श्रद्धा सुरेश्वरि ॥ १२ ॥
सर्वाधार स्वरूपा त्वं सर्वबीजस्वरूपिणी।
स्मितपूर्वं वद वचः साम्प्रतं सरसं शिवे ॥ १३ ॥
त्वत्कोपविषसंदग्धं तेन जीवय मां मृतम् ॥ १४ ॥
शङ्करस्य वचः श्रुत्वा कोपयुक्ता च पार्वती।
उवाच मधुरं देवी हृदयेन विदूयता ॥ १५ ॥

पार्वत्युवाच।

किमहं कथयिष्यामि सर्वज्ञं सर्वरूपिणम्।
आत्मारामं पूर्णकामं सर्वदेहेष्ववस्थितम् ॥ १६ ॥
कामिनी मानसं कामसम्बं स्वामिनं वदेत्।
सर्वेषां हृदयस्थञ्च हृदीष्टं कथयामि किम् ॥ १७ ॥
सुगोप्यं सर्वनारीणां [illegible]नन्दकारणम्।

अकथ्यमपि सर्वासां तथापि कथयामि ते ॥ १८ ॥
सुखेषु मध्ये स्त्रीणाञ्च विभवेषु सुरेश्वर ।
सत्पुंसा सह सम्भोगो निर्जनेषु परं सुखम् ॥ १९ ॥
तद्भङ्गेन च यद् दुःखं तत्समं नास्ति च स्त्रियाः ।
कान्तानां कान्तविच्छेदः शोकः परमदारुणः ॥ २० ॥
कृष्णपक्षे यथा चन्द्रः क्षीयमाणो दिने दिने ।
तथा कान्तं विना कान्ता क्षीणा कान्त क्षणे क्षणे ॥२१॥
चिन्ताज्वरश्च सर्वेषामुपतापश्च वाससाम् ।
साध्वीनां कान्तविच्छेद स्वरगानाञ्च मैथुनम् ॥ २२ ॥
रतिभङ्गो दुःखमेकं द्वितीयं वीर्य्यपातनम् ।
दुःखातिरिक्त दुःखञ्च तृतीयमनपत्यता ॥ २३ ॥
त्रैलोक्यकान्तं कान्तं त्वां लब्ध्वापि न च मे सुतः ।
या स्त्री पुत्त्रविहीना च जीवनं तन्निरर्थकम् ॥ २४ ॥
जन्मान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सद्वंशजात पुत्त्रश्च परत्रेह सुखप्रदः ।
सुपुत्त्रः स्वामिनोऽंशश्च स्वामितुल्यसुखप्रदः ।
कुपुत्त्रश्च कुलाङ्गारो मनस्तापाय केवलम् ॥ २६ ॥
स्वामी स्वांशेन स्वस्त्रीणां गर्भे जन्म लभेद् ध्रुवम् ।
साध्वी स्त्री मातृतुल्या च सततं हितकारिणी ॥ २७ ॥
असाध्वी वैरितुल्या च शश्वत् सन्तापदायिनी ।
मुखदुष्टा योनिदुष्टा चैवा साध्वीति हि स्मृता ॥२८॥
किमुपायं करिष्यामि वद योगीश्वरेश्वर ।
उपायसिन्धो तपसां सर्वेषाञ्च फलप्रद ॥ २९ ॥
इत्युक्त्वा पार्वतीदेवी नम्रवक्त्रा बभूव ह ॥ ३० ॥

प्रहस्य शङ्करोदेवो बोधयामास पार्वतीम्।
सत्पुत्रबीजं सुखदं सन्तापनाशकारणम्।
मितं स्निग्धं सुरुचिरं प्रवक्तुमुपचक्रमे॥ ३१॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद संवादे
गणपतिखण्डे द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

---

श्रीमहादेव उवाच।
शृणु पार्वति वक्ष्यामि तव भद्रं भविष्यति।
उपायतः कार्य्यसिद्धिर्भवेदेव जगत् त्रये॥ १॥
सर्ववाञ्छितसिद्धेस्तु बीजरूपं सुमङ्गलम्।
मनसः प्रीतिजननमुपायं कथयामि ते॥ २॥
हरेराराधनं कृत्वा व्रतं कुरु वरानने।
व्रतञ्च पुण्यकं नाम वर्षमेकं करिष्यसि॥ ३॥
महाकठोरवीजञ्च वाञ्छाकल्पतरुं परम्।
सुखदं पुण्यदं सारं पुत्रदं सर्वसम्पदम्॥ ४॥
नदीनाञ्च यथा गङ्गा देवानाञ्च हरिर्यथा।
वैष्णवानां यथाहञ्च देवीनां त्वं यथा प्रिये॥ ६॥
आश्रमाणां यथा विप्रस्तीर्थानां पुष्करो यथा।
पुष्पाणां पारिजातञ्च पत्राणां तुलसी यथा॥ ७॥
यथा पुण्यप्रदानाञ्च तिथिरेकादशी स्मृता।

रविवारश्च वाराणां यथा पुण्यप्रदः शिवे ।
मासानां मार्गशीर्षश्च ऋतूनां माधवो यथा ।
संवत्सरो वत्सराणां युगानाञ्च क्षतं यथा ॥ ८ ॥
विद्याप्रदश्च पूज्यानां गुरूणां जननी यथा ।
साध्वीपत्नी यथाप्तानां विश्वस्तानां मनो यथा ॥ ९ ॥
यथा धनानां रत्नञ्च प्रियाणाञ्च यथा पतिः ।
यथा पुत्रश्च बन्धूनां वृक्षाणां कल्पपादपः ॥ १० ॥
चूतफलं फलानाञ्च वर्षाणां भारतं यथा ।
वृन्दावनं वनानाञ्च शतरूपा च योषिताम् ॥ ११ ॥
यथा काशी पुरीणाञ्च सूर्य्यस्तेजस्विनां यथा ।
यथेन्दुः सुखदानाञ्च सुन्दराणाञ्च मन्मथः ॥ १२ ॥
शास्त्राणाञ्च यथा वेदाः सिद्धानां कपिलो यथा ।
हनूमान् वानराणाञ्च क्षेत्राणां ब्राह्मणाननम् ॥ १२ ॥
यशोदानां यथा विद्या कविता च मनोहरा ।
आकाशो व्यापकानाञ्च ह्यङ्गानां लोचनं यथा ॥ १४ ॥
विभवानां हरिकथा सुखानां हरिचिन्तनम् ।
स्पर्शानां पुत्रसंस्पर्शो हिंस्रानाञ्च यथा खलः ॥ १५ ॥
पापानाञ्च यथा मिथ्या पापिनां पुंश्चली यथा ।
पुण्यानाञ्च यथा सत्यं तपसां हरिसेवनम् ॥ १६ ॥
यथा घृतञ्च गव्यानां यथा ब्रह्मा तपस्विनाम् ।
अमृतं भक्ष्यवस्तूनां शस्यानां धान्यकं यथा ॥ १७ ॥
पुण्यदानां यथा तोयं शुद्धानाञ्च हुताशनः ।
सुवर्णं तैजसानाञ्च मिष्टानां प्रियभाषणम् ॥ १८ ॥
गरुड़ः पक्षिणाञ्चैव हस्तिनामिन्द्रवाहनः ।

योगिनाञ्च कुमारश्च देवर्षीणाञ्च नारदः ॥ १९ ॥
गन्धर्वाणां चित्ररथो जीवो बुद्धिमतां यथा ।
सुकवीनां यथा शुक्रः काव्यानाञ्च पुराणकम् ॥ २० ॥
स्रोतःस्वतां समुद्रश्च यथा पृथ्वी क्षमावताम् ।
लाभानाञ्च यथा मुक्तिर्हरिभक्तिश्च सम्पदाम् ॥ २१ ॥
पवित्राणां वैष्णवाश्च वर्णानां प्रणवो यथा ।
विष्णुमन्त्रश्च मन्त्राणां वीजानां प्रकृतिर्यथा ॥ २२ ॥
विदुषाञ्च यथा वाणी गायत्री छन्दसां यथा ।
यथा कुवेरो यक्षाणां सर्पाणां वासुकिर्यथा ॥ २३ ॥
यथा पिता ते शैलानां गवाञ्च सुरभिर्यथा ।
वेदानां सामवेदश्च तृणानाञ्च यथा कुशः ॥ २४ ॥
सुखदानां यथा लक्ष्मीर्मनश्च शीघ्रगामिनाम् ।
अक्षराणामकारश्च हितैषिणां पिता यथा ॥ २५ ॥
शालग्रामश्च यन्त्राणां पशूनां विष्णुपञ्जरः ।
चतुष्पदानां पञ्चास्यो मानवो जीविनां यथा ॥ २६ ॥
यथा स्वान्तमिन्द्रियाणां मन्दाग्निश्च रुजां यथा ।
वलिनाञ्च यथा शक्ति रहं शक्तिमतां यथा ॥ २७ ॥
महान् विराट् च स्थूलानां सूक्ष्माणां परमाणुकः ।
यथेन्द्र आदितेयानां दैत्यानाञ्च वलिर्यथा ॥ २८ ॥
प्रह्लादश्चैव साधूनां दातॄणां दधीचिर्यथा ।
ब्रह्मास्त्रञ्च यथास्त्राणां चक्राणाञ्च सुदर्शनम् ॥ २९ ॥
नृणां राजारामचन्द्रो धन्विनां लक्ष्मणो यथा ।
सर्वाधारः सर्वसेव्यः सर्ववीजश्च सर्वदः ।
सर्वसारो यथा कृष्णो व्रतानां पुण्यकं यथा ॥ ३० ॥

व्रतं कुरु महाभागे त्रिषु लोकेषु दुर्लभम् ।
सर्वसारश्च पुत्रस्ते व्रतादेव भविष्यति ॥ ३१ ॥
व्रताराध्यश्च श्रीकृष्णः सर्वेषां वाञ्छितप्रदः ।
जनो यत्सेवनान्मुक्तः पितृभिः कोटिभिः सह ॥३२॥
हरिमन्त्रं गृहीत्वा च हरिसेवां करोति यः ।
भारते जन्मसफलं स्वात्मनः स करोति च ॥ ३३ ॥
उद्धृत्य कोटि पुरुषान् वैकुण्ठं याति निश्चितम् ।
श्रीकृष्णपार्षदो भूत्वा सुखं तत्रैव मोदते ॥ ३४ ॥
सहोदरान् स्वभृत्यांश्च स्वबन्धून् सहचारिणम् ।
स्वस्त्रियञ्च समुद्धृत्य भक्तो याति हरेः परम् ॥ ३५ ॥
तस्माद् गृहाण गिरिजे हरेर्मन्त्रं सुदुर्लभम् ।
जपमन्त्रं व्रते तत्र पितृणां मुक्तिकारणम् ॥ ३६ ॥
इत्युक्त्वा शङ्करोदेवो गत्वा गिरिजया सह ।
शीघ्रञ्च जाह्नवीतीरं हरेर्मन्त्रं मनोहरम् ॥ ३७ ॥
तस्यै ददौ च संप्रीत्या कवचं स्तोत्रसंयुतम् ।
पूजा विधान नियमं कथयामास तां मुने ॥ ३८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद संवादे
गणपतिखण्डे तृतीयोऽध्यायः ।

———

## चतुर्थोऽध्यायः ।

नारायण उवाच ।

श्रुत्वा व्रत विधानञ्च दुर्गा प्रहृष्टमानसा ।
पुनं व्रतविधानञ्च संप्रष्टुमुपचक्रमे ॥ १ ॥

पार्वत्युवाच ।

सर्वं व्रतविधानं मां वद वेदविदां वर ।
हे नाथ करुणासिन्धो दीनबन्धो परात्पर ॥ २ ॥
कानि व्रतोपयुक्तानि द्रव्याणि च फलानि च ।
समयं नियमं भक्ष्यं विधानं तत्फलं प्रभो ॥ ३ ॥
देहि मह्यं विनीतायै नियुक्तं सत्पुरोहितम् ।
पुष्पोपहारान् विप्रांश्च द्रव्याहरणकिङ्करान् ॥ ४ ॥
अन्यानि चोपयुक्तानि मयाज्ञातानि यानिच ।
सन्नियोजय तत् सर्वं स्त्रीणां स्वामी च सर्वदः ॥ ५ ॥
पिता कौमारकाले च सर्वपालनकारकः ।
भर्त्ता मध्ये सुतः शेषे त्रिधावस्था च योषिताम् ॥६॥
तातोऽशोकः प्राणतुल्यां दत्वा सत्स्वामिने सुताम् ।
स्वामी निर्वृतिमाप्नोति संन्यस्य स्वसुते प्रियाम् ॥७॥
बन्धुत्रययुता या स्त्री सा च भाग्यवती परा ।
किञ्चिद्विहीना मध्या च सर्वहीनाऽधमा भुवि ॥ ८ ॥
एतषाञ्च समीपस्था प्रशंस्या सा जगत्त्रये ।
निन्दितान्येषु संन्यस्ता सर्वसम्मतं श्रुतौ श्रुतम् ॥ ९ ॥

सर्वात्मा भगवां स्त्वञ्च सर्वं साक्षी च सर्ववित्।
देहि मह्यं पुत्त्रवरं स्वात्मनिर्वृतिहेतुकम्॥ १०॥
स्वात्मबोधानुमानेन मद्दात्मनि निवेदितम्।
सर्वान्तराभिप्रायज्ञं बोधज्ञं बोधयामि किम्॥ ११॥
इत्युक्ता पार्वती प्रीत्या पपात स्वामिनः पदे।
कृपासिन्धुश्च भगवान् प्रवक्तुमुपचक्रमे॥ १२॥

श्रीमहादेव उवाच।

शृणु देवि प्रवक्ष्यामि विधानं नियमं फलम्।
फलानि चैव द्रव्याणि व्रतोपयोगिकानि च॥ १३॥
विप्राणां शतकं शुद्धं फलपुष्पोपहारकम्।
किङ्कराणाञ्च शतकं द्रव्याहरणकारकम्॥ १४॥
दासीनां शतकं लक्षं नियुक्तञ्च पुरोहितम्।
सर्वव्रतविधानज्ञं वेदवेदान्तपारगम्॥ १५॥
प्रवरं हरिभक्तानां सर्वज्ञं ज्ञानिनां वरम्।
सनत्कुमारं मत्तुल्यं गृहाण व्रतहेतवे॥ १६॥
देवि शुद्धे च काले च परं नियमपूर्वकम्।
माघशुक्लत्रयोदश्यां व्रतारम्भः शुभः प्रिये॥ १७॥
गात्रं सुनिर्म्मलं कृत्वा शिरः संस्कारपूर्वकम्।
उपोष्य पूर्वदिवसे वस्त्रं प्रक्षाल्य यत्नतः॥ १८॥
अरुणोदयवेलायां तल्पादुत्थाय सुव्रती।
मुखप्रक्षालनं कृत्वा स्नात्वा च निर्म्मले जले॥ १९॥
आचम्य यत्र पूतो हि हरिस्मरण पूर्वकम्।
दत्त्वार्घ्यं हरये भक्त्या गृहमागत्य सत्वरम्॥ २०॥
धौते च वाससी धृत्वा उपविश्यासने शुचौ।

आचम्य तिलकं कृत्वा निर्वाप्यस्वाह्निकं पुनः ॥२१॥
घटमारोपणं कृत्वा स्वस्तिवाचनपूर्वकम् ।
पुरोहितस्य वरणं पुरः कृत्वा प्रयत्नतः ।
सङ्कल्पं वेदविहितं व्रतमेतत् समाचरेत् ॥ २२ ॥
व्रते द्रव्याणि नित्यानि चोपचाराणि षोड़श ।
देयानि नित्यं देवेशि कृष्णाय परमात्मने ॥ २३ ॥
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ॥ २४ ॥
मधुपर्कश्च स्नानीयं वस्त्राणि भूषणानि च ।
सुगन्धि पुष्पधूपञ्च दीपनैवेद्य चन्दनम् ॥ २५ ॥
यज्ञसूत्रञ्च ताम्बूलं कर्पूरादि सुवासितम् ।
द्रव्याण्येतानि पूजायाश्चाङ्गरूपाणि सुन्दरि ॥ २६ ॥
देवि किञ्चिद्विहीनेनैवाङ्गहानिः प्रजायते ।
अङ्गहीनञ्च यत् कर्म्म चाङ्गहीनो यथा नरः ।
अङ्गहीने च कार्य्ये च फलहानिः प्रजायते ॥ २७ ॥
अष्टोत्तरशतं पुष्पं पारिजातस्य विष्णवे ।
देयं प्रतिदिनं दुर्गे स्वात्मनो रूपहेतवे ॥ २८ ॥
श्वेतचम्पकपुष्पाणां लक्षमक्षतमीप्सितम् ।
प्रदेयं हरये भक्त्या वर्णसौन्दर्य्यहेतवे ॥ २९ ॥
सहस्रपत्रं पद्मानामक्षतं पुष्पलक्षकम् ।
भक्त्या देयञ्च हरये मुखसौन्दर्य्यहेतवे ॥ ३० ॥
अमूल्यरत्नरचितं दर्पणानां सहस्रकम् ।
देयं नारायणायैव नेत्रयोर्दीप्तिहेतवे ॥ ३१ ॥
नीलोत्पलानां लक्षञ्च देयं कृष्णाय भक्तितः ।
व्रताङ्गभूतं देवेशि चक्षुषो रूपहेतवे ॥ ३२ ॥

हिमालयोद्भवं लक्षं रुचिरं श्वेतचामरम् ।
प्रदेयं केशवायेव केशसौन्दर्य्यहेतवे ॥ ३३ ॥
अमूल्यरत्नरचितं पुटकानां सहस्रकम् ।
प्रदेयं गोपिकेशाय नासिकारूपहेतवे ॥ ३४ ॥
बन्धूकपुष्प लक्षञ्च देयं राधेश्वराय च ।
सौम्यौष्ठाधरयोश्चैव वर्णसौन्दर्य्यहेतवे ॥ ३५ ॥
मुक्ताफलानां लक्षञ्च दन्तसौन्दर्य्यहेतवे ।
देयं गोलोकनाथाय शैलजे भक्तिपूर्वकम् ॥ ३६ ॥
रत्नगण्डूकलक्षञ्च गण्डसौन्दर्य्यहेतवे ।
महीश्वराय दातव्यं व्रते शैलेन्द्रकन्यके ॥ ३७ ॥
रत्नपाशक लक्षञ्च देयं ब्रह्मेश्वराय च ।
ओष्ठाधःस्थलरूपाय प्राणेशि भक्तितो व्रती ॥ ३८ ॥
कर्णभूषणलक्षञ्च रत्नसारविनिर्म्मितम् ।
देयं सर्वेश्वरायैव कर्णसौन्दर्य्यहेतवे ॥ ३९ ॥
माध्वीककलसानाञ्च लक्षं रत्नविनिर्म्मितम् ।
देयं विश्वेश्वरायैव स्वरसौन्दर्य्यहेतवे ॥ ४० ॥
सुधापूर्णञ्च कुम्भानां सहस्रं रत्ननिर्म्मितम् ।
देयं कृष्णाय देवेशि वाक्यसौन्दर्य्यहेतवे ॥ ४१ ॥
रत्नप्रदीपलक्षञ्च गोपवेशविधायिने ।
देयं किशोरवेशाय दृष्टिसौन्दर्य्यहेतवे ॥ ४२ ॥
धुस्तूरकुसुमाकारं रत्नपात्रसहस्रकम् ।
देयं गोरक्षकायैव गलसौन्दर्य्यहेतवे ॥ ४३ ॥
सद्रत्नसाररचितं पद्मनालसहस्रकम् ।
देयं चण्डकपालाय बाहुसौन्दर्य्यहेतवे ॥ ४४ ॥

लक्षञ्च रत्नपद्मानां करसौन्दर्य्यहेतवे।
देयं गोपाङ्गनेशाय नारायणि हरिव्रते ॥ ४५ ॥
अङ्गुरीयकलक्षञ्च रत्नसारविनिर्म्मितम्।
अङ्गुलीनाञ्च रूपार्थं देयं देवेश्वराय च ॥ ४६ ॥
मणीन्द्रसारलक्षञ्च श्वेतवर्णं मनोहरम्।
देयं मुनीन्द्रनाथाय नखसौन्दर्य्यहेतवे ॥ ४७ ॥
सद्रत्नसारहाराणां लक्षञ्चातिमनोहरम्।
देयं मदनमोहाय वक्षःसौन्दर्य्यहेतवे ॥ ४८ ॥
सुपक्वश्रीफलानाञ्च लक्षञ्च सुमनोहरम्।
देयं सिद्धेन्द्रनाथाय स्तनसौन्दर्य्यहेतवे ॥ ४९ ॥
सद्रत्नवर्त्तुलाकारं पात्रं लक्षं मनोहरम्।
देयं पद्मालयेशाय देहस्य रूपहेतवे ॥ ५० ॥
सद्रत्नसाररचितं नाभीनाञ्च सहस्रकम्।
प्रदेयं पद्मनाभाय नाभिसौन्दर्य्यहेतवे ॥ ५१ ॥
सद्रत्नसाररचितं नखचन्द्रसहस्रकम्।
नितम्बसौन्दर्य्यार्थञ्च प्रदेयं चक्रपाणये ॥ ५२ ॥
सुवर्णरम्भास्तम्भानां लक्षञ्च सुमनोहरम्।
प्रदेयं श्रीनिवासाय श्रोणिसौन्दर्य्यहेतवे ॥५३॥
शतपत्रस्थलाब्जानां लक्षमम्लानमक्षतम्।
प्रदेयं पद्मनेत्राय पादसौन्दर्य्यहेतवे ॥ ५४ ॥
सुवर्णरचितानाञ्च खञ्जनानां सहस्रकम्।
गतिसौन्दर्य्यहेत्वर्थं देयं लक्ष्मीश्वराय च ॥ ५५ ॥
राजहंससहस्रञ्च गजेन्द्राणां सहस्रकम्।
सुवर्णरचितं देयं हरये गतिहेतवे ॥ ५६ ॥

सुवर्णकृतलक्षञ्च देयं नारायणाय च।
विचित्रं रत्नसारेण मूर्द्धसौन्दर्य्यहेतवे ॥ ५७ ॥
मालतीनाञ्च कुसुममक्षतं लक्ष्मीश्वरि।
देयं वृन्दावनेशाय हास्यसौन्दर्य्यहेतवे ॥ ५८ ॥
अमूल्यरत्नलक्षञ्च देयं नारायणाय वै।
सुव्रतं व्रतपूर्णार्थं शीलसौन्दर्य्य हेतवे ॥ ५९ ॥
स्वच्छ स्फटिकसङ्काशं मणीन्द्रसार लक्षकम्।
देयं मुनीन्द्रनाथाय मनःसौन्दर्य्यहेतवे ॥ ६० ॥
प्रबालसारसङ्काशं मणिसारसहस्रकम्।
देयं कृष्णाय भक्त्या च प्रियानुरागवृद्धये ॥ ६१ ॥
माणिक्यसार लक्षञ्च देयं कृष्णाय यत्नतः।
जन्मनः कोटिपर्य्यन्तं स्वामिसौभाग्यहेतवे ॥ ६२ ॥
कुष्माण्डं नारिकेलञ्च जम्बीरं श्रीफलन्तथा।
फलान्येतानि देयानि हरये पुत्रहेतवे ॥ ६३ ॥
रत्नेन्द्रसार लक्षञ्च देयं कृष्णाय यत्नतः।
असंख्यजन्मपर्य्यन्तं स्वामिनो धनवृद्धये ॥ ६४ ॥
वाद्यं नानाप्रकारञ्च कांस्यतालादिकं परम्।
व्रते सम्पत्तिवृद्धार्थं श्रीहरिं श्रावयेद् व्रती ॥ ६५ ॥
पायसं पिष्टकं सर्पि शर्कराक्तं मनोहरम्।
प्रदेयं हरये भक्त्या स्वामिनो भोगवृद्धये ॥ ६६ ॥
सुगन्धिपुष्पमालानां लक्ष मक्षतमीप्सितम्।
प्रदेयं हरये भक्त्या हरिभक्तिविवृद्धये ॥ ६७ ॥
नैवेद्यानि च देयानि स्वादूनि मधुराणि च।
श्रीकृष्णप्रीतिप्राप्त्यर्थं दुर्गे नानाविधानि च ॥ ६८ ॥

नानाविधानि पुष्पाणि तुलसीसंयुतानि च ।
श्रीकृष्णप्रीतये भक्त्या व्रते देयानि सुव्रते ॥ ६९ ॥
ब्राह्मणानां सहस्रञ्च प्रत्यहं भोजयेद् व्रती ।
स्वात्मनः शस्यवृद्ध्यर्थं व्रते जन्मनि जन्मनि ॥ ७० ॥
पुष्पाञ्जलिशतं देयं नित्यं पूर्णञ्च पूजने ।
प्रणामशतकं देवि कर्त्तव्यं भक्तिहृदये ॥ ७१ ॥
षण्मासांश्च हविष्यान्नं मासान् पञ्च फलादिकम् ।
हविः पक्षं जलं पक्षं व्रते भक्ष्यञ्च सुव्रते ॥ ७२ ॥
रत्नप्रदीपशतकं वह्निं दद्याद् दिवानिशम् ।
रात्रौ कुशासनं कृत्वा नित्यं जागरणं व्रते ॥ ७३ ॥
स्मरणं कीर्त्तनं केलिः श्रवणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिहेतवे ॥ ७४ ॥
स्वप्ने मैथुनकं त्याज्यं व्रती क्रीड़ा च शुद्धये ।
सम्पूर्णे च व्रते देवि प्रतिष्ठा तदनन्तरम् ॥ ७५ ॥
त्रिशतञ्च षष्ठ्यधिकं उष्ट्रकं वस्त्रसंयुतम् ।
सभोज्यं सोपवीतञ्च सोपहारं मनोहरम् ॥ ७६ ॥
त्रिशतञ्च षष्ठ्यधिकं सहस्रं विप्रभोजनम् ।
त्रिशतञ्च षष्ठ्यधिकं सहस्रं तिलहोमकम् ॥ ७७ ॥
त्रिशतञ्च षष्ठ्यधिकं सहस्रस्वर्णमेव च ।
देया व्रतसमाप्तौ च दक्षिणा विधिबोधिता ॥ ७८ ॥
अस्यां समाप्ति दिवसे कर्त्तव्यस्यामि दक्षिणाम् ।
एतद्व्रतफलं देवि दृढ़ा भक्तिर्हरौ भवेत् ॥ ७९ ॥
हरितुल्यो भवेत् पुत्रो विख्यातो भुवनत्रये ।
सौन्दर्यं स्वामिसौभाग्यमैश्वर्यं विपुलं धनम् ॥ ८० ॥

सर्वे वाञ्छित सिद्धीनां वीजं जन्मनि जन्मनि ।
इत्येवं कथितं देवि व्रतं कुरु महेश्वरि ॥ ८१ ॥
पुत्रस्ते भविता साध्वीत्युक्त्वा स विरराम ह ॥ ८२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे व्रतविधानं नाम
चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

---

नारायण उवाच ।

श्रुत्वा व्रतविधानञ्च दुर्गा प्रहृष्टमानसा ।
पुनः पप्रच्छ कान्तं सा दिव्यां व्रतकथां शुभाम् ॥ १ ॥

श्रीपार्वत्युवाच ।

किमङ्ग तं व्रतं नाथ विधानं फलमस्य च ।
अधिकान्तत् कथां ब्रूहि व्रतं केन प्रकाशितम् ॥२॥

अथ व्रत कथा । श्रीमहादेव उवाच ।

शतरूपा मनोः पत्नी पुत्रदुःखेन दुःखिता ।
ब्रह्मणः स्थानमागत्य सा ब्रह्माणमुवाच ह ॥३॥

शतरूपोवाच ।

ब्रह्मन् केन प्रकारेण वन्ध्यायाश्च सुतो भवेत् ।
तन्मे ब्रूहि जगद्धातः सृष्टिकारणकारण ॥ ४ ॥
तज्जन्म निष्फलं ब्रह्मन्नैश्वर्य्यं धनमेव च ।

किञ्चिन्न शोभते गेहे विना पुत्त्रेण पुत्त्रिणाम् ॥ ५ ॥
तपोदानोद्भवं पुण्यं जन्मान्तरसुखावहम्।
सुखदो मोक्षदः प्रीति दाता पुत्त्रश्च पुत्त्रिणाम् ॥६॥
पुत्त्री पुत्त्रमुखं दृष्ट्वा शताश्वमेधिनां फलम्।
पुन्नामनरकत्राणकारणं लभते ध्रुवम् ॥ ७ ॥
पुत्त्रोपायं यदि विधे वद मां तापसंयुताम्।
तदा भद्रं नचेद्भर्त्रा सह यास्यामि काननम् । ८ ॥
गृहाण राज्यमैश्वर्य्यं धनं पृथ्वीं प्रजायहाम्।
किमेतेनावयोस्तात विना पुत्त्रैरपुत्त्रिणोः ॥ ९ ॥
अपुत्त्रिणो मुखं द्रष्टुं विद्वान्नोत्सहतेऽशिवम्।
मुखं दर्शयितुं लज्जां समवाप्नोत्यपुत्त्रकः ॥ १० ॥
अथवा गरलं भुक्त्वा प्रवेक्ष्यामि हुताशनम्।
अपुत्त्रपुत्त्रमशिवं गृहाण स्त्रीविहीनकम् ॥ ११ ॥
इत्येवमुक्त्वा सा साक्षाद् ब्रह्मणश्च रुरोद ह।
कृपानिधिश्च तां दृष्ट्वा प्रवक्तुमुपचक्रमे ॥ १२ ॥

ब्रह्मोवाच।

शृणु वत्से प्रवक्ष्यामि पुत्त्रोपायं सुखावहम्।
सर्वैश्वर्य्यादिवीजञ्च सर्ववाञ्छाप्रदं शुभम् ॥ १३ ॥
माघशुक्लत्रयोदश्यां व्रतमेतत् सुपुण्यकम्।
कर्त्तव्यं शुद्धकाले च कृष्णमाराध्य सर्वदम् ॥ १४ ॥
संवत्सरञ्च कर्त्तव्यं सर्वविघ्नविनाशनम्।
वेदोक्तानि च द्रव्याणि व्रते देयानि सुव्रते ॥ १५ ॥
व्रतञ्च काण्वशाखोक्तं सर्ववाञ्छितसिद्धिदम्।
कृत्वा पुत्त्रं लभ शुभे विष्णुतुल्यपराक्रमम् ॥ १६ ॥

ब्रह्मणश्च वचः श्रुत्वा सा कृत्वा व्रतमुत्तमम् ।
प्रियव्रतोत्तानपादौ लेभे पुत्रौ मनोहरौ ॥ १७ ॥
व्रतं कृत्वा देवहूती लेभे सिद्धेश्वरं सुतम् ।
नारायणांशं कपिलं पुत्रकं पुत्रदं शुभम् ॥ १८ ॥
अरुन्धतीदं कृत्वा तु लेभे शक्तिसुतं शुभा ।
शक्तिकान्ता व्रतं कृत्वा सुतं लेभे पराशरम् ॥ १९ ॥
अदितिश्च व्रतं कृत्वा लेभे वामनकं सुतम् ।
शची जयन्तं पुत्रञ्च लेभे कृत्वेदमीश्वरी ॥ २० ॥
उत्तानपादपत्नीदं कृत्वा लेभे ध्रुवं सुतम् ।
कुवेरजाया कृत्वेदं लेभे च नलकूवरम् ॥ २१ ॥
सूर्य्यपत्नी मनुं लेभे कृत्वेदं व्रतमुत्तमम् ।
अत्रिपत्नी सुतं चन्द्रं लेभे कृत्वेदमुत्तमम् ॥ २२ ॥
लेभे चाङ्गिरसः पत्नी कृत्वेदं व्रतमुत्तमम् ।
बृहस्पतिं सुरगुरुं पुत्रमस्य प्रभावतः ॥ २३ ॥
भृगोर्भार्य्या व्रतं कृत्वा लेभे दैत्यगुरुं सुतम् ।
शुक्रं नारायणांशञ्च सर्वतेजस्विनां परम् ॥ २४ ॥
इत्येवं कथितं देवि व्रतानां व्रतमुत्तमम् ।
त्वमेव कुरु कल्याणि हिमालयसुते शुभे ॥ २५ ॥
साध्यं राजेन्द्रपत्नीनां देवीनाञ्च सुखावहम् ।
व्रतमेतन्महासाध्वि साध्वीनां प्राणतः प्रियम् ॥ २६ ॥
व्रतस्यास्य प्रभावेण स्वयं गोपाङ्गनेश्वरः ।
ईश्वरः सर्वदेवानां तव पुत्रो भविष्यति ॥ २७ ॥
इत्युक्त्वा शङ्करस्तत्र विरराम च नारद ।
व्रतञ्चकार सा देवी प्रहृष्टा शङ्कराज्ञया ॥ २८ ॥

इत्येवं कथितं सर्वं किम्भूयः श्रोतुमिच्छसि ।
सुखदं मोक्षदं सारं गणेशजन्मकारणम् ॥ २८ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे व्रतकथाप्रकरणं
नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

---

शौनक उवाच ।
नारायणवचः श्रुत्वा नारदो हृष्टमानसः ।
किं पप्रच्छ पुनः साधो तन्मे ब्रूहि तपोधन ॥ १ ॥
सूत उवाच ।
नारायणवचः श्रुत्वा नारदो हृष्टमानसः ।
व्रतारम्भविधानञ्च संप्रष्टुमुपचक्रमे ॥ २ ॥
नारद उवाच ।
कृतं केन प्रकारेण व्रतमेतत् शुभावहम् ।
तन्मे ब्रूहि मुनिश्रेष्ठ पार्वत्या भर्त्तुराज्ञया ॥ ३ ॥
ललाभ जन्म गोपीशः कृते सुव्रतया व्रते ।
ब्रह्मन् केन प्रकारेण तन्नः शंसितुमर्हसि ॥ ४ ॥
नारायण उवाच ।
कथयित्वा कथां दिव्यां विधानञ्च व्रतस्य च ।
स्वयं विधाता तपसां जगाम तपसे शिवः ॥ ५ ॥

हरेराराधनव्यग्रो मूर्त्तिभेदधरो हरिः ।
हरिभावनशीलश्च हरिध्यानपरायणः ॥ ६ ॥
परमानन्दपूर्णश्च ज्ञानानन्दः सनातनः ।
दिवानिशं न जानाति हरिमन्त्रं वहिः स्मरन् ॥ ७ ॥
प्रहृष्टमनसा देवी पार्वती भर्त्तुराज्ञया ।
किङ्करान् प्रेरयामास विप्रांश्च व्रतहेतवे ॥ ८ ॥
आनीय सर्वद्रव्याणि व्रतोपयोगिकानि च ।
व्रतं कर्त्तुं समारेभे शुभदा सा शुभक्षणे ॥ ९ ॥
सनत्कुमारो भगवानाजगाम विधेः सुतः ।
मूर्त्तिमांस्तेजसां राशिः प्रज्वलन् ब्रह्मतेजसा ॥ १० ॥
ब्रह्माजगाम हृष्टश्च ब्रह्मलोकात् सभार्य्यकः ।
अतित्रस्तो हि भगवानाजगाम महेश्वरः ॥ ११ ॥
विष्णुः क्षीरोदशायी च सलक्ष्मीकश्चतुर्भुजः ।
भगवाञ्जगतां पाता शास्ता भर्त्ता सपार्षदः ॥ १२ ॥
वनमालाधरः श्यामो भूषितो रत्नभूषणैः ।
महासम्भृतसम्भारो रत्नयानेन नारद ॥ १३ ॥
सनकश्च सनन्दश्च कपिलश्च सनातनः ।
आसुरिश्च क्रतुर्हंसी वोढुः पञ्चशिखोऽरुणिः ॥ १४ ॥
यतिश्च सुमतिश्चैव वशिष्ठश्च सहानुगः ।
पुलहश्च पुलस्त्यश्च अत्रिश्च भृगुरङ्गिराः ॥ १५ ॥
अगस्त्यश्च प्रचेताश्च दुर्वासाश्चयवनस्तथा ।
मरीचिः कश्यपः कण्वो जरत्कारुश्च गौतमः ॥ १६ ॥
बृहस्पतिरुतथ्यश्च संवर्त्तः सौरभिस्तथा ।
जावालिर्जमदग्निश्च जैगीषव्यश्च देवलः ॥ १७ ॥

गोकामुखो वक्रश्च: पारिभद्र: पराशर: ।
विश्वामित्रो वामदेव ऋष्यशृङ्गो विभाण्डक: ॥ १८ ॥
मार्कण्डेयो मृकण्डुश्च पुष्करो लोमशस्तथा ।
कौत्सो वत्सश्च दक्षश्च बालाग्निरघमर्षण: ॥ १९ ॥
कात्यायन: कणादश्च पाणिनि: शाकटायन: ।
शङ्कुरापिशलिश्चैव शाकल्य: शङ्ख एव च ॥ २० ॥
एते चान्ये च बहव: सशिष्या मुनयो मुने ।
आयाश्च धर्मसुतौ च नरनारायणौ समौ ॥ २१ ॥
दिक्पालाश्च तथा देवा यक्षगन्धर्वकिङ्करा: ।
आजग्मु: पर्वता: सर्वे सगणा: पार्वतीव्रते ॥ २२ ॥
हिमालय: शैलराज: सापत्यश्च सभार्य्यक: ।
सगण: सानुगश्चैव रत्नभूषणभूषित: ॥ २३ ॥
महासम्भृतसम्भारो नानाद्रव्यसमन्वित: ।
मणिमाणिक्यरत्नानि व्रतोपयोगिकानि च ॥ २४ ॥
नानाप्रकारवस्तूनि जगतां दुर्लभानि च ।
लक्षञ्च गजरत्नानामश्वरत्नं त्रिलक्षकम् ॥ २५ ॥
दशलक्षं गवां रत्नं शतलक्षं सुवर्णकम् ।
रुचकानां हीरकाणां स्पर्शानाञ्च तथैव च ॥ २६ ॥
मुक्तानाञ्च चतुर्लक्षं कौस्तुभानां सहस्रकम् ।
सुस्वादुमिष्टद्रव्याणां लक्षभाराणि कौतुकी ।
अनन्तरत्नप्रभव आजगाम सुताव्रते ॥ २७ ॥
ब्राह्मणा मनव: सिद्धा नागा विद्याधरास्तथा ।
सन्न्यासिनो भिक्षुकाश्च वन्दिन: पार्वतीव्रते ॥ २८ ॥
विद्याधरी नर्त्तकी च नर्त्तकाऽप्सरसां गणा: ।

नानाविधा वाद्यभाण्डा आजग्मुः शिवमन्दिरम् ॥२९॥
कैलासराजमार्गञ्च चन्दनेन सुसंस्कृतम् ।
आम्रपल्लवसूत्राढ्यं कदलीस्तम्भशोभितम् ॥ ३० ॥
दूर्वाधान्यपर्णलाजफलपुष्पविभूषितम् ।
निर्मितं पद्मरागेण ददृशुस्ते गणा मुदा ॥ ३१ ॥
उच्चैःसिंहासनेष्वेते पूजिताः शङ्करेण च ।
कैलासवासिनः सर्वे परमानन्दसंयुताः ॥ ३२ ॥
दानाध्यक्षः सुनाशीरः कुवेरः कोषरक्षकः ।
आदेष्टा च स्वयं सूर्य्यः परिवेष्टा जलाधिपः ॥ ३३ ॥
दध्नां नद्यः सहस्राणि दुग्धानाञ्च तथैव च ।
सहस्राणि घृतानाञ्च गुड़ानाञ्च शतानि च ॥ ३४ ॥
माध्वीकानां सहस्राणि तैलानाञ्च शतानि च ।
लक्षाणि चैव तक्राणां बभूवुः पार्वतीव्रते ॥ ३५ ॥
पीयूषाणाञ्च कुम्भानि शतलक्षाणि नारद ।
मिष्टान्नानां शर्कराणां बभूवुर्लक्षराशयः ।
यवगोधूमचूर्णानां घृताक्तानाञ्च नारद ॥ ३६ ॥
स्वस्तिकानाञ्च पूपानां बभूवुर्लक्षराशयः ।
गुड़संस्कृतलाजानां बभूवुः कोटिराशयः ॥ ३७ ॥
शालीनां पृथुकानाञ्च राशीनां दशकोटयः ।
तण्डुलानाञ्च राशीनां मुने संख्या न विद्यते ॥ ३८ ॥
स्वर्णरौप्यप्रवालानां मणीनाञ्च महामुने ।
बभूवुः पर्वतास्तत्र कैलासे पार्वतीव्रते ॥ ३९ ॥
पायसं पिष्टकञ्चैव शाल्यन्नं सुमनोहरम् ।
चकार लक्ष्मीः पाकञ्च व्यञ्जनं घृतसंस्कृतम् ॥ ४० ॥

बुभुजे देवर्षिगणैः सार्द्धं नारायणः स्वयम्।
बभुवुर्लक्षविप्राश्च परिवेशनकारकाः॥ ४१॥
ताम्बूलञ्च ददौ तेभ्यः कर्पूरादिसुवासितम्।
रत्नसिंहासनस्थेभ्यो विप्रलक्षाः सुदक्षकाः॥ ४२॥
रत्नसिंहासनस्थञ्च विष्णुं क्षीरोदशायिनम्।
सेव्यमानं पार्षदैश्च सस्मितैः श्वेतचामरैः॥ ४३॥
ऋषिभिस्तूयमानञ्च सिद्धैर्देवगणैस्तथा।
विद्याधरीणां नृत्यानि पश्यन्तं सस्मितं मुदा।
गन्धर्वाणाञ्च सङ्गीतं श्रुतवन्तं मनोहरम्॥ ४४॥
पप्रच्छ शङ्करो ब्रह्मन् ब्रह्मेशं भक्तिपूर्वकम्।
ब्रह्मणा प्रेरितो युक्तं व्रतं कर्त्तव्यमीप्सितम्॥ ४५॥
देवर्षिगणपूर्णायां सभायां स पुटाञ्जलिः॥ ४६॥

श्रीमहादेव उवाच।

मदीयं प्रार्थनं नाथ श्रीनिवास शृणु प्रभो।
तपःस्वरूप तपसां कर्मणाञ्च फलप्रद॥ ४७॥
व्रतानां जपयज्ञानां पूजानां सर्वपूजित।
सर्वेषां वीजरूपेण वाञ्छाकल्पतरो हरे॥ ४८॥
सुपुण्यकव्रतं कर्त्तुं ब्रह्मन्निच्छति पार्वती।
पुत्रार्थिनी सा शोकार्त्ता हृदयेन विदूयता॥ ४९॥
रतिभङ्गे कृते देवैर्वीर्य्यव्यर्थशुचार्दिता।
प्रबोधिता मया साध्वी विविधैर्वचनामृतैः॥ ५०॥
सत्पुत्रं स्वामिसौभाग्यं सुव्रता याचते व्रते।
ताभ्यां विना न सन्तुष्टा स्वप्राणांस्त्यक्तुमिच्छति॥५१॥
पुरा लक्षा स्वदेहञ्च पितृयज्ञे च मानिनी।

मन्निन्दया शैलगेहे पुनर्जन्म ललाभ सा ॥ ५२ ॥
सर्वं जानासि वृत्तान्तं सर्वज्ञं त्वां वदामि किम् ।
कान्ता तां वद तत्त्वज्ञ परिणामशुभप्रदाम् ॥ ५३ ॥
दुर्निवार्य्यश्च सर्वेश स्त्रीस्वभावश्च चापलः ।
दुस्त्यज्यं योगिभिः सिद्धैरस्माभिश्च तपस्विभिः ॥ ५४ ॥
जितेन्द्रियैर्जितक्रोधैः स्त्रीरूपं मोहकारणम् ।
सर्वमायाकरण्डञ्च कामवर्द्धनकारणम् ॥ ५५ ॥
ब्रह्मास्त्रं कामदेवस्य दुर्भेद्यं जयकारणम् ।
अनिर्मितञ्च विधिना सर्वाद्यं विधिपूर्वजन् ॥ ५६ ॥
मोक्षद्वारकवाटञ्च हरिभक्तिनिरोधनम् ।
संसारबन्धनस्तम्भरज्जुरूपमखण्डनम् ॥ ५७ ॥
वैराग्यनाशवीजञ्च शश्वद्रागविवर्द्धनम् ।
पत्तनं साहसानाञ्च दोषाणामालयं सदा ॥ ५८ ॥
अप्रत्ययानां क्षेत्रञ्च स्वयं कपटमूर्त्तिमत् ।
अहङ्काराश्रयं शश्वद्विषकुम्भं सुधामुखम् ॥ ५९ ॥
सर्वैरसाध्यमानञ्च दुराराध्यञ्च सर्वदा ।
स्वकार्य्यसाध्यमाराध्यं कलहाङ्कुरकारणम् ॥ ६० ॥
सर्वं निवेदितं नाथ कर्त्तव्यं वक्तुमर्हसि ।
कार्य्यं सर्वं परामर्शं परिणामसुखावहम् ॥ ६१ ॥

श्रीनारायण उवाच ।

इत्येवमुक्त्वा भगवान्निरीक्ष्य ब्रह्मणो मुखम् ।
विरराम सभामध्ये स्तुत्वा च कमलापतिम् ॥ ६२ ॥
शङ्करस्य वचः श्रुत्वा प्रहस्य जगदीश्वरः ।
हितं नीतिञ्च वचनं प्रवक्तुमुपचक्रमे ॥ ६३ ॥

श्रीविष्णुरुवाच ।

सुपुण्यकव्रतं सारं सती सन्तानहेतवे ।
स्वामिसौभाग्यवीजञ्च पत्नी ते कर्त्तुमिच्छति ॥ ६४ ॥
सर्व्वासाध्यं दुराराध्यं सर्व्वकामफलप्रदम् ।
सुखदं सुखसारञ्च मोक्षदं पार्व्वतीश्वर ॥ ६५ ॥
आत्मा साक्षिस्वरूपश्च ज्योतीरूपः सनातनः ।
निराश्रयश्च निर्लिप्तो निरुपाधिर्निरामयः ॥ ६६ ॥
भक्तप्राणश्च भक्तेशो भक्तानुग्रहकारकः ।
दुराराध्यो हि योऽन्येषां भक्तानामतिसाधकः ॥ ६७ ॥
भक्त्याधीनो हि भगवान् सर्व्वसिद्धो हि निष्फलः ।
ते यस्य च कलाः पुंसो ब्रह्मविष्णुमहेश्वराः ॥ ६८ ॥
महान् विराट् यदंशश्च निर्लिप्तः प्रकृतेः परः ।
अव्ययो निग्रहश्चोग्रो भक्तानुग्रहविग्रहः ॥ ६९ ॥
उग्रग्रहोग्रहाणाञ्च ग्रहनिग्रहकारकः ।
त्रिकोटिजन्ममध्ये च न साध्यो भवता विना ॥ ७० ॥
लब्ध्वा हि भारते जन्म हरिभक्तिं लभेन्नरः ।
सेवनं क्षुद्रदेवानां कृत्वा सप्तसु जन्मसु ॥ ७१ ॥
सूर्य्यमन्त्रमवाप्नोति केवलं स तदाशिषा ।
सूर्य्यमन्त्रं समाराध्य त्रिषु जन्मसु भारते ॥ ७२ ॥
प्राप्नोति शैवं मन्त्रञ्च सर्व्वदं मानवो मुदा ।
संसेव्य परया भक्त्या त्वामेव सप्तजन्मसु ॥ ७३ ॥
प्राप्नोति मायामन्त्रञ्च त्वत्पदाब्जप्रसादतः ।
शतं जन्म समाराध्य मायां नारायणीं पराम् ॥ ७४ ॥
नारायणकलां सेव्यां समवाप्नोति मानवः ।

कलां निषेव्य वर्षेऽत्र पुण्यक्षेत्रे सुदुर्लभे ॥ ७५ ॥
कृष्णभक्तिमवाप्नोति भक्तसंसर्गहेतुकीम् ।
संप्राप्य भक्तिं निष्पक्कां भ्रामं भ्रामञ्च भारते ॥ ७६ ॥
प्राप्नोति परिपक्काञ्च भक्तिं भक्तनिषेवया ।
तदा भक्तप्रसादेन देवानामाशिषा शिव ।
श्रीकृष्णमन्त्रं प्राप्नोति निर्वाणफलदं परम् ॥ ७७ ॥
कृष्णव्रतं कृष्णमन्त्रं सर्वकामफलप्रदम् ।
कृष्णतुल्यो भवेद्भक्तश्चिरं कृष्णनिषेवया ॥ ७८ ॥
महति प्रलये पातः सर्वेषां सर्वनिश्चितम् ।
न पातः कृष्णभक्तानां साधूनामविनाशिनाम् ॥७९॥
अविनाशिनि गोलोके मोदन्ते कृष्णकिङ्कराः ।
हसन्ति ते सुनिश्चिन्ता देवान् ब्रह्मादिकान् शिव ॥८०
त्वं संहर्त्ता च सर्वेषां न भक्तानां महेश्वर ।
माया मोहयते सर्वान् भक्तान्न कृपया मम ॥ ८१ ॥
माया नारायणी माता सर्वेषां कृष्णभक्तिदा ।
न कृष्णभक्तिं प्राप्नोति विना मायानिषेवणम् ॥८२॥
सा च नारायणी माया मूलप्रकृतिरीश्वरी ।
कृष्णप्रिया कृष्णभक्ता कृष्णतुल्याविनाशिनी ॥ ८३ ॥
सा च तेजःस्वरूपा च स्वेच्छाविग्रहधारिणी ।
आविर्भूता च देवानां तेजसा सुरनिग्रहे ॥ ८४ ॥
निहत्य दैत्यसङ्घांश्च दक्षपत्न्याञ्च भारते ।
ललाभ दक्षस्तपसा जन्म चानेकजन्मनः ॥ ८५ ॥
त्यक्त्वा देहं पितुर्यज्ञे सा सती तव निन्दया ।
जगाम देवी गोलोकं कृष्णशक्तिः सनातनी ॥ ८६ ॥

गृहीत्वा विग्रहं तस्या गुणरूपाश्रयं परम्।
भ्रामं भ्रामं भारते त्वं विषमोऽभूः पुरा हर ॥ ८७ ॥
प्रबोधितो मया त्वञ्च श्रीशैलेषु सरित्तटे।
लेभे जन्म सा शैलकान्तायामचिरेण च ॥ ८८ ॥
करोतु पुण्यकं साध्वी सुव्रता सुव्रतं शिवा।
राजसूयसहस्राणां पुण्यं शङ्कर पुण्यके ॥ ८९ ॥
राजसूयसहस्राणां व्रते यत्र धनव्ययः।
न साध्यं सर्वसाध्वीनां व्रतमेतत् त्रिलोचन ॥ ९० ॥
स्वयं गोलोकनाथश्च पुण्यकस्य प्रभावतः।
पार्वतीगर्भजातश्च तव पुत्रो भविष्यति ॥ ९१ ॥
स्वयं देवगणानाञ्च यस्मादीशः कृपानिधिः।
गणेश इति विख्यातो भविष्यति जगत्त्रये ॥ ९२ ॥
यस्य स्मरणमात्रेण विघ्ननिघ्नं भवेद् ध्रुवम्।
जगतां हेतुना तेन विघ्ननिघ्नाभिधो विभुः ॥ ९३ ॥
नानाविधानि द्रव्याणि यस्माद्देयानि पुण्यके।
भुक्त्वा लम्बोदरत्वञ्च तेन लम्बोदरः स्मृतः ॥ ९४ ॥
शनिदृष्ट्या शिरश्छेदाद्गजवक्त्रेण योजितः।
गजाननः शिशुस्तेन निश्चयः केन वार्य्यते ॥ ९५ ॥
परशुना परशुरामस्य यदेकदन्तखण्डनम्।
भविष्यति निश्चयेन चैकदन्ताभिधः शिशुः ॥ ९६ ॥
पूज्यश्च सर्वदेवानामस्माकं जगतां विभुः।
सर्वाग्रे पूजनन्तस्य भविता मद्वरेण वै ॥ ९७ ॥
पूजान्तु सर्वदेवानामग्रे संपूज्य तं जनः।
पूजाफलमवाप्नोति निर्विघ्नेन ह्यन्यथा ॥ ९८ ॥

गणेशञ्च दिनेशञ्च विष्णुं शम्भुं हुताशनम् ।
दुर्गामेतान् सन्निषेव्य पूजयेद्देवतान्तरम् ॥ ९९ ॥
गणेशपूजने विघ्ननिर्विघ्नं जगतां भवेत् ।
निर्व्याधिः सूर्य्यपूजायां शुचिः श्रीविष्णुपूजने ॥१००॥
मोक्षश्च पापनाशश्च यशश्चैश्वर्य्यवर्द्धनम् ।
तत्त्वज्ञानसुतप्तानां वीजं शङ्करपूजनम् ॥ १०१ ॥
स्वबुद्धिशुद्धिजननं कीर्त्तितं वह्निपूजनम् ।
विधिसंस्कृतवह्नेस्तु ज्ञानमृत्युं लभेन्नरः ॥ १०२ ॥
दाता भोक्ता च भवति शङ्कराग्निनिषेवणात् ।
हरिभक्तिप्रदश्चैव परं दुर्गार्च्चनं शिवम् ॥ १०३ ॥
विपरीतं त्रिजगतामेतेषां पूजनं विना ।
एवं क्रमो महादेव कल्पे कल्पेऽस्ति निश्चितम् ॥१०४॥
एते शश्वद्विद्यमाना नित्याः सृष्टिपरायणाः ।
आविर्भावतिरोभावौ चैतेषामीश्वरेच्छया ॥ १०५ ॥
इत्युक्ता श्रीहरिस्तत्र विरराम सभातले ।
प्रहृष्टा देवता विप्राः पार्व्वत्या सह शङ्करः ॥ १०६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे व्रताद्याग्रहणं
नाम षष्ठोऽध्यायः ।

——

## सप्तमोऽध्यायः ।

—॰—

नारायण उवाच ।

हरेराज्ञां समादाय हरः प्रहृष्टमानसः ।
उवाच पार्वतीं प्रीत्या हरिसंलापमङ्गलम् ॥ १ ॥
शिवाज्ञाञ्च समादाय शिवा प्रहृष्टमानसा ।
वाद्यञ्च वादयामास मङ्गलं मङ्गलव्रत ॥ २ ॥
सुस्नाता सुदती शुद्धा बिभ्रती धौतवाससी ।
संस्थाप्य रत्नकलसं शुक्लधान्योपरिस्थितम् ॥ ३ ॥
आम्रपल्लवसंयुक्तं फलाक्षतसुशोभितम् ।
चन्दनागुरुकस्तूरीकुङ्कुमेन विभूषितम् ॥ ४ ॥
रत्नासनस्था रत्नाढ्या रत्नोद्भवसुता सती ।
रत्नसिंहासनस्थांश्च संपूज्य मुनिपुङ्गवान् ॥ ५ ॥
रत्नसिंहासनस्थञ्च संपूज्य च पुरोहितम् ।
चन्दनागुरुकस्तूरी रत्नभूषणभूषितम् ॥ ६ ॥
संस्थाप्य पुरतो भक्त्या दिक्पालान् रत्नभूषितान् ।
देवान्नरांश्च नागांश्च समर्च्य विधिबोधितम् ॥ ७ ॥
समर्च्य परया भक्त्या ब्रह्मविष्णुमहेश्वरान् ।
चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितान् ॥ ८ ॥
वह्निशुद्धांशुकैः रत्नै रुद्रलभूषणेन च ।
पूजाहंद्रव्यैर्विविधैः पूजितान् पुण्यकै मुने ।
समारेभे व्रतं देवी स्वस्तिवाचनपूर्वकम् ॥ ९ ॥

आवाह्याभीष्टदेवं तं श्रीकृष्णं मङ्गले घटे ।
भक्त्या ददौ क्रमेणैव चोपचाराणि षोड़श ॥ १० ॥
यानि व्रते विधेयानि देयानि विविधानि च ।
प्रददौ तानि सर्वाणि प्रत्येकं फलदानि च ॥ ११ ॥
व्रतोक्तमुपहारञ्च दुर्लभं भुवनत्रये ।
तच्च सर्वं ददौ भक्त्या सुव्रते सुव्रता सती ॥ १२ ॥
दत्त्वा सर्वाणि द्रव्याणि वेदमन्त्रेण सा सती ।
होमञ्चकारयामास त्रिलक्षं तिलसर्पिषा ।
ब्राह्मणान् भोजयामास देवानतिथिपूजितान् ॥ १३
कर्त्तव्यमेव कर्त्तव्ये सुव्रते सुव्रता सती ।
प्रत्यहं सावधानञ्च चकार पूर्णवत्सरम् ॥ १४ ॥
समाप्तिदिवसे विप्रस्तामुवाच पुरोहितः ।
सुव्रते सुव्रते मह्यं देहीति पतिदक्षिणाम् ॥ १५ ॥
श्रुत्वा पुरोहितोक्तं सा विलप्य सुरसंसदि ।
मूर्च्छां प्राप महासाध्वी मायामोहितचेतसा ॥ १६ ॥
तां ते च मूर्च्छितां दृष्ट्वा प्रहस्य मुनिपुङ्गवाः ।
शङ्करं प्रेषयामास ब्रह्मा विष्णुश्च नारद ॥ १७ ॥
संप्रेरितः सभासद्भिः शिवां बोधयितुं तदा ।
शिवः समुद्यमञ्चक्रे प्रवक्तुं वदतां वरः ॥ १८ ॥

श्रीमहादेव उवाच ।

उत्तिष्ठ भद्रे भद्रं ते भविष्यति न संशयः ।
साम्प्रतं चेतनं कृत्वा मदीयं वचनं शृणु ॥ १९ ॥
शिवः शिवां तामित्युक्त्वा शुष्ककण्ठौष्ठतालुकाम् ।
वचसि स्थापयामास कारयामास चेतनाम् ॥ २० ॥

हितं सत्यं मितं सर्वं परिणामसुखावहम् ।
यशस्करञ्च फलदं प्रवक्तुमुपचक्रमे ॥ २१ ॥
शृणु देवि प्रवक्ष्यामि यद्वेदे न निरूपितम् ।
सर्वसम्मतमिष्टञ्च धर्मार्थं धर्म्मसंसदि ॥ २२ ॥
सर्वेषां कर्म्मणां देवि सारभूता च दक्षिणा ।
यशोदा फलदा नित्यं धर्म्मिष्ठे धर्म्मकर्म्मणि ॥२३॥
दैवं वा पैत्रकं वापि नित्यं नैमित्तिकं प्रिये ।
यत् कर्म्म दक्षिणाहीनं तत् सर्वं निष्फलं भवेत् ।
दाता च कर्म्मणा तेन कालसूत्रं व्रजेद् ध्रुवम् ॥२४॥
अयान्ते दैन्यमाप्नोति शत्रुणा परिपीड़ितः ।
दक्षिणा विप्रमुद्दिश्य तत् कालन्तु न दीयते ॥ २५ ॥
तन्मुहूर्त्ते व्यतीते तु दक्षिणा द्विगुणा भवेत् ।
चतुर्गुणा दिनातीते पक्षे शतगुणा भवेत् ॥ २६ ॥
मासे पञ्चशतगुणा षण्मासे तच्चतुर्गुणा ।
संवत्सरे व्यतीते तु तत्कर्म्म निष्फलं भवेत् ॥ २७ ॥
दाता च नरकं याति यावद्वर्षसहस्रकम् ।
पुत्त्रपौत्त्रधनैश्वर्य्यं क्षयमाप्नोति पातकात् ।
धर्म्मो नष्टो भवेत्तस्य धर्म्महीने च कर्म्मणि ॥ २८ ॥

श्रीविष्णुरुवाच

रक्ष स्वधर्मं धर्मिष्ठे धर्मज्ञे धर्मकर्मणि ।
सर्वेषाञ्च भवेद्रक्षा स्वधर्मपरिपालने ॥ २९ ॥

ब्रह्मोवाच ।

यश्च केन निमित्तेन न धर्मं परिरक्षति ।
धर्मे नष्टे च धर्मज्ञे तस्य धर्मो विनश्यति ॥ ३० ॥

धर्म्म उवाच ।

मां रक्ष यत्नतः साध्वि प्रदाय पतिदक्षिणाम् ।
मयि स्थिते महासाध्वि सर्वं भद्रं भविष्यति ॥ ३१ ॥

देवा ऊचुः ।

धर्मं रक्ष महासाध्वि कुरु पूर्णं व्रतं सति ।
वयं तव व्रते पूर्णे कुर्मस्ते पूर्णमानसम् ॥ ३२ ॥

मुनय ऊचुः ।

कृत्वा साध्वि पूर्णहोमं देहि विप्राय दक्षिणाम् ।
स्थितेष्वस्मासु धर्मज्ञे किमभद्रं भविष्यति ॥ ३३ ॥

सनत्कुमार उवाच ।

शिवे शिवं देहि मह्यं न चेद्व्रतफलं त्यज ।
सुचिरं सञ्चितस्यापि स्वात्मनस्तपसः फलम् ॥ ३४ ॥
कर्मण्यदक्षिणे साध्वि यागस्याहन्तु तत्फलम् ।
प्राप्स्यामि यजमानस्य संपूर्णकर्मणः फलम् ॥ ३५ ॥

पार्वत्युवाच ।

किं कर्म्मणा मे देवेशा किं मे दक्षिणया मुने ।
किं पुत्रेण च धर्मेण यत्र भर्त्ता च दक्षिणा ॥ ३६ ॥
वृक्षार्चने फलं किं वै यदि भूमिर्न चार्च्यते ।
गते च कारणे कार्य्यं कुतः शस्यं कुतः फलम् ॥ ३७ ॥
प्राणा स्त्यक्ताः स्वेच्छया चेद्देहेन किं प्रयोजनम् ।
दृष्टिशक्तिविहीनेन चक्षुषा किं प्रयोजनम् ॥ ३८ ॥
शतपुत्रसमः स्वामी साध्वीनाञ्च सुरेश्वराः ।
यदि भर्त्ता व्रते देयः किं व्रतेन सुतेन वा ॥ ३९ ॥
भर्त्तुरंशश्च तनयः केवलं भर्त्तृमूलकः ।

यत्र मूलं भवेद् भ्रष्टं तद्‌शाखिन्यश्च निष्फलम् ॥ ४० ॥

श्रीविष्णुरुवाच ।

पुत्त्रादपि परः स्वामी धर्मश्च स्वामिनः परः ।
नष्टे धर्मे च धर्मिष्ठे स्वामिना किं सुतेन वा ॥ ४१ ॥

ब्रह्मोवाच ।

स्वामिनश्च परो धर्मो धर्मात् सत्यञ्च सुव्रते ।
सत्यं सङ्कल्पितं कर्म न तु भ्रष्टं कुरु व्रतम् ॥ ४२ ॥

पार्व्वत्युवाच ।

निरूपितश्च वेदेषु स्वंशब्दो धनवाचकः ।
तद् यस्यास्तीति स स्वामी वेदज्ञ शृणु सद्वचः ॥ ४३ ॥
तस्य दाता सदा स्वामी न च स्वं स्वामिनो भवेत् ।
अहो व्यवस्था भवतां वेदज्ञानामबोधता ॥ ४४ ॥

धर्म्म उवाच ।

पत्नीं विनान्यं स्वं साध्वि स्वामिनं दातुमक्षमा ।
दम्पती ध्रुवमेकाङ्गौ द्वयोर्दाता च द्वौ समौ ॥ ४५ ॥

पार्व्वत्युवाच ।

पिता ददाति जामात्रे स च गृह्णाति तत्सुताम् ।
न श्रुतं विपरीतञ्च श्रुतौ श्रुतिपरायणाः ॥ ४६ ॥

देवा ऊचुः ।

बुद्धिस्वरूपा त्वं दुर्गे बुद्धिमन्तो वयं त्वया ।
वेदज्ञे ऽर्थवादेषु के वा त्वां जेतुमीश्वराः ॥ ४७ ॥
निरूपिता पुण्यकेतु व्रते स्वामी च दक्षिणा ।
श्रुतौ श्रुतो यः स धर्म्मो विपरीतो ह्यधर्म्मकः ॥ ४८ ॥

पार्वत्युवाच ।

केवलं वेदमाश्रित्य कः करोति विनिर्णयम् ।
बलवान् लौकिको वेदाल्लोकाचारञ्च कस्त्यजेत् ॥ ४९ ॥
वेदे प्रकृतिपुंसोश्च गरीयान् पुरुषो ध्रुवम् ।
निबोधत सुराः प्रज्ञा बालाहं कथयामि किम् ॥ ५० ॥

बृहस्पतिरुवाच ।

न पुमांसं विना सृष्टिर्न साध्वि प्रकृतिं विना ।
श्रीकृष्णश्च द्वयोः स्रष्टा समौ प्रकृतिपुरुषौ ॥ ५१ ॥

पार्वत्युवाच ।

यः कृष्णः स्रष्टा सर्वेषां सोऽंशेन सगुणः पुमान् ।
पुमान् गरीयान् प्रकृतेस्तथापि न ततश्च सा ॥ ५२ ॥
एतस्मिन्नन्तरे देवा मुनयस्तत्र संसदि ।
रत्नेन्द्रसारनिर्माणमाकाशे ददृशूरथम् ॥ ५३ ॥
पार्षदैश्च परिवृतं सर्वैः श्यामैश्चतुर्भुजैः ।
वनमालापरिवृतै रत्नभूषणभूषितैः ।
अवरुह्य मुदा यानादाजगाम सभातलम् ॥ ५४ ॥
तुष्टुवुस्तं सुरेन्द्रास्ते देवं वैकुण्ठवासिनम् ।
शङ्खचक्रगदापद्मधरमीशञ्चतुर्भुजम् ॥ ५५ ॥
लक्ष्मीसरस्वतीकान्तं शान्तं तं सुमनोहरम् ।
सुखदृश्यमभक्तानामदृश्यं कोटिजन्मभिः ॥ ५६ ॥
कोटिकन्दर्पलीलाभं कोटिचन्द्रसमप्रभम् ।
अमूल्यरत्नरचितं चारुभूषणभूषितम् ॥ ५७ ॥
सेव्यं ब्रह्मादिदेवैश्च सेवकैः सन्ततं स्तुतम् ।
तद्भासया च प्रच्छन्नैर्वेष्टितञ्च सुरर्षिभिः ॥ ५८ ॥

वासयामास तं ते च रत्नसिंहासने वरे।
तं प्रणेमुश्च शिरसा ब्रह्मविष्णुशिवादयः॥ ५९॥
सम्पुटाञ्जलयः सर्वे पुलकाङ्गाश्रुलोचनाः॥ ६०॥
सस्मितस्तांश्च पप्रच्छ सर्वं मधुरया गिरा।
प्रबोधितः सुबोधज्ञः प्रवक्तुमुपचक्रमे॥ ६१॥

श्रीनारायण उवाच

सह बुद्ध्या बुद्धिमन्तो न वक्तुमुचितं सुराः।
सर्वे शक्त्या यया विश्वे शक्तिमन्तो हि जीविनः॥६२॥
ब्रह्मादितृणपर्य्यन्तं सर्वं प्राकृतिकं जगत्।
सत्यं सत्यं विना साञ्च मया शक्तिः प्रकाशिता॥ ६३॥
आविर्भूता च सा मत्तः सृष्टौ देवी मदिच्छया।
तिरोहिता च सा शेषे सृष्टिसंहरणे मयि॥ ६४॥
सृष्टिकर्त्री च प्रकृतिः सर्वेषां जननी परा।
मम तुल्या च मन्माया तेन नारायणी स्मृता॥ ६५॥
सुचिरं तपसा तप्तं शम्भुना ध्यायता च माम्।
तेन तस्मै मया दत्ता तपसां फलरूपिणी॥ ६६॥
व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च।
स्वयं व्रतानां तपसां फलदात्री जगत्त्रये॥ ६७॥
मायया मोहिताः सर्वे किमस्या वा स्तवं व्रतम्।
साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः॥ ६८॥
सुरेश्वरा मदंशाश्च ब्रह्मविष्णुमहेश्वराः।
कलाः कलांशरूपाश्च जीविनश्च सुरादयः॥ ६९॥
मृदा विना घटं कर्त्तुं कुलालश्च यथाक्षमः।
विना स्वर्णं स्वर्णकारः कुण्डलं कर्त्तुमक्षमः।

विना शक्त्या तथाहञ्च स्वसृष्टिं कर्त्तुमक्षमः ॥ ७० ॥
शक्तिप्रधाना सृष्टिश्च सर्वदर्शनसम्मता ।
अहमात्माहि निर्लिप्तोऽदृश्यः साक्षी च देहिनाम् ॥७१॥
देहाः प्राकृतिकाः सर्वे नश्वराः पाञ्चभौतिकाः ।
अहं नित्यः शरीरी च भानुविग्रहविग्रहः ॥ ७२ ॥
सर्वाधारा च प्रकृतिः सर्वात्माहं जगत्सु च ॥ ७३ ॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः ।
पञ्च प्राणाः स्वयं विष्णु बुद्धिः प्रकृतिरीश्वरी ॥ ७४ ॥
मेधा निद्रादयश्चैताः सर्वाश्च प्रकृतेकलाः ।
सा च शैलेन्द्रकन्यैषा इति वेदे निरूपितम् ॥ ७५ ॥
अहं गोलोकनाथश्च वैकुण्ठेशः सनातनः ।
गोपीगोपैः परिवृतस्तत्रैव द्विभुजः स्वयम् ।
चतुर्भुजोऽत्र देवेशो लक्ष्मीशः पार्षदैर्वृतः ॥ ७६ ॥
ऊर्द्धं परञ्च वैकुण्ठात् पञ्चाशत्कोटियोजने ।
ममाश्रयश्च गोलोके यत्राहं गोपिकापतिः ॥ ७७ ॥
व्रताराध्यो हि द्विभुजः स च तत्फलदायकः ।
यद्रूपं चिन्तयेद् यो हि तञ्च तत्फलदायकम् ॥ ७८ ॥
व्रतं पूर्णं कुरु शिवे शिवं दत्वा च दक्षिणाम् ।
पुनः समुचितं मूल्यं दत्वा नाथं ग्रहीष्यसि ॥ ७९ ॥
विष्णुदेहा यथा गावो विष्णुदेहस्तथा शिवः ।
द्विजाय दत्वा गोमूल्यं गृहाण स्वामिनं शुभे ॥ ८० ॥
यज्ञपत्नीं यथा दातुं क्षमः स्वामी सदैव तु ।
तथा सा स्वामिनं दातुमीश्वरीति श्रुतेर्मतम् ॥ ८१ ॥
इत्युक्ता स सभामध्ये तत्रैवान्तरधीयत ।

हृष्टास्ते सा च संहृष्टा दक्षिणां दातुमुद्यताः ॥ ८२ ॥
कृत्वा शिवा पूर्णहोमं सा शिवं दक्षिणां ददौ ।
स्वस्तीत्युक्त्वा च जग्राह कुमारो देवसंसदि ॥ ८३ ॥
उवाच दुर्गा संत्रस्ता शुष्ककण्ठोष्ठतालुका ।
पुटाञ्जलियुता विप्रं हृदयेन विदूयता ॥ ८४ ॥

पार्वत्युवाच ।

गोमूल्यं मत्पतिसममिति वेदे निरूपितम् ।
गवां लक्षं प्रदास्यामि देहि मत्स्वामिनं द्विज ॥ ८५ ॥
तदा दास्यामि विप्रेभ्यो दानानि विविधानि च ।
आत्महीना हि देहश्च किं कर्म्म कर्त्तुमीश्वरः ॥ ८६ ॥

सनत्कुमार उवाच ।

गवां लक्षेण मे देवि विप्रस्य किं प्रयोजनम् ।
दत्त्वा मूल्यरत्नस्य गवां प्रत्यर्पणेन च ॥ ८७ ॥
स्वस्य स्वस्य स्वयं कर्त्ता लोकः सर्वो जगत्त्रये ।
कर्त्तुरेवेप्सितं कर्म भवेत् किं वा परेच्छया ॥ ८८ ॥
दिगम्बरं पुरः कृत्वा भ्रमिष्यामि जगत्त्रयम् ।
बालकानां बालिकानां समूहस्मितकारणम् ॥ ८९ ॥
इत्युक्त्वा ब्रह्मणः पुत्रो गृहीत्वा शङ्करं मुने ।
सन्निधौ वासयामास तेजस्वी देवसंसदि ॥ ९० ॥
दृष्ट्वा शिवं गृह्यमाणं कुमारेण च पार्वती ।
समुद्यता तनुं त्यक्तुं शुष्ककण्ठोष्ठतालुका ॥ ९१ ॥
विचिन्त्य मनसा साध्वीत्येवमेव दुरत्ययम् ।
न दृष्टोऽभीष्टदेवश्च न च प्राप्तं फलं व्रत ॥ ९२ ॥
एतस्मिन्नन्तरे देवाः पार्वतीसहितास्तदा ।

सद्यो दृष्टशुराकाशे तेजसां निकरं परम् ॥ ९३ ॥
कोटिसूर्य्यप्रभोद्भ्वञ्च प्रज्वलञ्च दिशोदश ।
कैलासशैलं पुरतः सर्वदेवादिभिर्युतम् ॥ ९४ ॥
सर्वान् कुर्वन्तं प्रच्छन्नं विस्तीर्णमण्डलाकृतिम् ।
दृष्ट्वा तञ्च भगवतस्तुष्टुवुस्ते क्रमेण च ॥ ९५ ॥

विष्णुरुवाच ।

ब्रह्माण्डानि च सर्वाणि यल्लोमविवरेषु च ।
सोऽयं ते षोड़शांशश्च के वयं यो महाविराट् ॥ ९६ ॥

ब्रह्मोवाच ।

वेदोपयुक्तं दृश्यं यत्प्रत्यक्षं द्रष्टुमीश्वर ।
स्तोतुं तद्वर्णितुमहं शक्तः किं स्तौमि तत्परः ॥ ९७ ॥

श्रीमहादेव उवाच ।

ज्ञानाधिष्ठातृदेवोऽहं स्तौमि ज्ञानपरञ्च किम् ।
सर्वानिर्वचनीयं यं तं त्वां स्वेच्छामयं विभुम् ॥ ९८ ॥

धर्म उवाच ।

अदृश्यमवतारेषु यदृश्यं सर्वजन्तुभिः ।
किं स्तौमि तेजोरूपन्तद्भक्तानुग्रहविग्रहम् ॥ ९९ ॥

देवा ऊचुः ।

के वयं त्वत्कलांशाश्च किंवा त्वां स्तोतुमीश्वराः ।
स्तोतुं न शक्ता वेदा यं न च शक्ता सरस्वती ॥ १०० ॥

मुनय ऊचुः ।

वेदान् पठित्वा विद्वांसो वयं किं वेदकारणम् ।
स्तोतुमीशा न वाणी च त्वाञ्च वाङ्मनसोः परम् ॥ १०१

सरस्वत्युवाच ।

वागधिष्ठातृदेवीं मां वदन्ति वेदवादिनः ।
किञ्चिन्न शक्ता त्वां स्तोतु महो वाङ्मनसोः परम् ॥१०२॥

सावित्री उवाच ।

वेदप्रसूरहं नाथ सृष्टा त्वत्कलया पुरा ।
किं स्तौमि स्त्रीस्वभावेन सर्वकारणकारणम् ॥ १०३ ॥

लक्ष्मीरुवाच ।

त्वदंशविष्णुकान्ताहं जगत्पोषणकारिणी ।
किं स्तौमि त्वत्कलासृष्टा जगतां वीजकारणम् ॥१०४॥

हिमालय उवाच ।

हसन्ति सन्तो मां नाथ कर्मणा स्थावरं परम् ।
स्तोतु समुद्यतं क्षुद्रः किं स्तौमि स्तोतुमक्षमः ॥१०५॥
क्रमेण सर्वे तं स्तुत्वा देवा विरमुर्मुने ।
देव्यश्च मुनयः सर्वे पार्वती स्तोतुमुद्यता ॥ १०६ ॥
धौतवस्त्रजटाभारं बिभ्रती सुव्रता व्रते ।
प्रेरिता परमात्मानं व्रताराध्यं शिवेन च ॥ १०७ ॥
ज्वलदग्निशिखारूपा तेजोमूर्त्तिमती सती ।
तपसां फलदा माता जगतां सर्वकर्मणाम् ॥ १०८ ॥

पार्वत्युवाच ।

त्वञ्च जानासि मां भद्र नाहं त्वां ज्ञातुमीश्वरी ।
केवा जानन्ति वेदज्ञा वेदा वा वेदकारकाः ॥ १०९ ॥
त्वदंशास्त्वां न जानन्ति कथं ज्ञास्यन्ति त्वत्कलाः ।
त्वञ्चापि तत्त्वं जानासि किमन्ये ज्ञातुमीश्वराः ॥११०॥
सूक्ष्मात् सूक्ष्मतमोऽव्यक्तः स्थूलात् स्थूलतमो महान् ।

विश्वस्त्वं विश्वरूपश्च विश्वबीजं सनातनः ॥ १११
कार्य्यं त्वं कारणं त्वञ्च कारणानाञ्च कारणम् ।
तेजःस्वरूपो भगवान् निराकारो निराश्रयः ॥ ११२ ॥
निर्लिप्तो निर्गुणः साक्षी स्वात्मारामः परात्परः ।
प्रकृतीशो विराड्बीजं विराड्रूपस्त्वमेव च ।
सगुणस्त्वं प्राकृतिकः कलया सृष्टिहेतवे ॥ ११३ ॥
प्रकृतिस्त्वं पुमांस्त्वञ्च वेदान्यो न क्वचिद्भवेत् ।
जीवस्त्वं साक्षिणो भोगी स्वात्मनः प्रतिबिम्बकः ॥११४
कर्म त्वं कर्मबीजं त्वं कर्मणां फलदायकः ।
ध्यायन्ति योगिनस्तेजस्त्वदीयमशरीरिणम् ।
केचिच्चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम् ॥ ११५ ॥
वैष्णवाश्चैव साकारं कमनीयं मनोहरम् ।
शङ्खचक्रगदापद्मधरं पीताम्बरं परम् ॥ ११६ ॥
द्विभुजं कमनीयञ्च किशोरं श्यामसुन्दरम् ।
शान्तं गोपाङ्गनाकान्तं रत्नभूषणभूषितम् ॥११७॥
एवं तेजस्विनं भक्ताः सेवन्ते सन्ततं मुदा ।
ध्यायन्ति योगिनो यत्तत् कुतस्तेजस्विनं विना ॥११८॥
तत्तेजो बिभ्रतां देव देवानां तेजसा पुरा ।
आविर्भूता सुराणाञ्च वधाय ब्रह्मणः स्तुता ॥ ११९ ॥
नित्या तेजःस्वरूपाहं विधृत्य विग्रहं विभो ।
स्त्रीरूपं कमनीयञ्च विधाय समुपस्थिता ॥ १२० ॥
मायया तव मायाहं मोहयित्वा सुरान् पुरा ।
निहत्य सर्वान् शैलेन्द्र मगमं तं हिमालयम् ॥ १२१ ॥
ततोऽहं संस्तुता देवै स्तारकाक्षेण पीड़ितैः ।
अभवं दक्षजायायां शिवस्त्री भवजन्मनि ॥ १२२ ॥

त्यक्त्वा देहं दक्षयज्ञे शिवाहं शिवनिन्दया।
अभवं शैलजायायां शैलाधीशस्य कर्म्मणा॥ १२३॥
अनेकतपसा प्राप्तः शिवश्चात्रापि जन्मनि।
पाणिं जग्राह मे योगी प्रार्थितो ब्रह्मणा विभुः॥ १२४॥
शृङ्गारजञ्च तत्तेजो नालभम् देवमायया।
स्तौमि त्वामेव तेनेश पुत्त्रदुःखेन दुःखिता॥ १२५॥
व्रते भवद्विधं पुत्त्रं लब्धुमिच्छामि साम्प्रतम्।
देवेन विहिता वेदे साङ्गे स्वस्वामिदक्षिणा॥ १२६॥
श्रुत्वा सर्वं कृपासिन्धो कृपां मां कर्त्तुमर्हसि।
इत्युक्त्वा पार्वती तत्र विरराम च नारद॥ १२७॥
भारते पार्वतीस्तोत्रं यः शृणोति सुसंयतः।
सत्पुत्रं लभते नूनं विष्णुतुल्यपराक्रमम्॥ १२८॥
संवत्सरं हविष्याशी हरिमभ्यर्च्च्य भक्तितः।
सुपुण्यकव्रतफलं लभते नात्र संशयः॥ १२९॥
विष्णुस्तोत्रमिदं ब्रह्मन् सर्वसम्पत्तिवर्द्धनम्।
सुखदं मोक्षदं सारं स्वामिसौभाग्यवर्द्धनम्॥ १३०॥
सर्वसौन्दर्य्यवीजञ्च यशोराशिविवर्द्धनम्।
हरिभक्तिप्रदं तत्त्वज्ञानबुद्धिविवर्द्धनम्॥ १३१॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे पुण्यकव्रते पार्वतीकृतं श्रीकृष्ण स्तोत्रकथनं नाम सप्तमोऽध्यायः।

———

# अष्टमोऽध्यायः ।

—o—

नारायण उवाच ।

पार्वतीस्तवनं श्रुत्वा श्रीकृष्णः करुणानिधिः ।
स्वरूपं दर्शयामास सर्वादृश्यं सुदुर्लभम् ॥ १ ॥
स्तुत्वा देवी ध्यानलग्ना कृष्णैकतानमानसा ।
ददर्श तेजसां मध्ये स्वरूपं स्मारमोहनम् ॥ २ ॥
सद्रत्नसारनिर्माणे हीरकेण परिष्कृते ।
युक्ते माणिक्यमालाभी रत्नपूर्णे मनोरथे ॥ ३ ॥
वह्निसंशुद्धपीतांशुधरं वंशीकरं परम् ।
वनमालागलं श्यामं रत्नभूषणभूषितम् ॥ ४ ॥
किशोरवयसं वेशविचित्रं चन्दनाङ्कितम् ।
चारुस्मितास्यमाढ्यं तत् शारन्देन्दुविनिन्दकम् ॥ ५ ॥
मालतीमाल्यसंयुक्तमयूरपुच्छचूड़कम् ।
गोपाङ्गनापरिवृतं राधावक्षःस्थलोज्ज्वलम् ॥ ६ ॥
कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ।
अतीव हृष्टं सर्वेष्टं भक्तानुग्रहकारकम् ॥ ७ ॥
दृष्ट्वा रूपं रूपवती पुत्रं तदनुरूपकम् ।
मनसा वरयामास वरं संप्राप्य तत्क्षणम् ॥ ८ ॥
वरं दत्त्वा वरेशस्तु यद्यन्मनसि वाञ्छितम् ।
दत्त्वाभीष्टं सुरेभ्यश्च तत्तेजोऽन्तरधीयत ॥ ९ ॥
कुमारं बोधयित्वा तु देवा देव्यै दिगम्बरम् ।

ददु निरूपमं तत्र प्रहृष्टायै कृपान्विताः ॥ १० ॥
ब्राह्मणेभ्यो ददौ दुर्गा रत्नानि विविधानि च ।
सुवर्णानि च भिक्षुभ्यो वन्दिभ्यो विप्रनन्दिता ॥ ११ ॥
ब्राह्मणान् भोजयामास देवांश्च पर्वतां स्तथा ।
शङ्करं पूजयामास चोपहारैरनुत्तमैः ॥ १२ ॥
दुन्दुभिं वादयामास कारयामास मङ्गलम् ।
सङ्गीतं गाययामास हरिसम्बन्धि सुन्दरम् ॥ १३ ॥
व्रतं समाप्य सा दुर्गा दत्त्वा दानानि सस्मिता ।
सर्वांश्च भोजयित्वा तु बुभुजे स्वामिना सह ॥ १४ ॥
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ।
क्रमात् प्रदाय सर्वेभ्यो बुभुजे तेन कौतुकात् ॥ १५ ॥
पयःफेननिभां शय्यां रम्यां सद्रत्ननिर्मिताम् ।
पुष्पचन्दनसंयुक्तां कस्तूरीकुङ्कुमान्विताम् ।
रहसि स्वामिना सार्द्धं सुष्वाप परमेश्वरी ॥ १६ ॥
कैलासस्यैकदेशे च रम्ये चन्दनकानने ।
सुगन्धिकुसुमाक्तेन वायुना सुरभीकृते ॥ १७ ॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते ।
विजहार सुरसिका तत्र तेन सहाम्बिका ॥ १८ ॥
रेतः पतनकाले च स विष्णुर्विष्णुमायया ।
विधाय विप्ररूपन्तु आजगाम रतेर्गृहम् ॥ १९ ॥
रुक्षवन्तं विना तैलं कुचेलं भिक्षुकं मुने ।
अतीव शुक्तदशनं तृष्णया परिपीड़ितम् ॥ २० ॥
अतीव कृशगात्रञ्च विभ्रत्तिलकमुज्ज्वलम् ।
वहुकाकुस्वरं दीनं दैन्यात् कृतसितमूर्त्तिमत् ॥ २१ ॥

आजुहाव महादेवमतिवृद्धोऽन्नयाचकः ।
दण्डावलम्बनं कृत्वा रतिद्वारेऽतिदुर्बलः ॥ २२ ॥

ब्राह्मण उवाच ।

किङ्करोषि महादेव रक्ष मां शरणागतम् ।
सप्तरात्रिव्रतेऽतीते पारणाकाङ्क्षिणं क्षुधा ॥ २३ ॥
किङ्करोषि महादेव हे तात करुणानिधे ।
पश्य वृद्धं जराग्रस्तं तृष्णया परिपीड़ितम् ॥ २४ ॥
मातरुत्तिष्ठ मामन्नं प्रयच्छ वासितं जलम् ।
अनन्तरत्नोद्भवजे रक्ष मां शरणागतम् ॥ २५ ॥
मातर्मातर्जगन्मातरेहि नाहं जगद्बहिः ।
सीदामि तृष्णया कस्मात् स्थितायामात्ममातरि ॥२६॥
इति काकुस्वरं श्रुत्वा शिवस्योत्तिष्ठतो मुने ।
पपात वीर्य्यं शय्यायां न योनौ प्रकृतेस्तदा ॥ २७ ॥
उत्तस्थौ पार्वती त्रस्ता सूक्ष्मवस्त्रं विधाय च ।
आजगाम रतिद्वारं पार्वत्या सह शङ्करः ॥ २८ ॥
ददर्श ब्राह्मणं दीनं जरया परिपीड़ितम् ।
वृद्धं लुलितगात्रञ्च विभ्रतं दण्डमानतम् ॥ २९ ॥
तपस्विनमशान्तञ्च शुष्ककण्ठोष्ठतालुकम् ।
कुर्वन्तं परया भक्त्या प्रणामं स्तवनं तयोः ॥ ३० ॥
श्रुत्वा तद्वचनं तत्र नीलकण्ठः सुधोत्तमम् ।
उवाच परया प्रीत्या प्रसन्नस्तं प्रहस्य च ॥ ३१ ॥

शङ्कर उवाच ।

गृहन्ते कुत्र विप्रर्षे वद वेदविदांवर ।
किन्नाम भवतः क्षिप्रं ज्ञातुमिच्छामि साम्प्रतम् ॥३२॥

पार्व्वत्युवाच।

आगतोऽसि कुतो विप्र मम भाग्यादुपस्थितः।
अद्य मे सफलं जन्म ब्राह्मणो मद्गृहेऽतिथिः॥ ३३ ॥
अतिथिः पूजितो येन त्रिजगत्तेन पूजितम्।
तत्रैवाधिष्ठिता देवा ब्राह्मणा गुरवो द्विज॥ ३४ ॥
तीर्थान्यतिथिपादेषु सन्तिष्ठन्ति निश्चितम्।
तत्पादधौततोयेन मिश्रितानि लभेद् गृही॥ ३५ ॥
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः।
अतिथिः पूजितो येन स्वात्मशक्त्या यथोचितम् ॥३६॥
महादानानि सर्व्वाणि कृतानि तेन भूतले।
अतिथिः पूजितो येन भारते भक्तिपूर्व्वकम् ॥ ३७ ॥
नानाप्रकारपुण्यानि वेदोक्तानि च यानि च।
अन्ये वातिथिसेवायाः कलां नार्हन्ति षोड़शीम् ॥३८॥
अपूजितोऽतिथिर्य्यस्य भवनाद्विनिवर्त्तते।
पितृदेवाग्नयः पश्चाद्गुरवो यान्त्य पूजिताः॥ ३९ ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च।
तानि सर्व्वाणि लभते नाभ्यर्च्यातिथि मीप्सितम्॥ ४०

ब्राह्मण उवाच।

नानासि वेदान् वेदज्ञे वेदोक्तं कुरु पूजनम्
क्षुत्तृड्भ्यां पीड़ितोमातर्व्वचनञ्च श्रुतौ श्रुतम्॥ ४१ ॥
व्याधियुक्तो निराहारो यदा वाऽनशनव्रती।
मनोरथेनोपहारं भोक्तुमिच्छति मानवः॥ ४२ ॥

पार्व्वत्युवाच।

भोक्तुमिच्छसि [illegible] विप्र त्रैलोक्ये चेत् सुदुर्लभम्।

दास्यामि भोक्तुं त्वामद्य मज्जन्म सफलं कुरु ॥ ४३ ॥

ब्राह्मण उवाच ।

व्रते सुव्रतया सर्वमुपहारं समाहृतम् ।
नानाविधं मिष्ट मिष्टं भोक्तुं श्रुत्वा समागतः ॥ ४४ ॥
सुव्रते तव पुत्रोऽहमग्रे मां पूजयिष्यसि ।
दत्त्वा मिष्टानि वस्तूनि त्रैलोक्ये दुर्लभानि च ॥ ४५ ॥
ताताः पञ्चविधाः प्रोक्ता मातरो विविधाः स्मृताः ।
पुत्रः पञ्चविधः साध्वि कथितो वेदवादिभिः ॥ ४६ ॥
विद्यादातान्नदाता च भयत्राता च जन्मदः ।
कन्यादाता च वेदोक्ता नराणां पितरः स्मृताः ॥ ४७ ॥
गुरुपत्नी गर्भधात्री स्तनदात्री पितुः स्वसाः ।
स्वसा मातुः सपत्नी च पुत्रभार्य्यान्नदायिका ॥ ४८ ॥
भृत्यः शिष्यश्च पोष्यश्च वीर्य्यजः शरणागतः ।
धर्मपुत्राश्च चत्वारो वीर्य्यजो धनभागिति ॥ ४९ ॥
क्षुत्तृड्भ्यां पीड़ितो मातर्वृद्धोऽहं शरणागतः ।
साम्प्रतं तव बन्ध्याया अनाथः पुत्र एव च ॥ ५० ॥
पिष्टकं परमान्नञ्च सुपक्वानि फलानि च ।
नानाविधानि पिष्टानि कालदेशोद्भवानि च ॥ ५१ ॥
पक्वान्नं स्वस्तिकं क्षीर मिक्षु मिक्षुविकारकम् ।
घृतं दधि च शाल्यन्नं घृतपक्वञ्च व्यञ्जनम् ॥ ५२ ॥
लड्डुकानि तिलानाञ्च भृष्टान्नैः सगुड़ानि च ।
समाघ्रातानि वस्तूनि सुधया तुल्यकानि च ॥ ५३ ॥
ताम्बूलञ्च वरं रम्यं कर्पूरादि सुवासितम् ।
जलं सुनिर्म्मलं स्वादु द्रव्याण्येतानि वासितम् ॥ ५४

 द्रव्याणि यानि भुक्ता मे चारु लम्बोदरं भवेत् ।
अनन्तरत्नोद्भवजे तानि मह्यं प्रदास्यसि ॥ ५५ ॥
स्वामी ते त्रिजगत्कर्त्ता प्रदाता सर्वसम्पदाम् ।
महालक्ष्मीस्वरूपा त्वं सर्वैश्वर्य्यप्रदायिनी ॥ ५६ ॥
रत्नसिंहासनं रम्य ममूल्यं रत्नभूषणम् ।
वह्निशुद्धांशुकं चारु प्रदास्यसि सुदुर्लभम् ॥ ५७ ॥
सुदुर्लभं हरेर्मन्त्रं हरौ भक्तिं दृढ़ां सति ।
हरिप्रिया हरेः शक्ति स्त्वमेव सर्वदा सदा ॥ ५८ ॥
ज्ञानं मृत्युञ्जयं नाम दातृशक्तिं सुखप्रदाम् ।
सर्वसिद्धिञ्च किं मातरदेयं स्वसुताय च ॥ ५९ ॥
मनः सुनिर्मलं कृत्वा धर्मे तपसि सन्ततम् ।
श्रेष्ठे सर्वं करिष्यामि न कामे जन्महेतुके ॥ ६० ॥
स्वकामात् कुरुते कर्म कर्मणोभोग एव च ।
भोगौ शुभाशुभौ ज्ञेयौ तौ हेतू सुखदुःखयोः ॥ ६१ ॥
दुःखं न कस्माद्भवति सुखं वा जगदम्बिके ।
सर्वं स्वकर्मणो भोगस्तेन तद्विरतो बुधः ॥ ६२ ॥
कर्म निर्मूलयन्त्येव सन्तो हि सततं मुदा ।
हरिभावनबुद्धया तत्तपसा भक्तसङ्गतः ॥ ६३ ॥
इन्द्रियद्रव्यसंयोगसुखं विध्वंसनावधि ।
हरिसंलापरूपञ्च सुखं तत्सर्वकालिकम् ॥ ६४ ॥
हरिस्मरणशीलानां नायुर्याति सतां सति ।
न येषामीश्वरः कालो न च मृत्युञ्जयो ध्रुवम् ॥ ६५ ॥
चिरं जीवन्ति ते भक्ता भारते चिरजीविनः ।
सर्वसिद्धिञ्च विज्ञाय स्वच्छन्दं सर्वगामिनः ॥ ६६ ॥

जातिस्मरा हरेर्भक्ता जानन्ति कोटिजन्मनः ।
कथयन्ति कथां जन्म लभन्ते स्वेच्छया मुदा ॥ ६७ ॥
परं पुनन्ति ते पूतास्तीर्थानि स्वावलीलया ।
पुण्यक्षेत्रेऽत्र सेवायै परार्थञ्च भ्रमन्ति ते ॥ ६८ ॥
वैष्णवानां पदस्पर्शात् सद्यः पूता वसुन्धरा ।
कालं गोदोहनमात्रं तीर्थे यत्र वसन्ति ते ॥ ६९ ॥
गुरोरास्याद्विष्णुमन्त्रः श्रुतौ यस्य प्रविश्यति ।
तं वैष्णवं तीर्थपूतं प्रवदन्ति पुराविदः ॥ ७० ॥
पुरुषाणां शतं पूर्वं मुद्धरन्ति शतं परम् ।
लीलया भारते भक्त्या सोदरान्मातरं तथा ॥ ७१ ॥
मातामहानां पुरुषान् दशपूर्वान् दशापरान् ।
मातुः प्रसूमुद्धरन्ति दारुणात् यमताड़नात् ॥ ७२ ॥
भक्तदर्शनमात्रेण मानवाः प्राप्नुवन्ति ये ।
ते याताः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षिताः ॥ ७३ ॥
न लिप्ताः पातके भक्ताः सन्ततं हरिमानसाः ।
यथाग्नयः सर्वभक्ष्या यथा द्रव्येषु वायवः ॥ ७४ ॥
त्रिकोटिजन्मनो जन्तुः प्राप्नोति जन्म मानवम् ।
प्राप्नोति भक्तसङ्गं स मानुषे कोटिजन्मनः ॥ ७५ ॥
भक्तसङ्गात् भवेत् भक्तेरङ्कुरो जीविनः सति ।
अभक्तदर्शनादेव स च प्राप्नोति शुष्कताम् ॥ ७६ ॥
पुनः प्रफुल्लतां याति वैष्णवालापमात्रतः ।
अङ्कुरश्चाविनाशी च वर्द्धते प्रतिजन्मनि ॥ ७७ ॥
तत्तरो र्वर्द्धमानस्य हरिदास्यं फलं सति ।
परिपक्वे भक्तिपाके पार्षदश्च भवेद्धरेः ॥ ७८ ॥

महति प्रलये नाशो न भवेत्तस्य निश्चितम् ।
सर्वसृष्टेश्च संहारे ब्रह्मलोकस्य ब्रह्मणः ॥ ७९ ॥
तस्मान्नारायणे भक्तिं देहि मामम्बिके सदा ।
न भवेद्विष्णुभक्तिश्च विष्णुमाये त्वया विना ॥ ८० ॥
तद्दत्तं लोकशिक्षार्थं स्वतपस्तवपूजनम् ।
सर्वेषां फलदात्री त्वं नित्यरूपा सनातनी ॥ ८१ ॥
गणेशरूपः श्रीकृष्णः कल्पे कल्पे तवात्मजः ।
त्वत्क्रोड़मागतः चिप्र मित्युक्त्वान्तरधीयत ॥ ८२ ॥
कृत्वान्तर्द्धानमीशश्च बालरूपं विधाय सः ।
जगाम पार्वतीतल्पं मन्दिराभ्यन्तरस्थितम् ॥ ८३ ॥
तल्पस्थे शिववीर्य्ये च मिश्रितः स बभूवह ।
ददर्श गेहशिखरं प्रसूतो बालको यथा ॥ ८४ ॥
शुद्धचम्पकवर्णाभः कोटिचन्द्रसमप्रभः ।
सुखदृश्यः सर्वजनैश्चक्षूरश्मिविवर्द्धकः ॥ ८५ ॥
अतीव सुन्दरतनुः कामदेवविमोहनः ।
मुखं निरूपमं विभ्रच्छारदेन्दुविनिन्दकम् ॥ ८६ ॥
सुन्दरे लोचने विभ्रच्चारुपद्मविनिन्दके ।
ओष्ठाधरपुटं विभ्रत् पक्वविम्वविनिन्दकम् ॥ ८७ ॥
कपालञ्च कपोलञ्च परमं सुमनोहरम् ।
नासाग्रं रुचिरं विभ्रत् खगेन्द्रचञ्चुनिन्दकम् ॥ ८८ ॥
त्रैलोक्येषु निरुपमं सर्वाङ्गं विभ्रदुत्तमम् ।
शयानः शयने रम्ये प्रेरयन् हस्तपादकम् ॥ ८९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे गणेशोत्पत्ति र्नाम अष्टमोऽध्यायः ।

# नवमोऽध्यायः ।

—

नारायण उवाच ।

हरौ तिरोहिते भूते दुर्गा च शङ्करस्तदा ।
ब्राह्मणान्वेषणं कृत्वा बभ्राम परितो मुने ॥ १ ॥

पार्वत्युवाच ।

अयि विप्रेन्द्रातिवृद्ध क्व गतोऽसि क्षुधातुरः ।
हे तात दर्शनं देहि प्राणांश्च रक्ष मे विभो ॥ २ ॥
शिव शीघ्रं समुत्तिष्ठ ब्राह्मणान्वेषणं कुरु ।
क्षणमुन्मनसो रेषः प्रत्यक्षमावयोर्गतः ॥ ३ ॥
अगृहीत्वा गृहात् पूजां गृहिणोऽतिथिरीश्वर ।
यदि याति क्षुधार्त्तश्च तस्य किं जीवनं वृथा ।
पितरस्तत्र गृह्णन्ति पिण्डदानञ्च तर्पणम् ।
तस्याहुतिं न गृह्णन्ति वह्निः पुष्पं जलं सुराः ॥ ५ ॥
हव्यं पुष्पं जलं द्रव्यं मशुचेश्च सुरासमम् ।
अमेध्यसदृशः पिण्डः स्पर्शनं पुण्यनाशनम् ॥ ६ ॥
एतस्मिन्नन्तरे तत्र वाग्बभूवा शरीरिणी ।
कैवल्ययुक्ता सा दुर्गा तां शुश्राव शुचातुरा ॥ ७ ॥
शान्ता भव जगन्मातः स्वसुतं पश्य मन्दिरे ।
कृष्णं गोलोकनाथं तं परिपूर्णतमं परम् ॥ ८ ॥
सुपुण्यकव्रततरोः फलरूपं सनातनम् ।
यत्तेजो योगिनः शश्वत् ध्यायन्ते सन्ततं मुदा ॥ ९ ॥

ध्यायन्ते वेधसा देवा ब्रह्मविष्णुशिवादय: ।
यस्य पूज्यस्य सर्वाग्रे कल्पे कल्पे च पूजनम् ॥ १० ॥
यस्य स्मरणमात्रेण सर्वविघ्नो विनश्यति ।
पुण्यराशिस्वरूपञ्च स्वसुतं पश्य मन्दिरे ॥ ११ ॥
कल्पे कल्पे ध्यायसे यं ज्योतीरूपं सनातनम् ।
पश्य त्वं मुक्तिदं पुत्रं भक्तानुग्रहविग्रहम् ॥ १२ ॥
तव वाञ्छापूर्णवीजं तप: कल्पतरो: फलम् ।
सुन्दरं स्वसुतं पश्य कोटिकन्दर्पनिन्दकम् ॥ १३ ॥
नायं विप्र: क्षुधार्त्तश्च विप्ररूपी जनार्दन: ।
किं वा विलपसे दुर्गे क्व वा वृद्ध: क्वचातिथि: ।
सरस्वतीत्येव मुक्त्वा विरराम च नारद ॥ १४ ॥
त्रस्ता श्रुत्वा कायवाणीं जगाम स्वालयं सती ।
ददर्श बालं पर्य्यङ्के शयानं सस्मितं मुदा ॥ १५ ॥
पश्यन्तं गेहशिखरं शतचन्द्रसमप्रभम् ।
स्वप्रभापटलेनैव द्योतयन्तं महीतलम् ॥ १६ ॥
कुर्वन्तं भ्रमणं तल्पे पश्यन्तं स्वेच्छया मुदा ।
उमेति शब्दं कुर्वन्तं रुदन्तं तं स्तनार्थिनम् ॥ १७ ॥
दृष्ट्वा तमद्भुतरूपं त्रस्ता शङ्कर सन्निधिम् ।
मत्वेत्युवाच प्राणेशं मङ्गलं सर्वमङ्गला ॥ १८ ॥

पार्वत्युवाच ।

गृहमागच्छ प्राणेश तपसां फलदायकम् ।
कल्पे कल्पे ध्यायसे यं तं पश्यागत्य मन्दिरम् ॥ १९ ॥
शीघ्रं पुत्रमुखं पश्य पुण्यवीजं महोत्सवम् ।
पुन्नामनरकत्राणं कारणं भवतारणम् ॥ २० ॥

स्नानञ्च सर्वतीर्थेषु सर्वयज्ञेषु दीक्षणम् ।
पुत्रसुदर्शनस्यास्य कलां नार्हति षोड़शीम् ॥ २१ ॥
सर्वदानेन यत्पुण्यं यत् पृथिव्याः प्रदक्षिणात् ।
पुत्रदर्शनपुण्यस्य कलां नार्हति षोड़शीम् ॥ २२ ॥
सर्वैस्तपोभिर्यत् पुण्यं यदेवानशनैर्व्रतैः ।
मत् पुत्रोद्भव पुण्यस्य कलां नार्हति षोड़शीम् ॥ २३ ॥
यद्विप्रभोजनैः पुण्यं यदेव सुरसेवनैः ।
सत्पुत्रप्राप्तिपुण्यस्य कलां नार्हति षोड़शीम् ॥२४॥
पार्वतीवचनं श्रुत्वा शिवः प्रहृष्टमानसः ।
आजगाम स्वभवनं क्षिप्रं स कान्तया सह ।
ददर्श तल्पे स्वसुतं तप्तकाञ्चनसन्निभम् ।
हृदयस्थञ्च यद्रूपं तदेवातिमनोहरम् ॥ २५ ॥
दुर्गा तल्पात् समादाय कृत्वा वक्षसि तं सुतम् ।
चुचुम्बानन्दजलधौ निमग्ना सेत्युवाचह ॥ २६ ॥
संप्राप्यामूल्यरत्नं त्वां पूर्णमेव सनातनम् ।
यथा मनो दरिद्रस्य सहसा प्राप्य सद्धनम् ॥ २७ ॥
कान्ते सुचिरमायाते प्रोषिते योषितो यथा ।
मानसं परिपूर्णञ्च बभूव च तथा मनः ॥ २८ ॥
सुचिरं गतमायान्त मेकपुत्रा यथा सुतम् ।
दृष्ट्वा तुष्टा यथा वत्स तथाहमपि साम्प्रतम् ॥ २९ ॥
सद्रत्नं सुचिरं भ्रष्टं प्राप्य हृष्टो यथा जनः ।
अनावृष्टौ सुवृष्टिञ्च संप्राप्याहं तथा सुतम् ॥ ३० ॥
यथा सुचिर मन्धानां स्थितानाञ्च निराश्रये ।
चक्षुः सुनिर्म्मलं प्राप्य मनः पूर्णं तथैव मे ॥ ३१ ॥

दुस्तरे सागरे घोरे पतितस्य च सङ्कटे ।
अनौकस्य प्राप्य नौकां मनः पूर्णं तथा मम ॥ ३२ ॥
तृष्णया शुष्ककण्ठानां सुचिराच्च सुशीतलम् ।
सुवासितं जलं प्राप्य मनः पूर्णं तथा मम ॥ ३३ ॥
दावाग्निपतितानाञ्च स्थितानाञ्च निराश्रये ।
निरग्निमाश्रयं प्राप्य मनः पूर्णं तथा मम ॥ ३४ ॥
चिरं बुभुक्षितानाञ्च व्रतोपवासकारिणाम् ।
सदन्नं पुरतो दृष्ट्वा मनः पूर्णं तथा मम ।
इत्युक्त्वा पार्वती तत्र क्रोड़े कृत्वा स्वबालकम् ॥ ३५ ॥
प्रीत्या स्तनं ददौ तस्मै परमानन्दमानसा ।
क्रोड़े चकार भगवान् बालकं हृष्टमानसः ॥ ३६ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे गणेशदर्शनं नाम
नवमोऽध्यायः ।

---

## दशमोऽध्यायः ।

नारायण उवाच ।

तौ दम्पती वहिर्गत्वा पुत्रमङ्गलहेतवे ।
विविधानि च रत्नानि ब्राह्मणेभ्यो ददौ मुदा ॥ १ ॥
वन्दिभ्यो भिक्षुकेभ्यश्च दानानि विविधानि च ।
नानाविधानि वाद्यानि वादयामास शङ्करः ॥ २ ॥

हिमालयश्च रत्नानां ददौ लक्षं द्विजातये ।
सहस्रञ्च गजेन्द्राणामश्वानाञ्च त्रिलक्षकम् ॥ ३ ॥
दशलक्षं गवाञ्चैव पञ्चलक्षं सुवर्णकम् ।
मुक्तामाणिक्यरत्नानि मणिश्रेष्ठानि यानि च ॥ ४ ॥
अन्यान्यपि च दानानि वस्त्राणि भूषणानि च ।
सर्वाण्यमूल्यरत्नानि क्षीरोदसम्भवानि च ॥ ५ ॥
ब्राह्मणेभ्यो ददौ विष्णुः कौस्तुभं कौतुकान्वितः ।
ब्रह्मा विशिष्टदानानि विप्राणां वाञ्छितानि च ।
सुदुर्लभानि हृष्टो च ब्राह्मणेभ्यो ददौ मुदा ॥ ६ ॥
धर्मः सूर्य्यश्च शक्रश्च देवाश्च मुनयस्तथा ।
गन्धर्वाः पर्वता देव्यो ददुर्दानं क्रमेण च ॥ ७ ॥
माणिक्यानां सहस्राणि रत्नानाञ्च शतानि च ।
शतानि कौस्तुभानाञ्च हीरकाणां शतानि च ॥ ८ ॥
हरिद्वर्णमणीन्द्राणां सहस्राणि मुदान्वितः ॥ ९ ॥
गवां रत्नानि लक्षाणि गजरत्नं सहस्रकम् ।
अमूल्यान्यन्यरत्नानि श्वेतवर्णानि कौतुकात् ॥ १० ॥
शतलक्षं सुवर्णानां वह्निशुद्धांशुकानि च ।
ब्राह्मणेभ्यो ददौ ब्रह्मन् तत्र क्षीरोदकार्णवः ॥११॥
हारञ्चामूल्यरत्नानां त्रिषु लोकेषु दुर्लभम् ।
अतीवनिर्मलं सारं सूर्य्यभानुविनिन्दकम् ॥ १२ ॥
परिष्कृतञ्च माणिक्यैर्हीरकैश्च विराजितम् ।
रम्यं कौस्तुभमध्यस्थं ददौ देवी सरस्वती ॥ १३ ॥
त्रैलोक्यसार[illegible] [illegible]निर्मितम् ।
भूषणानि च सर्वा[illegible] ददौ मुदा ॥ १४ ॥

लक्षं सुवर्णलोष्ट्राणां धनानि विविधानि च।
शतान्यमूल्यरत्नानां कुवेरश्च ददौ मुदा॥ १५॥
दानानि दत्त्वा विप्रेभ्यस्ते सर्वे ददृशुः शिशुम्।
परमानन्दसंयुक्ता शिवपुत्रोत्सवे मुने॥ १६॥
भारं वोढुमशक्ताश्च ब्राह्मणा वन्दिनस्तथा।
स्थायं स्थायञ्च गच्छन्तो धनानां पथि कातराः॥१७॥
कथयन्ति कथाः सर्वे विश्रान्ताः पूर्वदायिनाम्।
वृद्धाः शृण्वन्ति मुदिता युवानो भिक्षुका मुने॥ १८॥
विष्णुः प्रमुदितस्तत्र वादयामास दुन्दुभिम्।
सङ्गीतं गाययामास कारयामास नर्त्तनम्।
वेदांश्च पाठयामास पुराणानि च नारद॥ १९॥
मुनीन्द्रानानयामास पूजयामास तान् मुदा।
आशिषं दापयामास कारयामास मङ्गलम्।
सार्द्धं देवैश्च देवीभिर्ददौ तस्मै शुभाशिषम्॥ २०॥

विष्णुरुवाच।

शिवेन तुल्यं ज्ञानन्ते परमायुश्च वालक।
पराक्रमे मया तुल्यः सर्वसिद्धीश्वरो भव॥ २१॥

ब्रह्मोवाच।

यशसा ते जगत् पूर्णं सर्वपूज्यो भवाचिरम्।
सर्वेषां पुरतः पूजा भवत्वतिसुदुर्लभा॥ २२॥

धर्म्म उवाच।

मया तुल्यः सुधर्मिष्ठो भवान् भव सुदुर्लभः।
सर्वज्ञश्च दयायुक्तो हरिभक्तो हरेः समः॥ २३॥

महादेव उवाच।

दाता भव मया तुल्यो हरिभक्तश्च बुद्धिमा
विद्यावान् पुण्यवान् शान्तो दान्तश्च प्राणवल्लभ ॥२४॥

लक्ष्मीरुवाच।

मम स्थितिश्च गेहे ते देहे भवतु शाश्वती।
पतिव्रता मया तुल्या शान्ता कान्ता मनोहरा॥ २५ ॥

सरस्वत्युवाच।

मया तुल्या सुकविता धारणाशक्तिरेव च।
स्मृति र्विवेचनाशक्ति र्भवत्वतिशया सुत ॥ २६ ॥

सावित्र्युवाच।

वत्साहं वेदजननी वेदज्ञानी भवाचिरम्।
मन्मन्त्रजपशीलश्च प्रवरो वेदवादिनाम् ॥ २७

हिमालय उवाच।

श्रीकृष्णेति मतिः शश्वत् भक्तिर्भवतु शाश्वती।
श्रीकृष्णतुल्यो गुणवान् भव कृष्णपरायणः ॥ २८ ॥

मेनकोवाच।

समुद्रतुल्यो गाम्भीर्य्यें कामतुल्यश्च रूपवान्।
श्रीयुक्तः श्रीपतिसमो धर्म्मे धर्म्मसमो भव ॥ २९ ॥

वसुन्धरोवाच।

क्षमाशीलो मया तुल्यः शरण्यः सर्व्वरत्नवान्।
निर्विघ्नो विघ्ननिघ्नश्च भव वत्स शुभाश्रयः ॥ ३० ॥

पार्व्वत्युवाच।

ताततुल्यमहायोगी सिद्धः सिद्धिप्रदः शुभः।
मृत्युञ्जयश्च भगवान् भवत्वतिविशारदः ॥ ३१ ॥

ऋषयो मुनयः सिद्धाः सर्व्वे युयुजु राशिषम्।
ब्राह्मणा वन्दिनश्चैव युयुजुः सर्व्वमङ्गलम्॥ ३२॥
सर्व्वं ते कथितं वत्स सर्व्वमङ्गलमङ्गलम्।
गणेशजन्मकथनं सर्व्वविघ्नविनाशनम्॥ ३३॥
इमं सुमङ्गलाध्यायं यः शृणोति सुसंयतः।
सर्व्वमङ्गलसंयुक्तः स भवेन्मङ्गलालयः॥ ३४॥
अपुत्रो लभते पुत्रमधनो लभते धनम्।
कृपणो लभते सत्त्वं शश्वत् सम्पत्प्रदायि च॥ ३५॥
भार्य्यार्थी लभते भार्य्यां प्रजार्थी लभते प्रजाम्।
आरोग्यं लभते रोगी सौभाग्यं दुर्भगा लभेत्॥ ३६॥
भ्रष्टपुत्रं नष्टधनं प्रोषितञ्च प्रियं लभेत्।
शोकाविष्टः सदानन्दं लभते नात्र संशयः॥ ३७॥
गणेशाख्यानश्रवणे यत् पुण्यं लभते नरः।
तत् फलं लभते नूनमध्यायश्रवणे मुने॥ ३८॥
अयञ्च मङ्गलाध्यायो यस्य गेहे च तिष्ठति।
सदा मङ्गलसंयुक्तः स भवेन्नात्र संशयः॥ ३९॥
यात्राकाले च पुण्याहे यः शृणोति समाहितः।
सर्व्वाभीष्टं स लभते श्रीगणेशप्रसादतः॥ ४०॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे गणेशोद्भवमङ्गलं
नाम दशमोऽध्यायः।

——

# एकादशोऽध्यायः ।

———•———

नारायण उवाच ।

हरिस्तमाशिषं कृत्वा रत्नसिंहासने वरे ।
देवैश्च मुनिभिः सार्द्धमुवास तत्र संसदि ॥ १ ॥
दक्षिणे शङ्करस्तस्य वामे ब्रह्मा प्रजापतिः ।
पुरतो जगतां साक्षी धर्म्मो धर्मवतां वरः ॥ २ ॥
आवां धर्मसमीपे च सूर्य्यः शक्रः कलानिधिः ।
देवाश्च मुनयो ब्रह्मन्नूषुः शैलाः सुखासने ॥ ३ ॥
ननर्त्त नर्त्तकश्रेणी जगुर्गन्धर्वकिन्नराः ।
श्रुतिसारं श्रुतिसुखं तुष्टुवुः श्रुतयो हरिम् ॥ ४ ॥
एतस्मिन्नन्तरे तत्र द्रष्टुं शङ्करनन्दनम् ।
आजगाम महायोगी सूर्य्यपुत्रः शनैश्वरः ॥ ५ ॥
अत्यन्तनम्रवदन ईषन्मुद्रितलोचनः ।
अन्तर्वहिः स्मरन् कृष्णं कृष्णैकगतमानसः ॥ ६ ॥
तपःफलाशी तेजस्वी ज्वलदग्निशिखोपमः ।
अतीवसुन्दरः श्याम पीताम्बरधरो वरः ॥ ७ ॥
प्रणम्य विष्णुं ब्रह्माणं शिवं धर्मं रविं सुरान् ।
मुनीन्द्रान् बालकं द्रष्टुं जगाम तदनुज्ञया ॥ ८ ॥
प्रधानद्वारमासाद्य शिवतुल्यपराक्रमम् ।
द्वारिणं शूलहस्तञ्च विशालाक्षमुवाच ह ॥ ९ ॥

शनैश्चर उवाच ।

शिवाज्ञया शिशुं द्रष्टुं यामि शङ्करकिङ्कर ।
विष्णुप्रमुखदेवानां मुनीनामनुरोधतः ॥ १० ॥
आज्ञां देहि च मां गन्तुं पार्वतीसन्निधिं बुध ।
पुनर्यामि शिशुं दृष्ट्वा विषयासक्तमानसः ॥ ११ ॥

विशालाक्ष उवाच ।

आज्ञावहो न देवानां नाहं शङ्करकिङ्करः ।
द्वारं दातुं न शक्तोऽहं विनात्ममातुराज्ञया ॥ १२ ॥
इत्युक्त्वाभ्यन्तरस्थेत्य प्रेरितः स शिवाज्ञया ।
ददौ द्वारं ग्रहेशाय विशालाक्षो मुदा ततः ॥ १३ ॥
शनिरभ्यन्तरं गत्वा ननाम नम्रकन्धरः ।
रत्नसिंहासनस्थाञ्च पार्वतीं सस्मितां मुदा ॥ १४ ॥
सखिभिः पञ्चभिः शश्वत् सेवितां श्वेतचामरैः ।
सखिदत्तञ्च ताम्बूलं भुक्तवन्तीं सुवासितम् ॥ १५ ॥
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ।
पश्यन्तीं नर्त्तकीनृत्यं पुत्रं कृत्वा च वक्षसि ॥ १६ ॥
नतं सूर्य्यसुतं दृष्ट्वा दुर्गा संभाष्य सत्वरम् ।
शुभाशिषं ददौ तस्मै पृष्ट्वा तन्मङ्गलं शुभम् ॥ १७ ॥

पार्वत्युवाच ।

कथमानम्रवक्त्रस्त्वं श्रोतुमिच्छामि साम्प्रतम् ।
किं न पश्यसि मां साधो बालकं वा ग्रहेश्वर ॥ १८ ॥

शनिरुवाच ।

सर्वे स्वकर्मणा साध्वि भुञ्जते तपसः फलम् ।
शुभाशुभञ्च यत्कर्म कोटिकल्पैर्न लुप्यते ॥ १९ ॥

कर्मणा जायते जन्तुर्ब्रह्मेन्द्रसूर्य्यमन्दिरे।
कर्मणा नरगेहेषु पश्वादिषु च कर्मणा॥ २०॥
कर्मणा नरकं याति वैकुण्ठं याति कर्मणा।
स्वकर्म्मणा च राजेन्द्रो भृत्यश्चापि स्वकर्मणा॥ २१॥
कर्मणा सुन्दरः शश्वत् व्याधियुक्तः स्वकर्मणा।
कर्मणा विषयी मातर्निर्लिप्तश्च स्वकर्मणा॥ २२॥
कर्मणा धनवान् लोको दैन्ययुक्तः स्वकर्मणा।
कर्मणा सत्कुटुम्बी च कर्मणा बन्धुकण्टकः॥ २३॥
सुभार्य्यश्च सुपुत्रश्च सुखी शश्वत् स्वकर्मणा।
अपुत्रकश्च कुस्त्रीवान्निस्त्रीकश्च स्वकर्मणा॥ २४॥
इतिहासञ्चातिगोप्यं शृणु शङ्करवल्लभे।
अकथ्यं जननीसान्द्राल्लज्जाजनककारणम्॥ २५॥
आबालात् कृष्णभक्तोऽहं कृष्णध्यानैकमानसः।
तपस्यासु रतः शश्वत् विषये विरतः सदा॥ २६॥
पिता ददौ विवाहे तु कन्याञ्चित्ररथस्य च।
अतितेजस्विनी शश्वत् तपस्यासु रता सती॥ २७॥
एकदा सा ऋतुस्नाता सुवेशं स्वं विधाय च।
रत्नालङ्कारसंयुक्ता मुनिमानसमोहिनी॥ २८॥
हरेः पादं ध्यायमानं सा मां पश्यत्युवाच ह।
मत्समीपं समागत्य सस्मिता लोललोचना॥ २९॥
शशाप मामपश्यन्तं ऋतुनष्टा स्वकोपतः।
बाह्यज्ञानविहीनञ्च ध्यानैकतानमानसम्॥ ३०॥
न दृष्टाहं त्वया येन नकृत ऋतुरक्षणम्।
त्वया दृष्टञ्च यद्वस्तु मूढ़ सर्वं विनश्यति॥ ३१॥

अहञ्च विरते ध्यानेऽतोषयं तां तदा सतीम्।
शापं मोक्तुं न शक्ता सा पश्चात्तापं चकारह ॥ ३२ ॥
तेन मात न पश्यामि किञ्चिद्वस्तु स्वचक्षुषा।
ततः प्रभृतिनम्रास्यः प्राणिहिंसाभयादहम् ॥ ३३ ॥
शनैश्चरवचः श्रुत्वा जहास पार्वती मुने।
उच्चैः प्रजहसुः सर्वा नर्त्तकी किन्नरीगणाः ॥ ३४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद
संवादे गणपतिखण्डे शनि पार्वती
संवादो नामैकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

---

नारायण उवाच।

दुर्गा तद्वचनं श्रुत्वा सस्मार हरिमीश्वरम्।
ईश्वरेच्छावशीभूतं जगदेवेत्युवाचह ॥ १ ॥
सा च देवी वशीभूता शनिं प्रोवाच कौतुकात्।
पश्य मां मच्छिशुमिति निषेकः केन वार्य्यते ॥ २ ॥
पार्वतीवचनं श्रुत्वा शनिर्मेने हृदा स्वयम।
पश्यामि किं न पश्यामि पार्वती सुत मित्वहो।
यदि वा मो मया दृष्ट स्तस्य विघ्नो भवेद् ध्रुवम् ॥ ३ ॥
इत्येव मुक्ता धर्मिष्ठो धर्मं कृत्वा तु साक्षिणम्।
बालं द्रष्टुं मनश्चक्रे न बालमातरं शनिः ॥ ४ ॥

विषसमानसः पूर्वं शुष्ककण्ठोष्ठतालुकः ।
सव्यलोचनकोणेन ददर्श च शिशोर्मुखम् ॥ ५ ॥
शनेश्च दृष्टिमात्रेण चिच्छेदे मस्तकं मुने ।
चक्षुर्निवारयामास तस्थौ नम्राननः शनिः ॥ ६ ॥
तस्थौ च पार्वतीक्रोड़े तत्सर्वाङ्गः सलोहितः ।
विवेश मस्तकं कृष्णे गत्वा गोलोकमीप्सितम् ॥ ७ ॥
मूर्च्छां संप्राप सा देवी विलप्य च भृशं मुहुः ।
मत्ता इव पृथिव्यान्तु कृत्वा वक्षसि बालकम् ॥ ८ ॥
विस्मितास्ते सुराः सर्वे चित्रपुत्तलिका यथा ।
देव्यश्च शैला गन्धर्वाः शिवः कैलासवासिनः ॥ ९ ॥
तान् सर्वान् मूर्च्छितान् दृष्ट्वा वारुह्य गरुड़ं हरिः ।
जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम् ॥ १० ॥
पुष्पभद्रानदीतीरे ददर्श कानने स्थितः ।
गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् ॥ ११ ॥
दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात् ।
परितः शावकान् कृत्वा परमानन्दमानसम् ॥ १२ ॥
शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा ।
स्थापयामास गरुड़े रुधिराक्तं मनोहरम् ॥ १३ ॥
गजच्छिन्नाङ्गविक्षेपात् प्रबोधं प्राप्य हस्तिनी ।
शावकान् बोधयामास चाशुभं वदती तदा ।
रुरोद शावकैः सार्द्धं सा विलप्य शुचातुरा ॥ १४ ॥
तुष्टाव कमलाकान्तं शान्तं सस्मितमीश्वरम् ।
शङ्खचक्रगदापद्मधरं पीताम्बरं परम् ।
गरुड़स्थं जगत्कान्तं भ्रामयन्तं सुदर्शनम् ॥ १५

निषेकं खण्डितुं शक्तं निषेकजनकं विभुम् ।
निषेकभोगदातारं भोगनिस्तारकारणम् ॥ १६ ॥
प्रभुस्तत् स्तवनात्तुष्ट स्तस्मै विप्र वरं ददौ ।
मुण्डान्मुण्डं विनिष्कृत्य युयुजेऽन्यगजस्य च ॥ १७ ॥
जीवयामास तं तत्र ब्रह्मज्ञानेन ब्रह्मवित् ।
सर्वाङ्गे योजयामास गजस्य चरणाम्बुजम् ॥ १८ ॥
त्वं जीवाकल्पपर्य्यन्तं परिवारैः समं गजः ।
इत्युक्त्वा च मनोयायी कैलासयाञ्जगाम सः ॥ १९ ॥
आगत्य पार्वतीस्थानं बालं कृत्वा स्ववक्षसि ।
रुचिरं तच्छिरः कृत्वा योजयामास बालके ॥ २० ॥
ब्रह्मस्वरूपो भगवान् ब्रह्मज्ञानेन लीलया ।
जीवनं कारयामास हुङ्कारोच्चारणेन च ॥ २१ ॥
पार्वतीं बोधयित्वा तु कृत्वा क्रोड़े च तं शिशुम् ।
बोधयामास तां कृष्ण आध्यात्मिकविबोधनैः ॥ २२ ॥

विष्णुरुवाच ।

ब्रह्मादिकीटपर्य्यन्तं जगद् भुंक्ते स्वकर्म्मणा ।
जगद्बुद्धिस्वरूपासि त्वं न जानासि किं शिवे ॥ २३ ॥
कल्पकोटिशतं भोगो जीविनां तत् स्वकर्म्मणा ।
उपस्थितो भवे नित्यं प्रतियोनौ शुभाशुभैः ॥ २४ ॥
इन्द्रः स्वकर्म्मणा कीटयोनौ जन्म लभेत् सति ।
कीटश्चापि भवेदिन्द्रः पूर्व्वकर्म्मफलेन वै ॥ २५ ॥
सिंहोऽपि मक्षिकां हन्तुमक्षमः प्राक्तनं विना ।
मशको हस्तिनं हन्तुं क्षमः स्वप्राक्तनेन च ॥ २६ ॥
सुखं दुःखं भयं शोकमानन्दं कर्म्मणः फलम् ।

सुकर्मणः सुखं हर्ष मितरे पापकर्मणः ॥ २७ ॥
इहैव कर्मणो भोगः परत्र च शुभाशुभैः ।
कर्मोपार्जनयोग्यञ्च पुण्यचेतञ्च भारतम् ॥ २८ ॥
कर्मणः फलदाता च विधाता च विधेरपि ।
मृत्योर्मृत्युः कालकालो निषेकस्य निषेककृत् ॥ २९ ॥
संहर्त्तु रपि संहर्त्ता पातुः पाता परात्परः ।
गोलोकनाथः श्रीकृष्णः परिपूर्णतमः स्वयम् ॥ ३० ॥
वयं यस्य कलाः पुंसो ब्रह्मविष्णुमहेश्वराः ।
महाविराड् यदंशश्च यल्लोमविवरे जगत् ॥ ३१ ॥
कलांशाः केऽपि तद्धर्मे कलांशांशाश्च केचन ।
चराचरं जगत् सर्वं तत्र तस्थौ विनायकः ॥ ३२ ॥
श्रीविष्णोर्वचनं श्रुत्वा परितुष्टा च पार्वती ।
स्तनं ददौ च शिशवे तं प्रणम्य गदाधरम् ॥ ३३ ॥
तुष्टाव पार्वती तुष्टा प्रेरिता शङ्करेण च ।
पुटाञ्जलियुता भक्त्या विष्णुं तं कमलापतिम् ॥ ३४ ॥
आशिषं युयुजे विष्णुः शिशुञ्च शिशुमातरम् ।
ददौ गले बालकस्य कौस्तुभञ्च स्वभूषणम् ॥ ३५ ॥
ब्रह्मा ददौ स्वमुकुटं धर्मश्च रत्नभूषणम् ।
क्रमेण देव्यो रत्नानि ददुः सर्वे यथोचितम् ॥ ६३ ॥
तुष्टाव तं महादेवश्चातीवहृष्टमानसः ।
देवाश्च मुनयः शैला गन्धर्वाः सर्वयोषितः ॥ ३७ ॥
दृष्ट्वा शिवः शिवाचैव बालकं मृतजीवितम् ।
ब्राह्मणेभ्यो ददौ तत्र कोटिरत्नानि नारद ॥ ३८ ॥
अश्वानाञ्च गजानाञ्च सहस्राणि शतानि च ।

वन्दिभ्यः प्रददौ तत्र बालके मृतजीविते ॥ ३९ ॥
हिमालयश्च संहृष्टो हृष्टा देवाश्च तत्रवै ।
ददु र्दानानि विप्रेभ्यो वन्दिभ्यः सर्वयोषितः ॥ ४० ॥
ब्राह्मणान् भोजयामास कारयामास मङ्गलम् ।
वेदांश्च पाठयामास पुराणानि रमापतिः ॥ ४१ ॥
शनिं सलज्जितं दृष्ट्वा पार्वती कोपशालिनी ।
शशाप च सभामध्येऽप्यङ्गहीनो भवेति च ॥ ४२ ॥
दृष्ट्वा शप्तं शनिं सूर्य्यः कश्यपश्च यमस्तथा ।
तेऽतिरुष्टाः समस्तस्थु र्गामुकाः शङ्करालयात् ॥ ४३ ॥
रक्ताचास्ते रक्तमुखाः कोपप्रस्फुरिताधराः ।
तां धर्मं साक्षिणं कृत्वा विष्णुश्च शप्तु मुद्यताः ॥ ४४ ॥
ब्रह्मा तान् बोधयामास विष्णुना प्रेरितैः सुरैः ।
रक्तास्यां पार्वतीञ्चैव कोपप्रस्फुरिताधराम् ॥ ४५ ॥
ब्रह्माणमूचुस्ते तत्र क्रमेण समयोचितम् ।
भीरवो देवताः सर्वे मुनयः पर्वतास्तथा ॥ ४६ ॥

कश्यप उवाच ।

दुर्द्दष्टोऽयं शाक्तनेन पत्नीशापेन सर्वदा ।
बालं ददर्श यत्नेन तस्यैव मातुराज्ञया ॥ ४७ ॥

श्रीसूर्य्य उवाच ।

तं धर्मं साक्षिणं कृत्वा पुत्रस्य मातुराज्ञया ।
मत्पुत्रोऽतिप्रयत्नेन ददर्श पार्वतीसुतम् ॥ ४८ ॥
यया निरपराधेन मत्पुत्रं सा शशापह ।
तत् पुत्रस्याङ्गभङ्गश्च भविष्यति न संशयः ॥ ४९ ॥

यम उवाच ।

प्रदाय स्वयमाशाञ्च शशाप च स्वयं कथम् ।
वयं शपाम: कोऽधर्मो जिघांसोश्च विहिंसने ॥ ५० ॥

ब्रह्मोवाच ।

शशाप पार्वती रुष्टा स्त्रीस्वभावाच्च चापलात् ।
सर्वेषां वचनेनैव चन्तुमर्हन्तु साधव: ॥ ५१ ॥
दुर्गे दत्त्वा त्वमाज्ञां च पुत्रदर्शनहेतवे ।
कथं शपसि निर्दोषमतिथिं त्वद्गृहागतम् ॥ ५२ ॥
इत्युक्त्वा शनिमादाय बोधयित्वा तु पार्वतीम् ।
तां तं समर्पणं चक्रे शापमोचनहेतवे ॥ ५३ ॥
बभूव पार्वती तुष्टा ब्रह्मणो वचनान्मुने ।
शान्ता बभूवुस्ते तत्र दिनेशयमकश्यपा: ॥ ५४ ॥
उवाच पार्वती तत्र सन्तुष्टा तं शनैश्वरम् ।
प्रसादिता शिवेनैव ब्रह्मणा परिसेविता ॥ ५५ ॥

पार्वत्युवाच ।

ग्रहराजो भव शने मद्वरेण हरिप्रियः ।
चिरजीवी च योगीन्द्रो हरिभक्तस्य का विपत् ॥ ५६ ॥
अद्य प्रभृति निर्विघ्ना हरौ भक्तिर्दृढ़ास्तु ते ।
मच्छापामोघतो वत्स किञ्चित् खञ्जो भविष्यसि ॥५७॥
इत्युक्त्वा पार्वती तुष्टा बालं नत्वा च वचसि ।
उवास योषितां मध्ये तस्मै दत्त्वा शुभाशिषम् । ५८ ॥
शनिर्जगाम देवानां समीपं हृष्टमानस: ।

प्रणम्य भक्त्या तां ब्रह्मन्नम्बिकां जगदम्बिकाम् ॥ ५८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे विघ्नोपखण्डनं नाम
द्वादशोऽध्यायः ।

---

## त्रयोदशोऽध्यायः ।

---

नारायण उवाच ।

अथ विष्णुः शुभे काले देवैश्च मुनिभिः सह ।
पूजयामास तं बालमुपहारैरनुत्तमैः ॥ १ ॥
सर्वाग्रे तव पूजाच मया दत्ता सुरोत्तम ।
सर्वपूज्यश्च योगीन्द्रो भव वत्सेत्युवाच तम् ॥ २ ॥
वनमालां ददौ तस्मै ब्रह्मज्ञानञ्च मुक्तिदम् ।
सर्वसिद्धिं प्रदायैव चकारात्मसमं हरिः ॥ ३ ॥
ददौ द्रव्याणि चारूणि चोपचाराणि षोड़श ।
तन्नामकरणं चक्रे मुनिभिश्च समं सुरैः ॥ ४ ॥
विघ्नेशश्च गणेशश्च हेरम्बश्च गजाननः ।
लम्बोदरश्चैकदन्तः शूर्पकर्णो विनायकः ॥ ५ ॥
एतान्यष्टौ च नामानि तस्य चक्रे सनातनः ।
आशिषं दापयामास चानयामास तान्मुनीन् ॥ ६ ॥
सिंहासनं ददौ धर्मस्तस्मै ब्रह्मा कमण्डलुम् ।
शङ्करो योगपट्टञ्च तत्त्वज्ञानं सुदुर्लभम् ॥ ७ ॥

रत्नसिंहासनं शक्रः सूर्य्यश्च मणिकुण्डले ।
माणिक्यमालां चन्द्रश्च कुवेरश्च किरीटकम् ॥ ८ ॥
वह्निशुद्धञ्च वसनं ददौ तस्मै हुताशनः ।
रत्नछत्रञ्च वरुणो वायुः रत्नाङ्गुरीयकम् ॥ ९ ॥
क्षीरोदोद्भवसद्रत्नरचितं वलयं वरम् ।
मञ्जीरञ्चापि केयूरं ददौ पद्मालया मुने ॥ १० ॥
कण्ठभूषाञ्च सावित्री भारती हारमुज्ज्वलम् ।
क्रमेण सर्वदेवाश्च देव्यश्च यौतुकं ददुः ॥ ११ ॥
मुनयः पर्वताश्चैव रत्नाणि विविधानि च ।
वसुन्धरा ददौ तस्मै वाहनाय च मूषिकम् ॥ १२ ॥
क्रमेण देवा देव्यश्च मुनयः पर्वतादयः ।
गन्धर्वाः किन्नरा यक्षा मनवो मानवास्तथा ॥ १३ ॥
नानाविधानि द्रव्याणि स्वादूणि मधुराणि च ।
पूजाञ्चक्रुश्च ते सर्वे क्रमेण भक्तिपूर्वकम् ॥ १४ ॥
पार्वती जगतां माता स्मेराननसरोरुहा ।
रत्नसिंहासने पुत्रं वासयामास नारद ॥ १५ ॥
सर्वतीर्थोदकानाञ्च कलसानां शतेन च ।
स्नापयामास वेदोक्तमन्त्रेण मुनिभिस्तदा ।
अग्निशौचे च वसने ददौ तस्मै सती मुदा ॥ १६ ॥
गोदावर्य्युदकं पाद्यमर्घ्यं गङ्गोदकेन च ।
दूर्वाभि रक्षतैः पुष्पैश्चन्दनेन समन्वितम् ॥ १७ ॥
पुष्करोदकमानीय पुनराचमनीयकम् ।
मधुपर्कं रत्नपात्रे रासवं शर्करान्वितम् ॥ १८ ॥
स्नानीयं विष्णुतैलञ्च स्ववैद्येन विनिर्मितम् ।

अमूल्यरत्नरचितचारुणि भूषणानि च ॥ १९ ॥
पारिजातप्रसूनानां माल्यानां शतकानि च ।
मालतीचम्पकादीनां पुष्पाणि विविधानि च ।
पूजार्हाणि च पत्राणि तुलसीवर्जितानि च ॥ २० ॥
चन्दनागुरुकस्तूरीकुङ्कमानि च सादरम् ।
रत्नप्रदीपनिकरं धूपञ्च परितो ददौ ॥ २१ ॥
नैवेद्यं तत्प्रियञ्चैव तिललड्डुकपर्वतम् ।
यवगोधूमचूर्णानां पिष्टकानाञ्च पर्वतम् ॥ २२ ॥
पक्वान्नानां पर्वतञ्च सुस्वादु सुमनोहरम् ।
पर्वतं स्वस्तिकानाञ्च सुस्वादु शर्करान्वितम् ॥ २३ ॥
गुड़ाक्तानाञ्च लाजानां पृथुकानाञ्च पर्वतम् ।
शाल्यन्नानां पिष्टकानां पर्वतं व्यञ्जनैः सह ।
कलसानाञ्च पयसां लक्षाणि प्रददौ मुदा ॥ २४ ॥
लक्षाणि कलसानाञ्च दध्नां नारद पूजने ।
मधूनां कलसानाञ्च विलक्षाणि च सुन्दरी ॥ २५ ॥
सर्पिषां कलसानाञ्च पञ्चलक्षाणि सादरम् ।
दाड़िम्बानां श्रीफलानामसंख्यानि फलानि च ॥२६॥
खर्जूराणां करञ्जानां जम्बूनां विविधानि च ।
आम्राणां पनसानाञ्च कदलीनाञ्च नारद ।
फलानि नारिकेलानामसंख्यानि ददौ मुदा ॥ २७ ॥
अन्यानि परिपक्वानि कालदेशोद्भवानि च ।
ददौ तानि महामाया स्वादूनि मधुराणि च ॥ २८ ॥
स्वच्छं सुनिर्मलञ्चैव कर्पूरादिसुवासितम् ।
गङ्गाजलञ्च पानार्थं पुनराचमनीयकम् ॥ २९ ॥

ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ।
सुवर्णपात्रशतकं परिपूर्णञ्च नारद ॥ ३० ॥
शैलेश्वरी शैलराजः शैलजः शैलराजजः ।
शैलराजप्रियामात्याः पुपूजुः शैलजात्मजम् ॥ ३१ ॥
ओं श्रीं ह्रीं क्लीं गणेश्वराय ब्रह्मरूपाय चारवे ।
सर्वसिद्धिप्रदेशाय विघ्नेशाय नमो नमः ॥ ३२ ॥
इत्यनेनैव मन्त्रेण दत्त्वा द्रव्याणि भक्तितः ।
सर्वे प्रमुदितास्तत्र ब्रह्मविष्णुशिवादयः ॥ ३३ ॥
द्वात्रिंशदक्षरो मालामन्त्रोऽयं सर्वकामदः ।
धर्मार्थकाममोक्षाणां फलदः सर्वसिद्धिदः ॥ ३४ ॥
पञ्चलक्षजपेनैव मन्त्रसिद्धिस्तु मन्त्रिणः ।
मन्त्रसिद्धिर्भवेद् यस्य स च विष्णुश्च भारते ॥ ३५ ॥
विघ्नानि च पलायन्ते तन्नामस्मरणेन च ।
महावाग्मी महासिद्धः सर्वसिद्धिसमन्वितः ॥ ३६ ॥
वाक्पतिर्जगतां याति तस्य साक्षात् सुनिश्चितम् ।
महाकवीन्द्रो गुणवान् विदुषाञ्च गुरोर्गुरुः ॥ ३७ ॥
संपूज्यानेन मन्त्रेण देवा आनन्दसंप्लुताः ।
नानाविधानि वाद्यानि वादयामासुरुत्सवे ॥ ३८ ॥
ब्राह्मणान् भोजयामासुः कारयामासु रुत्सवम् ।
ददुर्दानानि तेभ्यश्च वन्दिभ्यश्च विशेषतः ॥ ३९ ॥

नारायण उवाच ।

अथ विष्णुः सभामध्ये संपूज्य तं गणेश्वरम् ।
तुष्टाव परया भक्त्या सर्वविघ्नविनायकम् ॥ ४० ॥

श्रीविष्णुरुवाच ।

ईश त्वां स्तोतुमिच्छामि ब्रह्मज्योतिः सनातनम् ।
निरूपितुमशक्तोऽहमनुरूपमनीहकम् ॥ ४१ ॥
प्रवरं सर्वदेवानां सिद्धानां योगिनां गुरुम् ।
सर्वस्वरूपं सर्वेशं ज्ञानराशिस्वरूपिणम् ॥ ४२ ॥
अव्यक्तमक्षरं नित्यं सत्यमात्मस्वरूपिणम् ।
वायुतुल्यातिनिर्लिप्तं चाक्षतं सर्वसाक्षिणम् ॥ ४३ ॥
संसारार्णवपारे च मायापोते सुदुर्लभे ।
कर्णधारस्वरूपञ्च भक्तानुग्रहकारकम् ॥ ४४ ॥
वरं वरेण्यं वरदं वरदानामपीश्वरम् ।
सिद्धं सिद्धिस्वरूपञ्च सिद्धिदं सिद्धिसाधनम् ॥ ४५ ॥
ध्यानातिरिक्तं ध्येयञ्च ध्यानासाध्यञ्च धार्मिकम् ।
धर्मस्वरूपं धर्मज्ञं धर्माधर्मफलप्रदम् ॥ ४६ ॥
बीजं संसारवृक्षाणामङ्कुरञ्च तदाश्रयम् ।
स्त्रीपुंनपुंसकानाञ्च रूपमेतदतीन्द्रियम् ॥ ४७ ॥
सर्वाद्यमग्रपूज्यञ्च सर्वपूज्यं गुणार्णवम् ।
स्वेच्छया सगुणं ब्रह्म निर्गुणञ्चापि स्वेच्छया ॥ ४८ ॥
स्वयं प्रकृतिरूपञ्च प्राकृतं प्रकृतेः परम् ।
त्वां स्तोतुमक्षमोऽनन्तः सहस्रवदनेन च ॥ ४९ ॥
न क्षमः पञ्चवक्त्रश्च न क्षमश्चतुराननः ।
सरस्वती न शक्ता च न शक्तोऽहं तव स्तुतौ ।
न शक्ताश्च चतुर्वेदाः के वा ते वेदवादिनः ॥ ५० ॥
इत्येवं स्तवनं कृत्वा सुरेशं सुरसंसदि ।
सुरेशश्च सुरैः सार्द्धं विरराम रमापतिः ॥ ५१ ॥

इदं विष्णुकृतं स्तोत्रं गणेशस्य च यः पठेत् ।
सायं प्रातश्च मध्याह्ने भक्तियुक्तः समाहितः ॥ ५२ ॥
तद्विघ्ननिघ्नं कुरुते विघ्नेशः सततं मुने ।
वर्द्धते सर्वकल्याणं कल्याणजनकः सदा ॥ ५३ ॥
यात्राकाले पठित्वा तु यो याति भक्तिपूर्वकम् ।
तस्य सर्वाभीष्टसिद्धिर्भवत्येव न संशयः ॥ ५४ ॥
तेन दृष्टञ्च दुःस्वप्नं सुस्वप्न मुपजायते ।
कदापि न भवेत्तस्य ग्रहपीड़ा च दारुणा ॥ ५५ ॥
भवेद्विनाशः शत्रूणां बन्धूनाञ्च विवर्द्धनम् ।
शश्वद्विघ्नविनाशश्च शश्वत् सम्पद्विवर्द्धनम् ॥ ५६ ॥
स्थिरा भवेद्गृहे लक्ष्मीः पुत्रपौत्रविवर्द्धनी ।
सर्वैश्वर्य्यमिह प्राप्य ह्यन्ते विष्णुपदं लभेत् ॥ ५७ ॥
फलञ्चापि च तीर्थानां यज्ञानां यद्भवेत् ध्रुवम् ।
महतां सर्वदानानां श्रीगणेशप्रसादतः ॥ ५८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे विष्णुकृतं
गणेशस्तोत्रं समाप्तम् ।

---

नारद उवाच ।

श्रुतं स्तोत्रं गणेशस्य पूजनञ्च मनोहरम् ।
कवचं श्रोतुमिच्छामि साम्प्रतं भवतारणम् ॥ १ ॥

नारायण उवाच ।

पूजायां सुनिवृत्तायां सभामध्ये शनैश्चरः ।
उवाच विष्णुं सर्वेषां तारकं जगतां गुरुम् ॥ २ ॥

शनैश्चर उवाच।

सर्वदुःखविनाशाय दुःखप्रशमनाय च।
कवचं विघ्ननिघ्नस्य वद वेदविदां वर॥ ३॥
बभूव नो विवादश्च शक्त्या च मायया सह।
तद्विघ्नप्रशमार्थञ्च कवचं धारयाम्यहम्॥ ४॥

श्रीविष्णुरुवाच।

विनायकस्य कवचं त्रिषु लोकेषु दुर्लभम्।
सुगोप्यञ्च पुराणेषु दुर्लभञ्चागमेषु च॥ ५॥
उक्तं कौथुमशाखायां सामवेदे मनोहरम्।
कवचं विघ्ननाशस्य सर्वविघ्नहरं परम्॥ ६॥
राज्यं देयं शिरो देयं प्राणा देयाश्च सूर्य्यज।
एवम्भूतञ्च कवचं न देयं प्राणसङ्कटे॥ ७॥
आविर्भाव स्तिरोभावः स्वेच्छयास्य च मायया।
नित्योऽयमेकदन्तश्च कवचं चास्य वत्सक॥ ८॥
पूजास्य नित्या स्तोत्रञ्च कल्पे कल्पेऽस्ति सन्ततम्।
अस्यास्य जन्मनः पूर्वं मुनयश्च सिषेविरे॥ ९॥
यथा मदवतारेषु जन्मविग्रहधारणम्।
तथा गणेश्वरस्यापि जन्म शैलसुतोदरे॥ १०॥
यद्धृत्वा मुनयः सर्वे जीवन्मुक्ताश्च भारते।
निःशङ्काश्च सुराः सर्वे शत्रुपक्षविमर्दकाः॥ ११॥
कवचं बिभ्रतां मृत्युर्न याति सन्निधिं भिया।
नायुर्व्ययो नाशुभञ्च ब्रह्माण्डे न पराजयः॥ १२॥
दशलक्षजपेनैव सिद्धञ्च कवचं भवेत्।
यो भवेत् सिद्धकवचो मृत्युं जेतुं स च क्षमः॥ १३॥

सुसिद्धकवचो वाग्मी चिरजीवी महीतले ।
सर्वत्र विजयी पूज्यो भवेद्ग्रहणमात्रतः ॥ १४ ॥
मालामन्त्रमिमं पुण्यं कवचञ्चेदमेव च ।
बिभ्रतां सर्वपापानि प्रणश्यन्ति सुनिश्चितम् ॥ १५ ॥
भूतप्रेतपिशाचाश्च कुष्माण्डा ब्रह्मराक्षसाः ।
डाकिन्यो योगिन्यश्चैव वेतालादय एव च ॥ १६ ॥
बालग्रहा ग्रहाश्चैव क्षेत्रपालादय स्तथा ।
तेषाञ्च शब्दमात्रेण पलायन्ते च भीरवः ॥ १७ ॥
आधयो व्याधयश्चैव शोकाश्चैव भयावहाः ।
न यान्ति सन्निधिं तेषां गरुड़स्य यथोरगाः ॥ १८ ॥
ऋजवे गुरुभक्ताय स्वशिष्याय प्रकाशयेत् ।
खलाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ १९ ॥
संसारमोहकस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च वृहती देवो लम्बोदरः स्वयम् ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥ २० ॥
सर्वेषां कवचानाञ्च सारभूतमिदं मुने ।
ओं गं हुं श्रीगणेशाय स्वाहा मे पातु मस्तकम् ।
द्वात्रिंशदक्षरोमन्त्रो ललाटं मे सदावतु ॥ २१ ॥
ओं ह्रीं क्लीं श्रीं गमिति च सन्ततं पातु लोचनम् ।
तालुकं पातु विघ्नेशः सन्ततं धरणीतले ॥ २२ ॥
ओं ह्रीं श्रीं क्लीमिति च सन्ततं पातु नासिकाम् ।
ओं गौं गं शूर्पकर्णाय स्वाहा पात्वधरं मम ।
दन्तानि तालुकां जिह्वां पातु मे षोड़शाक्षरः ॥ २३ ॥
ओं लं श्रीं लम्बोदरायेति स्वाहा गण्डं सदावतु ।

ओं क्लीं ह्रीं विघ्ननाशाय स्वाहा कर्णं सदावतु च ॥२४॥
ओं श्रीं गं गजाननायेति स्वाहा स्कन्धं सदावतु ।
ओं ह्रीं विनायकायेति स्वाहा पृष्ठं सदावतु ॥ २५ ॥
ओं क्लीं ह्री मिति कङ्कालं पातु वक्षःस्थलञ्च गम् ।
करौ पादौ सदा पातु सर्वाङ्गं विघ्ननिघ्नकृत् ॥ २६ ॥
प्राच्यां लम्बोदरः पातु आग्नेय्यां विघ्ननायकः ।
दक्षिणे पातु विघ्नेशो नैऋर्त्यान्तु गजाननः ॥ २७ ॥
पश्चिमे पार्वतीपुत्रो वायव्यां शङ्करात्मजः ।
कृष्णस्यांशश्चोत्तरे च परिपूर्णतमस्य च ॥ २८ ॥
ऐशान्यामेकदन्तश्च हेरम्बः पातु चोर्द्धतः ।
अधो गणाधिपः पातु सर्वपूज्यश्च सर्वतः ।
स्वप्ने जागरणेचैव पातु मां योगिनां गुरुः ॥ २९ ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
संसारमोहनं नाम कवचं परमाद्भुतम् ॥ ३० ॥
श्रीकृष्णेन पुरा दत्तं गोलोके रासमण्डले ।
वृन्दावने विनीताय मह्यं दिनकरात्मज ॥ ३१ ॥
मया दत्तञ्च तुभ्यञ्च यस्मै कस्मै न दास्यसि ।
परं वरं सर्वपूज्यं सर्वसङ्कटतारणम् ॥ ३२ ॥
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः ।
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ॥ ३३ ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
ग्रहेन्द्र कवचस्यास्य कलां नार्हन्ति षोडशीम् ॥ ३४ ॥
इदं कवचमज्ञात्वा यो भजेच्छङ्करात्मजम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ३५ ॥

इति श्रीब्रह्मवैवर्त्ते संसारमोहनं नाम कवचम् ।
इत्येदं सूर्य्यपुत्त्राय विरराम सुरेश्वरः ।
परमानन्दसंयुक्ता देवा ऊचुः समीपतः ॥ ३६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे गणेशपूजास्तवकवचकथनं
नाम त्रयोदशोऽध्यायः ।

---

## चतुर्दशोऽध्यायः ।

---

नारायण उवाच ।

देवा विष्णुसभायां ते सर्वे प्रहृष्टमानसाः ।
गन्धर्वा मुनयः शैलाः पश्यन्तः सुमहोत्सवम् ॥ १ ॥
एतस्मिन्नन्तरे दुर्गा स्मेराननसरोरुहा ।
उवाच विष्णुं प्रणता देवेशं देवसंसदि ॥ २ ॥

पार्वत्युवाच ।

त्वं पाता सर्वजगतां नाथ नाहं जगद्वहिः ।
कथं मत्स्वामिनो वीर्य्यं नामोघं रक्षितं प्रभो ॥ ३ ॥
रतिभङ्गे कृते देवैर्ब्रह्मणा प्रेरितैस्त्वया ।
भूमौ निपतितं वीर्य्यं केन देवेन वै हृतम् ॥ ४ ॥
सर्वे देवास्त्वत्पुरतस्तदन्वेषणमर्हति ।
अराजकं कथं युक्तं तिष्ठति त्वयि राजनि ॥ ५ ॥

पार्वतीवचनं श्रुत्वा प्रहस्य जगदीश्वरः।
उवाच देववर्गे च मुनिवर्गे च तिष्ठति ॥ ६ ॥

श्रीविष्णुरुवाच।

देवाः शृणुत मद्वाक्यं पार्वतीवचनं श्रुतम्।
शिवस्यामोघवीर्य्यं यत्तत् पुरा केन निर्हृतम् ॥ ७ ॥
सभामानय तत् क्षिप्रं न चेत् स दण्डमर्हति।
स को राजा न शास्ता यः प्रजाबाध्यश्च पाक्षिकः ॥ ८ ॥
विष्णोस्तद्वचनं श्रुत्वा समालोच्य परस्परम्।
ऊचुः सर्वे क्रमेणैव त्रासिताः पुरतो हरेः ॥ ९ ॥

ब्रह्मोवाच।

तद्वीर्य्यं निर्हृतं येन पुण्यभूमौ च भारते।
स वञ्चितो भवत्वत्र पुण्याहे पुण्यकर्मणि ॥ १० ॥

श्रीमहादेव उवाच।

स्ववीर्य्यं निर्हृतं येन पुण्यभूमौ च भारते।
स वञ्चितो भवत्वत्र सेवने पूजने तव ॥ ११ ॥

यम उवाच।

स वञ्चितो भवत्वत्र शरणागतरक्षणे।
एकादशीव्रते चैव तद्वीर्य्यं येन निर्हृतम् ॥ १२ ॥

इन्द्र उवाच।

तद्वीर्य्यं निर्हृतं येन पापिनां पापमोचने।
भवत्वत्र यशोलुप्तस्तत् पुण्यकर्म सन्ततम् ॥ १३ ॥

वरुण उवाच।

भवत्वत्र कलौ जन्म वर्षेऽस्य भारते हरे।
शूद्रयाजकपत्नाश्च गर्भे तद् येन निर्हृतम् ॥ १४ ॥

कुवेर उवाच ।

स्थाप्यहारी स भवतु विश्वासघ्नश्च मित्रहा ।
सत्यघ्नश्च कृतघ्नश्च तद्वीर्य्यं येन निर्हृतम् ॥ १५ ॥

ईशान उवाच ।

परद्रव्यापहारी च स भवत्वत्र भारते ।
नरघाती गुरुद्रोही तद्वीर्य्यं येन निर्हृतम् ॥ १६ ॥

रुद्रा ऊचुः ।

ते मिथ्यावादिनः सन्तु भारते पारदारिकाः ।
गुरुनिन्दारताः शश्वत्तद्वीर्य्यं येन निर्हृतम् ॥ १७ ॥

कामदेव उवाच ।

कृत्वा प्रतिज्ञां यो मूढ़ो न सम्पालयति भ्रमात् ।
भाजनं तस्य पापस्य स भवेद् येन निर्हृतम् ॥ १८ ॥

स्ववैद्यावूचतुः ।

मातुः पितुर्गुरोश्चैव स्त्रीपुत्त्राणाञ्च पोषणे ।
भवेतां वञ्चितौ तौ च याभ्यां वीर्य्यञ्च निर्हृतम् ॥१९॥

सर्वे देवा ऊचुः ।

मिथ्यासाक्ष्यप्रदातारो भवन्त्वत्र च भारते ।
अपुत्त्रिणो दरिद्राश्च यैश्च वीर्य्यञ्च निर्हृतम् ॥ २० ॥

देवपत्न्य ऊचुः ।

ता निन्दन्तु स्वभर्त्तारं गच्छन्तु परपूरुषम् ।
सन्तु बुद्धिविहीनाश्च याभिर्वीर्य्यञ्च निर्हृतम् ॥ २१ ॥

देवानां वचनं श्रुत्वा देवीनाञ्च हरिः स्वयम् ।
कर्मणां साक्षिणं धर्मं सूर्य्यं चन्द्रं हुताशनम् ॥ २२ ॥
पवनं पृथिवीं तोयं सन्ध्ये रात्रिं दिनं मुने ।

उवाच जगतां कर्त्ता पाता शास्ता जगत्त्रये ॥ २३ ॥

श्रीविष्णुरुवाच ।

देवैर्न निर्हृतं वीर्य्यं तदेतत् केन निर्हृतम् ।
तदमोघं भगवतो महेशस्य जगद्गुरोः ॥ २४ ॥
यूयञ्च साक्षिणो विश्वे सन्ततं सर्वकर्मणाम् ।
युष्माभिर्निर्हृतं किं वा किम्भूतं वक्तुमर्हथ ॥ २५ ॥
ईश्वरस्य वचः श्रुत्वा सभायां कम्पिताश्च ते ।
परस्परं समालोच्य क्रमेणोचुः पुरो हरेः ॥ २६ ॥

श्रीधर्म उवाच ।

रतेरुत्तिष्ठतो वीर्य्यं पपात वसुधातले ।
मया ज्ञातममोघं तत् शङ्करस्य प्रकोपतः ॥ २७ ॥

क्षितिरुवाच ।

वीर्य्यं वोढुमशक्ताहं तदग्नौ न्यक्षिपं पुरा ।
अतीव दुर्वहं ब्रह्मन्नबला क्षन्तुमर्हसि ॥ २८ ॥

अग्निरुवाच ।

वीर्य्यं वोढुमशक्तोऽहं न्यक्षिपं शरकानने ।
दुर्बलस्य जगन्नाथ किं यशः किञ्च पौरुषम् ॥ २९ ॥

वायुरुवाच ।

शरेषु पतितं वीर्य्यं सद्यो बालो बभूव ह ।
अतीवसुन्दरो विप्रा स्वर्णरेखानदीतटे ॥ ३० ॥

श्रीसूर्य्य उवाच ।

रुदन्तं बालकं दृष्ट्वागममस्ताचलं प्रति ।

प्रेरितः कालचक्रेण निमि संस्थातुमक्षमः ॥ ३१ ॥

चन्द्र उवाच ।

रुदन्तं बालकं प्राप्य गृहीत्वा कृत्तिकागणः ।
जगाम स्वालयं विष्णो गच्छन् बदरिकाश्रमात् ॥ ३२ ॥

जलमुवाच ।

अमुं रुदन्तमानीय स्तनं दत्त्वा स्तनार्थिने ।
वर्द्धयामासुरीशस्य सुतं सुर्य्याधिकप्रभम् ॥ ३३ ॥

सन्ध्ये ऊचतुः ।

अधुना कृत्तिकानाञ्च षसां तत् पोष्यपुत्रकः ।
तन्नाम चक्रुस्ताः प्रेम्णा कार्त्तिकश्चेति कौतुकात्॥३४॥

रात्रिरुवाच ।

न चक्रुर्बालकं तास्व लोचनानामगोचरम् ।
प्राणेभ्योऽपि प्रेमपात्रं यः पोष्टा तस्य पुत्रकः ॥ ३५ ॥

दिन उवाच ।

यानि यानि च वस्तूनि त्रैलोक्ये दुर्लभानि च ।
प्रशंसितानि स्वादूनि भोजयामासुरेव तम् ॥ ३६ ॥
तेषां तद्वचनं श्रुत्वा सन्तुष्टो मधुसूदनः ।
ते सर्वे हरिमित्यूचुः सभायां हृष्टमानसाः ॥ ३७ ॥
पुत्रस्य वार्त्तां सम्प्राप्य पार्वती हृष्टमानसा ।
कोटिरत्नानि विप्रेभ्यो ददौ बहुधनानि च ।
ददौ सर्वाणि विप्रेभ्यो वासांसि विविधानि च ॥३८॥
लक्ष्मीः सरस्वती मेना सावित्री सर्वयोषितः ।

विष्णुश्च सर्वदेवाश्च ब्राह्मणेभ्यो ददुर्धनम् ॥ ३८ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे कार्त्तिकप्रवृत्ति-
प्राप्तिर्नाम चतुर्दशोऽध्यायः ।

—o—

## पञ्चदशोऽध्यायः ।

—ooXoo—

नारायण उवाच ।

पुत्रस्य वार्त्तां सम्प्राप्य पार्वत्या सह शङ्करः ।
प्रेरितो विष्णुना देवैर्मुनिभिः पर्वतैर्मुने ॥ १ ॥
दूतान् प्रस्थापयामास महाबलपराक्रमान् ।
वीरभद्रं विशालाक्षं शङ्कुकर्णं कबन्धकम् ॥ २ ॥
नन्दीश्वरं महाकालं वज्रदन्तं भगन्दरम् ।
गोधामुखं दधिमुखं ज्वलदग्निशिखोपमम् ॥ ३ ॥
लक्षञ्च क्षेत्रपालानां भूतानाञ्च त्रिलक्षकम् ।
वेतालानां चतुर्लक्षं यक्षाणां पञ्चलक्षकम् ॥ ४ ॥
कुष्माण्डानाञ्चतुर्लक्षं त्रिलक्षं ब्रह्मरक्षसाम् ।
डाकिनीनाञ्चतुर्लक्षं योगिनीनां त्रिलक्षकम् ॥ ५ ॥
रुद्रांश्च भैरवांश्चैव शिवतुल्यपराक्रमान् ।
अन्यांश्च विकृताकारानसंख्यानपि नारद ॥ ६ ॥
ते सर्वे शिवदूताश्च नानाशस्त्रास्त्रपाणयः ।
कृत्तिकानाञ्च भवनं वेष्टयामासुः सत्वरम् ॥ ७ ॥

दृष्ट्वा तान् कृत्तिकाः सर्वा भयविह्वलमानसाः ।
कार्त्तिकं कथयामासुर्ज्वलन्तं ब्रह्मतेजसा ॥ ८ ॥

कृत्तिका ऊचुः ।

वत्स सैन्यान्यसंख्यानि वेष्टयामासुरालयम् ।
न जानीमो वयं कस्य करालानि च कार्त्तिक ॥ ९ ॥

कार्त्तिकेय उवाच ।

भयं त्यजत कल्याण्यो भयं किं वो मयि स्थिते ।
दुर्निवार्य्यो निषेकश्च मातरः केन वार्य्यते ॥ १० ॥
एतस्मिन्नन्तरे तत्र सैन्येन्द्रो नन्दिकेश्वरः ।
पुरतः कार्त्तिकस्यापि तिष्ठंस्तासामुवाच ह ॥ ११ ॥

नन्दिकेश्वर उवाच ।

भ्रातः प्रवृत्तिं शृणु मे मातरश्च शुभावहम् ।
प्रेषितस्य सुरेन्द्रस्य संहर्त्तुः शङ्करस्य च ॥ १२ ॥
कैलासे सर्वदेवाश्च ब्रह्मविष्णुशिवादयः ।
सभायां ते वसन्तश्च गणेशोत्सवमङ्गलम् ॥ १३ ॥
शैलेन्द्रकन्या तं विष्णुं जगतां परिपालकम् ।
संबोध्य कथयामास तवान्वेषणहेतुकम् ॥ १४ ॥
पप्रच्छ देवान् विष्णुस्तान् क्रमेणावाप्तिहेतवे ।
प्रत्युत्तरं ददुस्ते तु प्रत्येकञ्च यथोचितम् ॥ १५ ॥
त्वमत्र कृत्तिकास्थाने कथयामासुरीश्वरम् ।
सर्वे धर्मादयो देवा धर्माधर्मस्य साक्षिणः ।
या बभूव रहःक्रीड़ा पार्वतीशिवयोः पुरा ॥ १६ ॥
दृष्टस्य च सुरैः शम्भोर्वीर्य्यं भूमौ पपात ह ।

भूमिस्तदक्षिपद्‌ वह्नौ वह्निश्च शरकानने ।
ततो लब्धः कृत्तिकाभिरमूभिर्गच्छ साम्प्रतम् ॥ १७ ॥
तत्राभिषेकं विष्णुश्च करिष्यति सुरैः सह ।
हनिष्यसि तारकाख्यं सर्वशस्त्रं लभिष्यसि ।
पुत्रस्त्वं विश्वसंहर्त्तुस्त्वां गोप्तुं न क्षमा इमाः ॥ १८ ॥
नाग्निं गोप्तुं यथा शक्तः शुष्कवृक्षः स्वकोटरे ।
दीप्तिमांस्त्वञ्च विश्वेषु तासां गेहेषु शोभसे ।
यथा पतन्महाकूपे द्विजराजो न राजते ॥ १९ ॥
करोषि जगदालोकं नाच्छन्नोऽस्याङ्गतेजसा ।
यथा सूर्य्यः कराच्छन्नो न भवेन्मानवस्य च ॥ २० ॥
विष्णुस्त्वञ्च जगद्‌व्यापी नासां व्याप्योऽसि शाम्भव ।
यथा न केषां व्याप्यञ्च तत्सर्वं व्यापकं नभः ॥ २१ ॥
योगीन्द्रो नानुलिप्तस्त्वं भोगी च परिपोषणे ।
नैव लिप्तो यथात्मा च कर्म्मभोगेषु जीविनाम् ॥ २२ ॥
विश्वाधारस्त्वमीशश्च नासूते सम्भवेत् स्थितिः ।
सागरस्य यथा नद्यां सरितामाश्रयस्य च ॥ २३ ॥
न हि सर्वेश्वरावासः सम्भवेत् कृत्तिकालये ।
गरुड़स्य यथा वासः क्षुद्रे च चटकोदरे ॥ २४ ॥
त्वाञ्च देवा न जानन्ति भक्तानुग्रहविग्रहम् ।
गुणानां तेजसां राशिं यथा ज्ञानमयोगिनः ॥ २५ ॥
त्वामनिर्वचनीयञ्च कथं जानन्ति कृत्तिकाः ।
यथा परां हरेर्भक्तिमभक्ता मूढ़चेतसः ॥ २६ ॥
भ्रातर्यं यं न जानन्ति ते तं कुर्वन्त्यनादरम् ।
नाद्रियन्ते यथा भेकास्त्वेकवासांश्च पङ्कजान् ॥ २७ ॥

कार्त्तिक उवाच ।

भ्रातः सर्वं विजानामि ज्ञानं त्रैकालिकञ्च यत् ।
ज्ञानी त्वं का प्रशंसा ते यतो मृत्युञ्जयाश्रितः ॥ २८ ॥
कर्मणा जन्म येषां वा यासु यासु च योनिषु ।
तासु ते निर्वृतिं भ्रातः प्राप्नुवन्ति च सन्ततम् ॥ २९ ॥
ये यत्र सन्ति सन्तो वा मूढ़ा वा कर्मभोगतः ।
तेऽपि तं बहु मन्यन्ते मोहिता विष्णुमायया ॥ ३० ॥
साम्प्रतं जगतां माता विष्णुमाया सनातनी ।
सर्वाद्या विष्णुमाया च सर्वदा विष्णुमङ्गला ।
शैलेन्द्रपत्नीगर्भे सा लेभे जन्म भारते ।
दारुणञ्च तपस्तप्त्वा सम्प्राप शङ्करं पतिम् ॥ ३१ ॥
ब्रह्मादि तृणपर्य्यन्तं सर्वं मिथ्यैव कृत्रिमम् ।
सर्वे कृष्णोद्भवाः काले विलीनास्तत्र केवलम् ॥ ३२ ॥
कल्पे कल्पे जगन्माता माता मे प्रतिजन्मनि ।
यज्जन्ममायया बद्धो नित्यः सृष्टिविधावहम् ॥ ३३ ॥
प्रकृतेरुद्भवाः सर्वा जगत्सु सर्वयोषितः ।
काश्चिदंशाः कलाः काश्चित् कलांशांशेन काश्चन ॥ ३४ ॥
कृत्तिका ज्ञानवत्यश्च योगिन्यः प्रकृतेः कलाः ।
स्तनेनाभिवर्द्धितोऽहमुपहारेण सन्ततम् ॥ ३५ ॥
तासामहं पोष्यपुत्रो मदम्बाः पोषणादिमाः ।
तस्याश्च प्रकृतेः पुत्रो यतस्त्वत्स्वामिवीर्य्यतः ॥ ३६ ॥
न गर्भजोऽहं शैलेन्द्रकन्याया नन्दिकेश्वर ।
सा च मे धर्मतो माता तथेमाः सर्वसम्मताः ॥ ३७ ॥
स्तनदात्री गर्भधात्री भक्ष्यदात्री गुरुप्रिया ।

अभीष्टदेवपत्नी च पितुः पत्नी च कन्यका ।
सगर्भकन्या भगिनी पुत्रपत्नी प्रियाप्रसूः ।
मातुर्माता पितुर्माता सोदरस्य प्रिया तथा ।
मातुः पितुश्च भगिनी मातुलानी तथैव च ।
जनानां वेदविहिता मातरः षोड़शः स्मृताः ॥ ३८ ॥
इमाश्च सर्वसिद्धिश्चाः परमैश्वर्य्यसंयुताः ।
न क्षुद्रा ब्रह्मणः कन्यास्त्रिषु लोकेषु पूजिताः ॥३९॥
विष्णुना प्रेरितस्त्वञ्च शम्भोः पुत्रसमो महान् ।
गच्छ यामि त्वया सार्द्धं द्रक्ष्यामि देवताकुलम् ॥ ४० ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे नन्दिकार्त्तिकसंवादे
पञ्चदशोऽध्यायः ।

---

## षोड़शोऽध्यायः ।

---

नारायण उवाच ।
इत्येवमुक्त्वा तं शीघ्रं संबोध्य कृत्तिकागणम् ।
उवाच नीतियुक्तञ्च वचनं शङ्करात्मजः ॥ १ ॥
कार्त्तिक उवाच ।
यास्यामि शङ्करस्थानं द्रक्ष्यामि देवताकुलम् ।
मातरं बन्धुवर्गांश्च विदायं दत्त मातरः ॥ २ ॥
दैवाधीनं जगत्सर्वं जन्म कर्म शुभावहम् ।

संयोगश्च वियोगश्च न च दैवात् परं बलम् ॥ ३ ॥
कृष्णायत्तञ्च तद्दैवं स च दैवात् परस्ततः ।
भजन्ति सततं सन्तः परमात्मानमीश्वरम् ॥ ४ ॥
दैवं वर्द्धयितुं शक्तः क्षयं कर्त्तुं स्वलीलया ।
न दैवबद्धस्तद्भक्तश्चाविनाशी च निर्णयः ॥ ५ ॥
तस्माद्भजत गोविन्दं मोहं त्यजत दुःखदम् ।
सुखदं मोक्षदं सारं जन्ममृत्युभयापहम् ॥ ६ ॥
परमानन्दजननं मोहजालनिकृन्तनम् ।
शश्वद्भजन्ति यत् सर्वे ब्रह्मविष्णुशिवादयः ॥ ७ ॥
कोऽहं भवाब्धौ युष्माकं का वा यूयं ममात्मिकाः ।
तत्कर्म स्रोतसां सर्वं पुञ्जीभूतञ्च फेनवत् ॥ ८ ॥
संश्लेषं विपरीतं वा तत्सर्वमीश्वरेच्छया ।
ब्रह्माण्डमीश्वराधीनं न स्वतन्त्रं विदुर्बुधाः ॥ ९ ॥
जलबुद्बुदवत् सर्वमनित्यञ्च जगत्त्रयम् ।
मायामनित्ये कुर्वन्ति मायया मूढ़चेतसः ॥ १० ॥
सन्तस्तत्र न लिप्यन्ति वायुवत् कृष्णचेतसः ।
तस्मान्मोहं परित्यज्य विदायं दत्त मातरः ॥ ११ ॥
इत्येवमुक्त्वा ता नत्वा सार्द्धं शङ्करपार्षदैः ।
यात्राञ्चकार भगवान्मनसा श्रीहरिं स्मरन् ॥ १२ ॥
एतस्मिन्नन्तरे तत्र ददर्श रथमुत्तमम् ।
विश्वकर्मनिर्मितञ्च हीरकेण विराजितम् ॥ १३ ॥
सद्रत्नसाररचितं माणिक्येन विराजितम् ।
पारिजातप्रसूनानां मालाजालैश्च शोभितम् ॥ १४ ॥
मणीन्द्रदर्पणैः श्वेतचामरैरतिदीपितम् ।

क्रीड़ाहेममन्दिरे रम्यैश्चित्रितैश्चित्रितं वरम्॥ १५॥
शतचक्रं सुविस्तीर्णं मनोयायि मनोहरम्।
प्रस्थापितञ्च पार्वत्या वेष्टितं पार्षदैर्वरैः।
तमारुहन्तं यानं ता हृदयेन विदूयता॥ १६॥
सहसा चेतनां प्राप्य मुक्तकेश्यः सुचातुराः॥ १७॥
दृष्ट्वा च स्वपुरः स्कन्दं स्तम्भिता अतिशोकतः।
उन्मत्ता इव तत्रैव वक्तुमारेभिरे भिया॥ १८॥

कृत्तिका ऊचुः।

किं कुर्मः क्व च यास्यामो वयं वत्स त्वदाश्रयाः।
विहायास्मान् क्व यासि त्वं नायं धर्म्मस्तवाधुना॥१९॥
स्नेहेन वर्द्धितोऽस्माभिः पुत्रोऽस्माकं स्वधर्मतः।
नायं धर्मो मातृवर्गानुपयुक्तः सुतस्त्यजेत्॥ २०॥
इत्युक्त्वा कृत्तिकाः सर्वाः कृत्वा वक्षसि कार्त्तिकम्।
पुनर्मूर्च्छामवापुस्ताः सुतविच्छेददारुणाम्॥ २१॥
कुमारो बोधयित्वा ता अध्यात्मवचनेन वै।
ताभिश्च पार्षदैः सार्द्धमारुरोह रथं मुने॥ २२॥
पूर्णकुम्भं द्विजं वेश्यां शुक्लधान्यञ्च दर्पणम्।
दध्याज्यं मधुलाजञ्च पुष्पं दूर्वाक्षतं सितम्।
वृषं गजेन्द्रं तुरगं ज्वलदग्निं सुवर्णकम्।
पूर्णञ्च परिपक्वानि फलानि विविधानि च।
पतिपुत्रवतीं नारीं प्रदीपं मणिमुत्तमम्।
मुक्तां प्रसूनमालाञ्च सद्यो मांसञ्च चन्दनम्।
ददर्शैतानि वस्तूनि मङ्गलानि पुरो मुने॥ २३॥
शृगालं नकुलं कुम्भं शवं वामे शुभावहम्।

राजहंसं मयूरञ्च खञ्जनञ्च शुकं पिकम् ।
पारावतं शङ्खचिल्लं चक्रवाकञ्च मङ्गलम् ।
कृष्णसारञ्च सुरभीं चामरीं श्वेतचामरम् ।
धेनुञ्च वत्ससंयुक्तां पताकां दक्षिणे शुभाम् ।
नानाप्रकारवाद्यञ्च शुश्राव मङ्गलध्वनिम् ।
हरिशब्दस्य सङ्गीतं घण्टाशङ्खध्वनिन्तथा ॥ २४ ॥
दृष्ट्वा श्रुत्वा मङ्गलं स जगाम तातमन्दिरम् ।
क्षणेनानन्दयुक्तश्च मनोयायिरथेन च ॥ २५ ॥
कुमारः प्राप्य कैलासं न्यग्रोधाक्षयमूलके ।
क्षणं तस्थौ कृत्तिकाभिः पार्षदप्रवरैः सह ॥ २६ ॥
पार्वती मङ्गलं कृत्वा राजमार्गं मनोहरम् ।
पद्मरागैरिन्द्रनीलैः संस्कृतं परितः पुरम् ॥ २७ ॥
रम्भास्तम्भसमूहैश्च पट्टसूत्रप्रवर्द्धितैः ।
श्रीखण्डपल्लवैर्युक्तं पूर्णकुम्भैः सुशोभितम् ॥ २८ ॥
पूर्णकुम्भजलैर्व्याप्तं सिक्तं चन्दनवारिभिः ।
रत्नप्रदीपासंख्यैश्च मणिराजैर्विराजितम् ॥ २९ ॥
नटनर्त्तकवेश्यानामुत्सवैः संकुलं सदा ।
वन्दिभिर्विप्रवर्गैश्च दूर्वापुष्पकरैर्युतम् ।
पतिपुत्त्रवतीभिश्च साध्वीभिश्च समन्विताम् ॥ ३० ॥
लक्ष्मीं सरस्वतीं दुर्गां सावित्रीं तुलसीं रतिम् ।
अरुन्धतीमहल्याञ्च दितिं तारां मनोरमाम् ।
अदितिं शतरूपाञ्च शचीं सन्ध्याञ्च रोहिणीम् ॥ ३१ ॥
अनसूयाञ्च स्वाहाञ्च संज्ञां वरुणकामिनीम् ।
आकूतिञ्च प्रसूतिञ्च देवहूतीञ्च मेनकाम् ॥ ३२ ॥

तामेकपाटलामेकपर्णां मेनाककामिनीम् ।
वसुन्धराञ्च मनसा पुरस्कृत्य समाययौ ॥ ३३ ॥
रम्भा तिलोत्तमा मेना घृताची मोहिनी शुभा ।
उर्वशी रत्नमाला च सुशीला ललिता कला ॥ ३४ ॥
कदम्बमाला सुरसा वनमाला च सुन्दरी ।
एताश्चान्याश्च बह्वाश्च विप्रेन्द्राऽप्सरसाङ्गणाः ॥ ३५ ॥
सङ्गीतनर्त्तनपराः सस्मिता वेशसंयुताः ।
करतालकराः सर्वा जग्मुरानन्दपूर्वकम् ॥ ३६ ॥
देवाश्च मुनयः शैला गन्धर्वाः किन्नरास्तथा ।
सर्वे ययुः प्रमुदिताः कुमारस्यानुमज्जने ॥ ३७ ॥
नानाप्रकारवाद्यैश्च रुद्रैश्च पार्षदैः सह ।
भैरवैः क्षेत्रपालैश्च ययौ सार्द्धं महेश्वरः ॥ ३८ ॥
अथ शक्तिधरो हृष्टो दृष्ट्वारात् पार्वतीन्तदा ।
अवरुह्य रथात्तूर्णं शिरसा प्रणनाम ह ॥ ३९ ॥
तं पद्मांप्रमुखं देवीगणञ्च मुनिकामिनीम् ।
शिवञ्च परया भक्त्या सर्वान् संभाष्य यत्नतः ।
पार्वती कार्त्तिकं दृष्ट्वा क्रोड़े कृत्वा चुचुम्ब च ॥ ४० ॥
शङ्करश्च सुराः शैला देव्यश्च शैलयोषितः ।
पार्वतीप्रमुखा देव्यो देवाश्च शङ्करस्तथा ।
शैलाश्च मुनयः सर्वे ददुस्तस्मै शुभाशिषम् ॥ ४१ ॥
कुमारः सगणैः सार्द्धमागत्य च शिवालयम् ।
ददर्श तं सभामध्ये विष्णुं चीरोदशायिनम् ।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ ४२ ॥
धर्मब्रह्मे न्द्रचन्द्रार्कवह्निवाय्वादिभिर्युतम् ।

ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकातरम् ।
स्तुतं मुनीन्द्रैर्देवेन्द्रैः सेवितं श्वेतचामरैः ॥ ४३ ॥
तं दृष्ट्वा जगतां नाथं भक्तिनम्रात्मकन्धरः ।
पुलकान्वितसर्वाङ्गैः शिरसा प्रणनाम ह ॥ ४४ ॥
विधिं धर्मञ्च देवांश्च मुनीन्द्रांश्च मुदान्वितान् ।
प्रणनाम च प्रत्येकं प्राप तेषां शुभाशिषम् ॥ ४५ ॥
सर्वान् संभाष्य प्रत्येकमुवास कनकासने ।
ददौ धनानि विप्रेभ्यः पार्वत्या सह शङ्करः ॥ ४६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे कार्त्तिकागमनं
नाम षोड़शोऽध्यायः ।

---

## सप्तदशोऽध्यायः ।

नारायण उवाच ।

अथ विष्णुर्जगत्कान्तो हृष्टः कृत्वा शुभक्षणम् ।
रत्नसिंहासने रम्ये वासयामास कार्त्तिकम् ॥ १ ॥
नानाविधानि वाद्यानि कांस्यतालादिकानि च ।
नानाविधानि यन्त्राणि वादयामास कौतुकात् ॥ २ ॥
वेदमन्त्राभिषिक्तैश्च सर्वतीर्थोदपूर्णकैः ।
सद्रत्नकुम्भशतकैः स्नापयामास तं मुदा ॥ ३ ॥

सद्रत्नसाररचितकिरीटमङ्गलाङ्गदम्।
अमूल्यरत्नरचितभूषणानि बहूनि च।
वह्निशुद्धांशुके दिव्ये क्षीरोदार्णवसम्भवम्।
कौस्तुभं वनमालाञ्च तस्मै चक्रं ददौ मुदा॥ ४॥
ब्रह्मा ददौ यज्ञसूत्रं वेदांश्च वेदमातरम्।
सन्ध्यामन्त्रं कृष्णमन्त्रं स्तोत्रञ्च कवचं हरेः॥ ५॥
कमण्डलुञ्च ब्रह्मास्त्रं विद्याञ्च वैरिमर्द्दिनीम्।
धर्म्मो धर्म्ममतिं दिव्यां सर्व्वजीवे दयां ददौ॥ ६॥
परं मृत्युञ्जयं ज्ञानं सर्व्वशास्त्रावबोधनम्।
शश्वत् सुखप्रदं तत्त्वज्ञानञ्च सुमनोहरम्॥ ७॥
योगतत्त्वं सिद्धितत्त्वं ब्रह्मज्ञानं सुदुर्लभम्।
शूलं पिनाकं परशुं शक्तिं पाशुपतं धनुः।
संहारास्त्रविनिक्षेपं तत्संहारं ददौ शिवः॥ ८॥
श्वेतच्छत्रं रत्नमालां ददौ तस्मै जलेश्वरः।
गजेन्द्रञ्च महेन्द्रश्च सुधाकुम्भं सुधानिधिः॥ ९॥
मनोयायिरथं सूर्य्यः सन्नाहञ्च मनोरमम्।
यमदण्डं यमश्चैव महाशक्तिं हुताशनः।
नानाशस्त्राण्युपायानि सर्व्वे देवा ददुर्मुदा॥ १०॥
कामशास्त्रं कामदेवो ददौ तस्मै मुदान्वितः।
क्षीरोदोऽमूल्यरत्नानि विशिष्टं रत्ननूपुरम्॥ ११॥
पार्व्वती सस्मिता हृष्टा परमानन्दमानसा।
महाविद्यां सुशीलाञ्च विद्यां मेधां दयां स्मृतिम्।
बुद्धिं सुनिर्म्मलां शान्तिं तुष्टिं पुष्टिं क्षमां धृतिम्।
सुदृढाञ्च हरौ भक्तिं हरिदास्यं ददौ मुदा॥ १२॥

प्रजापतिर्देवसेनां रत्नभूषणभूषिताम् ।
सुविनीतां सुशीलाञ्च सुन्दरीं सुमनोहराम् ।
ददौ तस्मै विवाहेन वेदमन्त्रेण नारद ।
यां वदन्ति महाषष्ठीं पण्डिताः शिशुपालिकाम् ॥१३॥
अभिषिच्य कुमारञ्च सर्वे देवा ययुर्गृहम् ।
मुनयश्चैव गन्धर्वाः प्रणम्य जगदीश्वरान् ॥ १४ ॥
नारायणञ्च ब्रह्माणं धर्मं तुष्टाव शङ्करः ।
प्रणनाम हरिं तातं धर्ममालिङ्ग्य नारद ॥ १५ ॥
प्रीत्या ययौ च शैलेन्द्रः सगणः शङ्करार्च्चितः ।
ये ये तत्रागताः सर्वे ययुरानन्दपूर्वकम् ॥ १६ ॥
परमानन्दसंयुक्तो देव्या सह महेश्वरः ।
कालान्तरे च तान् सर्वान् पुनरानीय शङ्करः ।
पुष्टिं ददौ विवाहेन गणेशाय महात्मने ॥ १७ ॥
सुताभ्यां सगणैः सार्द्धं पार्वती हृष्टमानसा ।
सिषेवे स्वामिनः पादपद्मं सा सर्वकामदम् ॥ १८ ॥
इत्येवं कथितं सर्वं कुमारस्याभिषेचनम् ।
विवाहः पूजनं तस्य गणेशस्य विवाहकम् ॥ १९ ॥
पार्वतीपुत्रलाभश्च देवानाञ्च समागमः ।
का ते मनसि वाञ्छास्ति किं भूयः श्रोतुमिच्छसि ॥२०॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे कुमाराभिषेको नाम
सप्तदशोऽध्यायः ।

—

# अष्टादशोऽध्यायः।

नारद उवाच।

नारायण महाभाग वेदवेदाङ्गपारग।
पृच्छामि त्वामहं किञ्चिदतिसन्देहमीश्वर ॥ १ ॥
सुतस्य विदशेशस्य शङ्करस्य महात्मनः।
विघ्ननिघ्नस्य यद्विघ्नमीश्वरस्य कथं प्रभो ॥ २ ॥
परिपूर्णतमः श्रीमान् परमात्मा परात्परः।
गोलोकनाथः स्वांशेन पार्वतीतनयः स्वयम् ॥ ३ ॥
अहो भगवतस्तस्य मस्तकच्छेदनं विभो।
ग्रहदृष्ट्या ग्रहेशस्य तन्मे त्वं वक्तुमर्हसि ॥ ४ ॥

नारायण उवाच।

सावधानं शृणु ब्रह्मन्नितिहासं पुरातनम्।
विघ्नेशस्य विघ्नमिदं बभूव येन नारद ॥ ५ ॥
एकदा शङ्करः सूर्यं जघान परमक्रुधा।
मालिसुमालिहन्तारं शूलेन भक्तवत्सलः ॥ ६ ॥
श्रीसूर्योऽव्यर्थशूलेन शिवतुल्येन तेजसा।
जहार चेतनां सद्यो रथाच्च निपपात ह ॥ ७ ॥
ददर्श कश्यपः पुत्त्रं मृतमुत्तानलोचनम्।
कृत्वा वक्षसि तं शोकात् विललाप भृशं मुहुः ॥ ८ ॥
हाहाकारं सुरास्सर्वाश्चक्रुर्विलपुर्भृगम्।
अन्धीभूतं जगत् सर्वं बभूव तमसावृतम् ॥ ९ ॥

निष्प्रभं तनयं दृष्ट्वा शशाप कश्यपः शिवम् ।
तपस्वी ब्रह्मणः पौत्रः प्रज्वलन् ब्रह्मतेजसा ॥ १० ॥
मत्पुत्रस्य यथा वक्षश्छिन्नं शूलेन तेऽद्य च ।
त्वत्पुत्रस्य शिरश्छिन्नमेवम्भूतम्भविष्यति ॥ ११ ॥
शिवश्च गलितक्रोधः क्षणेनैवाशुतोषकः ।
ब्रह्मज्ञानेन तत्सूर्य्यं जीवयामास तत्क्षणात् ॥ १२ ॥
ब्रह्मविष्णुमहेशानामंशश्च त्रिगुणात्मकः ।
सूर्य्यश्च चेतनां प्राप्य समुत्तस्थुः पितुः पुरः ॥ १३ ॥
ननाम पितरं भक्त्या शङ्करं भक्तवत्सलः ।
विज्ञाय शम्भोः शापञ्च कश्यपञ्च चुकोप ह ॥ १४ ॥
विषयं नैव जग्राह कोपेनैवमुवाच ह ।
विषयञ्च परित्यज्य भजामि कृष्णमीश्वरम् ॥ १५ ॥
सर्वं तुच्छमनित्यञ्च नश्वरं चेश्वरं विना ।
विहाय मङ्गलं सत्यं विद्वान्नेच्छेदमङ्गलम् ॥ १६ ॥
देवैश्च प्रेरितो ब्रह्मा समागत्य ससम्भ्रमः ।
बोधयित्वा रविं तत्र युयोज विषये प्रभुः ॥ १७ ॥
शिवस्तत्साशिषं कृत्वा ब्रह्मा च स्वालयं मुदा ।
जगाम कश्यपश्चैव स्वराशिं रविरेव च ॥ १८ ॥
अथ माली सुमाली च व्याधिग्रस्तौ बभूवतुः ।
श्वित्रौ गलितसर्वाङ्गौ शक्तिहीनौ हतप्रभौ ॥ १९ ॥
तावुवाच स्वयं ब्रह्मा युवाञ्च भजतां रविम् ।
सूर्य्यकोपेन गलितौ युवामेव हतप्रभौ ॥ २० ॥
सूर्य्यस्य कवचं स्तोत्रं सर्वं पूजाविधिं विधिः ।
जगाम कथयित्वा तौ ब्रह्मलोकं सनातनः ॥ २१ ॥

ततस्तौ पुष्करं गत्वा सिषेवाते रविं मुने ।
स्नात्वा त्रिकालं भक्त्या च जपन्तौ मन्त्रमुत्तमम् ॥२२॥
ततः सूर्य्याद्वरं प्राप्य निजरूपौ बभूवतुः ।
इत्येवं कथितं सर्वं किम्भूयः श्रोतुमिच्छसि ॥ २३ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे विघ्नेशविघ्नकथनं नाम
अष्टादशोऽध्यायः ।

---

## एकोनविंशोऽध्यायः ।

---

नारद उवाच ।

किं स्तोत्रं कवचं ब्रह्मन् ब्रह्मणा च ददौ मुने ।
दानवाभ्यां पुरा दत्तं सूर्य्यस्य परमात्मनः ॥ १ ॥
किं वा पूजाविधानं वा किं मन्त्रं व्याधिनाशनम् ।
सर्वं चास्य महाभाग तन्मे त्वं वक्तुमर्हसि ॥ २ ॥

सूत उवाच ।

नारदस्य वचः श्रुत्वा भगवान् करुणानिधिः ।
स्तोत्रञ्च कवचं मन्त्रमुवाच पूजनक्रमम् ॥ ३ ॥

नारायण उवाच ।

शृणु नारद वक्ष्यामि श्रीसूर्य्यपूजनक्रमम् ।
स्तोत्रञ्च कवचं सर्वं पापव्याधिविमोचनम् ॥ ४ ॥

मालिसुमालिनौ दैत्यौ व्याधिग्रस्तौ बभूवतुः ।
विधिं सस्मरतुः स्तोतुं शिवमन्त्रप्रदायकम् ॥ ५ ॥
ब्रह्मा गत्वा च वैकुण्ठं पप्रच्छ कमलापतिम् ।
शिवं तत्रैव गच्छन्तं वसन्तं हरिसन्निधौ ॥ ६ ॥

ब्रह्मोवाच ।

मालिसुमालिनौ दैत्यौ व्याधिग्रस्तौ बभूवतुः ।
कमुपायं वद ब्रह्मंस्तयोर्व्याधिविनाशने ॥ ७ ॥

विष्णुरुवाच ।

कृत्वा सूर्य्यस्य सेवाञ्च पुष्करे पूर्णवत्सरम् ।
व्याधिहन्तुर्मदंशस्य तौ च मुक्तौ भविष्यतः ॥ ८ ॥

शङ्कर उवाच ।

सूर्य्यस्य स्तोत्रं कवचं मन्त्रं कल्पतरुं परम् ।
देहि ताभ्यां जगत्कान्त व्याधिहन्तुर्महात्मनः ॥ ९ ॥
आरात् सम्पत् प्रदातारौ सर्वदाता हरिः स्वयम् ।
व्याधिहन्ता दिनकरो यस्य यो विषयो विधे ॥ १० ॥
तयोरनुमतिं प्राप्य ययौ दैत्यगृहं विधिः ।
प्रणम्य तौ तं दृष्ट्वा च तस्मै ददतुरासनम् ॥ ११ ॥
तावुवाच स्वयं ब्रह्मा गलितौ च दयानिधिः ।
स्वश्वावाहाररहितौ पूयदुर्गन्धसंयुतौ ॥ १२ ॥

ब्रह्मोवाच ।

गृहीत्वा कवचं स्तोत्रं मन्त्रं पूजाविधिक्रमम् ।
गत्वा हि पुष्करं वत्सौ भजथः प्रणतौ रविम् ॥ १३ ॥

तावूचतुः ।

भजावः केन विधिना केन मन्त्रेण वा विधे ।

किं स्तोत्रं कवचं किं वा तदावाभ्यां प्रदेहि च ॥१४॥

ब्रह्मोवाच ।

स्नात्वा त्रिकालं स्नानञ्च मन्त्रेणानेन भास्करम् ।
संसेव्य भास्करं भक्त्या नीरुजौ च भविष्यथः ॥ १५ ॥
ओं ह्रीं नमो भगवते सूर्य्याय परमात्मने स्वाहा ।
इत्यनेन च मन्त्रेण सावधानं दिवाकरम् ।
संपूज्य भक्त्या दत्त्वा चैवोपहाराणि षोड़श ।
एवं संवत्सरं यावत् ध्रुवं मुक्तौ भविष्यथः ॥ १६ ॥
अपूर्वं कवचं तस्य युवाभ्यां प्रददाम्यहम् ।
यद्दत्तं गुरुणा पूर्वमिन्द्राय प्रीतिपूर्वकम् ॥ १७ ॥
तत् सहस्रभगाङ्गाय शापेन गौतमस्य च ।
अहल्याहरणेनैव पापयुक्ताय सङ्कटे ॥ १८ ॥

बृहस्पतिरुवाच ।

इन्द्रं शृणु प्रवक्ष्यामि कवचं परमाद्भुतम् ।
यद्धृत्वा मुनयः पूता जीवन्मुक्ताश्च भारते ॥ १९ ॥
कवचं बिभ्रतो व्याधिर्न याति सन्निधिं भिया ।
यथा दृष्ट्वा वैनतेयं पलायन्ते भुजङ्गमाः ॥ २० ॥
शुद्धाय गुरुभक्ताय स्वशिष्याय प्रकाशयेत् ।
खलाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ २१ ॥
जगद्विलक्षणस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवो दिनकरः स्वयम् ।
व्याधिप्रणाशे सौन्दर्य्ये विनियोगः प्रकीर्त्तितः ॥ २२ ॥
सद्यः पूतकरं सारं सर्वपापप्रणाशनम् ।
ह्रीं क्लीं ओं श्रीं श्रीसूर्य्याय स्वाहा मे पातु मस्तकम्॥२२

अष्टादशाक्षरो मन्त्रः कपालं मे सदावतु ।
ओं ह्रीं ह्रीं श्रीं श्रीसूर्य्याय स्वाहा मे पातु नासिकाम्२
चक्षुर्मे पातु सूर्य्यश्च तारकाञ्च विकर्त्तनः ।
भास्करो मेऽधरं पातु दन्तं दिनकरः सदा ॥ २५ ॥
प्रचण्डः पातु गण्डं मे मार्त्तण्डः कर्णमेव च ।
मिहिरश्च सदा स्कन्धं पातु जङ्घे च पूषणः ॥ २६ ॥
वक्षः पातु रविः शश्वन्नाभिं सूर्य्यः स्वयं सदा ।
कङ्कालं मे सदा पातु सर्व्वदेवनमस्कृतः ॥ २७ ॥
करौ पातु सदा ब्रध्नः पातु पादौ प्रभाकरः ।
विभाकरो मे सर्व्वाङ्गं पातु सन्ततमीश्वरः ॥ २८ ॥
इति ते कथितं वत्स कवचं सुमनोहरम् ।
जगद्विलक्षणं नाम त्रिजगत्सु सुदुर्लभम् ॥ २९ ॥
पुरा दत्तञ्च मनवे पुलस्त्यः पुष्करे मुदा ।
मया दत्तञ्च तुभ्यञ्च यस्मै कस्मै न दास्यसि ॥ ३० ॥
व्याधितो मुच्यसे त्वं च कवचस्य प्रसादतः ।
भवानरोगी श्रीमांश्च भविष्यति न संशयः ॥ ३१ ॥
लक्षवर्षं हविष्येण यत् फलं लभते नरः ।
तत् फलं लभते नूनं कवचस्यास्य धारणात् ॥ ३२ ॥
इदं कवचमज्ञात्वा यो मूढ़ो भास्करं भजेत् ।
दशलक्षप्रजप्तोऽपि मन्त्रसिद्धिर्न जायते ॥ ३३ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे सूर्य्यकवचं समाप्तम् ।

———

ब्रह्मोवाच ।

धृत्वेदं कवचं वत्सो कृत्वा च स्तवनं रवेः ।

युवां व्याधिविमुक्तौ च निश्चितन्तु भविष्यथः॥ ३४॥
स्तवनं सामवेदोक्तं सूर्य्यस्य व्याधिमोचनम्।
सर्व्वपापहरं सारं श्रीरारोग्यकरं परम्॥ ३५॥

ब्रह्मोवाच।

तं ब्रह्म परमं धाम ज्योतीरूपं सनातनम्।
त्वामहं स्तोतुमिच्छामि भक्तानुग्रहकारकम्॥ ३६॥
त्रैलोक्यलोचनं लोकनाथं पापप्रमोचनम्।
तपसां फलदातारं दुःखदं पापिनां सदा॥ ३७॥
कर्म्मानुरूपफलदं कर्म्मबीजं दयानिधिम्।
कर्म्मरूपं क्रियारूपमरूपं कर्म्मबीजकम्॥ ३८॥
ब्रह्मविष्णुमहेशानामंशञ्च त्रिगुणात्मकम्।
व्याधिदं व्याधिहन्तारं शोकमोहभयापहम्।
सुखदं मोक्षदं सारं भक्तिदं सर्व्वकामदम्॥ ३९॥
सर्व्वेश्वरं सर्व्वरूपं साक्षिणं सर्व्वकर्म्मणाम्।
प्रत्यक्षं सर्व्वलोकानामप्रत्यक्षं मनोहरम्॥ ४०॥
शश्वद्रसहरं पश्चाद्रसदं सर्व्वसिद्धिदम्।
सिद्धिस्वरूपं सिद्धेशं सिद्धानां परमं गुरुम्॥ ४१॥
स्तवराजमिदं प्रोक्तं गुह्याद्गुह्यतरं परम्।
त्रिसन्ध्यं यः पठेन्नित्यं सर्व्वव्याधिः प्रमुच्यते॥ ४२॥
आन्ध्यं कुष्ठं दारिद्र्यं रोगं शोकं भयं कलिः।
तस्य नश्यन्ति विश्वेश श्रीसूर्य्यकृपया ध्रुवम्॥ ४३॥
महाकुष्ठी च गलितो चक्षुर्हीनो महाव्रणी।
यक्ष्मग्रस्तो महाशूली नानाव्याधियुतोऽपि वा।
मासं कृत्वा हविष्यान्नं श्रुत्वा स मुच्यते ध्रुवम्।

स्नानञ्च सर्वतीर्थानां लभते नात्र संशयः ॥ ४४ ॥
पुष्करं गच्छ तं शीघ्रं भास्करं भजतं सुतौ ।
इत्येवमुक्त्वा स विधिर्जगाम स्वालयं मुदा ॥ ४५ ॥
तौ निषेव्य दिनेशं तं नीरुजौ तौ बभूवतुः ।
इत्येवं कथितं वत्स किम्भूयः श्रोतुमिच्छसि ॥ ४६ ॥
सर्वविघ्नहरं सारं विघ्नेशविघ्नकारणम् ।
स्तोत्रेणानेन तं स्तुत्वा मुच्यते नात्र संशयः ॥ ४७ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे विघ्नकारणकथनं नामोन-
विंशतितमोऽध्यायः ।

---

## विंशोऽध्यायः ।

---

नारद उवाच ।

हरेरंशसमुत्पन्नो हरितुल्यो भवान् धिया ।
तेजसा विक्रमेणैव मत्प्रश्नं श्रोतुमर्हसि ॥ १ ॥
विघ्ननिघ्नस्य यद्विघ्नं श्रुतं तत्परमाद्भुतम् ।
तद्विघ्नकारिणश्चैव विघ्नकारणवक्त्रतः ॥ २ ॥
अधुना श्रोतुमिच्छामि स्वात्मसन्देहभञ्जनम् ।
त्रैलोक्यनाथतनये गजास्ययोजना कथम् ॥ ३ ॥
स्थितेष्वन्येषु सर्वेषां जन्तूनां जन्तुसम्भव ।
विशिष्टानां सुरूपेषु नानारूपेषु रूपिणाम् ॥ ४ ॥

श्रीनारायण उवाच।

गजास्ययोजनायाश्च कारणं शृणु नारद।
गोप्यं सर्वपुराणेषु वेदेषु च सुदुर्लभम् ॥ ५ ॥
तत्त्वरणं सर्वदुःखानां कारणं सर्वसम्पदाम्।
हारणं विपदाञ्चैव रहस्यं पापमोचनम् ॥ ६ ॥
महालक्ष्म्याश्च चरितं सर्वमङ्गलमङ्गलम्।
सुखदं मोक्षदञ्चैव चतुर्वर्गफलप्रदम् ॥ ७ ॥
शृणु तात प्रवक्ष्येऽहमितिहासं पुरातनम्।
रहस्यं पाद्मकल्पस्य पुरा तातमुखाच्छ्रुतम् ॥ ८ ॥
एकदैव महेन्द्रश्च पुष्पभद्रां नदीं ययौ।
महासम्पन्मदोन्मत्तः कामी राजश्रियान्वितः ॥ ९ ॥
तत्तीरेऽतिरहःस्थाने पुष्पोद्याने मनोहरे।
अतीवदुर्गमेऽरण्ये सर्वजन्तुविवर्जिते ॥ १० ॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते।
सुगन्धिपुष्पसंश्लिष्टवायुना सुरभीकृते ॥ ११ ॥
ददर्श रम्भां तत्रैव चन्द्रलोकात् समागताम्।
सुरतश्रमविश्रामकामुकीं कामकामुकीम् ॥ १२ ॥
इच्छन्तीमीप्सितां क्रीड़ां गच्छन्तीं मदनाश्रमम्।
एकाकिनीमुन्मनस्कां मन्मथोन्मतमानसाम् ॥ १३ ॥
सुश्रोणीं सुदतीं श्यामां बिम्बाधरसरोरुहाम्।
बृहन्नितम्बभारार्त्तां गजेन्द्रमन्दगामिनीम् ॥ १४ ॥
सस्मितास्यशरच्चन्द्रां सकटाक्षञ्च बिभ्रतीम्।
बिभ्रतीं कवरीं रम्यां मालतीमाल्यशोभिताम् ॥ १५ ॥
वह्निशुद्धांशुकधरां रत्नभूषणभूषिताम्।

कस्तूरीविन्दुना सार्द्धं सिन्दूरविन्दुमण्डिताम् ॥१६॥
नीलोत्पलविनिन्द्यैककज्जलोज्ज्वललोचनाम् ।
मणिकुण्डलयुग्मेन गण्डस्थलविराजिताम् ॥ १७ ॥
अत्युन्नतं सुकठिनं पत्रराजिविराजितम् ।
सुखदं रसिकानाञ्च स्तनयुग्मञ्च बिभ्रतीम् ॥ १८ ॥
सर्वशोभाव्यवेशाढ्यां सुभगां सुरतोत्सुकाम् ।
प्राणाधिकाञ्च देवानां स्वच्छां स्वच्छन्दगामिनीम् ॥१९॥
वरामप्सरसां रम्यामतीवस्थिरयौवनाम् ।
गुणरूपवतीं शान्तां मुनिमानसमोहिनीम् ॥ २० ॥
दृष्ट्वा तामतिवेशाढ्यां तत्कटाक्षेण पीड़ितः ।
इन्द्रोऽतीन्द्रियचापल्यात् प्रवक्तुमुपचक्रमे ॥ २१ ॥

इन्द्र उवाच ।

क्व गच्छसि वरारोहे क्वागतासि मनोहरे ।
मया दृष्टानि सुचिरं मत्प्रियाणि तवाधुना ॥ २२ ॥
तवान्वेषणकर्त्ताहं श्रुत्वा वाचिकवक्त्रतः ।
अश्वत्तवानुरक्तश्च कामन्यां गणयामि च ॥ २३ ॥
सुवासितजलार्थी यः किमिच्छेत् पङ्किलं जलम् ।
पङ्कं नेच्छेच्चन्दनार्थी पङ्कजार्थी न चोत्पलम् ॥ २४ ॥
सुधार्थी न सुरामिच्छेद् दुग्धार्थी न जलाविलम् ।
सुगन्धिपुष्पशायी यो न चास्तल्पमिच्छति ॥ २५ ॥
यः स्वर्गी नरकं नेच्छेत् सुभोगी मन्दभोजनम् ।
पण्डितैः सह संवासी नेच्छेत् कामिनीसन्निधिम् ।
विहाय रत्नाभरणं कोऽपीच्छेल्लौहभूषणम् ॥ २६ ॥
त्वामाश्रित्य महाविघ्नां को मूढ़ो गन्तुमिच्छति ।

विहाय गङ्गां को विप्रो नदीमन्याञ्च वाञ्छति ॥२७॥
नेन्द्रियैश्चेन्द्रियरतिं वर्द्धमानाञ्च सेवनैः ।
वरं प्रार्थयितारश्च जीविनश्च सुखार्थिनः ॥ २८ ॥
इत्येवमुक्त्वा भगवानवरुह्य गजेश्वरात् ।
कामयुक्तश्च पुरतस्तस्थौ तस्याश्च नारद ॥ २९ ॥
श्रुत्वा तद्वचनं रम्भा महाशृङ्गारलोलुपा ।
जहासानम्रवदना पुलकाञ्चितविग्रहा ॥ ३० ॥
स्मेराननकटाक्षेण स्तनोरुदर्शनेन च ।
कामाग्न्याहुतिवाक्येन जहार तस्य चेतनम् ॥ ३१ ॥
मितं सारं सुमधुरं सुस्निग्धं कोमलं प्रियम् ।
पुरुषायत्तवीजञ्च प्रवक्तुमुपचक्रमे ॥ ३२ ॥

रम्भोवाच ।

यास्यामि वाञ्छितं यत्र प्रश्नेन तव किं फलम् ।
नाहं सन्तोषजननी धूर्त्तानां दुष्टमित्रता ॥ ३३ ॥
यथा मधुकरो लोभात् सर्वपुष्पासवं लभेत् ।
स्वादु यत्रातिरिक्तं स तत्र तिष्ठति सन्ततम् ॥ ३४ ॥
तथैव लम्पटपुमान् भ्रमेद् भ्रमरवत् सदा ।
न विज्ञो हि कास्वेव वायुवद्रसमाहरेत् ॥ ३५ ॥
सुपुमानङ्गवत् स्त्रीणां यथा शाखाश्च शाखिषु ।
लम्पटः काकवल्लोलः फलं भुक्त्वा प्रयाति च ॥ ३६ ॥
स्वकार्य्यमुद्धरेद् यावत्तावद्दासप्रयोजनम् ।
स्थितिः कार्य्यानुरोधेन यथा काष्ठे हुताशनः ॥ ३७ ॥
यावत्तड़ागे तोयानि तावद् यादांसि तेषु च ।
शुष्कारम्भे च तोयानां यान्ति स्थानान्तरं पुनः ॥ ३८ ॥

त्वं देवानामीश्वरोऽसि कामिनीनाञ्च वाञ्छितः ।
पुमांसं रसिकं शश्वद् वाञ्छन्ति रसिकाः सुखात् ॥३९॥
युवानं रसिकं शान्तं सुवेशं सुन्दरं प्रियम् ।
गुणिनं धनिनं स्वच्छं कान्तमिच्छति कामिनी ॥ ४० ॥
दुःशीलं रोगिणं वृद्धं रतिशक्तिविहीनकम् ।
अदातारमविज्ञञ्च नैव वाञ्छन्ति योषितः ॥ ४१ ॥
का मूढ़ा न च वाञ्छन्ति त्वामेवं गुणसागरम् ।
तवाज्ञाकारिणीं दासीं गृहाणात्र यथासुखम् ॥४२॥
इत्युक्त्वा सस्मिता सा च तं पपौ वक्रचक्षुषा ।
कामाग्निदग्धा विगलल्लज्जा तस्थौ समीपतः ॥ ४३ ॥
ज्ञात्वा भावं स्मरार्त्तायाः स्मरशास्त्रविशारदः ।
गृहीत्वा तां पुष्पतल्पे विजहार तया सह ॥ ४४ ॥
सहसा रहसि प्रौढ़ां नग्नाञ्च सुभगां वराम् ।
पक्वबिम्बाधरोष्ठीं च चुचुम्ब चुम्बितस्तया ॥ ४५ ॥
नानाप्रकारशृङ्गारं विपरीतादिकं मुने ।
चकार कामी तत्रैव शृङ्गारी मूर्त्तिमानिव ॥ ४६ ॥
तौ कामाहितचित्तौ मा बुबुधाते दिवानिशम् ।
शश्वत्तद्गतचित्तौ च कामार्त्तौ ज्ञानवर्जितौ ॥ ४७ ॥
स च कृत्वा स्थले क्रीड़ां तया सह सुरेश्वरः ।
ययौ जलविहारार्थं पुष्पभद्रानदीजलम् ॥ ४८ ॥
स चकार जलक्रीड़ां तया सह चणं मुदा ।
जलात् स्थले स्थलात्तोये विजहार पुनः पुनः ॥ ४९ ॥
एतस्मिन्नन्तरे तेन वर्त्मना मुनिपुङ्गवः ।
सशिष्यो याति दुर्वासा वैकुण्ठाच्छङ्करालये ॥ ५० ॥

तच्च दृष्ट्वा मुनीन्द्रश्च देवेन्द्रः स्तम्भमानसः ।
ननामामन्त्य सहसा ददौ तस्मै स चाशिषः ॥ ५१ ॥
पारिजातप्रसूनं यद्दत्तं नारायणेन वै ।
तच्च दत्तं महेन्द्राय मुनीन्द्रेण महात्मना ॥ ५२ ॥
दत्त्वा पुष्पं महाभागस्तमुवाच कृपानिधिः ।
माहात्म्यं तस्य यत् किञ्चिदपूर्वं मुनिसत्तमः ॥ ५३ ॥

दुर्वासा उवाच ।

सर्वविघ्नहरं पुष्पं नारायणनिवेदितम् ।
मूर्द्धीदं यस्य देवेन्द्र जयस्तस्यैव सर्वतः ॥ ५४ ॥
पुरः पूजा च सर्वेषां देवानामग्रणीर्भवेत् ।
तच्छायेव महालक्ष्मीर्न जहाति कदापि तम् ॥ ५५ ॥
ज्ञानेन तेजसा बुद्ध्या विक्रमेण बलेन च ।
सर्वदेवाधिकः श्रीमान् हरितुल्यपराक्रमः ॥ ५६ ॥
भक्त्या मूर्ध्नि न गृह्णाति योऽहङ्कारेण पामरः ।
नैवेद्यञ्च हरेरेव स भ्रष्टश्रीः स्वजातिभिः ।
इत्युक्त्वा शङ्करांशश्च जगाम शङ्करालयम् ॥ ५७ ॥
शक्रो रम्भान्तिके पुष्पं संस्थाप्य गजमस्तके ।
शक्रं भ्रष्टश्रियं दृष्ट्वा सा जगाम सुरालयम् ।
पुंश्चली योग्यमिच्छन्ती नापरं चञ्चलाधमा ॥ ५८ ॥
देवराजं परित्यज्य गजराजो महाबली ।
प्रविवेश महारण्यं तं निक्षिप्य स्वतेजसा ॥ ५९ ॥
तत्रैव करिणीं प्राप्य मत्तः संबुभुजे बलात् ।
सा तद्वशा बभूव वशगा योषिज्जातिः सुखार्थिनी ।
तयोर्बभूवापत्यानां निवहस्तत्र कानने ॥ ६० ॥

हरिस्तन्मस्तकं छित्त्वा युयोज तेन बालके ।
इत्येवं कथितं वत्स किं भूयः श्रोतुमिच्छसि ।
गजास्ययोजनायाश्च कारणं पापनाशनम् ॥ ६१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे गजास्ययोजनहेतुकथनं नाम
विंशतितमोऽध्यायः ।

---

## एकविंशोऽध्यायः ।

---

नारद उवाच ।

ते देवा ब्रह्मशापेन निश्रीकाः केन वा प्रभो ।
बभूवुस्तद्रहस्यञ्च गोपनीयं सुदुर्लभम् ॥ १ ॥
कथं वा प्रापुरेते तां कमलां जगतां प्रसूम् ।
किञ्चकार महेन्द्रश्च तद्भवान् वक्तुमर्हसि ॥ २ ॥

नारायण उवाच ।

गजेन्द्रेण पराभूतो रम्भया च सुमन्दधीः ।
संदृष्टश्रीर्दैन्ययुक्तश्च स जगामामरावतीम् ॥ ३ ॥
तां ददर्श निरानन्दो निरानन्दां पुरीं मुने ।
दैन्यग्रस्तां बन्धुहीनां वैरिवर्गैः समाकुलाम् ॥ ४ ॥
सर्वं श्रुत्वा दूतमुखात् जगाम मन्दिरं गुरोः ।
तेन देवगणैः सार्द्धं जगाम ब्रह्मणः सभाम् ॥ ५ ॥
गत्वा ननाम तं शक्रः सुरैः सार्द्धं तथा गुरुः ।

तुष्टाव वेदविधिना स्तोत्रेण भक्तिसंयुतः ।
प्रवृत्तिं कथयामास वाक्पतिस्तं प्रजापतिम् ।
श्रुत्वा ब्रह्मा नम्रवक्त्रः प्रवक्तुमुपचक्रमे ॥ ६ ॥

ब्रह्मोवाच ।

मत्प्रपौत्रोऽसि देवेन्द्र शश्वद्राजन् श्रिया ज्वलन् ।
लक्ष्मीसमशचीभर्त्ता परस्त्रीलोलुपः सदा ॥ ७ ॥
गौतमस्याभिशापेन भगाङ्गः सुरसंसदि ।
पुनर्लज्जाविहीनस्त्वं परस्त्रीरतिलोलुपः ॥ ८ ॥
यः परस्त्रीषु निरतस्तस्य श्रीर्वा कुतो यशः ।
स च निन्द्यः पापयुक्तः शश्वत् सर्वसभासु च ॥ ९ ॥
नैवेद्यं श्रीहरेरेव दत्तं दुर्वाससा च ते ।
गजमूर्द्ध्नि त्वया न्यस्तं रम्भया हृतचेतसा ॥ १० ॥
क्व सा रम्भा सर्वभोग्या क्वाधुना त्वं श्रिया हृतः।
पद्मा त्यक्ता यन्निमित्तात्तद्गता त्वत्तः क्षणेन सा ॥ ११ ॥
वेश्या सश्रीकमिच्छन्ती निःश्रीकं न च चञ्चला ।
नवं नवं प्रार्थयन्ती परिनिन्द्य पुरातनम् ॥ १२ ॥
यद्गतं तद्गतं वत्स निष्पन्नं न निवर्त्तते ।
भज नारायणं भक्त्या पद्मायाः प्राप्तिहेतवे ॥ १३ ॥
इत्युक्त्वा तं जगत्स्रष्टुः स्तोत्रञ्च कवचं ददौ ।
नारायणस्य मन्त्रञ्च नारायणपरायणः ॥ १४ ॥
स तैः सार्द्धञ्च गुरुणा जजाप मन्त्रमीप्सितम् ।
गृहीत्वा कवचं तेन तुष्टाव पुष्करे हरिम् ॥ १५ ॥
वर्षमेकं निराहारो भारते पुण्यदे शुभे ।
सिषेव कमलाकान्तं कमलाप्राप्तिहेतवे ॥ १६ ॥

आविर्भूय हरिस्तस्मै वाञ्छितञ्च वरं ददौ ।
लक्ष्मीस्तोत्रञ्च कवचं मन्त्रमैश्वर्य्य वर्द्धनम् ॥ १७ ॥
दत्त्वा जगाम वैकुण्ठमिन्द्रः क्षीरोदमेव च ।
गृहीत्वा कवचं स्तुत्वा प्राप पद्मालयां मुने ॥ १८ ॥
सुरेश्वरोऽरिं जित्वा स ललाभामरावतीम् ।
प्रत्येकञ्च सुराः सर्व्वे स्वालयं प्रापुरीप्सितम् ॥ १९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे शक्र लक्ष्मीप्राप्तिर्नामैक-
विंशतितमोऽध्यायः ।

---

## द्वाविंशोऽध्यायः ।

नारद उवाच ।

आविर्भूय हरिस्तस्मै किं स्तोत्रं कवचं ददौ ।
महालक्ष्म्याश्च लक्ष्मीशस्तन्मे ब्रूहि तपोधन ॥ १ ॥

नारायण उवाच ।

पुष्करे च तपस्तप्त्वा विरराम सुरेश्वरः ।
आविर्बभूव तत्रैव क्लिष्टं दृष्ट्वा हरिः स्वयम् ॥ २ ॥
तमुवाच हृषीकेशो वरं वृणु यथेप्सितम् ।
स च वव्रे वरं लक्ष्मीमीशस्तस्मै ददौ मुदा ॥ ३ ॥
वरं दत्त्वा हृषीकेशः प्रवक्तुमुपचक्रमे ।
हितं सत्यञ्च सारञ्च परिणामसुखावहम् ॥ ४ ॥

श्रीमधुसूदन उवाच।

गृहाण कवचं शक्र सर्वदुःखविनाशनम्।
परमैश्वर्य्यजनकं सर्वशत्रुविमर्द्दनम्॥ ५॥
ब्रह्मणे च पुरा दत्तं संसारे च जलप्लुते।
यद्धृत्वा जगतां श्रेष्ठः सर्वैश्वर्य्ययुतो विधिः॥ ६॥
बभूवुर्मनवः सर्वे सर्वैश्वर्य्ययुता यतः।
सर्वैश्वर्य्यप्रदस्यास्य कवचस्य ऋषिर्विधिः॥ ७॥
पङ्क्तिश्छन्दश्च सा देवी स्वयं पद्मालया सुर।
सिद्धैश्वर्य्यजपेष्वेव विनियोगः प्रकीर्त्तितः।
यद्धृत्वा कवचं लोकः सर्वत्र विजयी भवेत्॥ ८॥
मस्तकं पातु मे पद्मा कण्ठं पातु हरिप्रिया।
नासिकां पातु मे लक्ष्मीः कमला पातु लोचनम्॥८॥
केशान् केशवकान्ता च कपालं कमलालया।
जगत्प्रसूर्गण्डयुग्मं स्कन्धं सम्पत्प्रदा सदा॥ १०॥
ओं श्रीं कमलवासिन्यै स्वाहा पृष्ठं सदावतु।
ओं श्रीं पद्मालयायै स्वाहा वक्षः सदावतु।
पातु श्रीर्मम कङ्कालं बाहुयुग्मञ्च श्रीं नमः॥ ११॥
ओं ह्रीं श्रीं लक्ष्म्यै नमः पादौ पातु मे सन्ततञ्चिरम्।
ओं ह्रीं श्रीं नमः पद्मायै स्वाहा पातु नितम्बकम्॥१२॥
ओं श्रीं महालक्ष्म्यै स्वाहा सर्वाङ्गं पातु मे सदा।
ओं ह्रीं श्रीं क्लीं महालक्ष्म्यै स्वाहा मां पातु सर्वतः १३
इति ते कथितं वत्स सर्वसम्पत्करं परम्।
सर्वैश्वर्य्यप्रदं नाम कवचं परमाद्भुतम्॥ १४॥
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः।

कण्ठे वा दक्षिणे बाहौ स सर्वविजयी भवेत् ॥ १५ ॥
महालक्ष्मीर्गृहं तस्य न जहाति कदाचन ।
तस्य छायेव सततं सा च जन्मनि जन्मनि ॥ १६ ॥
इदं कवचमज्ञात्वा भजेल्लक्ष्मीं सुमन्दधीः ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ १७ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे लक्ष्मीकवचं समाप्तम् ।

नारायण उवाच ।

दत्त्वा तस्मै च कवचं मन्त्रञ्च षोड़शाक्षरम् ।
सन्तुष्टश्च जगन्नाथो जगतां हितकारणम् ॥ १८ ॥
ओं ह्रीं श्रीं क्लीं नमो महालक्ष्म्यै हरिप्रियायै स्वाहा।
ददौ तस्मै च कृपया इन्द्राय च महामुने ॥ १९ ॥
ध्यानञ्च सामवेदोक्तं गोपनीयं सुदुर्लभम् ।
सिद्धैर्मुनीन्द्रैर्दुष्प्राप्यं ध्रुवं सिद्धिप्रदं शुभम् ॥ २० ॥
श्वेतचम्पकवर्णाभां शतचन्द्रसमप्रभाम् ।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥ २१ ॥
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारकाम् ।
सहस्रदलपद्मस्थां स्वस्थाञ्च सुमनोहराम् ॥ २२ ॥
शान्ताञ्च श्रीहरेः कान्तां तां भजेज्जगतां प्रसूम् ॥ २३॥
ध्यानेनानेन देवेन्द्र ध्यात्वा लक्ष्मीं मनोहराम् ।
भक्त्या दास्यसि तस्यै च चोपचाराणि षोड़श ॥ २४ ॥
स्तुत्वानेन स्तवेनैव वक्ष्यमाणेन वासव ।
नत्वा वरं गृहीत्वा च लभिष्यसि च निर्वृतिम् ॥ २५
स्तवनं शृणु देवेन्द्र महालक्ष्म्याः सुखप्रदम् ।
कथयामि सुगोप्यञ्च त्रिषु लोकेषु दुर्लभम् ॥ २६ ॥

नारायण उवाच ।

देवि त्वां स्तोतुमिच्छामि न क्षमाः स्तोतुमीश्वराः ।
बुद्धेरगोचरां सूक्ष्मां तेजोरूपां सनातनीम् ।
अत्यनिर्वचनीयाञ्च को वा निर्वक्तुमीश्वरः ॥ २७ ॥
स्वेच्छामयीं निराकारां भक्तानुग्रहविग्रहाम् ।
स्तौमि वाङ्मनसोः पारां किं वाऽहं जगदम्बिके ॥२८॥
परां चतुर्णां वेदानां पारवीजं भवार्णवे ।
सर्वशस्याधिदेवीञ्च सर्वासामपि सम्पदाम् ॥ २९ ॥
योगिनाञ्चैव योगानां ज्ञानानां ज्ञानिनान्तथा ।
वेदानाञ्च वेदविदां जननीं वर्णयामि किम् ॥ ३० ॥
यया विना जगत्सर्वमवस्तु निष्फलं ध्रुवम् ।
यथा स्तनान्धबालानां माता वस्तु त्वया सह ॥ ३१ ॥
प्रसीद जगतां माता रक्षास्मानतिकातरान् ।
वयं त्वच्चरणाम्भोजे प्रपन्नाः शरणं गताः ॥ ३२ ॥
नमः शक्तिस्वरूपायै जगन्मात्रे नमो नमः ।
ज्ञानदायै बुद्धिदायै सर्वदायै नमो नमः ॥ ३३ ॥
हरिभक्तिप्रदायिन्यै मुक्तिदायै नमो नमः ।
सर्वज्ञायै सर्वदायै महालक्ष्म्यै नमो नमः ॥ ३४ ॥
कुपुत्राः कुत्रचित् सन्ति न कुत्रचित् कुमातरः ।
कुत्र माता पुत्रदोषे तं विहाय च गच्छति ॥ ३५ ॥
हे मातर्दर्शनं देहि स्तनान्धान् बालकानिव ।
कृपां कुरु कृपासिन्धुप्रियेऽस्मान् भक्तवत्सले ॥ ३६ ॥
इत्येवं कथितं वत्स पद्मायाश्च शुभावहम् ।
सुखदं मोक्षदं सारं शुभदं सम्पदः प्रदम् ॥ ३७ ॥

इदं स्तोत्रं महापुण्यं पूजाकाले च यः पठेत्।
महालक्ष्मीर्गृहं तस्य न जहाति कदाचन॥ ३८ ॥
इत्युक्त्वा श्रीहरिस्तत्र तत्रैवान्तरधीयत।
देवो जगाम क्षीरोदं सुरैः सार्द्धं तदाज्ञया॥ ३९ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे लक्ष्मीस्तवकवचपूजाकथनं
नाम द्वाविंशतितमोऽध्यायः।

---

## त्रयोविंशोऽध्यायः।

---

नारायण उवाच।

इन्द्रश्च गुरुणा सार्द्धं सुरैश्च हृष्टमानसः।
जगाम शीघ्रं पद्मायै तीरं क्षीरपयोनिधेः।
कवचञ्च गले बद्धा सद्रत्नगुटिकान्वितम्।
मनसा स्तवनं दिव्यं स्मारं स्मारं पुनः पुनः॥ १ ॥
ते सर्वे भक्तिचत्ताश्च तुष्टुवुः कमलालयाम्।
साश्रुनेत्रातिदीनाश्च भक्तिनम्रात्मकन्धराः॥ २ ॥
सा तेषां स्तवनं श्रुत्वा सद्यः साक्षाद् बभूव ह।
सहस्रदलपद्मस्था शतचन्द्रसमप्रभा॥ ३ ॥
जगद्व्याप्तं सुप्रभया जगन्मात्रा यया मुने।
तानुवाच जगद्धात्री हितं सारं यथोचितम्॥ ४ ॥

श्रीमहालक्ष्मीरुवाच ।

वत्सा नेच्छामि वो गेहान् गन्तुं नैवं क्षमाधुना ।
भ्रष्टानां ब्रह्मशापेन बिभेमि ब्रह्मशापतः ॥ ५ ॥
प्राणा मे ब्राह्मणाः सर्वे शश्वत् पुत्राधिकप्रियाः ।
विप्रदत्तञ्च यत्किञ्चिदुपजीव्यं सदैव च ॥ ६ ॥
विप्रा ब्रुवन्तु मां तुष्टा यास्यामि च तदाज्ञया ।
न मे पूजां ध्रुवं कर्त्तुं क्षमास्ते च तपस्विनः ॥ ७ ॥
गुरुभि र्ब्राह्मणै र्दैवैर्भिक्षुभि र्वैष्णवैस्तथा ।
वध्यभाग्यं भवेद् दैवात्ते शप्ताः सन्ति सन्ततम् ॥ ८ ॥
नारायणश्च भगवान् बिभेति ब्रह्मशापतः ।
सर्ववीजञ्च भगवान् सर्वेशश्च सनातनः ॥ ९ ॥
एतस्मिन्नन्तरे ब्रह्मन् ब्राह्मणा हृष्टमानसाः ।
आजग्मुः स्मिताः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥१०॥
अङ्गिराश्च प्रचेताश्च क्रतुश्च भृगुरेव च ।
पुलहश्च पुलस्त्यश्च मरीचि रत्रिरेव च ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो भगवान् साक्षान्नारायणात्मकः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
दुर्वासाः कश्यपोऽगस्त्यो गौतमः कण्व एव च ।
और्वः कात्यायनश्चैव कणादः पाणिनिस्तथा ।
मार्कण्डेयो लोमशश्च वशिष्ठो भगवान् स्वयम् ॥ ११ ॥
ब्राह्मणा विविधैर्द्रव्यैः पूजयामासुरीश्वरीम् ।
देवाद्यारण्यनैवेद्यैः परिहारेण भक्तितः ॥ १२ ॥
स्तुत्वा मुनीन्द्रास्तां भक्त्या चक्रुराराधनं मुदा ।

आगच्छ देवभवनं मर्त्यञ्च जगदम्बिके ॥ १३ ॥
तेषां तद्वचनं श्रुत्वा तानुवाच जगत्प्रसूः ।
परितुष्टा गामुकीच निर्भया ब्राह्मणाज्ञया ॥ १४ ॥

श्रीमहालक्ष्मीरुवाच ।

गृहान् यास्यामि देवानां युष्माकमाज्ञया द्विजाः ।
येषां गेहं न गच्छामि शृणुध्वं भारतेषु च ॥ १५ ॥
स्थिरा पुण्यवतां गेहे सुनीतिवेदिनामहम् ।
गृहस्थानां नृपाणां वा पुत्त्रवत् पालयामि तान् ॥१६॥
यं यं रुष्टो गुरुर्देवो माता तातश्च बान्धवाः ।
अतिथिः पितृलोकश्च न यामि तस्य मन्दिरम् ॥ १७ ॥
मिथ्यावादी च यः शश्वन्नास्तीति वाचकः सदा ।
सत्वहीनश्च दुःशीलो न गेहं तस्य याम्यहम् ॥ १८ ॥
सत्यहीनः स्थाप्यहारी मिथ्यासाक्ष्यप्रदायकः ।
विश्वासघ्नः कृतघ्नो यो न यामि तस्य मन्दिरम् ॥ १९ ॥
चिन्ताग्रस्तो भयग्रस्तः शत्रुग्रस्तोऽतिपातकी ।
ऋणग्रस्तोऽतिकृपणो न गेहं यामि पापिनाम् ॥२०॥
दीक्षाहीनश्च शोकार्त्तो मन्दधीः स्त्रीजितः सदा ।
न यामि च कदा गेहं पुंश्चल्याः पतिपुत्रयोः ॥ २१ ॥
यो दुर्वाक् कलहाविष्टः कलिः शश्वद् यदालये ।
स्त्री प्रधाना गृहे यस्य न यामि तस्य मन्दिरम् ॥२२॥
यत्र नास्ति हरेः पूजा तदीयगुणकीर्त्तनम् ।
नोत्सुकस्तत् प्रशंसायां न यामि तस्य मन्दिरम् ॥२३॥
कन्यान्नवेदविक्रेता नरघाती च हिंसकः ।
नरकागारसदृशं न यामि तस्य मन्दिरम् ॥ २४ ॥

मातरं पितरं भार्य्यां गुरुपत्नीं गुरुं सुतम् ।
अनाथां भगिनीं कन्या मनन्याश्राश्रय बान्धवान् ॥२५॥
कार्पण्याद् यो न पुष्णाति सञ्चयं कुरुते सदा ।
तद्गेहात्नरकागारान्न यामि तान्मुनीश्वराः । २६ ॥
दशनं वसनं यस्य समलं रूक्षमस्तकम् ।
विकृतौ ग्रासहासौ च न यामि तस्य मन्दिरम् ॥ २७ ॥
मूत्रं पुरीष मुत्सृज्य यस्तत्पश्यति मन्दधीः ।
यः शेते स्निग्धपादेन न यामि तस्य मन्दिरम् ॥ २८ ॥
अधौतपादशायी यो नग्नः शेतेऽतिनिद्रितः ।
सन्ध्याशायी दिवाशायी न यामि तस्य मन्दिरम् ॥२९॥
मूर्द्ध्नि तैलं पुरो दत्त्वा योऽन्यदङ्ग मुपस्पृशेत् ।
ददाति पश्चाद्गात्रे वा न यामि तस्य मन्दिरम् ॥३०॥
दत्त्वा तैलं मूर्द्ध्नि गात्रे विण्मूत्रं यः समुत्सृजेत् ।
प्रणमेदाहरेत् पुष्पं न यामि तस्य मन्दिरम् । ३१ ॥
तृणं छिनत्ति नखरैर्नखरै र्विलिखेन्महीम् ।
गात्रे पादे मलं यस्य न यामि तस्य मन्दिरम् ॥ ३२ ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं सुरस्य च ।
यो हरेज् ज्ञानशीलश्च न यामि तस्य मन्दिरम् ॥ ३३ ॥
यत्कर्म दक्षिणाहीनं कुरुते मूढ़धीः शठः ।
स पापी पुण्यहीनश्च न यामि तस्य मन्दिरम् ॥ ३४ ॥
मन्त्रविद्योपजीवी च ग्रामयाजी चिकित्सकः ।
सूपकृद्देवलश्चैव न यामि तस्य मन्दिरम् ॥ ३५ ॥
विवाहं धर्मकार्य्यं वा यो निहन्ति च कोपतः ।
दिवा मैथुनकारी यो न यामि तस्य मन्दिरम् ॥ ३६ ॥

इत्युक्त्वा च महालक्ष्मी रत्नदीनं चकारह ।
ददौ दृष्टिञ्च देवानां गृहे मर्त्ये च नारद ॥ २७ ॥
तां प्रणम्य सुराः सर्वे मुनयश्च मुदान्विताः ।
प्रजग्मुः स्वालयं शीघ्रं भ्रातृत्यक्तं सुहृद्युतम् ॥ २८ ॥
नेदुर्दुन्दुभयः स्वर्गे बभूवुः पुष्पवृष्टयः ।
प्रापुर्देवाः स्वराज्यञ्च निश्चलां कमलां मुने ॥ २९ ॥
इत्येवं कथितं वत्स लक्ष्मीचरित मुत्तमम् ।
सुखदं मोक्षदं सारं किं पुनः श्रोतुमिच्छसि ॥ ४० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे लक्ष्मीचरितं नाम त्रयो-
विंशतितमोऽध्यायः ।

—•—

## चतुर्विंशोऽध्यायः ।

—०००—

नारद उवाच ।

नारायण महाभाग हरेरंश समुद्भव ।
सर्वं श्रुतं तत्प्रसादाद्गणेशचरितं शुभम् ॥ १ ॥
दन्तद्वययुतं वक्त्रं गजराजस्य बालके ।
विष्णुना योजितं ब्रह्मन्नेकदन्तः कथं शिशुः ॥ २ ॥
कुतो गतोऽस्य दन्तोऽन्यस्तद्भवान् वक्तुमर्हति ।
सर्वेश्वरस्त्वं सर्वज्ञः कृपावान् भक्तवत्सलः ॥ ३ ॥

सूत उवाच ।

नारदस्य वचः श्रुत्वा स्मेरास्यसरोरुहः ।
एकदन्तस्य कथनं प्रवक्तुमुपचक्रमे ॥ ४ ॥

नारायण उवाच ।

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् ।
एकदन्तस्य चरितं सर्वमङ्गलमङ्गलम् ॥ ५ ॥
एकदा कार्त्तवीर्य्यश्च जगाम मृगयां मुने ।
मृगान्निहत्य बहुलान् परिश्रान्तो बभूव सः ॥ ६ ॥
निशामुखे दिनेऽतीते तत्र तस्थौ वने नृपः ।
जमदग्न्याश्रमाभ्यासे उपोष्य सैन्यसंयुतः ॥ ७ ॥
प्रातः सरोवरे राजा स्नातः शुचिरलङ्कृतः ।
दत्तात्रेयेन दत्तञ्च जजाप भक्तितो मनुम् ॥ ८ ॥
मुनिर्ददर्श राजानं शुष्ककण्ठोष्ठतालुकम् ।
प्रीत्या सम्भाषयामास पप्रच्छ कुशलं मुनिः ॥ ९ ॥
ननाम सम्भ्रमाद्राजा मुनिं सूर्य्यसमप्रभम् ।
स च तस्मै ददौ प्रीत्या प्रणताय शुभाशिषम् ॥ १० ॥
वृत्तान्तं कथयामास राजा चानशनादिकम् ।
संभ्रमेणैव मुनिना त्रस्तं राजा निमन्त्रितः ॥ ११ ॥
विज्ञाप्य तं मुनिश्रेष्ठः प्रययौ स्वालयं मुदा ।
लक्ष्मीसमां कामधेनुं कथयामास मातरम् ॥ १२ ॥
उवाच सा मुनिं भीतं भयं किं ते मयि स्थिते ।
जगद् भोजयितुं शक्तस्त्वं मया का नृपो मुने ॥ १३ ॥
राजभोजनयोग्यार्हं यद् यद् द्रव्यं प्रयाचसे ।
सर्वं तुभ्यं प्रदास्यामि विप्र लोकेषु दुर्लभम् ॥ १४ ॥

सौवर्णानि राजतानि पात्राणि विविधानि च ।
भोजनार्हाण्यसंख्यानि पाकपात्राणि यानि च ॥१५॥
पात्राणि स्वादुपूर्णानि प्रददौ मुनये च सा ।
नानाविधानि स्वादूनि परिपक्वफलानि च ॥ १६ ॥
पनसाम्रनारिकेलश्रीफलानि च नारद ।
राशीभूतान्यसंख्यानि स्वादूनि लड्डुकानि च ॥ १७ ॥
यवगोधूमचूर्णानां पिष्टकानां बहूनि च ।
पक्वान्नानां पर्वतञ्च परमान्नस्य कन्दरम् ॥ १८ ॥
दुग्धानाञ्च घृतानाञ्च नदीं दध्नां ददौ मुदा ।
शर्कराणां तथा राशिं मोदकानाञ्च पर्वतम् ।
पृथुकानां सुशालीनां पर्वतं प्रददौ मुदा ॥ १९ ॥
ताम्बूलं प्रददौ पूर्णं कर्पूरादिसुवासितम् ।
नृपयोग्यं कौतुकञ्च सुन्दरं वस्त्रभूषणम् ॥ २० ॥
मुनिः [illegible]सम्भारो दत्त्वा द्रव्यं मनोहरम् ।
भोजयामास राजानं ससैन्यमवलीलया ॥ २१ ॥
यद् यत् सुदुर्लभं वस्तु परिपूर्णं नृपेश्वरः ।
जगाम विस्मयं राजा दृष्ट्वा पात्रमुवाच ह ॥ २२ ॥

राजोवाच ।

द्रव्याण्येतानि सचिव दुर्लभान्यश्रुतानि च ।
ममासाध्यानि सहसा क्व गतान्यवलोकय ॥ २३ ॥
नृपाज्ञया च सचिवः सर्वं दृष्ट्वा मुनेर्गृहे ।
राजानं कथयामास वृत्तान्तं महदद्भुतम् ॥ २४ ॥

सचिव उवाच ।

दृष्टं सर्वं महाराज निबोध मुनिमन्दिरे ।

वह्निकुण्डं यज्ञकाष्ठं कुशपुष्पफलान्वितम् ॥ २५ ॥
कृष्णचर्म स्रुव स्रुग्भिः शिष्यसंघैश्च सङ्कुलम् ।
तैजसाधारशस्यादि सर्वसम्पद्विवर्जितम् ॥ २६ ॥
हृचचर्मपरिधाना हृष्टाः सर्वे जटाधराः ॥ २७ ॥
गृहैकदेशे दृष्टा सा कपिलैका मनोहरा ।
चार्वङ्गी चन्द्रवर्णाभा रक्तपङ्कजलोचना ॥ २८ ॥
ज्वलन्ती तेजसा तत्र पूर्णचन्द्रसमप्रभा ।
सर्वसम्पद्गुणाधारा साक्षादिव हरिप्रिया ॥ २९ ॥
सर्वथाराधितो राजा दुर्बुद्धिः सचिवाज्ञया ।
मुनिं ययाचे तां धेनुं निबद्धः कालपाशतः ॥ ३० ॥
किं वा पुरुषस्य का बुद्धिर्निषेकः सर्वतो बली ।
पुण्यवान् बुद्धिमान् देवाद्राजेन्द्रो याचते द्विजम् ॥३१॥
पुण्यात् प्रजायते कर्म पुण्यरूपञ्च भारते ।
पापात् प्रजायते कर्म पापरूपं भयावहम् ॥ ३२ ॥
पुण्यात् कृत्वा स्वर्गभोगं जन्म पुण्यस्थले नृणाम् ।
पापात् भुक्त्वा च नरकं कुत्सितं जन्म जीविनाम् ॥३३॥
जीविनां निष्कृतिर्नास्ति स्थिते कर्मणि नारद ।
तेन कुर्वन्ति सन्तश्च सन्ततं कर्मणः क्षयम् ॥ ३४ ॥
सा विद्या तत्तपो ज्ञानं स गुरुः स च बान्धवः ।
सा माता स पिता पुत्रस्तत् क्षयं कारयेत्तु यः ॥ ३५ ॥
जीविनां दारुणो रोगः कर्मभोगः शुभाशुभः ।
भक्तवैद्यस्तं निहन्ति कृष्णभक्तिरसायनात् ॥ ३६ ॥
माया ददाति तां भक्तिं प्रतिजन्मनि सेविता ।
परितुष्टा जगद्धात्री भक्ताय बुद्धिदायिनी ॥ ३७ ॥

परा परमभक्ताय माया यस्मै ददाति च ।
मायां दत्त्वा मोहयितुं न विवेकं कदाचन ॥ ३८ ॥
मायाविमोहितो राजा मुनिमानीय यत्नतः ।
उवाच विनयं भक्त्या पुटाञ्जलियुतो मुदा ॥ ३९ ॥

राजोवाच ।

भिक्षां देहि कल्पतरो कामधेनुञ्च कामदाम् ।
मह्यं भक्ताय भक्तेश भक्तानुग्रहकातर ॥ ४० ॥
युष्मद्विधानां दातॄणामदेयं नास्ति भारते ।
दधीचिर्दैवताभ्यश्च ददौ स्वास्थि पुरा श्रुतम् ॥ ४१ ॥
भ्रुभङ्गलीलामात्रेण तपोराशे तपोधन ।
समूहं कामधेनूनां स्रष्टुं शक्तोऽसि भारते ॥ ४२ ॥

मुनिरुवाच ।

अहो व्यतिक्रमं राजन् ब्रवीषि शठ वञ्चक ।
दानं दास्यामि विप्रोऽहं क्षत्रियाय नृपाधम ॥ ४३ ॥
कृष्णेन दत्ता गोलोके ब्रह्मणे परमात्मना ।
कामधेनुरियं यज्ञे न देया प्राणतः प्रिया ॥ ४४ ॥
ब्रह्मणा भृगवे दत्त्वा प्रियपुत्राय भूमिप ।
मह्यं दत्ता च भृगुणा कपिला पैतृकी मम ॥ ४५ ॥
गोलकजा कामधेनुर्दुर्लभा भुवनत्रये ।
लीलामात्रात् कथमहं कपिलां स्रष्टुमीश्वरः ॥ ४६ ॥
नाहं रे हालिको मूढ़ त्वया नोत्थापितो बुधः ।
क्षणेन भस्मसात् कर्त्तुं क्षमोऽहमतिथिं विना ॥ ४७ ॥
गृहं गच्छ गृहं गच्छ मल्लोपं नैव वर्द्धय ।
पुत्रदारादिकं पश्य दैवबाधित पामर ॥ ४८ ॥

मुनेस्तद्वचनं श्रुत्वा चुकोप स नराधिपः।
नत्वा मुनिं सैन्यमध्यं प्रययौ विधिबाधितः॥ ४९॥
गत्वा सैन्यसकाशं स कोपप्रस्फुरिताधरः।
किङ्करान् प्रेषयामास धेनुमानयितुं बलात्॥ ५०॥
कपिलासन्निधिं गत्वा रुरोद मुनिपुङ्गवः।
कथयामास वृत्तान्तं शोकेन हतचेतनः॥ ५१॥
रुदन्तं ब्राह्मणं दृष्ट्वा सुरभिस्तमुवाच ह।
साक्षाल्लक्ष्मीः स्वरूपा सा भक्तानुग्रहकातरा॥ ५२

सुरभिरुवाच।

इन्द्रो वा हालिको वापि स्ववस्तु दातुमीश्वरः।
शास्ता पालयिता दाता स्वत्रस्तूनाञ्च सन्ततम्॥५३॥
स्वेच्छया चेन्नृपेन्द्राय मां ददासि तपोधन।
तेन सार्द्धं गमिष्यामि स्वेच्छया च तवाज्ञया॥ ५४॥
अथवा न ददासि त्वं न गमिष्यामि ते गृहात्।
मत्तोद्भूतेन सैन्येन दूरीभूतं नृपं कुरु॥ ५५॥
कथं रोदिषि सर्वज्ञ मायामोहितचेतनः।
संयोगश्च वियोगश्च कालसाध्यो नचात्मनः॥ ५६॥
त्वं वा को मे तवाहं का सम्बन्धः कालयोजितः।
यावदेव हि सम्बन्धो मम त्वं तावदेव हि॥ ५७॥
मनो जानाति यद् द्रव्यमात्मनश्चापि केवलम्।
दुःखञ्च तस्य विच्छेदाद् यावत् स्वत्वञ्च तत्त्वे॥ ५८॥
इत्युक्त्वा कामधेनुश्च सुषाव विविधानि च।
शस्त्राण्यस्त्राणि सैन्यानि सूर्य्यतुल्यप्रभाणि च॥ ५९॥
निर्गताः कपिलावक्त्रात्त्रिकोटिखड्गधारिणः।

विनिःसृता नासिकायाः शूलिनः पञ्चकोटयः ॥ ६० ॥
विनिःसृता लोचनाभ्यां शतकोटि धनुर्द्धराः ।
कपालान्निःसृता वीरास्त्रिकोटि दण्डधारिणः ॥ ६१ ॥
वक्षःस्थलान्निःसृताश्च त्रिकोटिशक्तिधारिणः ।
शतकोटि गदाहस्ताः पृष्ठदेशात् विनिर्गताः ॥ ६२ ॥
विनिःसृताः पादतलाद्वाद्यभाण्डाः सहस्रशः ।
जङ्घादेशान्निःसृताश्च त्रिकोटि राजपुत्रकाः ॥ ६३ ॥
विनिर्गता गुह्यदेशात्त्रिकोटि म्लेच्छजातयः ।
दत्त्वा सैन्यानि कपिला मुनये निर्भयं ददौ ।
युद्धं कुर्वन्तु सैन्यानि त्वं न यासीत्युवाच ह ॥ ६४ ॥
मुनिः सम्भृतसम्भारैर्हर्षयुक्तो बभूव ह ।
नृपेण प्रेरितो भृत्यो नृपं सर्वमुवाच ह ॥ ६५ ॥
कपिला सैन्य वृत्तान्तमात्मवर्गपराजयम् ।
तत् श्रुत्वा नृपशार्दूलस्त्रस्तः कातरमानसः ।
दूतद्वारा च सैन्यानि चाजहार स्वदेशतः ॥ ६६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे एकदन्त प्रश्नप्रसङ्गे जमदग्नि कार्त्तवीर्य्ययुद्धे चतुर्विंशतितमोऽध्यायः ।

——

# पञ्चविंशोऽध्यायः ।

नारायण उवाच ।

हरिं स्मरन् कार्त्तवीर्य्यो हृदयेन विदूयता ।
दूतं प्रस्थापयामास कूपितो मुनिसन्निधिम् ॥ १ ॥
युद्धं देहि मुनिश्रेष्ठ किं वा धेनुञ्च वाञ्छितम् ।
मह्यं भृत्यायातिथये सुविचार्य्य यथोचितम् ॥ २ ॥
दूतस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः ।
हितं सत्यं नीतिसारं सर्वं दूतमुवाच ह ॥ ३ ॥

मुनिरुवाच ।

दृष्टो नृपो निराहारः समानीतो मया गृहम् ।
विविधञ्च यथा शक्त्या भोजितञ्च यथोचितम् ॥ ४ ॥
कपिलां याचते राजा मम प्राणाधिकां बलात् ।
तां दातुमक्षमो दूत युद्धं दास्यामि निश्चितम् ॥ ५ ॥
मुनेस्तद्वचनं श्रुत्वा दूतः सर्वमुवाच ह ।
नृपेन्द्रञ्च सभामध्ये सन्नाहसंयुतं भिया ॥ ६ ॥
मुनिश्च कपिला माह साम्प्रतं किङ्करोम्यहम् ।
कर्णधारं विना नौका तथा सैन्यं मया विना ॥ ७ ॥
कपिला च ददौ तस्मै शस्त्राणि विविधानि च ।
युद्धशास्त्रोपदेशञ्च सन्धानमौपयोगिकम् ॥ ८ ॥
जयं भवतु ते विप्र युद्धे जेष्यसि निश्चितम् ।
तव मृत्युर्न भविता चाव्यर्थास्त्रं विना ध्रुवम् ॥ ९ ॥

नृपेण सार्द्धं ते युद्धमयुक्तं ब्राह्मणस्य च ।
दत्तात्रेयस्य शिष्येणैवाव्यर्थशक्तिधारिणा ।
इत्युक्त्वा कपिला ब्रह्मन् विरराम मनस्विनी ॥ १० ॥
मुनिर्मनस्वी सैन्यञ्च सज्जीभूतश्चकार ह ।
गृहीत्वा सर्वसैन्यञ्च प्रजगाम रणस्थलम् ॥ ११ ॥
राजा जगाम युद्धाय ननाम मुनिपुङ्गवम् ।
उभयोः सैन्ययोर्युद्धं बभूव बहु दुष्करम् ॥ १२ ॥
राजसैन्यं जितं सर्वं कपिलासेनया बलात् ।
विचित्रञ्च रथं राज्ञो बभञ्ज लीलया रणे ॥ १३ ॥
धनुश्चिच्छेद सन्नाहं सा सेना कापिली मुदा ।
नृपेन्द्रः कापिलेयानि सैन्यानि जेतु मक्षमः ॥ १४ ॥
सैन्यानि तं शस्त्रवृष्ट्या न्यस्तशस्त्रञ्चकार ह ।
शरवृष्ट्या शस्त्रवृष्ट्या राजा मूर्च्छामवाप ह ॥ १५ ॥
किञ्चित् सैन्यं मृतं राज्ञः किञ्चिदेव पलायितम् ।
मुनीन्द्रो मूर्च्छितं दृष्ट्वा नृपेन्द्रमतिथिं मुने ॥ १६ ॥
कृपानिधिश्च कृपया तत्सैन्यं सञ्जहार च ।
गत्वा सैन्यं विलीनञ्च कपिलायाश्च कृत्रिमम् ॥ १७ ॥
नृपाय मुनिना शीघ्रं दत्त्वा चरणरेणवः ।
आशीर्वादं प्रदत्तञ्च जयोऽस्त्विति कृपालुना ।
कमण्डलुजलं दत्त्वा कारयामास चेतनाम् ॥ १८ ॥
स राजा चेतनां प्राप्य समुत्थाय रणाजिरे ।
मूर्ध्ना ननाम भक्त्या च मुनिश्रेष्ठं पुटाञ्जलिः ॥ १९ ॥
मुनिः शुभाशिषं दत्त्वा राजानमालिलिङ्ग च ।
पुनस्तं स्नापयित्वा च भोजयामास यत्नतः ॥ २० ॥

नावनीतञ्च हृदयं ब्राह्मणानाञ्च सन्ततम्।
अन्येषां क्षुरधाराभमसाध्यं दारुणं सदा॥२१॥
उवाच तं मुनिश्रेष्ठो गृहं गच्छ नृपाधिप।

राजोवाच।

रणं देहि महाबाहो धेनुं किंवा ममेप्सिताम्॥२२॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे नृपमुनियुद्धकथनं नाम
पञ्चविंशतितमोऽध्यायः।

---

## षड्विंशतितमोऽध्यायः।

---

नारायण उवाच।

हरिं स्मरन् मुनिश्रेष्ठो वाक्यं श्रुत्वा च भूभृतः।
हितं सत्यं नीतिसारं प्रवक्तुमुपचक्रमे॥१॥

मुनिरुवाच।

गृहं गच्छ महाभाग रक्ष धर्मं सनातनम्।
सर्वसम्पत् स्थिरा शश्वत् स्थिते धर्मे सुनिश्चितम्॥२॥
त्वाञ्च दृष्ट्वा निराहारं समानीय गृहं नृप।
तव पूजामकरवं यथाशक्त्या विधानतः॥३॥
साम्प्रतं मूर्च्छितं दृष्ट्वा पादरेणुं शुभाशिषम्।
अददं चेतनां कृत्वा वक्तुमेवोचितं न च॥४॥
नृपस्तद्वचनं श्रुत्वा प्रणम्य मुनिपुङ्गवम्।

रथमन्यमारुरोह युद्धं देहीत्युवाच ह ॥ ५ ॥
मुनिः कृत्वा च सन्नाहं तं योद्धुमुपचक्रमे ।
राजा तं युयुधे तत्र कोपेनाहतचेतनः ॥ ६ ॥
कपिलादत्तशस्त्रेण न्यस्तशस्त्रं चकार तम् ।
कपिलादत्तया शक्त्या पुनर्मूर्च्छां चकार च ॥ ७ ॥
पुनश्च चेतनां प्राप्य राजा राजीवलोचनः ।
मुनिना युयुधे तत्र कोपेन पुनरेव च ॥ ८ ॥
वह्निञ्च योजयामास समरे मुनिपुङ्गवः ।
मुनिर्निर्वापयामास वारुणेनावलीलया ॥ ९ ॥
नृपेन्द्रो वारुणास्त्रञ्च चिक्षेप समरे मुनौ ।
वायव्यास्त्रेण स मुनिः शमयामास लीलया ॥ १० ॥
वायव्यास्त्रं नृपश्रेष्ठश्चिक्षेप समरे तदा ।
गान्धर्वेण मुनिश्रेष्ठः शमयामास तत्क्षणम् ॥ ११ ॥
नागास्त्रञ्च नृपश्रेष्ठश्चिक्षेप रणमूर्द्धनि ।
गारुड़ेन मुनिश्रेष्ठो जघान तत्क्षणं मुदा ॥ १२ ॥
माहेश्वरं महास्त्रञ्च शतसूर्य्यसमप्रभम् ।
चिक्षेप नृपतिश्रेष्ठो द्योतयन्तं दिशोदश ॥ १३ ॥
वैष्णवास्त्रेण दिव्येन त्रिलोकव्यापकेन च ।
मुनि र्निर्वापयामास बहुयत्नेन नारद ॥ १४ ॥
मुनिर्नारायणास्त्रञ्च चिक्षेप मन्त्रपूर्वकम् ।
शस्त्रं दृष्ट्वा महाराजो ननाम शरणं ययौ ॥ १५ ॥
ऊर्द्धञ्च भ्रमणं कृत्वा क्षणं दीप्ता दिशोदश ।
प्रलयाग्नि समन्तत्र स्वयमन्तरधीयत ॥ १६ ॥
जृम्भणास्त्रञ्च स मुनिश्चिक्षेप रणमूर्द्धनि ।

निद्रां प्राप तेन राजा सुष्वाप च मृतो यथा ॥ १७ ॥
दृष्ट्वा नृपं निद्रितञ्च अर्द्धचन्द्रेण तत्क्षणम् ।
चिच्छेद सारथिं यानं धनुर्बाणं मुनिस्तदा ॥ १८ ॥
मुकुटञ्च क्षुरप्रेण छत्रं सन्नाहमेव च ।
अस्त्रं तूणं वाजिगणं विविधेन च भूभृतः ॥ १९ ॥
मुनिस्तत्सचिवान् सर्वान् नागास्त्रेणावलीलया ।
निबध्य स्थापयामास प्रहस्य समरस्थले ॥ २० ॥
मुनिस्तं बोधयामास सुमन्त्रेणावलीलया ।
निबद्धान् सचिवान् सर्वान् दर्शयामास भूमिपम् ॥२१॥
दर्शयित्वा नृपं तांश्च मोचयामास तत्क्षणम् ।
नृपेन्द्रमाशिषं कृत्वा गृहं गच्छेत्युवाच ह ॥ २२ ॥
राजा कोपात् समुत्थाय शूलमुद्यस्य यत्नतः ।
चिक्षेप तं मुनिश्रेष्ठं मुनिः शक्त्या जघान तम् ॥ २३ ॥
एतस्मिन्नन्तरे ब्रह्मा समागत्य रणस्थलम् ।
सुप्रीतिं कारयामास सुनीत्या च परस्परम् ॥ २४ ॥
मुनिर्ननाम ब्रह्माणं सन्तुष्टश्च रणस्थले ।
राजा नत्वा विधिं विप्रं स्वालयं प्रययौ तदा ॥ २५ ॥
मुनिर्ययौ च स्वगृहं स्वगृहं कमलोद्भवः ।
इत्येवं कथितं किञ्चिदपरं कथयामि ते ॥ २६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे षड्विंशतितमोऽध्यायः ।

——

# सप्तविंशतितमोऽध्यायः।

नारायण उवाच।

हरिं स्मृत्वा गृहं गत्वा राजा विस्मितमानसः।
पुनर्जगामारण्यञ्च जमदग्न्याश्रमं तदा ॥ १ ॥
रथानाञ्च चतुर्लक्षं रथीनां दशलक्षकम्।
अश्वेन्द्राणां गजेन्द्राणां पदातीनामसंख्यकम् ॥ २ ॥
राजेन्द्राणां सहस्रञ्च महाबलपराक्रमम्।
महास्त्रर्द्धियुक्तञ्च त्रैलोक्यं जेतुमीश्वरः ॥ ३ ॥
समृद्धा वेष्टयामास जमदग्न्याश्रमं मुदा।
रथस्थो वर्मयुक्तश्च कार्त्तवीर्य्यार्जुनः स्वयम् ॥ ४ ॥
सैन्यशब्दैर्वाद्यशब्दैर्महाकोलाहलैर्मुने।
जमदग्न्याश्रमस्थाश्च मूर्च्छामापुर्भयेन च ॥ ५ ॥
पुरीं प्रविश्य बलवान् गृहीत्वा कपिलां शुभाम्।
गृहं गन्तुं मनश्चक्रे दुर्बुद्धि रसदाश्रयः ॥ ६ ॥
समुत्तस्थौ मुनिश्रेष्ठो गृहीत्वा सशरं धनुः।
एकाकी मुक्तगात्रश्च धेनुं नत्वा हरिं स्मरन् ॥ ७ ॥
आश्रमस्थाम् जनान् सर्वान् समाश्वास्य च यत्नतः।
आजगाम रणस्थानं निःशङ्को नृपतेः पुरः ॥ ८ ॥
चकार शरजालञ्च स मुनिर्मन्त्रपूर्वकम्।
चच्छाद स्वाश्रमं तैश्च मानवं वर्मणा यथा ॥ ९ ॥
अपरं शरजालञ्च चकार मुनिपुङ्गवः।

तैरेव वारयामास सर्वसैन्यं यथाक्रमम् ॥ १० ॥
मुनिना शरजालेन सर्वसैन्यं समावृतम्।
तानि सर्वाणि गुप्तानि पत्राणि पञ्जरे यथा ॥ ११ ॥
राजा दृष्ट्वा मुनिश्रेष्ठमवरुह्य रथात् पुरः।
सार्द्धं नृपेन्द्रैर्भक्त्या च प्रणनाम पुटाञ्जलिः ॥ १२ ॥
नत्वा रुरोह यानं स मुनेः प्राप्य शुभाशिषम्।
आरुरोह नृपेन्द्रश्च स्वयानं हृष्टमानसः ॥ १३ ॥
नृपैः सार्द्धं नृपश्रेष्ठश्चिक्षेप मुनिपुङ्गवम्।
अस्त्रं शस्त्रं गदां शक्तिं जघान लीलया मुनिः।
मुनिश्चिक्षेप दिव्यास्त्रं चिच्छेद लीलया नृपः ॥ १४ ॥
शूलञ्चिक्षेप नृपतिर्जघान तत्तदा मुनिः।
अपरं शरजालञ्च चिक्षेप मुनिपुङ्गवः ॥ १५ ॥
शस्त्रौघैर्द्दुर्निवार्य्यैश्च खण्ड खण्डं नृपा ययुः।
निबद्धा शरजालेन न च शक्ताः पलायितुम् ॥ १६ ॥
जृम्भणास्त्रेण मुनिना ते च सर्वे विजृम्भिताः।
हस्त्यश्वरथपादातसहितं सर्वसैन्यकम् ॥ १७ ॥
राजानं निद्रितं दृष्ट्वा न जघान मुनीश्वरः।
गृहीत्वा कपिलां हृष्टो रुदन्तीं शोकमूर्च्छिताम्।
बोधयित्वा पुरः कृत्वा स्वगृहं गन्तुमुद्यतः ॥ १८ ॥
एतस्मिन्नन्तरे राजा चेतनां प्राप्य नारद।
निवारयामास मुनिं गृहीत्वा सशरं धनुः ॥ १९ ॥
जगाम कपिला त्रस्ता स्वस्थानञ्च रणस्थलात्।
मुनिश्च तस्थौ निःशङ्को गृहीत्वा सशरं धनुः ॥ २० ॥
ब्रह्मास्त्रञ्च नृपश्रेष्ठः प्रचिक्षेप मुनौ तदा।

ब्रह्मास्त्रेण मुनीन्द्रस्य सद्यो निर्वाणतां गतम् ॥ २१ ॥
दिव्यास्त्रेण मुनिश्रेष्ठो नृपस्य सशरं धनुः ।
रथञ्च सारथिञ्चैव चिच्छेद वर्म दुर्वहम् ॥ २२ ॥
अथ राजा महाक्रुद्धो ददर्श स्वसमीपतः ।
दत्तेन दत्तां शक्तिं तामेकपुरुषघातिनीम् ॥ २३ ॥
जग्राह नत्वा दत्तं तं प्रणम्य शक्तिमुल्वणाम् ।
घूर्णयामास तत्रैव शतसूर्य्यसमप्रभाम् ॥ २४ ॥
यत्तेजः सर्वदेवानां तेजो नारायणस्य च ।
शम्भोश्च ब्रह्मणश्चैव मायायाश्चैव नारद ॥ २५ ॥
तत्रैवावाहयामास स योगी मन्त्रपूर्वकम् ।
तेजसा द्योतयामास गगनञ्च दिशोदश ॥ २६ ॥
दृष्ट्वा क्षिपन्तीं तां देवा हाहाकारं चकार ह ।
आकाशस्थाश्च समरं पश्यन्तो दुःखिता हृदा ॥ २७ ॥
चिक्षेप तां घूर्णयित्वा कार्त्तवीर्य्यार्जुनः स्वयम् ।
सद्यः पपात सा शक्तिर्ज्वलन्ती मुनिवक्षसि ॥ २८ ॥
विदार्य्योरो मुनेः शक्ति र्जगाम हरिसन्निधिम् ।
दत्ताय हरिणा दत्ता दत्तेनैव नृपाय सा ॥ २९ ॥
मूर्च्छां सम्प्राप्य स मुनिःप्राणां स्तत्याज तत्क्षणम् ।
तेजोऽम्बरे भ्रमित्वा च ब्रह्मलोकं जगाम ह ॥ ३० ॥
युद्धे मुनिं मृतं दृष्ट्वा रुरोद कपिला मुहुः ।
हे तात तातेत्युच्चार्य्य गोलकं सा जगाम ह ॥ ३१ ॥
सर्वं सा कथयामास गोलोके कृष्णमीश्वरम् ।
रत्नसिंहासनस्थं तं गोपैर्गोपीभिरावृतम् ॥ ३२ ॥
कृष्णेन ब्रह्मणे दत्ता ब्रह्मणा भृगवे पुरा ।

सा प्रीत्या पुष्करे ब्रह्मन् भृगुणा जमदग्नये ॥ ३३ ॥
नत्वा च कामधेनूनां समूहं सा जगाम ह।
तदश्रुविन्दुना मर्त्यं रत्नसङ्घो बभूव ह ॥ ३४ ॥
अथ राजा तं निहत्य बोधयित्वा स्वसैन्यकम्।
प्रायश्चित्तं विनिर्वर्त्य जगाम स्वालयं मुदा ॥ ३५ ॥
प्राणनाथं मृतं श्रुत्वा जगाम रेणुका सती।
मुनिं वक्षसि संस्थाप्य क्षणं मूर्च्छामवाप सा ॥ ३६ ॥
तदा स चेतनां प्राप्य न रुरोद पतिव्रता।
एहि वत्स भृगोराम राम रामेत्युवाच ह ॥ ३७ ॥
आजगाम भृगुस्तूर्णं क्षणेन पुष्कराद्द्विजः।
ननाम मातरं भक्त्या मनोयायी च योगवित् ॥ ३८ ॥
दृष्ट्वा रामो मृतं तातं शोकार्त्तां जननीं सतीम्।
आकर्ण्य रणवृत्तान्तं प्रयान्तीं कपिलां शुचा ॥ ३९ ॥
विललाप भृशं तत्र हे तात जननीति च।
चिताञ्चकार योगीन्द्रश्चन्दनैराज्यसंयुताम् ॥ ४० ॥
रेणुका राम मादाय तूर्णं कृत्वा स्ववक्षसि।
चुचुम्ब गण्डे शिरसि रुरोदोच्चैर्भृशं मुहुः ॥ ४१ ॥
राम राम महाबाहो क्व यामि त्वां विहाय च।
वत्स वत्सेति कृत्वैवं विललाप भृशं मुहुः ॥ ४२ ॥
मत्प्राणाधिक हे वत्स मदीयं वचनं शृणु।
पित्रोः शेषक्रियां कृत्वा पुत्र युद्धे न यास्यसि ॥ ४३ ॥
गृहे तिष्ठ सुखं वत्स तपस्यां कुरु शाश्वतीम्।
समरं नैव सुखदं दारुणैः क्षत्रियैः सह ॥ ४४ ॥
मातुर्वचनमश्रुत्वा प्रतिज्ञां तां चकार ह।

त्रिःसप्तकृत्वोनिर्भूपां करिष्यामि ध्रुवं महीम् ॥४५॥
कार्त्तवीर्य्यं हनिष्यामि लीलया क्षत्रियाधमम् ।
पितॄंश्च तर्पयिष्यामि क्षत्रियक्षतजेन च ॥ ४६ ॥
इत्युदीर्य्य पुरो मातु र्विललाप मुहुर्मुहुः ।
हितं तथ्यं नीतिसारं बोधयामास मातरम् ॥ ४७ ॥

राम उवाच ।

पितुः शासन हन्तारं पितुर्वधविधायकम् ।
यो न हन्ति महामूढ़ो रौरवं स व्रजेद् ध्रुवम् ॥ ४८ ॥
अग्निदो गरदश्चैव शस्त्रपाणि र्धनापहः ।
क्षेत्रदारापहारी च पितृबन्धुविहिंसकः ॥ ४९ ॥
सततं मन्दकारी च निन्दकः कटुवाचकः ।
एकादशैते पापिष्ठा वधार्हा वेदसम्मताः ॥ ५० ॥
द्विजानां द्रविणादानं स्थानान्निर्वासनं सति ।
वपनं ताड़नञ्चैव वधमाहुर्म्मनीषिणः ॥ ५१ ॥
एतस्मिन्नन्तरे तत्र आजगाम भृगुः स्वयम् ।
अतित्रस्तो मनस्वी च हृदयेन विदूयता ॥ ५२ ॥
दृष्ट्वा तं रेणुका रामो विनयञ्च चकार ह ।
सतावुवाच वेदोक्तं परलोक हिताय च ॥ ५३ ॥

भृगुरुवाच ।

मद्वंश जातो ज्ञानी त्वं कथं विलपसे सुत ।
जलबुद्बुदवत् सर्वं संसारे च चराचरम् ॥ ५४ ॥
सत्यसारं सत्यबीजं कृष्णं चिन्तय पुत्रक ।
यद्गतं तद्गतं वत्स गतं मा पुनरागतम् ॥ ५५ ॥

यद्भवेत्तद्भवत्येव भविता यद्भविष्यति ।
सत्यं नैषेकिकं कर्म निषेकः केन वार्य्यते ॥ ५६ ॥
भूतं भव्यं भविष्यञ्च यत् कृष्णेन निरूपितम् ।
निरूपितं यत् तत् कर्म केन वत्स निवार्य्यते ॥ ५७ ॥
मायावीजं मायिनाञ्च शरीरं पाञ्चभौतिकम् ।
सङ्केतपूर्वकं नाम प्रातःस्वप्नसमं सुत ॥ ५८ ॥
क्षुधा निद्रा दया शान्ति क्षमा कान्त्यादय स्तथा ।
यान्ति प्राणा मनो ज्ञानं प्रयाते परमात्मनि ॥ ५९ ॥
वुद्धिश्च शक्तयः सर्वा राजेन्द्र मिव किङ्कराः ।
सर्वे त मनु गच्छन्ति तं कृष्णं भज यत्नतः ॥ ६० ।
केवा केषाञ्च पितरः केवा केषां सुताः सुत ।
कर्मोर्मिप्रेरिताः सर्वे भवाब्धौ दुस्तरे परम् ॥ ६१ ॥
ज्ञानिनो मा रुदन्त्येव मा रोदीः पुत्र साम्प्रतम् ।
रोदनाश्रुप्रपतनान्मृतानां नरकं ध्रुवम् ॥ ६२ ॥
सङ्केताभिधमुच्चार्य्य यत् रुदन्ति च वान्धवाः ।
शतवर्षं रुदित्वा तं न प्राप्नुवन्ति निश्चितम् ।
पार्थिवांशञ्च पृथिवी गृह्णाति च त्वचादिकम् ॥६३॥
तोयांशञ्च तथा तोयं शून्यांशं गगनं तथा ।
वायुं शञ्च तथा वायुस्तेज स्तेजांशकं तथा · ६४ ॥
सर्वे विलीनाः सर्वेषु को वाऽऽयास्यति रोदनात् ।
नामश्रुतियशःकर्मकथामात्रावशेषिताः ॥ ६५ ॥
वेदोक्तञ्चैव यत् कर्म कुरु तत् पारलौकिकम् ।
सच बन्धुः स पुत्त्रश्च परलोकहिताय यः । ६६ ॥
भृगोस्तद्वचनं श्रुत्वा शोकं तत्याज तत्क्षणम् ।

रेणुका च महासाध्वी तं वक्तुमुपचक्रमे ॥ ६७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे सप्तविंशतितमोऽध्यायः ।

---

## अष्टाविंशतितमोऽध्यायः ।

---

रेणुकोवाच ।

ब्रह्मन्ननुगमिष्यामि प्राणनाथस्य साम्प्रतम् ।
मृतोश्चतुर्थदिवसे मृतोऽय मद्य मानदः ॥ १ ॥
कर्त्तव्या का व्यवस्थात्र वद वेदविदां वर ।
त्वमागतो मे सहसा पुण्येन कति जन्मनाम् ॥ २ ॥

भृगुरुवाच ।

अहो पुण्यवतो भर्त्तुरनुगच्छ महासति ।
चतुर्थदिवसं शुद्धं स्वामिनः सर्वकर्मसु ॥ ३ ॥
शुद्धा भर्त्तुश्चतुर्थेऽह्नि न शुद्धा दैवपैत्रयोः ।
दैवे कर्मणि पैत्रे च पञ्चमेऽह्नि विशुद्ध्यति ॥ ४ ॥
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ।
तद्वत् स्वामिन मादाय साध्वी स्वर्गं प्रयाति च ॥ ५ ॥
मोदते स्वामिना तत्र यावदिन्द्राश्चतुर्दश ।
अत ऊर्द्ध्वं कर्मभोगं भुङ्क्ते साध्वि शुभाशुभम् ॥ ६ ॥
स पुत्रो भक्तिदाता यः सा च स्त्री यानुगच्छति ।
स बन्धुर्दानदाता यः स शिष्यो गुरु मर्चयेत् ॥ ७ ॥

सोऽभीष्टदेवो यो रक्षेत् स राजा पालयेत् प्रजाः ।
स च स्वामी प्रियाधर्मे मतिं दातुमिहेश्वरः ॥ ८ ॥
स गुरुर्धर्मदाता यो हरिभक्तिप्रदायकः ।
एते प्रशंस्या वेदेषु पुराणेषु च निश्चितम् ॥ ९ ॥

रेणुकोवाच ।

गन्तुं स्वस्वामिना सार्द्धं का शक्ता भारते मुने ।
का वाप्यशक्ता नार्य्यश्च तन्मे ब्रूहि तपोधन ॥ १० ॥

भृगुरुवाच ।

बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतव स्तथा ।
रजस्वला च कुलटा गलितव्याधिसंयुता ॥ ११ ॥
पतिसेवाविहीना या अभक्ता कटुवाचकाः ।
एता गच्छन्ति चेद्दैवात् न कान्तं प्राप्नुवन्ति ताः ॥१२॥
संस्कृताग्निं पुरो दत्त्वा चितासु शायिनं पतिम् ।
कान्तास्त मनुगच्छन्ति कान्ता श्चेत् प्राप्नुवन्ति ताः ॥१३॥
अनुगच्छन्ति याः कान्तं तमेव प्राप्नुवन्ति ताः ।
सार्द्धं कृत्वा पुण्यभोगं प्रति जन्मनि जन्मनि ॥ १४ ॥
इयन्ते कथिता साध्वि व्यवस्था गृहिणां ध्रुवम् ।
तीर्थे स्नानमृतानाञ्च वैष्णवानाञ्च श्रूयताम् ॥ १५ ॥
या साध्वी वैष्णवं कान्तं यत्र यत्रानुगच्छति ।
प्रयाति स्वामिना सार्द्धं वैकुण्ठे हरिसन्निधिम् ॥१६॥
विशेषो नास्ति भक्तानां तीर्थे वान्यत्र नारद ।
मरणे च समफलं मुक्तानां कृष्णभाविनाम् ॥ १७ ॥
तयोः पातोनास्ति तस्मान्महति प्रलये सति ।
नारायणं तं भजेत पुमां स्त्री कमलालयाम् ॥ १८ ॥

तीर्थे स्नानस्तथापि वैकुण्ठं याति निश्चितम् ।
सभार्य्यो मोदते तत्र यावद्वै ब्रह्मणः शतम् ॥ १९ ॥
इत्युक्ता रेणुकां तत्र परशुराम मुवाच ह ।
वेदोक्तवचनं सर्वं स भृगुः समयोचितम् ॥ २० ॥
एहि वत्स महाभाग त्यज शोक ममङ्गलम् ।
उत्तानं कुरु तातञ्च दक्षिणाशिरसं भृगो ॥ २१ ॥
वस्त्रं यज्ञोपवीतञ्च नूतनं परिधापय ।
अनश्रुनयनो भूत्वा सन्तिष्ठ दक्षिणामुखः ॥ २२ ॥
अरणीसंभवाग्निञ्च गृहाण भक्तिपूर्वकम् ।
पृथिव्यां यानि तीर्थानि सर्वाणि स्मरणं कुरु ॥ २३ ॥
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम् ॥ २४ ॥
कौशिकीं चन्द्रभागाञ्च सर्वपापप्रणाशिनीम् ।
गण्डकीमवकाशीञ्च पनसां सरयुं तथा ॥ २५ ॥
पुष्पभद्राञ्च भद्राञ्च नर्म्मदाञ्च सरस्वतीम् ।
गोदावरीञ्च कावेरीं स्वर्णरेखाञ्च पुष्करम् ॥ २६ ॥
रैवतञ्च वराहञ्च श्रीशैलं गन्धमादनम् ।
हिमालयञ्च कैलासं सुमेरुं रत्नपर्वतम् ॥ २७ ॥
वाराणसीं प्रयागञ्च पुण्यं वृन्दावनं वनम् ।
हरिद्वारञ्च वदरीं स्मारं स्मारं पुनः पुनः ॥ २८ ॥
चन्दनागुरुकस्तूरीं सुगन्धिकुसुमं तथा ।
प्रदाय वासमाच्छाद्य स्थापयेनं चितोपरि ॥ २९ ॥
कर्णाक्षि नासिकास्येषु शलाकाञ्च हिरण्मयीम्
कृत्वा निर्म्मञ्छनं तात देहि विप्राय सादरम् ॥३०॥

सतिलं ताम्रपात्रञ्च धेनुञ्च रजतन्तथा ।
सदक्षिणं सुवर्णञ्च दत्त्वाग्निं देह्यकातरम् ॥ ३१ ॥
ओं कृत्वा तु दुष्कृतं कर्म्म जानतावाप्यजानता ।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥ ३२ ॥
धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु ॥३३॥
इमं मन्त्रं पठित्वा तु तातं कृत्वा प्रदक्षिणम् ।
मन्त्रेणानेन देह्यग्निं जनकाय हरिं स्मरन् ॥ ३४ ॥
ओं अस्मत्कुले त्वं जातोऽसि त्वदीयं जायतां पुनः ।
असौ लोकाय स्वर्गाय स्वाहेति वद सम्प्रतम् ॥ ३५ ॥
अग्निं देहि शिरः स्थाने हे भृगो भ्रातृभिः सह ।
तच्चकार भृगुः सर्वं सगोत्रैराज्ञया भृगोः ॥ ३६ ॥
अथ पुत्रं रेणुका सा कृत्वा तत्र स्ववक्षसि ।
उवाच किञ्चिद्वचनं परिणामसुखावहम् ॥ ३७ ॥
अविरोधो भद्राब्धी च सर्वमङ्गलमङ्गलम् ।
विरोधो नाशवीजञ्च सर्वोपद्रवकारणम् ॥ ३८ ॥
अकर्त्तव्यो विरोधो वै दारुणैः क्षत्रियैः सह ।
प्रतिज्ञा चैव कर्त्तव्या मदीये वचने श्रुते ॥ ३९ ॥
आलोच्य ब्रह्मणा सार्द्धं भृगुणा दिव्यमन्त्रिणा ।
यथोचितञ्च कर्त्तव्यं सद्भिरालोचनं शुभम् ॥ ४० ॥
इत्युक्त्वा तं परित्यज्य कान्तं कृत्वा स्ववक्षसि ।
सा सुष्वाप चितायाञ्च पश्यन्ती तं हरिं स्मरन् ॥ ४१ ॥
वह्निं ददौ चितायाञ्च स रामो भ्रातृभिः सह ।
भ्रातृभिः पितृशिष्यैश्च सार्द्धं स विललाप च ॥ ४२ ॥

राम रामेति रामेति वाक्यमुच्चार्य्य सा सती ।
पुरस्तात् पर्शुरामस्य भस्मीभूता बभूव सा ॥ ४३ ॥
भर्त्तुर्नाम समाकर्ण्य तत्राजग्मुर्हरेश्वराः ।
रथस्थाः श्यामवर्णाश्च सर्वे चारुचतुर्भुजाः ॥ ४४ ॥
शङ्खचक्रगदापद्मधारिणो वनमालिनः ।
किरीटिनः कुण्डलिनः पीतकौषेयवाससः ॥ ४५ ॥
रथे कृत्वा रेणुकां तां गत्वा ते ब्रह्मलोककम् ।
जमदग्निं समादाय प्रजग्मुर्हरिसन्निधिम् ॥ ४६ ॥
तौ दम्पती च वैकुण्ठे तस्थतुर्हरिसन्निधौ ।
कृत्वा दास्यं हरेः शश्वत् सर्वमङ्गलमङ्गलम् ॥ ४७ ॥
अथ रामो ब्राह्मणैश्च भृगुणा सह नारद ।
पित्रोः शेषक्रियां कृत्वा ब्राह्मणेभ्यो धनं ददौ ॥ ४८ ॥
गोभूहिरण्यवासांसि दिव्यशय्यां मनोरमाम् ।
सुवर्णाधारसहितां जलमन्नञ्च चन्दनम् ॥ ४९ ॥
रत्नदीपं रौप्यशैलं सुवर्णासनमुत्तमम् ।
सुवर्णाधार सहितं ताम्बूलञ्च सुवासितम् ॥ ५० ॥
छत्रञ्च पादुकाञ्चैव फलं माल्यं मनोहरम् ।
फल मूलं जलञ्चैव मिष्टान्नञ्च मनोहरम् ।
ब्राह्मणेभ्यो धनं दत्त्वा ब्रह्मलोकं जगाम सः ॥ ५१ ॥
ददर्श ब्रह्मलोकं स शातकुम्भविनिर्मितम् ।
स्वर्णप्राकारसंयुक्तं स्वर्णस्तम्भैर्विभूषितम् ॥ ५२ ॥
ददर्श तत्र ब्रह्माणं ज्वलन्तं ब्रह्मतेजसा ।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ ५० ॥
सिद्धेन्द्रैश्च मुनीन्द्रैश्च ऋषीन्द्रैः परिवेष्टितम् ।

विद्याधरीणां नृत्यञ्च पश्यन्तं सस्मितं मुदा ॥ ५४ ॥
सङ्गीतं श्रुतवन्तञ्च गीयमानञ्च गायनैः ।
चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितम् ॥ ५५ ॥
तपसां फलदातारं दातारं सर्वसम्पदाम् ।
धातारं सर्वजगतां कर्त्तारमीश्वरं परम् ॥ ५६ ॥
परिपूर्णतमं ब्रह्म जपन्तं कृष्णमीश्वरम् ।
गुह्ययोगं प्रगदन्तं पृच्छन्तं शिष्यमण्डलम् ॥ ५७ ॥
दृष्ट्वा तमव्ययं भक्त्या प्रणनाम भृगुः पुरः ।
उच्चैश्च रोदनं कृत्वा स्ववृत्तान्त मुवाच ह ॥ ५८ ॥

भृगुरुवाच ।

ब्रह्मं स्ववंशजातोऽहं जमदग्निसुतो विधे ।
पितामह स्वमस्माकं त्वां विना कथयामि किम् ॥५९॥
मृगया मागतं भूप मुपोषन्तं पिता मम ।
पारणां कारयामास कपिलादत्तवस्तुना ॥ ६० ॥
स राजा कपिलालोभात् कार्त्तवीर्य्यार्जुनः स्वयम् ।
घातयामास मत्तात मिन्युक्त्वोच्चैरुरोद सः ॥ ६१ ॥
निरुध्य वाष्पं स पुन रुवाच करुणानिधिम् ।
माता मेऽनुगता साध्वी मां विहाय जगद्गुरो ॥ ६२ ॥
अधुनाहमनाथश्च त्वं मे माता पिता गुरुः ।
कर्त्ता पालयिता दाता पाहि मां शरणागतम् ॥ ६३ ॥
आगतोऽहं तव सभां प्रमातु मातुराज्ञया ।
उपायेन जगन्नाथ मद्वैरिसूदनं कुरु ॥ ६४ ॥
स राजा स च धर्म्मिष्ठः स दयालुर्यशस्करः ।
स पूज्यः स स्थिरश्रीश्च यो दीनं परिपालयेत् ॥ ६५ ॥

उच्चैर्नीचं समं दृष्ट्वा यः प्रजां नच पालयेत् ।
तद्देहाद् याति रुष्टा श्रीः स भवेद् भ्रष्टलक्ष्मीकः ॥६६॥
श्रुत्वा विप्रवटोर्वाक्यं करुणासागरो विधिः ।
दत्त्वा शुभाशिषं तस्मै वासयामास वत्सि ॥ ६७ ॥
श्रुत्वा भृगोः प्रतिज्ञाञ्च विस्मितश्चतुराननः ।
अतीव दुष्करां घोरां बहुजीवविघातिनीम् ॥ ६८ ॥
निषेकेण भवेत् सर्वमिति कृत्वा तु मानसे ।
उवाच पर्शुरामं तं परिणामसुखावहम् ॥ ६९ ॥

ब्रह्मोवाच ।

प्रतिज्ञा दुर्लभा वत्स बहुजीवविघातिनी ।
सृष्टि रेषा भगवतः सम्भवे हीश्वरेच्छया ॥ ७० ॥
सृष्टिः सृष्टा मया पुत्र क्लेशेनैवेश्वराज्ञया ।
सृष्टिलुप्ता प्रतिज्ञा ते दारुणा करुणा परा । ७१ ॥
त्रिःसप्तकृत्वो निर्भूपां कर्त्तुमिच्छसि मेदिनीम् ।
एकक्षत्रियदोषेण तज्जातिं हन्तु मिच्छसि ॥ ७२ ॥
ब्रह्मक्षत्रियविट्शूद्रैर्नित्या सृष्टिश्चतुर्विधैः ।
आविर्भूता तिरोभूता हरेरेव पुनः पुनः ॥ ७३ ॥
अन्यथा त्वत्प्रतिज्ञा च भविता प्राक्तनेन च ।
बह्वायासेन ते कार्य्यसिद्धिर्भवि तु मर्हति ॥ ७४ ॥
शिवलोकं गच्छ वत्स शङ्करं शरणं व्रज ।
पृथिव्यां बहवो भूपाः सन्ति शङ्करकिङ्कराः ॥ ७५ ॥
विनाज्ञया मया महेशस्य को वा तान् हन्तु मीश्वरः ।
बिभ्रतः कवचं दिव्यं शक्तोश शङ्करस्य च ॥ ७६ ॥
उपायं कुरु यत्नेन जयवीजं शुभावहम् ।

उपायतः समारब्धाः सर्वे सिद्ध्यन्त्युपक्रमाः ॥ ७७ ॥
कृष्णस्य मन्त्रं कवचं ग्रहणं कुरु शङ्करात्।
दुर्ल्लभं वैष्णवं तेजः शैवं शाक्तं विजेष्यति ॥ ७८ ॥
गुरुस्ते जगतां नाथः शिवो जन्मनि जन्मनि।
मन्त्रो मत्तो न युक्त स्ते यो युक्तः स भवेद्विधिः ॥ ७९ ॥
निषेकाल्लभ्यते मन्त्रः कान्तः कान्ता गुरुः सुरः।
स्वयमेवोपतिष्ठन्ते ये येषां तेषु ते ध्रुवम् ॥ ८० ॥
त्रैलोक्य विजयं नाम गृहीत्वा कवचं वरम्।
त्रिः सप्त कृत्वो निर्भूपां करिष्यसि महीं भृगो॥ ८१ ॥
दिव्यं पाशुपतं तुभ्यं दाता दास्यति शङ्करः।
तेन देयेन मन्त्रेण चत्रसङ्घं विजेष्यसि ॥ ८२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे अष्टाविंशतितमोऽध्यायः।

---

## ऊनत्रिंशत्तमोऽध्यायः।

---

नारायण उवाच।

ब्रह्मणो वचनं श्रुत्वा प्रणम्य च जगद्गुरुम्।
स्फीत स्तस्मादरं प्राप्य शिवलोकं जगाम सः ॥ १ ॥
लक्षयोजन मूर्द्ध्वञ्च ब्रह्मलोकाद्विलक्षणम्।
अनिर्वचनीयञ्च वायूाधारं मनोहरम् ॥ २ ॥

वैकुण्ठं दक्षिणे यस्य गौरीलोकश्च वामतः ।
यदधो ध्रुवलोकश्च सर्वलोकात् परः स्मृतः ॥ ३ ॥
तेषां मूर्द्धञ्च गोलोकः पञ्चाशत्कोटियोजनम् ।
अत ऊर्द्ध्वं न लोकश्च सर्वोपरि च स स्मृतः ॥ ४ ॥
मनोयायी स योगीन्द्रः शिवलोकं ददर्श ह ।
उपमानोपमेयाभ्यां रहितं महदद्भुतम् ॥ ५ ॥
योगीन्द्राणाञ्च प्रवरैः सिद्धविद्याविशारदैः ।
कोटिकल्पतपःपूतैः पुण्यवद्भिर्निषेवितम् ॥ ६ ॥
वेष्टितं कल्पवृक्षाणां समूहैर्वाञ्छितप्रदैः ।
समूहैः कामधेनूनामसंख्यानां विराजितम् ॥ ७ ॥
पारिजाततरूणाञ्च वनराजिविराजितम् ।
पुष्पोद्यानायुतैर्युक्तं सदा चातिसुशोभितम् ॥ ८ ॥
मणीन्द्रसाररचितैः शोभितैर्मणिवेदिभिः ।
राजमार्गशतैर्दिव्यैरभ्यन्तरविभूषितम् ॥ ६ ॥
मणीन्द्रसारनिर्माणशतकोटिगृहैर्युतम् ।
नानाचित्रविचित्राढ्यैर्मणीन्द्रकलसोज्ज्वलैः ॥ १० ॥
तन्मध्यदेशे रम्ये च ददर्श शङ्करालयम् ।
मणीन्द्रसारनिर्माणप्राकारं सुमनोहरम् ॥ ११ ॥
अत्यूर्द्ध्वमम्बरस्पर्शि क्षीरनीरनिभं परम् ।
षोड़शद्वारसंयुक्तं शोभितं शतमन्दिरैः ॥ १२ ॥
अमूल्यरत्नरचितै रत्नसोपानभूषितैः ।
रत्नस्तम्भकपाटैश्च हीरकेण परिष्कृतैः ॥ १३ ॥
माणिक्यजालमालाभिः सद्रत्नकलसोज्ज्वलैः ।
नानाचित्रविचित्रेण चित्रितैः सुमनोहरैः ॥ १४ ॥

आलयस्य पुरस्तत्र सिंहद्वारं ददर्श सः ।
रत्नेन्द्रसारनिर्माणकपाटैश्च विराजितैः ॥ १५ ॥
शोभितं वेदिकाभिश्च बाह्याभ्यन्तरतः सदा ।
रचिताभिः पद्मरागैर्महामरकतैर्गृहम् ॥ १६ ॥
नानाप्रकारचित्रेण चित्रितं सुमनोहरम् ।
द्वारि नियुक्तौ ददर्श द्वारपालौ भयङ्करौ ॥ १७ ॥
महाकरालदन्तास्यौ विकृतौ रक्तलोचनौ ।
दग्धशैलप्रतीकाशौ महाबलपराक्रमौ ॥ १८ ॥
विभूतिभूषिताङ्गौ च व्याघ्रचर्माम्बरौ वरौ ।
पिङ्गलाक्षौ विशालाक्षौ जटिलौ च त्रिलोचनौ ॥१९॥
त्रिशूलपट्टिशधरौ ज्वलन्तौ ब्रह्मतेजसा ॥
तौ दृष्ट्वा मनसा भीतस्तत्र: किञ्चिदुवाच ह ॥ २० ॥
विनयेन विनीतश्च दुर्विनीतौ महाबलौ ।
आत्मनः सर्ववृत्तान्तं कथयामास तत्पुरः ॥ २१ ॥
विप्रस्य वचनं श्रुत्वा कृपायुक्तौ बभूवतुः ।
गृहीत्वाज्ञाश्चरद्वारा शङ्करस्य महात्मनः ॥ २२ ॥
प्रवेष्टुमाज्ञां ददतुरीश्वरानुचरौ वरौ ।
भृगुस्तदाज्ञामादाय प्रविवेश हरिं स्मरन् ॥ २३ ॥
प्रत्येकं षोडशद्वारान्ददर्श सुमनोहरान् ।
द्वारपालैर्नियुक्तांश्च नानाचित्रविचित्रितान् ॥ २४ ॥
दृष्ट्वा तान्सुमहदाश्चर्यं ददर्श शूलिनः सभाम् ।
नानासिद्धगणाकीर्णां महर्षिगणसेविताम् ॥ २५ ॥
पारिजातप्रसूनाक्तवायुना सुरभीकृताम् ।
ददर्श तत्र देवेशं शङ्करं चन्द्रशेखरम् ॥ २६ ॥

त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं परम् ।
विभूतिभूषिताङ्गं तं नागयज्ञोपवीतिनम् ।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ २७ ॥
महाशिवं शिवकरं शिववीजं शिवाश्रयम् ।
आत्मारामं पूर्णकामं सूर्य्यकोटिसमप्रभम् ॥ २८ ॥
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकातरम् ॥ २९ ॥
शश्वज्ज्योतिःस्वरूपञ्च लोकानुग्रहविग्रहम् ।
धृतवन्तं जटाजालं दक्षकन्यास्थिभूषितम् ॥ ३० ॥
तपसां फलदातारं दातारं सर्वसम्पदाम् ।
शुद्धस्फटिकसङ्काशं पञ्चवक्त्रं त्रिलोचनम् ॥ ३१ ॥
गुह्यं ब्रह्म प्रवोचन्तं शिष्येभ्यस्तत्त्वमुद्रया ।
स्तूयमानञ्च योगीन्द्रैः सिद्धेन्द्रैः परिसेवितम् ।
पार्षदप्रवरैः शश्वत् सेवितं श्वेतचामरैः ॥ ३२ ॥
ध्यायमानं परं ब्रह्म परिपूर्णतमं परम् ।
स्वेच्छामयं गुणातीतं जरामृत्युहरं परम् ॥ ३३ ॥
ज्योतीरूपञ्च सर्वाद्यं श्रीकृष्णं प्रकृतेः परम् ।
ध्यायन्तं परमानन्दं पुलकाञ्चितविग्रहम् ।
सुस्वरं साश्रुनेत्रञ्च उद्गायन्तं गुणार्णवम् ॥ ३४ ॥
भवेन्द्रैश्च रुद्रगणैः क्षेत्रपालैश्च वेष्टितम् ।
मूर्द्ध्ना ननाम तं दृष्ट्वा पर्शुरामोऽति सादरम् ॥ ३५ ॥
तद्वामे कार्त्तिकेयञ्च दक्षिणे च गणेश्वरम् ।
नन्दीश्वरं महाकालं वीरभद्रञ्च तत्पुरः ।
क्रोड़े ददर्श कान्तां तां गौरीं शैलेन्द्रकन्यकाम् ॥ ३६ ॥
ननाम सर्वान्मूर्द्ध्ना च भक्त्या च परया मुदा ।

दृष्ट्वा हरं परं सारं तं स्तोतुमुपचक्रमे ॥ ३७ ॥
सगद्गदपदं दीनं साश्रुनेत्रोऽतिकातरः ।
पुटाञ्जलियुतः शान्तः शोकार्त्तः शोकनाशनम् ॥३८॥

परशुराम उवाच ।

ईश त्वां स्तोतुमिच्छामि सर्वथा स्तोतुमक्षमः ।
अक्षराक्षयवीजञ्च किं वा स्तौमि निरीहकम् ॥ ३९ ॥
न योजनां कर्त्तुमीशो देवेशं स्तौमि मूढ़धीः ।
वेदा न शक्ता यं स्तोतुं कस्त्वां स्तोतुमिहेश्वरः ॥ ४० ॥
बुद्धेर्वाङ्मनसोः पारं सारात्सारं परात्परम् ।
ज्ञानबुद्धेरसाध्यञ्च सिद्धं सिद्धैर्निषेवितम् ॥ ४१ ॥
यमाकाशमिवासीनमनन्तमादिमव्ययम् ।
विश्वतन्त्वमतन्त्वञ्च स्वतन्त्वं तन्त्ववीजकम् ॥ ४२ ॥
ध्यानासाध्यं दुराराध्यमतिसाध्यं कृपानिधिम् ।
त्राहि मां करुणासिन्धो दीनवन्धोऽतिदीनकम् ।४३॥
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ।
स्वप्नादृष्टञ्च भक्तानां पश्यामि चक्षुषाधुना ॥ ४४ ॥
शक्रादयः सुरगणाः कलया यस्य सम्भवाः ।
चराचराः कलांशेन तं नमामि महेश्वरम् ॥ ४५ ॥
यं भास्करस्वरूपञ्च शशिरूपं हुताशनम् ।
जलरूपं वायुरूपं तं नमामि महेश्वरम् । ४६ ॥
अनन्तविश्वसृष्टीनां संहर्त्तारं भयङ्करम् ।
क्षणेन लीलामात्रेण तं नमामि महेश्वरम् ॥ ४७ ॥
यः कालः कालकालश्च कालवीजञ्च कालजः ।
अजः प्रजश्च यः सर्वस्तं नमामि महेश्वरम् । ४८ ॥

इत्येव मुक्त्वा स भृगुः पपात चरणाम्बुजे ।
आशिषञ्च ददौ तस्मै सुप्रसन्नो बभूव सः ॥ ४९ ॥
जामदग्न्यकृतं स्तोत्रं यः पठेद्भक्तिसंयुतः ।
सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति ॥ ५० ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे ऊनत्रिंशत्तमोऽध्यायः ।

---

## त्रिंशत्तमोऽध्यायः ।

---

शङ्कर उवाच ।
क त्वं वटो कस्य पुत्रः क्व वासः स्तवनं कथम् ।
किं वा तेऽहं करिष्यामि वाञ्छितं वद साम्प्रतम् ॥ १
पार्वत्युवाच ।
शोकाकुलं त्वां पश्यामि विमनस्कं सुविस्मितम् ।
वयसातिशिशुं शान्तं गुणेन गुणिनां वरम् ॥ २ ॥
भृगुरुवाच ।
जमदग्निसुतोऽहञ्च भृगुवंशसमुद्भवः ।
माता मे रेणुका साध्वी पर्शुरामश्च नामतः ॥ ३ ॥
क्रीणीहि मां दयासिन्धो विद्यापत्रेण किङ्करम् ।
मदीशशरणापन्नं रक्ष मां दीनवत्सल ॥ ४ ॥
मृगयामागतं भूपमुपोषन्तं पिता मम ।
चकारातिथ्यमानीय कपिलादत्तवस्तुना ॥ ५ ॥

राजा तं कपिलालोभाद् घातयामास मन्दधीः ।
कपिला तं मृतं दृष्ट्वा गोलोकञ्च जगाम सा ॥ ६ ॥
मातानुगमनं चक्रे अनाथोऽहञ्च साम्प्रतम् ।
त्वं मे पिता शिवा माता रक्ष मां पुत्रवत् प्रभो ॥ ७ ॥
मया कृता प्रतिज्ञा च शोकेनैवातिदुष्करा ।
त्रिःसप्तकृत्वो निर्भूपां करिष्यामि महीमिति ॥ ८ ॥
कार्त्तवीर्य्यं हनिष्यामि समरे तातघातकम् ।
इत्येवं परिपूर्णं मे भगवान् कर्त्तुमर्हति ॥ ९ ॥
ब्राह्मणस्य वचः श्रुत्वा दृष्ट्वा दुर्गामुखं हरः ।
बभूवानम्रवक्त्रश्च सा च शुष्कोष्ठतालुका ॥ १० ॥

पार्वत्युवाच ।

तपस्विन् विप्रपुत्रस्त्वं निर्भूपां कर्त्तुमिच्छसि ।
त्रिःसप्तकृत्वः कोपेन साहसस्ते महान् वटो ॥ ११ ॥
हन्तुमिच्छसि निःशस्त्रः सहस्रार्जुनमीश्वरम् ।
भ्रूभङ्गलीलया यस्य रावणस्य पराजयः ॥ १२ ॥
तस्मै प्रदत्तं दत्तेन श्रीहरेः कवचं वटो ।
शक्तिरव्यर्थरूपाच यया ते हिंसितः पिता ॥ १३ ॥
हरेर्मन्त्रञ्च स्तवनं ध्यायते स दिवानिशम् ।
को वा शक्नोति तं हन्तुं न पश्यामीह भूतले ॥ १४ ॥
अरे विप्र गृहं गच्छ किङ्करिष्यति शङ्करः ।
अन्ये भूपाश्च मद्भृत्याः का भीस्तेषां मयि स्थिते ॥१५॥

भद्रकाल्युवाच ।

अरे विप्रवटो बाल्य निर्भूपान् कर्त्तुमिच्छसि ।
यथा हि वामनश्चन्द्रं करेणाहर्त्तुमिच्छति ॥ १६ ॥

नानायत्नकृतः पुत्त्रान् महाबलपराक्रमान् ।
दिगम्बरसहायेन मद्भृत्यान् हन्तुमिच्छसि ॥ १७ ॥
स तयोर्वचनं श्रुत्वा रुरोदोच्चैश्च शोकतः ।
सहसा पुरतस्तेषां प्राणां स्त्यक्तुं समुद्यतः ॥ १८ ॥
विप्रस्य रोदनं श्रुत्वा शङ्करः करुणानिधिः ।
पश्यन् दुर्गाञ्च कालीञ्च कृत्वातिविनयं विभुः ॥१९॥
तयोरनुमतिं प्राप्य सर्वेषां भक्तवत्सलः ।
जमदग्निसुतं सद्यः प्रवक्तु मुपचक्रमे ॥ २० ॥

शङ्कर उवाच ।

अद्य प्रभृति हे वत्स त्वं मे पुत्त्रसमो महान् ।
दास्यामि मन्त्रं गुह्यं ते त्रिषु लोकेषु दुर्लभम् ॥ २१ ॥
एवं भूतञ्च कवचं दास्यामि परमाद्भुतम् ।
लीलया मत्प्रसादेन कार्त्तवीर्य्यं हनिष्यसि ॥ २२ ॥
त्रिःसप्तकृत्वो निर्भूपां करिष्यसि महीं द्विज ।
जगत्ते यशसा पूर्णं भविष्यति न संशयः ॥ २३ ॥
इत्युक्त्वा शङ्कर स्तस्मै ददौ मन्त्रं सुदुर्लभम् ।
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ॥ २४ ॥
स्तवं पूजाविधानञ्च पुरश्चरणपूर्वकम् ।
मन्त्रसिद्धेरनुष्ठानं यथा वन्नियमक्रमम् ॥ २५ ॥
सिद्धिस्थानं कालसंख्यं कथयामास नारद ।
वेदवेदाङ्गनिखिलं पाठयामास तत्क्षणम् ॥ २६ ॥
नागपाशं पाशुपतं ब्रह्मास्त्रञ्च सुदुर्लभम् ।
वह्निं नारायणास्त्रञ्च वायव्यं वारुणन्तथा ॥ २७ ॥
गान्धर्वं गारुडञ्चैव जृम्भणास्त्रं तथैव च ।

गदां शक्तिं तथा परशुं शूलं मव्यर्थ मुत्तमम् ॥ २८ ॥
नानाप्रकारशस्त्रास्त्रमन्त्रञ्च विधि पूर्वकम् ।
शस्त्रास्त्राणाञ्च संहारं विक्षेप मक्षयं धनुः ॥ २९ ॥
आत्मरक्षणसन्धानं संग्रामविजयक्रमम् ।
मायायुद्धञ्च विविधं हुङ्कारं मन्त्रपूर्वकम् ॥ ३० ॥
रक्षणञ्च स्वसैन्यानां परसैन्यविमर्द्दनम् ।
नानाप्रकार मतुल मुपायं रणसङ्कटे ।
संहारमोहिनीं विद्यां जन्ममृत्युहरां हरः ॥ ३१ ॥
स्थित्वा चिरं गुरोर्वासे सर्वविद्यां विबोध्य सः ।
तीर्थं कृत्वा मन्त्रसिद्धिं तांश्च नत्वा जगाम सः ॥ ३२ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे त्रिंशत्तमोऽध्यायः ।

---

## एकत्रिंशत्तमोऽध्यायः ।

---

नारद उवाच ।

भगवन् श्रोतु मिच्छामि किं मन्त्रं भगवान् हरः ।
कृपया परशुरामाय किं स्तोत्रं कवचं ददौ ॥ १ ॥
को वास्य मन्त्रस्याराध्यः किं फलं कवचस्य च ।
स्तवनस्य फलं किं वा तद्भवान् वक्तुमर्हति ॥ २ ॥

नारायण उवाच ।

मन्त्राराध्योहि भगवान् परिपूर्णतमः स्वयम् ।

गोलोकनाथः श्रीकृष्णो गोपगोपीश्वरः प्रभुः ॥ ३ ॥
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ।
स्तवराजं महापुण्यं विभूतियोगसम्भवम् ॥ ४ ॥
मन्त्रकल्पतरुं नाम सर्वकामफलप्रदम् ।
प्रददौ पर्शुरामाय रत्नपर्वतसन्निधौ ॥ ५ ॥
स्वयंप्रभानदीतीरे पारिजातवनान्तरे ।
आश्रमे लोकदेवस्य माधवस्य च सन्निधौ ॥ ६ ॥

महादेव उवाच ।

वत्सागच्छ महाभाग भृगुवंशसमुद्भव ।
पुत्राधिकोऽसि प्रेम्णा मे कवचग्रहणं कुरु ॥ ७ ॥
शृणु राम प्रवक्ष्यामि ब्रह्माण्डे परमाद्भुतम् ।
त्रैलोक्यविजयं नाम श्रीकृष्णस्य जयावहम् ॥ ८ ॥
श्रीकृष्णेन पुरा दत्तं गोलोके राधिकाश्रमे ।
रासमण्डलमध्ये च मह्यं वृन्दावने वने ॥ ९ ॥
अति गुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् ।
पुण्यात् पुण्यतरञ्चैव परं स्नेहाद्ददामि ते ॥ १० ॥
यद्धृत्वा पठनाद्देवी मूलप्रकृतिरीश्वरी ।
शुम्भं निशुम्भं महिषं रक्तवीजं जघान ह ॥ ११ ॥
यद्धृत्वाहञ्च जगतां संहर्त्ता सर्वतत्त्ववित् ।
अवध्यं त्रिपुरं पूर्वं दुरन्त मवलीलया ॥ १२ ॥
यद्धृत्वा पठनाद् ब्रह्मा सृजते सृष्टि मुत्तमाम् ।
[illegible] भगवान् शेषो बिभर्त्ति विश्वमेव च ॥ १३ ॥
[illegible] शेषं धत्तेऽवलीलया ।
[illegible] वायुर्विश्वाधारो विभुः स्वयम् ॥ १४ ॥

यद्धृत्वा वरुणः सिद्धः कुवेरश्च धनेश्वरः ।
यद्धृत्वा पठनादिन्द्रो देवानामधिपः स्वयम् ॥ १५ ॥
यद्धृत्वा भाति भुवने तेजोराशिः स्वयं रविः ।
यद्धृत्वा पठनाच्चन्द्रो महाबलपराक्रमः ॥ १६ ॥
अगस्त्यः सागरान् सप्त यद्धृत्वा पठनात् पपौ ।
चकार तेजसा जीर्णं दैत्यं वातापिसंज्ञकम् ॥ १७ ॥
यद्धृत्वा पठनाद्देवी सर्वाधारा वसुन्धरा ।
यद्धृत्वा पठनात् पूता गङ्गा भुवनपावनी ॥ १८ ॥
यद्धृत्वा जगतां साक्षी धर्मो धर्मभृतां वरः ।
सर्वविद्याधिदेवी सा यच्च धृत्वा सरस्वती ॥ १९ ॥
यद्धृत्वा जगतां लक्ष्मीरन्नदात्री परात्परा ।
यद्धृत्वा पठनाद्वेदान् सावित्री प्रसुषाव च ॥ २० ॥
वेदाश्च धर्मवक्तारो यद्धृत्वा पठनाद् भृगो ।
यद्धृत्वा पठनाच्छुद्धस्तेजस्वी हव्यवाहनः ।
सनत्कुमारो भगवान् यद्धृत्वा ज्ञानिनां वरः ॥ २१ ॥
दातव्यं कृष्णभक्ताय साधवे च महात्मने ।
शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ २२ ॥
त्रैलोक्यविजयास्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवो रासेश्वरः स्वयम् ॥ २३ ॥
त्रैलोक्यविजयप्राप्तौ विनियोगः प्रकीर्त्तितः ।
परात्परञ्च कवचं त्रिषु लोकेषु दुर्लभम् ॥ २४ ॥
प्रणवो मे शिरः पातु श्रीकृष्णाय नमः सदा ।
सदा पायात् कपालं कृष्णाय स्वाहेति पञ्चाक्षरः ॥२५॥
कृष्णेति पातु नेत्रे च कृष्ण स्वाहेति तारकम् ।

हराय नम इत्येवं भ्रूलतां पातु मे सदा ॥ २६ ॥
ओं गोविन्दाय स्वाहेति नासिकां पातु सन्ततम् ।
गोपालाय नमो गण्डौ पातु मे सर्वतः सदा ॥ २७ ॥
ओं नमो गोपाङ्गनेशाय कर्णौ पातु सदा मम ।
ओं कृष्णाय नमः शश्वत् पातु मेऽधरयुग्मकम् ॥२८॥
ओं गोविन्दाय स्वाहेति दन्तावलिं मे सदावतु ।
ओं कृष्णाय दन्तरन्ध्रं दन्तोर्द्ध्वं क्लीं सदावतु ॥ २९ ॥
ओं श्रीकृष्णाय स्वाहेति जिह्विकां पातु सदा ।
रामेश्वराय स्वाहेति तालुकं पातु मे सदा ॥ ३० ॥
राधिकेशाय स्वाहेति कण्ठं पातु सदा मम ।
नमो गोपाङ्गनेशाय वक्षः पातु सदा मम ॥ ३१ ॥
ओं गोपेशाय स्वाहेति स्कन्धं पातु सदा मम ।
नमः किशोरवेशाय स्वाहा पृष्ठं सदावतु ॥ ३२ ॥
उदरं पातु मे नित्यं मुकुन्दाय नमः सदा ।
ओं ह्रीं क्लीं कृष्णाय स्वाहेति करौ पादौ सदा मम ॥३॥
ओं विष्णवे नमो बाहुयुग्मं पातु सदा मम ।
ओं ह्रीं भगवते स्वाहा नखरं पातु मे सदा ॥ ३४ ॥
ओं नमो नारायणायेति नखरन्ध्रं सदा वतु ।
ओं ह्रीं ह्रीं पद्मनाभाय नाभिं पातु सदा मम ॥ ३५ ॥
ओं सर्वेशाय स्वाहेति कङ्कालं पातु मे सदा ।
ओं गोपीरमणाय स्वाहा नितम्बं पातु मे सदा ॥३६॥
ओं गोपीरमणनाथाय पादौ पातु सदा मम ।
ओं ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदावतु ॥ ३७ ॥
ओं केशवाय स्वाहेति मम केशान् सदावतु ।

नमः कृष्णाय स्वाहेति ब्रह्मरन्ध्रं सदावतु ॥ ३८ ॥
ओं माधवाय स्वाहेति लोमानि मे सदावतु।
ओं ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदावतु ॥ ३९ ॥
परिपूर्णतमः कृष्णः प्राच्यां मां सर्वदावतु।
स्वयं गोलोकनाथो मामाग्नेय्यां दिशि रक्षतु ॥ ४० ॥
पूर्णब्रह्मस्वरूपश्च दक्षिणे मां सदावतु।
नैरृत्यां पातु मां कृष्णः पश्चिमे पातु मां हरिः ॥ ४१ ॥
गोविन्दः पातु मां शश्वद्वायव्यां दिशि नित्यशः।
उत्तरे मां सदा पातु रसिकानां शिरोमणिः ॥ ४२ ॥
ऐशान्यां मां सदा पातु वृन्दावनविहारकृत्।
वृन्दावतीप्राणनाथः पातु मामूर्द्ध्वदेशतः ॥ ४३ ॥
सदैव माधवः पातु बलिहारी महाबलः।
जले स्थले चान्तरीक्षे नृसिंहः पातु मां सदा ॥ ४४ ॥
स्वप्ने जागरणे शश्वत् पातु मां माधवः सदा।
सर्वान्तरात्मा निर्लिप्तो रक्ष मां सर्वतो विभुः ॥ ४५ ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्।
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम् ॥ ४६ ॥
मया श्रुतं कृष्णवक्त्रात् प्रवक्तव्यं न कस्यचित्।
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः ॥ ४७ ॥
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः।
स च भक्तो वसेद्यत्र लक्ष्मी र्वाणी वसेत्ततः ॥ ४८ ॥
यदि स्यात् सिद्धकवचो जीवन्मुक्तो भवेत्तु सः।
निश्चितं कोटिवर्षाणां पूजायाः फलमाप्नुयात् ॥ ४९ ॥
राजसूयसहस्राणि वाजपेयशतानि च।

अश्वमेधायुतान्येव नरमेधायुतानि च ॥ ५० ॥
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ।
त्रैलोक्यविजयस्यास्य कलां नार्हन्ति षोड़शीम् ॥५१॥
व्रतोपवासनियमं स्वाध्यायाध्ययनं तपः ।
स्नानञ्च सर्वतीर्थेषु नास्यार्हन्ति कलामपि ॥ ५२ ॥
सिद्धित्वममरत्वञ्च दासत्वं श्रीहरेरपि ।
यदि स्यात् सिद्धकवचः सर्वं प्राप्नोति निश्चितम् ॥५३॥
स भवेत् सिद्धकवचो दशलक्षं जपेत्तु यः ।
यो भवेत् सिद्धकवचः सर्वज्ञः स भवेत् ध्रुवम् ॥ ५४ ॥
इदं कवचमज्ञात्वा भजेत् कृष्णं सुमन्दधीः ।
कोटिकल्पप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ५५ ॥
गृहीत्वा कवचं वत्स महीं निःक्षत्रियां कुरु ।
त्रिःसप्त कृत्वो निःशङ्कः सदानन्दोऽवलीलया ॥ ५६ ॥
राज्यं देयं शिरो देयं प्राणादेयाश्च पुत्रक ।
एवं भूतञ्च कवचं न देयं प्राणसङ्कटे ॥ ५७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे कवचप्रदानं नामैक-
त्रिंशत्तमोऽध्यायः ।

—o—

# द्वात्रिंशत्तमोऽध्यायः ।

भृगुरुवाच ।

सम्प्राप्तं कवचं नाथ शश्वत् सर्वाङ्गरक्षणम् ।
सुखदं मोक्षदं सारं शत्रुसंहारकारणम् ॥ १ ॥
अधुना भगवन्मन्त्रं स्तोत्रं पूजाविधिं प्रभो ।
देहि मह्यमनाथाय शरणागतपालक ॥ २ ॥

महादेव उवाच ।

श्रीं श्रीं नमः श्रीकृष्णाय परिपूर्णतमाय च ।
मन्त्रेषु मन्त्रराजोऽयं महान् सप्तदशाक्षरः ।
सिद्धोऽयं पञ्चलक्षेण जपेन मुनिपुङ्गव ।
तद्दशांशञ्च हवनं तद्दशांशाभिषेचनम् ।
तर्पणं तद्दशांशञ्च तद्दशांशञ्च मार्जनम् ।
सुवर्णानाञ्च शतकं पुरश्चरणदक्षिणा ॥ ४ ॥
मन्त्रसिद्धस्य पुंसश्च विश्वं करतलं मुने ।
शक्तः पातुं समुद्रांश्च विश्वं संहर्तुमीश्वरः ।
पाञ्चभौतिकदेहेन वैकुण्ठं गन्तुमीश्वरः ॥ ५ ॥
तस्य संस्पर्शमात्रेण पादपङ्कजरेणुना ।
पूतानि सर्वतीर्थानि सद्यः पूता वसुन्धरा ॥ ६ ॥
ध्यानञ्च सामवेदोक्तं शृणु मन्मुखतो मुने ।
सर्वेश्वरस्य कृष्णस्य भक्तिमुक्तिप्रदायि च ॥ ७ ॥
नवीनजलदश्यामं नीले[illegible]रलोचनम् ।

शरत्पार्वणचन्द्रास्य मीषद्धास्यं मनोहरम् ॥ ८ ॥
कोटीकन्दर्पलावण्यलीलाधाम मनोहरम् ।
रत्नसिंहासनस्थं तं रत्नभूषणभूषितम् ॥ ९ ॥
चन्दनोच्चितसर्वाङ्गं पीताम्बरधरं वरम् ।
वीक्ष्यमाणञ्च गोपीभिः सस्मिताभिश्च सन्ततम् ॥ १० ॥
प्रफुल्लमालतीमालावनमालाविभूषितम् ।
दधतङ्कुन्दपुष्पाढ्यां चूड़ां चन्द्रकचर्च्चिताम् ॥ ११ ॥
प्रभां क्षिपन्तीं नभसश्चन्द्रतारान्वितस्य च ।
रत्नभूषणसर्वाङ्गं राधावक्षःस्थलस्थितम् ॥ १२ ॥
सिद्धेन्द्रैश्च मुनीन्द्रैश्च देवेन्द्रैः परिसेवितम् ।
ब्रह्मविष्णुमहेशैश्च श्रुतिभिश्च स्तुतं भजे ॥ १३ ॥
ध्यानेनानेन तं ध्यात्वा चोपचाराणि षोड़श ।
दत्त्वा भक्त्या च संपूज्य सर्वज्ञत्वं लभेत् पुमान् ॥ १४ ॥
आद्यं पाद्यमासनञ्च वसनं भूषणं तथा ।
गामर्घ्यं मधुपर्कञ्च यज्ञसूत्र मनुत्तमम् ॥ १५ ॥
धूपदीपौ च नैवेद्यं पुनराचमनीयकम् ।
नानाप्रकार पुष्पञ्च ताम्बूलञ्च सुवासितम् ॥ १६ ॥
चन्दनागुरुकस्तूरीदिव्यतल्पं मनोहरम् ।
भक्त्या भगवते देयं माल्यं पुष्पाञ्जलित्रयम् ॥ १७ ॥
ततः षड़ङ्गं सम्पूज्य पश्चात् सम्पूजयेद्गणम् ।
श्रीदामानं सुदामानं वसुदामानमेव च ॥ १८ ॥
हरिभानुं चन्द्रभानुं सूर्य्यभानुं सुभानुकम् ।
पार्षदप्रवरान् सप्त पूजयेद्भक्तिभावतः ॥ १९ ॥
गोपीश्वरीं राधिकाञ्च मूलप्रकृतिमीश्वरीम् ।

कृष्णशक्तिं कृष्णपूज्यां पूजयेद्भक्तिपूर्वकम् ॥ २० ॥
गोपगोपीगणं शान्तं मां ब्रह्माणञ्च पार्वतीम् ।
लक्ष्मीं सरस्वतीं पृथ्वीं सर्वदेवं सविग्रहम् ॥ २१ ॥
देवषट्कं समभ्यर्च्य पुनः पञ्चोपचारतः ।
पश्चाद्देवं क्रमेणैव श्रीकृष्णं पूजयेत् सुधीः ॥ २२ ॥
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
समभ्यर्च्य देवषट्कमिष्टदेवञ्च पूजयेत् ॥ २३ ॥
गणेशं विघ्ननाशाय व्याधिनाशाय भास्करम् ।
आत्मनः शुद्धये वह्निं श्रीविष्णुं मुक्तिहेतवे ॥ २४ ॥
ज्ञानाय शङ्करं दुर्गां परमैश्वर्य्यहेतवे ।
सम्पूजने फलमिदं विपरीत मपूजने ॥ २५ ॥
ततः कृत्वा परीहार मिष्टदेवञ्च भक्तितः ।
स्तोत्रञ्च सामवेदोक्तं पठेद्भक्त्या च तत्शृणु ॥ २६ ॥

महादेव उवाच ।

परं ब्रह्म परं धाम परं ज्योतिः सनातनम् ।
निर्लिप्तं परमात्मानं नमामि सर्वकारणम् ॥ २७ ॥
स्थूलात् स्थूलतमं देवं सूक्ष्मात् सूक्ष्मतमं परम् ।
सर्वदृश्य मदृश्यञ्च स्वेच्छाचारं नमाम्यहम् ॥ २८ ॥
साकारञ्च निराकारं सगुणं निर्गुणं प्रभुम् ।
सर्वाधारञ्च सर्वञ्च स्वेच्छारूपं नमाम्यहम् ॥ २९ ॥
अतीवकमनीयञ्च रूपं निरूपमं विभुम् ।
करालरूपमत्यन्तं बिभ्रतं प्रणमाम्यहम् ॥ ३० ॥
कर्म्मणः कर्म्मरूपं तं साक्षिणं सर्वकर्मणः ।
फलञ्च फलदातारं सर्वरूपं नमाम्यहम् ॥ ३१ ॥

स्रष्टा पाता च संहर्त्ता कलया मूर्त्तिभेदतः ।
नानामूर्त्तिः कलांशेन यः पुमांस्तं नमाम्यहम् ॥३२॥
स्वयं प्रकृतिरूपश्च मायया च स्वयं पुमान् ।
तयोः परं स्वयं शश्वत् तं नमामि परात्परम् ॥३३॥
स्त्री पुं नपुंसकं रूपं यो बिभर्त्ति स्वमायया ।
स्वयं माया स्वयं मायी यो देव स्तं नमाम्यहम् ॥ ३४ ॥
तारणं सर्वदुःखानां सर्वकारणकारणम् ।
धारणं सर्वविश्वानां सर्वबीजं नमाम्यहम् ॥ ३५ ॥
तेजस्विनां रवियोहि सर्वजातिषु ब्राह्मणः ।
नक्षत्राणाञ्च यश्चन्द्र स्तं नमामि जगत्प्रभुम् ॥ ३६ ॥
रुद्राणां वैष्णवानाञ्च ज्ञानिनां योहि शङ्करः ।
नागानां योहि शेषश्च तं नमामि जगत्पतिम् ॥ ३७ ॥
प्रजापतीनां यो ब्रह्मा सिद्धानां कपिलः स्वयम् ।
सनत्कुमारो मुनिषु तं नमामि जगत्गुरुम् ॥ ३८ ॥
देवानां यो हि विष्णुश्च देवीनां प्रकृतिः स्वयम् ।
स्वायम्भुवो मनूनां यो मानवेषु च वैष्णवः ।
नारीणां शतरूपाच बहुरूपं नमाम्यहम् ॥ ३९ ॥
ऋतूनां यो वसन्तश्च मासानां मार्गशीर्षकः ।
एकादशी तिथीनाञ्च नमामि सर्वरूपिणम् ॥ ४० ॥
सागरः सरितां यश्च पर्वतानां हिमालयः ।
वसुन्धरा सहिष्णूनां तं सर्वं प्रणमाम्यहम् ॥ ४१ ॥
पत्राणां तुलसीपत्रं दारुरूपेषु चन्दनम् ।
वृक्षाणां कल्पवृक्षो य स्तं नमामि जगत्पतिम् ॥ ४२ ॥
पुष्पाणां पारिजातश्च शस्यानां धान्यमेव च ।

अमृतं भक्ष्यवस्तूनां नानारूपं नमाम्यहम् ॥ ४३ ॥
ऐरावतो गजेन्द्राणां वैनतेयश्च पक्षिणाम् ।
कामधेनुश्च धेनूनां सर्वरूपं नमाम्यहम् ॥ ४४ ॥
तैजसानां सुवर्णञ्च धान्यानां यवमेव च ।
यः केशरी पशूनाञ्च वररूपं नमाम्यहम् ॥ ४५ ॥
यक्षाणाञ्च कुवेरो यो ग्रहाणाञ्च वृहस्पतिः ।
दिक्पालानां महेन्द्रश्च तं नमामि परं वरम् ॥ ४६ ॥
वेदसङ्घश्च शास्त्राणां पण्डितानां सरस्वती ।
अक्षराणामकारो य स्तं प्रधानं नमाम्यहम् ॥ ४७ ॥
मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जाह्नवी स्वयम् ।
इन्द्रियाणां मनो यो हि सर्वश्रेष्ठं नमाम्यहम् ॥ ४८ ॥
सुदर्शनञ्च शस्त्राणां व्याधिनां वैष्णवो ज्वरः ।
तेजसां ब्रह्मतेजश्च वरेण्यञ्च नमाम्यहम् ॥ ४९ ॥
निषेकश्च बलवतां मनश्च शाघ्रगामिनाम् ।
कालः कलयतां यो हि तं नमामि विलक्षणम् ॥ ५० ॥
ज्ञानदाता गुरूणाञ्च मातृरूपश्च बन्धुषु ।
मित्रेषु जन्मदाता यस्तं सारं प्रणमाम्यम् ॥ ५१ ॥
शिल्पिनां विश्वकर्म्मा यः कामदेवश्च रूपिणाम् ।
पतिव्रता यः पत्नीनां नमस्यं तं नमाम्यहम् ॥ ५२ ॥
प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च ।
शालग्रामश्च यन्त्राणां तं विशिष्टं नमाम्यहम् ॥ ५३ ॥
धर्म्मः कल्याणबीजानां वेदानां सामवेदकः
धर्म्माणां सत्यरूपो यो विशिष्टं तं नमाम्यहम् ॥ ५४ ॥
जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु ।

शब्दरूपश्च गगने तं प्रणम्य नमाम्यहम् ॥ ५५ ॥
क्रतूनां राजसूयो यो गायत्री छन्दसाञ्च यः ।
गन्धर्वाणां चित्ररथस्तं गरिष्ठं नमाम्यहम् ॥ ५६ ॥
क्षीरस्वरूपो गव्यानां पवित्राणाञ्च पावकः ।
पुण्यदानाञ्च यः स्तोत्रं तं नमामि शुभप्रदम् ॥ ५७ ॥
तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम् ।
गुणानां शान्तरूपो यश्चित्ररूपं नमाम्यहम् ॥ ५८ ॥
तेजो रूपो ज्ञानरूपः सर्वरूपश्च यो महान् ।
सर्वानिर्वचनीयञ्च तं नमामि स्वयं विभुम् ॥ ५९ ॥
सर्वाधारेषु यो वायुर्यथात्मा नित्यरूपिणाम् ।
आकाशो व्यापकानां यो व्यापकं तं नमाम्यहम् ॥६०॥
वेदानिर्वचनीयं यन्न स्तोतुं पण्डितः क्षमः ।
यदनिर्वचनीयञ्च को वा तत् स्तोतुमीश्वरः ॥ ६१ ॥
वेदा न शक्ता यं स्तोतुं जड़ीभूता सरस्वती ।
तञ्च वाङ्मनसोः पारं को विद्वान् स्तोतुमीश्वरः ॥६२॥
शुद्ध तेजः स्वरूपञ्च भक्तानुग्रहविग्रहम् ।
अतीवकमनीयञ्च श्यामरूपं नमाम्यहम् ॥ ६३ ॥
द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा ।
शश्वद्गोपाङ्गनाभिश्च वीक्ष्यमाणं नमाम्यहम् ॥ ६४ ॥
राधया दत्तताम्बूलं भुक्तवन्तं मनोहरम् ।
रत्नसिंहासनस्थञ्च तमीशं प्रणमाम्यहम् ॥ ६५ ॥
रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः ।
पार्षदप्रवरैर्गोपकुमारैस्तं नमाम्यहम् ॥ ६६ ॥
वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम् ।

रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥ ६७ ॥
शतशृङ्गे महाशैले गोलोके रत्नपर्वते ।
विरजापुलिने रम्ये प्रणमामि विहारिणम् ॥ ६८ ॥
परिपूर्णतमं शान्तं राधाकान्तं मनोहरम् ।
सत्यं ब्रह्मस्वरूपञ्च नित्यं कृष्णं नमाम्यहम् ॥ ६९ ॥
श्रीकृष्णस्य स्तोत्रमिदं त्रिसन्ध्यं यः पठेन्नरः ।
धर्मार्थकाममोक्षाणां स दाता भारते भवेत् ॥ ७० ॥
हरिदास्यं हरौ भक्तिं लभेत् स्तोत्रप्रसादतः ।
इह लोके जगत्पूज्यो विष्णुतुल्यो भवेत् ध्रुवम् ॥७१॥
सर्वसिद्धेश्वरः शान्तोऽप्यन्ते याति हरेः पदम् ।
तेजसा यशसा भाति यथा सूर्य्यो महीतले ॥ ७२ ॥
जीवन्मुक्तः कृष्णभक्तः स भवेन्नात्र संशयः ।
अरोगी गुणवान् विद्वान् पुत्रवान् धनवान् सदा ॥७३॥
षड़भिज्ञो दशबलो मनोयायी भवेद् ध्रुवम् ।
सर्वज्ञः सर्वदश्चैव स दाता सर्वसम्पदाम् ।
कल्पवृक्षसमः शश्वद्भवेत् कृष्णप्रसादतः ॥ ७४ ॥
इत्येवं कथितं स्तोत्रं त्वं वत्स गच्छ पुष्करम् ।
तत्र कृत्वा मन्त्रसिद्धिं पश्चात् प्राप्स्यसि वाञ्छितम् ॥७५
त्रिःसप्तकृत्वो निर्भूपां कुरु पृथ्वीं यथा सुखम् ।
ममाशिषा मुनिश्रेष्ठ श्रीकृष्णस्य प्रसादतः ॥ ७६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे स्तवप्रदानं नाम
द्वात्रिंशत्तमोऽध्यायः ।

——

# त्रयस्त्रिंशत्तमोऽध्यायः।

नारायण उवाच।

शिवं प्रणम्य स भृगु र्दुर्गां कालीं मुदान्वितः।
गत्वा पुष्करतीर्थञ्च मन्त्रसिद्धिञ्चकार ह॥ १॥
स बभूव निराहारो मासं भक्तिसमन्वितः।
ध्यायन् कृष्णपदाम्भोजं वायुरोधञ्चकार सः॥ २॥
ददर्श चक्षुरुन्मील्य गगनं तेजसावृतम्।
दिशो दश द्योतयन्तं समाच्छन्नदिवाकरम्॥ ३॥
तेजो मण्डलमध्यस्थं रत्नयानं ददर्श ह।
ददर्श तत्र पुरुषमतीवसुन्दरं वरम्॥ ४॥
ईशद्धास्यप्रसन्नास्यं भक्तानुग्रहकारकम्।
मूर्द्ध्ना प्रणम्य दण्डवद्वरं वव्रे तमीश्वरम्॥ ५॥
त्रिःसप्त कृत्वो निर्भूपां करिष्यामि महीमिति।
पदारविन्दे सुदृढ़ां तां भक्तिमनपायिनीम्॥ ६॥
दास्यं सुदुर्लभं शश्वत् त्वं पादाब्जे च देहि मे।
कृष्णस्तस्मै वरं दत्त्वा तत्रैवान्तरधीयत॥ ७॥
भृगुः प्रणम्य भवनं जगाम तत् परात्परम्।
पश्यन् दक्षिणाङ्गञ्च परं मङ्गलसूचकम्॥ ८॥
वाञ्छाप्रतीतिजननं सुस्वप्नञ्च ददर्श ह।
मनः प्रसन्नं स्फीतञ्च तद्‌ बभूव दिवानिशम्।
सम्भाष्य स्वजनं सर्वं गृहे तस्थौ मुदान्वितः॥ ९॥

स्वशिष्यान् पितृशिष्यांश्च भ्रातृवर्गांश्च बान्धवान्।
आनीयानीय विविधान् मन्त्रांश्च स चकारह ॥ १० ॥
पौर्वापर्य्यं स्ववृत्तान्तं तानेवोक्का शुभक्षणे।
तैरेव सार्द्धं बलवान् बभूव गमनोन्मुखः ॥ ११ ॥
ददर्श मङ्गलं रामः सुश्राव जयसूचकम्।
बुबुधे मनसा सर्व्वं स्वजयं वैरिसंक्षयम् ॥ १२ ॥
यात्राकाले च पुरतः सुश्राव सहसा मुनिः।
हरिशब्दं सिंहशब्दं घण्टादुन्दुभिवादनम् ॥ १३ ॥
आकाशवाणीं सङ्गीतं जयस्ते भवितेति च।
सर्व्वेङ्गितञ्च कल्याणं मेघशब्दं जयावहम् ॥ १४ ॥
चकार यात्रां भगवान् श्रुत्वैवं विविधं शुभम्।
ददर्श पुरतो विप्रवन्दिदेवज्ञभिक्षुकान् ॥ १५ ॥
ज्वलत्प्रदीपं बिभ्रन्तीं पतिपुत्रवतीं सतीम्।
पुरो ददर्श स्मेरास्यां नानाभूषणभूषिताम् ॥ १६ ॥
शवं शिवां पूर्णकुम्भं चासञ्च नकुलन्तथा।
गच्छन्ददर्श रामश्च यात्रामङ्गलसूचकम् ॥ १७ ॥
कृष्णसारं गजं सिंहं तुरगं गण्डकं द्विपम्।
चमरीं राजहंसञ्च चक्रवाकं शुकं पिकम् ॥ १८ ॥
मयूरं खञ्जनं चैव शङ्खचिल्लं चकोरकम्।
पारावतं बलाकाञ्च कारण्डं चातकं चटम् ॥ १९ ॥
सौदामिनीं शक्रचापं सूर्य्यं सूर्य्यशोभां शुभाम्।
सद्यो मांसं सजीवञ्च मत्स्यं शङ्खं सुवर्णकम् ॥ २० ॥
माणिक्यं रजतं मुक्तां मणीन्द्रञ्च प्रवालकम्।
दधि लाजं शुक्लधान्यं शुक्लपुष्पञ्च कुङ्कुमम् ॥ २१ ॥

पर्णं पताकां छत्रञ्च दर्पणं श्वेतचामरम् ।
धेनुं वत्सप्रयुक्ताञ्च रथस्थं भूमिपं तथा ॥ २२ ॥
दुग्धमाज्यं तथा पूगम् अमृतं पायसन्तथा ।
शालग्रामं पक्वफलं स्वस्तिकं शर्करां मधु ॥ २३ ॥
मार्ज्जारञ्च वृषेन्द्रञ्च मेषं पर्वतमूषिकम् ।
मेघाच्छन्नस्य च रवेरुदयं चन्द्रमण्डलम् ॥ २४ ॥
कस्तूरीव्यजनं तोयं हरिद्रां तीर्थमृत्तिकाम् ।
सिद्धार्थं सर्षपं दूर्वां विप्रबालञ्च बालिकाम् ॥ २५ ॥
मृगं वेश्याञ्च भ्रमरं कर्पूरं पीतवाससम् ।
गोमूत्रं गोपुरीषञ्च गोधूलिं गोपदाङ्कितम् ॥ २६ ॥
गोष्ठं गवां वर्त्म रम्यां गोशालां गोगतिं शुभाम् ।
भूषणं देवप्रतिमां ज्वलदग्निं महोत्सवम् ॥ २७ ॥
ताम्रञ्च स्फटिकं वेद्यं सिन्दूरं माल्यचन्दनम् ।
गन्धञ्च हीरकं रत्नं ददर्श दक्षिणे शुभम् ॥ २८ ॥
सुगन्धिवायोराघ्राणं प्राप विप्राशिषं शुभम् ॥ २९ ॥
इत्येवं मङ्गलं ज्ञात्वा प्रययौ स मुदान्वितः ।
अस्तं गते दिनकरे नर्म्मदातीरसन्निधौ ॥ ३० ॥
तत्राक्षयवटं दिव्यं ददर्श सुमनोहरम् ।
अत्यूर्द्ध्वं विस्तृतमति पुण्याश्रम पदं परम् ॥ ३१ ॥
पौलस्त्यतपसः स्थानं सुगन्धिवायुनान्वितम् ।
कार्त्तवीर्य्यार्ज्जुनाभ्यासे तत्र तस्थौ गणैः सह ॥ ३२ ॥
सुष्वाप पुष्पशय्यायां किङ्करैः परिसेवितः ।
निद्रां ययौ परिश्रान्तः परमानन्दसंयुतः ॥ ३३ ॥
निशातीते च सद्गुरु स्वाह स्वप्नं ददर्श ह ।

न चिन्तितं यन्मनसा वायुपित्तकफं विना ॥ ३४ ॥
गजाश्वशैलप्रासाद गोवृक्षफलितेषु च ।
आरुह्यमाणमात्मानं रुदन्तं कृमिभक्षितम् ॥ ३५ ॥
आरुह्यमाणमात्मानं नौकायां चन्दनोक्षितम् ।
धृतवन्तं पुष्पमालां शोभितं पीतवाससा ॥ ३६ ॥
विण्मूत्रोक्षितसर्वाङ्गं वशापूयसमन्वितम् ।
वीणां वरां वादयन्तमात्मानञ्च ददर्श ह ॥ ३७ ॥
विस्तीर्णपद्मपत्रैश्च स्वं ददर्श सरित्तटे ।
दध्याज्यमधुसंयुक्तं भुक्तवन्तञ्च पायसम् ॥ ३८ ॥
भुक्तवन्तञ्च ताम्बूलं लभन्तं ब्राह्मणाशिषम् ।
फलपुष्पप्रदीपञ्च पश्यन्तं स्वं ददर्श ह ॥ ३९ ॥,
परिपक्वफलं क्षीरमुष्णान्नं शर्करान्वितम् ।
स्वस्तिकं भुक्तवन्तं स्वं ददर्श च पुनः पुनः ॥ ४० ॥
जलौकसा वृश्चिकेन मीनेन भुजगेन च ।
भक्षितं भीतमात्मानं पलायन्तं ददर्श सः ॥ ४१ ॥
ततो ददर्श चात्मानं मण्डलं चन्द्रसूर्य्ययोः ।
पतिपुत्त्रवतीं नारीं पश्यन्तं सस्मितं द्विजम् ॥ ४२ ॥
सुवेशया कन्यकया सस्मितेन द्विजेन च ।
ददर्श श्लिष्टमात्मानं तुष्टेन परितुष्टया ॥ ४३ ॥
फलितं पुष्पितं वृक्षं देवताप्रतिमां नृपम् ।
गजस्थञ्च रथस्थञ्च पश्यन्तं स्वं ददर्श ह ॥ ४४ ॥
पीतवस्त्रपरिधानां रत्नालङ्कारभूषिताम् ।
विशन्तीं ब्राह्मणीं गेहं पश्यन्तं स्वं ददर्श ह ॥ ४५ ॥
शङ्खञ्च स्फटिकं श्वेतमालां मुक्ताञ्च चन्दनम् ।

सुवर्णं रजतं रत्नं पश्यन्तं स्वं ददर्श ह ॥ ४६ ॥
गजं वृषञ्च सर्पञ्च श्वेतञ्च श्वेतचामरम् ।
नीलोत्पलं दर्पणञ्च भार्गवः स्वं ददर्श ह ॥ ४७ ॥
रथस्थं नवरत्नस्थं मालतीमाल्यभूषितम् ।
रत्नसिंहासनस्थं स्वं भृगुः स्वप्ने ददर्श ह ॥ ४८ ॥
पद्मश्रेणीं पूर्णकुम्भं दधि लाजं घृतं मधु ।
पर्णच्छत्रं छत्रिणञ्च भृगुः स्वप्ने ददर्श ह ॥ ४९ ॥
वकपङ्क्तिं हंसपङ्क्तिं कन्यापङ्क्तिं व्रतान्विताम् ।
पूजयन्तीं घटं शुभं भृगुः स्वप्ने ददर्श ह ॥ ५० ॥
मण्डपस्थं द्विजगणं पूजयन्तं हरं हरिम् ।
जयोऽस्त्वित्युक्तवन्तं तं भृगुः स्वप्ने ददर्श ह ॥ ५१ ॥
सुधावृष्टिं पर्णवृष्टिं फलवृष्टिञ्च शाश्वतीम् ।
पुष्पचन्दनवृष्टिञ्च भृगुः स्वप्ने ददर्श ह ॥ ५२ ॥
मत्स्यौ मांसं जीवमत्स्यं मयूरं श्वेतखञ्जनम् ।
सरोवरञ्च तीर्थानि भृगुः स्वप्ने ददर्श ह ॥ ५३ ॥
पारावतं शुकं चासं शङ्खचिल्लञ्च चातकम् ।
व्याघ्रं सिंहञ्च सुरभीं भृगुः स्वप्ने ददर्श ह ॥ ५४ ॥
गोरोचनां हरिद्राञ्च शुक्लधान्याचलं वरम् ।
ज्वलदग्निं तथा दूर्वां भृगुः स्वप्ने ददर्श ह ॥ ५५ ॥
देवालयसमूहञ्च शिवलिङ्गञ्च पूजितम् ।
अर्चितां मृण्मयीं शैवां भृगुः स्वप्ने ददर्श ह ॥ ५६ ॥
यवगोधूमचूर्णानां पिष्टानि लड्डुकानि च ।
भृगुर्ददर्श स्वप्ने च बुभुजे च पुनः पुनः ॥ ५७ ॥
दिव्यवस्त्रपरीधाना रत्नभूषणभूषिताः ।

अगम्यागमनं स्वप्ने चकार भृगुनन्दनः ॥ ५८ ॥
ददर्श नर्त्तकीं वेश्यां रुधिरञ्च सुरां पपौ।
रुधिरोक्षितसर्वाङ्गः स्वप्ने च भृगुनन्दनः ॥ ५९ ॥
पक्षिणां पीतवर्णानां मानुषाणाञ्च नारद।
मांसानि बुभुजे रामो हृष्टः स्वप्नेऽरुणोदये ॥ ६० ॥
अकस्मान्निगडैर्बद्धं क्षतं शस्त्रेण स्वं भृगुम्।
दृष्ट्वा च बुबुधे प्रातः समुत्तस्थौ हरिं स्मरन् ॥ ६१ ॥
अतीव हृष्टः स्वप्नेन प्रातःकृत्यञ्चकार सः।
मनसा बुबुधे सर्वं विजेष्यामि रिपुं ध्रुवम् ॥ ६२ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे त्रयस्त्रिंशत्तमोऽध्यायः।

---

## चतुस्त्रिंशत्तमोऽध्यायः।

---

नारायण उवाच।
स प्रात राह्निकं कृत्वा समालोच्य च तैः सह।
दूतं प्रस्थापयामास कार्त्तवीर्य्याश्रमं भृगुः ॥ १ ॥
स दूतः शीघ्रमागत्य वसन्तं राजसंसदि।
वेष्टितं सचिवैः सार्द्ध मुवाच नृपतीश्वरम् ॥ २ ॥
रामदूत उवाच।
नर्म्मदातीरसान्निध्ये न्यग्रोधाक्षयमूलके।
स भृगुर्भ्रातृभिः सार्द्धं त्वं तत्र गन्तु मर्हसि ॥ ३ ॥

युद्धं कुरु महाराज ज्ञातिभिर्ज्ञातिभिः सह ।
त्रिः सप्त कृत्वो निर्भूपां करिष्यति महीमिति ॥ ४ ॥
इत्युक्त्वा रामदूतश्च जगाम रामसन्निधिम् ।
राजा विधाय सन्नाहं समरं गन्तु मुद्यतः ॥ ५ ॥
गच्छन्तं समरं दृष्ट्वा प्राणेशं सा मनोरमा ।
तमेव वारयामास वासयामास सन्निधौ ॥ ६ ॥
राजा मनोरमां दृष्ट्वा प्रसन्नवदनेक्षणः ।
तामुवाच सभामध्ये वाक्यं मानसिकं मुने ॥ ७ ॥

कार्त्तवीर्य्यार्जुन उवाच ।

मामेवाह्वयते कान्ते जमदग्निसुतो महान् ।
स तिष्ठन्नर्म्मदातीरे रणाय भ्रातृभिः सह ॥ ८ ॥
सम्प्राप्य शङ्कराच्छस्त्रं मन्त्रञ्च कवचं हरेः ।
त्रिः सप्त कृत्वो निर्भूपां कर्त्तुमिच्छति मेदिनीम् ॥ ९ ॥
आन्दोलयति मे प्राणान् मनः संक्षुभितं मुहुः ।
शश्वत् स्फुरति वामाङ्गं दृष्टं स्वप्नं शृणु प्रिये ॥ १० ॥
तैलाभ्यङ्गित मात्मान मदर्शं गर्दभोपरि ।
बिभ्रन्त मोड्रपुष्पस्य माल्यञ्च रक्तचन्दनम् ॥ ११ ॥
रक्तवस्त्रपरीधानं लौहालङ्कारभूषितम् ।
हसन्तञ्चैव क्रीड़न्तं निर्वाणाङ्गारराशिना ॥ १२ ॥
भस्माच्छन्नाञ्च पृथिवीं जवापुष्पान्वितां सति ।
रहितं चन्द्रसूर्य्याभ्यां रक्त सन्ध्यान्वितं नभः ॥ १३ ॥
मुक्तकेशाञ्च नृत्यन्तीं विधवां छिन्ननासिकाम् ।
रक्तवस्त्रपरीधाना मदर्शं मट्टहासिनीम् ॥ १४ ॥
श्मशानमग्निरहितां चितां भस्मसमन्विताम् ।

भस्मवृष्टिं रक्तवृष्टिमङ्गारवृष्टिमीश्वरि।
पक्वतालफलाकीर्णां पृथिवीमस्थिसंयुताम्।
अदर्शं कर्पराशिश्च छिन्नकेशनखान्वितम्॥ १६॥
पर्वतं लवणानाञ्च राशीभूतं कपर्दकम्।
चूर्णानाञ्चैव तैलानामदर्शं कन्दरं निशि॥ १७॥
अदर्शं पुष्पितं वृक्षमशोककरवीरयोः।
तालवृक्षञ्च फलितं तत्र एव पतत् फलम्॥ १८॥
स्वकरात् पूर्णकलसः पपात च बभञ्ज च।
इत्यदर्शञ्च गगनात् सम्पतच्चन्द्रमण्डलम्॥ १९॥
अदर्शं मम्बरात् सूर्य्यमण्डलं सम्पतद्भुवि।
उल्कापातं धूमकेतुं ग्रहणञ्चन्द्रसूर्य्ययोः॥ २०॥
विकृताकारपुरुषं विकटास्यं दिगम्बरम्।
आगच्छन्तञ्चाग्रतस्तु अदर्शञ्च भयानकम्॥ २१॥
बाला द्वादशवर्षीया वस्त्रभूषणभूषिता।
संरुष्टा याति मद्गेहादित्यदर्शमहं निशि॥ २२॥
विदायं देहि राजेन्द्र त्वद्गेहाद् यामि काननम्।
वदसि त्वं मामिति च निशि दर्शमहं शुचा॥ २३॥
रुष्टो विप्रो मां शपते सन्यासी च तथा गुरुः।
भित्तौ पुत्तलिकाश्चित्रा नृत्यन्तीत्यदर्शं परम्॥ २४॥
चञ्चलानाञ्च गृध्राणां काकानां निकरैः सदा।
पीडितं महिषाणाञ्च स्व मदर्शं महं निशि॥ २५॥
तैलं पीडितयन्त्रञ्च तैलकारेण भ्रामितम्।
दिगम्बरान् पाशहस्तानदर्शं मह मीश्वरि॥ २६॥
नृत्यन्ति गायनाः सर्वे गानं गायन्ति मे गृहे।

विप्राहं परमानन्द मित्य दर्श महं निशि ॥ २७ ॥
रमणं कुर्वतो लोकान् केशाकेशीति कुर्वतः ।
अदर्शं समरं रात्रौ काकानाञ्च शूनामिति ॥ २८ ॥
मोटकानि च पिण्डानि श्मशानं शवसंयुतम् ।
रक्तवस्त्रं शुक्लवस्त्र मदर्शं निशि कामिनि ॥ २९ ॥
कृष्णाम्बरा कृष्णवर्णा नग्ना च मुक्तकेशिनी ।
विधवा श्लिष्यति च मा मदर्शं निशि शोभने ॥ ३० ॥
नापितो मुण्डितो मुण्डं श्मश्रुश्रेणीं मम प्रिये ।
वक्षःस्थलञ्च नखर मित्यदर्शमहं निशि ॥ ३१ ॥
पादुकाचर्मरज्जूना मदर्शं राशि मुल्बणम् ।
चक्रं भ्रमन्तं भूमौ च कुलालस्येति सुन्दरि ॥ ३२ ॥
वात्यया घूर्णमानञ्च शुष्क वृक्षं तमुत्थितम् ।
घूर्णमानं कबन्धञ्चैवादर्शं निशि सुव्रते ॥ ३३ ॥
ग्रथितां मुण्डमालाञ्च चूर्णमानाञ्च वात्यया ।
चलीव घोर दशना मित्यदर्शमहं वरे ॥ ३४ ॥
भूतप्रेता मुक्तकेशा वमन्तश्च हुताशनम् ।
मां भीषयन्ति सतत मित्यदर्शमहं निशि ॥ ३५ ॥
दग्धजोवं दग्धवृक्षं व्याधिग्रस्तं नरं परम् ।
अङ्गहीनञ्च वृषल मित्यदर्शमहं निशि ॥ ३६ ॥
गेहपर्वतवृक्षाणां सहसा पतनं परम् ।
मुहुर्मुहुर्वज्रपात मित्यदर्शमहं निशि ॥ ३७ ॥
कुक्कुराणां शृगालानां रोदनञ्च मुहुर्मुहुः ।
गृहे गृहे च नियत मित्यदर्शमहं निशि ॥ ३८ ॥
अधोमस्त मूर्द्ध पादं मुक्तकेशं दिगम्बरम् ।

भूमौ भ्रमन्तं गच्छन्त मित्यदर्शमहं नरम् ॥ ३९ ॥
विकृताकार मब्दश्च ग्रामाधिदेवरोदनम् ।
प्रातः श्रुत्वैवावबोधश्च कमुपायं वदाधुना ॥ ४० ॥
नृपतेर्वचनं श्रुत्वा हृदयेन विदूयता ।
रुदती तं सगद्गद मुवाच सा नृपेश्वरम् ॥ ४१ ॥
मनोरमा उवाच ।
हे नाथ रमणश्रेष्ठ श्रेष्ठः सर्वमहीभृताम् ।
प्राणातिरेक प्राणेश शृणु वाक्यं शुभावहम् ॥ ४२ ॥
नारायणांशो भगवान् जामदग्न्यो महाबली ।
सृष्टिसंहर्त्तुरीशस्य शिष्योऽयं जगतः प्रभोः ॥ ४३ ॥
त्रिःसप्त कृत्वो निर्भूपां करिष्यामि महीमिति ।
प्रतिज्ञा यस्य रामस्य तेन सार्द्धं रणं त्यज ॥ ४४ ॥
पापिनं रावणं जित्वा शूरं त्वमपि मन्यसे ।
स त्वया न जितो नाथ स्वपापेन पराजितः ॥ ४५ ॥
यो न रक्षति धर्मञ्च तस्य को रक्षिता भुवि ।
स नश्यति स्वयं मूढो जीवन्नपि मृतोहि सः ॥ ४६ ॥
शुभाशुभस्य सततं साक्षी धर्म्मस्य कर्म्मणः ।
आत्मारामः स्थितः स्वान्तः मूढस्त्वं नहि पश्यति ॥४७॥
पुत्त्रदारादिकं यद्‌यत् सर्वैश्वर्य्यं सुधर्म्मिणाम् ।
जलबुद्बुदवत् सर्व्व मनित्यं नश्वरं नृप ॥ ४८ ॥
संसारं स्वप्नसदृशं मत्वा सन्तोऽत्र भारते ।
ध्यायन्ते सततं धर्म्मं तपः कुर्वन्ति भक्तितः ॥ ४९ ॥
दत्तेन दत्तं यज्ज्ञानं तत् सर्व्वं विस्मृतं त्वया ।
प्रवृत्ति चेत् विप्रहिंसायां कुरुषे त्वमनः कथम् ॥ ५० ॥

सुखार्थे गङ्गायां गत्वा ततोपोष्य द्विजाश्रमे ।
भुक्त्वा मिष्ट मपूर्वञ्च हतो विप्रो निरर्थकम् ॥ ५१ ॥
गुरुविप्रसुराणाञ्च यः करोति पराभवम् ।
अभीष्टदेव स्तं रुष्टो विपत्ति स्तस्य सन्निधौ ॥ ५२ ॥
स्मरणं कुरु राजेन्द्र दत्तात्रेयपदाम्बुजम् ।
गुरौ भक्तिश्च सर्वेषां सर्वविघ्नविनाशिनी ॥ ५३ ॥
गुरुदेवं समभ्यर्च्य तं भृगुं शरणं व्रज ।
विप्रे देवे प्रसन्ने च क्षत्रियाणां न हि क्षतिः ॥ ५४ ॥
विप्रस्य किङ्करो भूपो वैश्यो भूपस्य भूमिप ।
सर्वेषां किङ्कराः शूद्रा ब्राह्मणस्य विशेषतः ॥ ५५ ॥
अयशः शरणं शश्वत् क्षत्रियस्य च क्षत्रिये ।
महद् यशस्तच्छरणं गुरुदेवद्विजेषु च ॥ ५६ ॥
ब्राह्मणं भज राजेन्द्र गरीयांसं सुरादपि ।
ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्वदेवताः ॥ ५७ ॥
इत्येव मुक्त्वा राजेन्द्रं क्रोडे कृत्वा महासती ।
मुहुर्मुहुर्मुखं दृष्ट्वा विललाप रुरोद च ॥ ५८ ॥
क्षणं तिष्ठ महाराज पुनरेवमुवाच सा ।
स्नानं कुरु महाराज भोजयिष्यामि वाञ्छितम् ॥ ५९ ॥
चन्दनागुरुकस्तूरी कुङ्कुमाबीरमुत्तमम् ।
अनुलेपं करिष्यामि सर्वाङ्गे तव सुन्दर ॥ ६० ॥
क्षणं सिंहासने तिष्ठ क्षणं वक्षसि मे प्रभो ।
सभायां रचिते तल्पे पश्यामि जन्मशोधनम् ॥ ६१ ॥
शतपुत्राधिकः प्रेम्णा सतीनाञ्च पतिर्नृप ।
निरूपितो भगवता वेदेषु हरिणा स्वयम् ॥ ६२ ॥

मनोरमा वचः श्रुत्वा राजा परमपण्डितः ।
बोधयामास तां राज्ञीं ददौ प्रत्युत्तरं पुनः ॥ ६३ ॥

कार्त्तवीर्य्यार्जुन उवाच ।

शृणु कान्ते प्रवक्ष्यामि श्रुतं सर्वं त्वयेरितम् ।
शोकार्त्तानाञ्च वचनं न रम्यंस्यं सभासु च ॥ ६४ ॥
सुखं दुःखं भयं शोकः कलहः प्रीतिरेव च ।
कर्म्मभोगाद्धेकालेन सर्वं भवति सुन्दरि ॥ ६५ ॥
कालो ददाति राजत्वं कालो मृत्युं पुनर्भवम् ।
कालः सृजति संसारं कालः संहरते पुनः ॥ ६६ ॥
करोति पालनं कालः कालरूपी जनार्दनः ।
कालस्य कालः श्रीकृष्णो विधातुर्विधिरेव च ॥ ६७ ॥
संहर्त्तुर्य्योपि संहर्त्ता पातुः पाता निषेककृत् ।
स निषेको निषेकेण ददाति तपसां फलम् ।
कः केन हन्यते जन्तुर्निषेकेण विना सति ॥ ६८ ॥
स्रष्टा सृजति सृष्टिञ्च संहर्त्ता संहरेत् पुनः ।
पाता पाति च भूतानि यस्याज्ञां परिपालयेत् ॥ ६९ ॥
यस्याज्ञया वाति वातः सन्ततं भयविह्वलः ।
यस्मात् सञ्चरते मृत्युः सूर्य्यस्तपति सन्ततम् ॥ ७० ॥
वर्षतीन्द्रो दहत्यग्निः कालो भ्रमति भीतवत् ।
तिष्ठन्ति स्थावराः सर्वे चरन्ति सन्ततं चराः ॥ ७१ ॥
वृक्षाश्च पुष्पिताः काले फलिता पल्लवान्विताः ।
शुष्यन्ति कालतः काले वर्द्धन्ते च तदाज्ञया ॥ ७२ ॥
प्रादुर्भूता तिरोभूता सृष्टिरेव तदाज्ञया ।
तस्याज्ञया भवेत् सर्वं न किञ्चित् स्वेच्छया नृणाम् ॥ ७३

नारायणांशो भगवान् परशुरामो महाबलः ।
त्रिःसप्त कृत्वो निर्भूपां करिष्यति महीमिति ॥ ७४ ॥
प्रतिज्ञा विफला तस्य न भवेत्तु कदाचन ।
निश्चितं तस्य बध्योऽहमिति जानामि सुव्रते ॥ ७५ ॥
ज्ञात्वा सर्वं भविष्यञ्च शरणं यामि तत्कथम् ।
प्रतिष्ठितानां चा कीर्त्तिर्मरणादतिरिच्यते ॥ ७६ ॥
इत्येव मुक्ता राजेन्द्रः समरं गन्तुमुद्यतः ।
वाद्यञ्च वादयामास कारयामास मङ्गलम् ॥ ७७ ॥
शतकोटिर्नृपाणाञ्च राजेन्द्राणां त्रिलक्षकम् ।
अक्षौहिणीनां शतकं महाबलपराक्रमम् ॥ ७८ ॥
अश्वानाञ्च गजानाञ्च पदातीनां तथैव च।
असंख्यकं रथानाञ्च गृहीत्वा गन्तुमुद्यतः ॥ ७९ ॥
बभूव स्तम्भिता साध्वी दृष्ट्वा तं गमनोन्मुखम् ।
धृतवन्तञ्च सन्नाहमक्षयं सशरं धनुः ॥ ८० ॥
क्रीड़ागारे क्षणं तस्थौ कृत्वा कान्तं स्ववक्षसि ।
पश्यन्ती तन्मुखाम्भोजं चुचुम्ब च मुहुर्मुहुः ॥ ८१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे चतुस्त्रिंश-
त्तमोऽध्यायः ।

---

# पञ्चत्रिंशत्तमोऽध्यायः ।

———

नारायण उवाच ।

मनोरमा प्राणनाथं चणं कृत्वा स्ववक्षसि ।
भविष्यं मनसा चक्रे यद् यत् स्वामिमुखात् श्रुतम् ॥ १ ॥
पुत्रांश्च पुरतः कृत्वा बान्धवांश्च स्वकिङ्करान् ।
सा सस्मार हरिपदं मेने सत्यं भवे मुने ॥ २ ॥
योगेन भित्वा षट्चक्रं वायुं संस्थाप्य मूर्द्धनि ।
ब्रह्मरन्ध्रस्थकमले सहस्रदलसंयुते ॥ ३ ॥
स्वात्ममाकृष्य विषयाज्जलबुद्बुदसन्निभात् ।
संस्थाप्य बद्धा ध्यानेन लोलं ब्रह्मणि निष्कले ॥ ४ ॥
द्विविधं कर्म संन्यस्य निर्मूलमपुनर्भवम् ।
तत्र प्राणांश्च तत्याज न च प्राणाधिकं प्रियम् ॥ ५ ॥
स राजा तां मृतां दृष्ट्वा विललाप रुरोद च ।
सन्नाहं संपरित्यज्य कृत्वा वक्षस्युवाच ताम् ॥ ६ ॥

राजोवाच ।

मनोरमे समुत्तिष्ठ न यास्यामि रणाजिरे ।
पश्य मां चेतनां प्राप्य विलपन्तं मुहुर्मुहुः ॥ ७ ॥
मनोरमे समुत्तिष्ठ मया सार्द्धं गृहं व्रज ।
न करिष्यामि समरं भृगुणा सह भाविनि ॥ ८ ॥
मनोरमे समुत्तिष्ठ श्रीशैलं व्रज सुन्दरि ।
तत्र क्रीड़ां करिष्यामि त्वया सार्द्धं यथा पुरा ॥ ९ ॥

मनोरमे समुत्तिष्ठ व्रज गोदावरीं प्रिये।
जलक्रीड़ां करिष्यामि त्वया सार्द्धं यथा पुरा ॥ १० ॥
मनोरमे समुत्तिष्ठ नन्दनं व्रज सुन्दरि।
पुष्पभद्रानदीतीरे विहरिष्यामि निर्जने ॥ ११ ॥
मनोरमे समुत्तिष्ठ मलयं व्रज सुन्दरि।
त्वया सार्द्धं रमिष्यामि तत्र चन्दनकानने ॥ १२ ॥
शीतेन गन्धयुक्तेन वायुना सुरभीकृते।
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रिते ॥ १३ ॥
चन्दनागुरुकस्तूरीं ममाङ्गे लेपनं कुरु।
चन्दनाक्तितसर्वाङ्गं पश्य मां सस्मिते सति ॥ १४ ॥
सुधातुल्यं सुमधुरं वचनं रचय प्रिये।
कुटिलभ्रूविकारञ्च कथं नु कुरुषेऽधुना ॥ १५ ॥
नृपस्य रोदनं श्रुत्वा वाग् बभूवाशरीरिणी।
स्थिरो भव महाराज करोषि रोदनं कथम् ॥ १६ ॥
त्वं महाज्ञानिनां श्रेष्ठो दत्तात्रेयप्रसादतः।
जलबुद्बुदवत् सर्वं संसारं पश्य शोभनम् ॥ १७ ॥
कमलांशा च सा साध्वी जगाम कमलालयम्।
त्वमेव गच्छ वैकुण्ठं रणं कृत्वा रणाजिरे ॥ १८ ॥
इत्येवं वचनं श्रुत्वा जहौ शोकं नराधिपः।
ततश्चन्दनकाष्ठेन चितां दिव्याञ्चकार ह ॥ १९ ॥
संस्कारादिं कारयित्वा पुत्त्रद्वारा ददाह ताम्।
नानाविधानि रत्नानि ब्राह्मणेभ्यो ददौ मुदा ॥ २० ॥
नानाविधानि दानानि वस्त्राणि विविधानि च।
मनोरमायाः पुण्येन ब्राह्मणेभ्यो ददौ मुदा ॥ २१ ॥

भुज्यतां भुज्यतां शश्वद्दीयतां दीयतामिति ।
शब्दो बभूव सर्वत्र कार्त्तवीर्य्याश्रमे मुने ॥ २२ ॥
कोषेषु स्वाधिकारेषु स्थितं यद् यद्धनं तदा ।
मनोरमायाः पुण्येन ब्राह्मणेभ्यो ददौ मुदा ॥ २३ ॥
राजा जगाम समरं हृदयेन विदूयता ।
सार्द्धं सैन्यसमूहैश्च वाद्यभाण्डैरसंख्यकैः ॥ २४ ॥
ददर्शामङ्गलं राजा पुरो वर्त्मनि वर्त्मनि ।
ययौ तथापि समरं नाजगाम गृहं पुनः ॥ २५ ॥
मुक्तकेशीं छिन्ननाशां रुदतीञ्च दिगम्बराम् ।
कृष्णवस्त्रपरिधानामपरां विधवामपि ॥ २६ ॥
मुखदुष्टां योनिदुष्टां व्याधियुक्ताञ्च कुट्टनीम् ।
पतिपुत्त्रविहीनाञ्च डाकिनीं पुंश्चलीं तथा ॥ २७ ॥
कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम् ।
कुचेलमतिरूक्षाङ्गं नग्नं काषायवासिनम् ॥ २८ ॥
वसाविक्रयिणञ्चैव कन्याविक्रयिणन्तथा ।
चितादग्धं शवं भस्म निर्वाणाङ्गारमेव च ॥ २९ ॥
सर्पहतनरं सर्पं गोधाञ्च शशकं विषम् ।
श्राद्धपाकञ्च पिण्डञ्च मोटकञ्च तिलां स्तथा ॥ ३० ॥
देवलं वृषवाहञ्च शूद्रश्राद्धान्नभोजिनम् ।
शूद्रान्नपाचकं शूद्रयाजकं ग्रामयाजकम् ॥ ३१ ॥
कुशपुत्तलिकाञ्चैव शवदाहनकारिणम् ।
शून्यकुम्भं भग्नकुम्भं तैलं लवणमस्थि च ॥ ३२ ॥
कार्पासं कच्छपं चूर्णं कुक्कुरं शब्दकारिणम् ।
दक्षिणे च शृगालञ्च कुर्वन्तं भैरवं रवम् ॥ ३३ ॥

कपर्दकञ्च चौरञ्च छिन्नकेशं नखं मलम् ।
कलहञ्च विलापञ्च विलापकारिणं जनम् ॥ ३४ ॥
अमङ्गलं रुदन्तञ्च रुदन्तं शोककारिणम् ॥ ३५ ॥
मिथ्यासाक्ष्यप्रदातारं चौरञ्च नरघातिनम् ।
पुंश्चलीपतिपुत्रौ च पुंश्चल्योदनभोजिनम् ॥ ३६ ॥
देवतागुरुविप्राणां वस्तु वित्तापहारिणम् ।
दत्तापहारिणं दस्युं हिंसकं सूचकं खलम् ॥ ३७ ॥
पितृमातृविरक्तञ्च द्विजाश्वत्थविघातिनम् ।
सत्यघ्नञ्च कृतघ्नञ्च स्थाप्यापहारिणं जनम् ॥ ३८ ॥
विप्रद्रोहं मित्रद्रोहं चतं विश्वासघातकम् ॥ ३९ ॥
गुरुदेवद्विजानाञ्च निन्दकं स्वाङ्गघातकम् ।
जीवानां घातकञ्चैव स्वाङ्गहीनञ्च निर्दयम् ॥ ४० ॥
व्रतोपवासहीनञ्च दीक्षाहीनं नपुंसकम् ।
गलितव्याधिगात्रञ्च काणं बधिरमेव च ॥ ४१ ॥
पुक्कसं छिन्नलिङ्गञ्च सुरामत्तं सुरां तथा ।
छिन्नं वमन्तं रुधिरं महिषं गर्दभं तथा ।
मूत्रं पुरीषं श्लेष्माणं रूक्षिणं नृकपालकम् ॥ ४२ ॥
झञ्झावातं रक्तवृष्टिं वाद्यञ्च वृक्षपातनम् ।
वृकञ्च शूकरं गृध्रं श्येनं कङ्कञ्च भल्लुकम् ॥ ४३ ॥
पाशञ्च शुष्ककाष्ठञ्च वायसं गन्धकं तथा ॥ ४४ ॥
अग्रदानिब्राह्मणञ्च तन्त्रमन्त्रोपजीविनम् ।
वैद्यञ्च रक्तपुष्पञ्च औषधं तुषमेव च ॥ ४५ ॥
कुवार्त्तां मृतवार्त्ताञ्च विप्रशापञ्च दारुणम् ।
दुर्गन्धिवातं दुःशब्दं राजा सम्प्राप वर्त्मनि ॥ ४६ ॥

मनश्च कुत्सितं प्राणाः क्षुभिताश्च निरन्तरम् ।
वामाङ्गस्पन्दनं देहजाड्यं राज्ञो बभूव ह ॥ ४७ ॥
तथापि राजा निःशङ्को ददर्श युद्धमङ्गलम् ।
सर्वसैन्यसमायुक्तः प्रविवेश रणाजिरम् ॥ ४८ ॥
अवरुह्य रथात्तूर्णं दृष्ट्वा च पुरतो भृगुम् ।
ननाम दण्डवद् भूमौ राजेन्द्रैः सह भक्तितः ॥ ४९ ॥
आशिषं युयुजे रामः स्वर्गं याहीति वाञ्छितम् ।
तेषां सत्यं तद्बभूव दुर्लङ्घ्या ब्राह्मणाशिषः ॥ ५० ॥
भृगुं प्रणम्य राजेन्द्रो राजेन्द्रैः सह तत्क्षणात् ।
आरुरोह रथं तूर्णं नानासज्जसमन्वितम् ॥ ५१ ॥
नानाप्रकारवाद्यञ्च दुन्दुभिं मुरजादिकम् ।
वादयामास सहसा ब्राह्मणेभ्यो ददौ धनम् ॥ ५२ ॥
उवाच रामो राजेन्द्रं राजेन्द्राणाञ्च संसदि ।
हितं सत्यं नीतिसारं वाक्यं वेदविदां वरः ॥ ५३ ॥

परशुराम उवाच ।

अये राजेन्द्र धर्म्मिष्ठ चन्द्रवंशसमुद्भव ।
विष्णोरंशस्य शिष्यस्त्वं दत्तात्रेयस्य धीमतः ॥ ५४ ॥
स्वयं विद्वांश्च वेदांश्च श्रुत्वा वेदविदां मुखात् ।
कथं दुर्बुद्धि रधुना सज्जनानां विडम्बना ॥ ५५ ॥
पूर्वमहनस्त्वं लोभान्निरीहं ब्राह्मणं कथम् ।
ब्राह्मणी शोकसन्तप्ता भर्त्रा सार्द्धं गता सती ॥ ५६ ॥
किं भविष्यति ते भूप परत्रैवानयोर्वधात् ।
सर्वं मिथ्यैव संसारं पद्मपत्रे यथा जलम् ॥ ५७ ॥
सत्कीर्त्तिश्चाथ दुष्कीर्त्तिः कथा मात्रावशेषिता ।

विड़म्बना वा किं मतो दुष्कीर्त्तेश्च सतामहो ॥ ५८ ॥
क्व गता कपिला त्वं क्व क्व विवादो मुनिः कुतः ।
यत् कृतं विदुषा राज्ञा न कृतं हालिकेन तत् ॥ ५९ ॥
त्वामुपोषन्तमीशं हि दृष्ट्वा तातो हि धार्म्मिकः ।
पारणां कारयामास दत्तं तस्य फलं त्वया ॥ ६० ॥
अधीतं विधिवद्दत्तं ब्राह्मणेभ्यो दिने दिने ।
जगत् ते यशसा पूर्णं मयशो वार्द्धके कथम् ॥ ६१ ॥
दाता वरिष्ठो धर्म्मिष्ठो यशःस्वान् पुण्यवान् सुधीः ।
कार्त्तवीर्य्यार्जुनसमो न भूतो न भविष्यति ॥ ६२ ॥
पुरातना वदन्तीति वन्दिनो धरणीतले ।
यो विख्यातः पुराणेषु तस्य दुष्कीर्त्तिरीदृशी ॥ ६३ ॥
दुर्वाक्यं दुःसहं राजन् तीक्ष्णास्त्रादपि जीविनाम् ।
सङ्कटेऽपि सतां वक्त्राद् हिरुक्तिर्न विनिर्गता ॥ ६४ ॥
न ददामि हिरुक्तिं न्ते प्रकृतं कथयाम्यहम् ।
उत्तरं देहि राजेन्द्र मह्यं राजेन्द्रसंसदि ॥ ६५ ॥
सूर्य्यचन्द्रमनूनाञ्च वंशाः सन्त्यत्र संसदि ।
सत्यं वद सभायाञ्च शृण्वन्तु पितरः सुराः ॥ ६६ ॥
शृण्वन्तु सर्वे राजेन्द्राः सदसद्वक्तु मीश्वराः ।
पश्यन्तो हि समं सन्तः पाक्षिकं न वदन्ति च ॥ ६७ ॥
इत्युक्त्वा परशुरामश्च विरराम रणस्थले ।
राजा बृहस्पतिसमः प्रवक्तु मुपचक्रमे ॥ ६८ ॥

कार्त्तवीर्य्यार्जुन उवाच ।

अये राम हरेरंशो हरिभक्तो जितेन्द्रियः ।
श्रुतो धर्म्मो मुखात् येषां त्वञ्च तेषां गुरोर्गुरुः ॥ ६९ ॥

कर्म्मणा ब्राह्मणो जातः करोति ब्रह्म भावनम्।
स्वधर्म्मनिरतः शुद्ध स्तस्माद्ब्राह्मण उच्यते ॥ ७० ॥
अन्तर्बहिश्च मननात् करोति कर्म्म जन्मनि।
मौनी शश्वद्वदेत् काले योहि स मुनि रुच्यते ॥ ७१ ॥
स्वर्णे लोष्ट्रे गृहेऽरण्ये पङ्के सुस्निग्धचन्दने।
समता भावना यस्य सयोगी परिकीर्त्तितः ॥ ७२ ॥
सर्वे जीवेषु यो विष्णुं भावयेत् समताधिया।
हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः ॥ ७३ ॥
तपो धनं ब्राह्मणानां तपः कल्पतरुर्यथा।
तपस्या कामधेनुश्च सन्ततं तपसि स्पृहा ॥ ७४ ॥
ऐश्वर्य्ये क्षत्रियाणाञ्च वाणिज्ये च तथा विशाम्।
क्षत्रियाणाञ्च तपसि स्पृहातीवाऽप्रशंसिता ॥ ७५ ॥
ब्राह्मणानां विवादे च स्पृहातीवविनिन्दिता ॥ ७६ ॥
रागी राजसिकं कार्य्यं कुरुते कर्म्मरागतः।
रागान्धश्च राजसिक स्तेन राजा प्रकीर्त्तितः ॥ ७७ ॥
रागतः कामधेनुश्च मया भिक्षा कृता मुने।
को दोष एव मे जातः क्षत्रियस्यानुरागिणः ॥ ७८ ॥
कुतः कस्य मुने रस्ति कामधेनु स्त्वया विना।
स्पृहा रणे वा भोगे वा युष्माकञ्च व्यतिक्रमः ॥ ७९ ॥
त्रिंशद्क्षौहिणीं सेनां राजेन्द्राणां त्रिकोटिकाम्।
निहत्यायान्त मेकं मां न हन्तुं सहनं मुने ॥ ८० ॥
आक्रान्तं हन्तु मायान्त मपि वेदाङ्गपारगम्।
स दोषो हनने तस्य न तेन ब्रह्महा भवेत् ॥ ८१ ॥
प्रायश्चित्तं हिंसकानां न वेदेषु निरूपितम्।

वधः समुचितस्तेषामित्याह कमलोद्भवः ॥ ८२ ॥
पित्रा ते निहता भूपा महाबलपराक्रमाः ।
इदानीं राजपुत्राश्च शिशवोऽत्र समागताः ॥ ८३ ॥
त्रिःसप्त कृत्वो निर्भूपां कृत्स्नां कर्त्तुं महीमिति ।
त्वया कृता प्रतिज्ञा या तस्याश्च पालनं कुरु ॥ ८४ ॥
क्षत्रियाणां रणो धर्म्मो रणे मृत्युर्न गर्हितः ।
रणे स्पृहा ब्राह्मणानां लोके वेदे विड़म्बना ॥ ८५ ॥
तपोधनानां विप्राणां वाग्बलानां युगे युगे ।
शान्तिः स्वस्त्ययनं कर्म्म विप्रधर्म्मो न सङ्गरः ॥ ८६ ॥
क्षत्रियाणां बलं युद्धं व्यापारश्च बलं विशाम् ।
भिक्षा बलं भिक्षुकाणां शूद्राणां विप्रसेवनम् ॥ ८७ ॥
हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः ।
हिंसा बलं खलानाञ्च तपस्या च तपस्विनाम् ॥ ८८ ॥
बलं वेशश्च वेश्यानां योषितां यौवनं बलम् ।
बलं प्रतापो भूपानां बालानां रोदनं बलम् ॥ ८९ ॥
सतां सत्यं बलं मिथ्या बल मेवासतां सदा ।
अनुगानामनुगमः स्वल्पस्वानाञ्च सञ्चयः ॥ ९० ॥
विद्या बलं पण्डितानां गाम्भीर्य्यं साहसीबलम् ॥९१॥
धनं बलञ्च धनिनां शुचीनाञ्च विशेषतः ।
बलं विवेकः शान्तानां गुणिनां बल मेकता ॥ ९२ ॥
गुणो बलञ्च गुणिनां चौराणां चौर्य्य मेवच ।
प्रियवाक्यञ्च कापट्य मधर्म्मः पुंश्चलीबलम् ॥ ९३ ॥
हिंसा च हिंस्रजन्तूणां सतीनां पतिसेवनम् ।
वरशापौ सुराणाञ्च शिष्याणां गुरुसेवनम् ॥ ९४ ॥

बलं धर्मो गृहस्थानां भृत्यानां राजसेवनम्।
बलं स्तवः स्तावकानां ब्रह्म च ब्रह्मचारिणाम्॥ ९५॥
यतीनाञ्च सदाचारो न्यासः सन्यासीनां बलम्।
पापं बलं पातकीनामशक्तानां हरिर्बलम्॥ ९६॥
पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम्।
फलं बलञ्च वृक्षाणां जलौकानां जलं बलम्॥ ९७॥
जलं बलञ्च शस्यानां मत्स्यानाञ्च जलं बलम्।
शान्तिर्बलञ्च भूपानां विप्राणाञ्च विशेषतः॥ ९८॥
विप्रः शान्तो रणोद्योगी नैव दृष्टो नच श्रुतः।
स्थिते नारायणे देवे बभूवान्यविपर्य्ययः॥ ९९॥
इत्येव मुक्त्वा राजेन्द्रो विरराम रणाजिरे।
तस्य तद्वचनं श्रुत्वा सर्वस्तूष्णीं बभूवह॥ १००॥
रामस्य भ्रातरः सर्वे सुतीक्ष्णशस्त्रपाणयः।
आरेभिरे रणं कर्त्तुं महावीरास्तदाज्ञया॥ १०१॥
रणोन्मुखांश्च तान्दृष्ट्वा मत्स्यराजो महाबलः।
समारेभे रणं कर्त्तुं मङ्गलो मङ्गलालयः॥ १०२॥
शरजालेन राजेन्द्रो वारयामास तानपि।
चिच्छिदुः शरजालञ्च जमदग्निसुतास्तदा॥ १०३॥
राजा चिक्षेप दिव्यास्त्रं शतसूर्य्यप्रभं मुने।
माहेश्वरेण मुनय श्चिच्छिदुश्चावलीलया॥ १०४॥
दिव्यास्त्रेणैव मुनय श्चिच्छिदुः सशरं धनुः।
रथञ्च सारथिञ्चैव राज्ञः सन्नाहमेवच॥ १०५॥
न्यस्तशस्त्रं नृपं दृष्ट्वा मुनयो हर्षविह्वलाः।
दधार शूलिनः शूलं मत्स्यराजजिघांसया॥ १०६॥

शूल निःक्षेप समये वाग्बभूवा शरीरिणी।
शूलं त्यजत विप्रेन्द्राः शिवस्याव्यर्थ मेवच ॥ १०७ ॥
शिवस्य कवचं दिव्यं दत्तं दुर्वाससा पुरा।
मत्स्यराजगलेऽस्तीति सर्वावयवरक्षणम् ॥ १०८ ॥
प्राणानाञ्च प्रदातारं कवचं याचतं नृपम्।
तदा निक्षिप्य शूलञ्च जघान नृपतीश्वरम् ॥ १०९ ॥
तच्छूलं तं नृपं प्राप्य शतखण्डं गतं मुने।
श्रुत्वैवाकाशवाणीञ्च शूली रुन्द्रासवेशकृत् ॥ ११० ॥
ययाचे कवचं भूपं जमदग्निसुतो महान्।
राजा ददौ च कवचं ब्रह्माण्डे विजयं परम् ॥ १११ ॥
गृहीत्वा कवचं तच्च शूलेनैव जघान ह।
पपात मत्स्यराजश्च शतचन्द्रसमाननः।
महाबलिष्ठो गुणवान् चन्द्रवंशसमुद्भवः ॥ ११२ ॥

नारद उवाच।

शिवस्य कवचं ब्रूहि मत्स्यराजेन यद्धृतम्।
नारायण महाभाग श्रोतुं कौतुहलं मम ॥ ११३ ॥

नारायण उवाच।

कवचं शृणु विप्रेन्द्र शङ्करस्य महात्मनः।
ब्रह्माण्ड विजयं नाम सर्वावयवरक्षणम् ॥ ११४ ॥
पुरा दुर्वाससा दत्तं मत्स्यराजाय धीमते।
दत्वा षड़क्षरं मन्त्रं सर्वपापप्रणाशनम् ॥ ११५ ॥
स्थिते च कवचे देहे नास्ति मृत्युश्च जीविनाम्।
अस्त्रे शस्त्रे जले वह्नौ सिद्धिश्चेन्नास्ति संशयः ॥ ११६ ॥
यद्धृत्वा पठनाद्बाणः शिवत्वं प्राप लीलया।

बभूव शिवतुल्यश्च यद्धृत्वा नन्दिकेश्वरः ॥ ११७ ॥
वीरश्रेष्ठो वीरभद्रो बभूव धारणाद् यतः ।
त्रैलोक्यविजयी राजा हिरण्यकशिपुः स्वयम् ॥ ११८ ॥
हिरण्याक्षश्च विजयी बभूव धारणाद् यतः ।
यद्धृत्वा पठनात्सिद्धो दुर्वासा विश्वपूजितः ॥ ११९ ॥
जैगीषव्यो महायोगी पठनात् धारणाद् यतः ।
यद्धृत्वा वामदेवश्च देवलश्च्यवनः स्वयम् ।
अगस्त्यश्च पुलस्त्यश्च बभूव विश्वपूजितः ॥ १२० ॥
ओं नमः शिवायेति च मस्तकं मे सदावतु ।
ओं नमः शिवायेति च स्वाहा भालं सदावतु ॥ १२१ ॥
ओं ह्रीं श्रीं क्लीं शिवायेति स्वाहा नेत्रे सदावतु ।
ओं ह्रीं क्लीं हूं शिवायेति नमो मे पातु नासिकाम् ॥ १२२
ओं नमः शिवाय शान्ताय स्वाहा कण्ठं सदावतु ।
ओं ह्रीं श्रीं हूं संहारकर्त्रे स्वाहा कर्णौ सदावतु ॥ १२३ ॥
ओं ह्रीं श्रीं पञ्चवक्त्राय स्वाहा दन्तं सदावतु ।
ओं ह्रीं महेशाय स्वाहा चाधरं पातु मे सदा ॥ १२४ ॥
ओं ह्रीं श्रीं क्लीं त्रिनेत्राय स्वाहा केशान् सदावतु ।
ओं ह्रीं ऐं महादेवाय स्वाहा वक्षः सदावतु ॥ १२५ ॥
ओं ह्रीं श्रीं क्लीं ऐं रुद्राय स्वाहा नाभिं सदावतु ।
ओं ह्रीं ऐं श्रीं ईश्वराय स्वाहा पृष्ठं सदावतु ॥ १२६ ॥
ओं ह्रीं क्लीं मृत्युञ्जयाय स्वाहा भ्रूवं सदावतु ।
ओं ह्रीं श्रीं क्लीं ईशानाय स्वाहा पार्श्वं सदावतु ॥ १२७ ॥
ओं ह्रीं ईश्वराय स्वाहा उदरं पातु मे सदा ।
ओं श्रीं क्लीं मृत्युञ्जयाय स्वाहा बाहू सदावतु ॥ १२८ ॥

ओं ह्रीं श्रीं क्लीं ईश्वराय स्वाहा पातु करौ मम।
ओं महेश्वराय रुद्राय नितम्बं पातु मे सदा ॥ १२९ ॥
ओं ह्रीं श्रीं भूतनाथाय स्वाहा पादौ सदावतु।
ओं सर्वेश्वराय सर्वाय स्वाहा सर्वं सदावतु ॥ १३० ॥
प्राच्यां मां पातु भूतेश आग्नेय्यां पातु शङ्करः।
दक्षिणे पातु मां रुद्रो नैर्ऋत्यां स्थाणुरेव च ॥ १३१ ॥
पश्चिमे खण्डपरशुर्वायव्यां चन्द्रशेखरः।
उत्तरे गिरिशः पातु ऐशान्यामीश्वरः स्वयम् ॥ १३२ ॥
ऊर्द्ध्वे मृड़ः सदा पातु अधो मृत्युञ्जयः स्वयम्।
जले स्थले चान्तरीक्षे स्वप्ने जागरणे सदा ॥ १३३ ॥
पिनाकी पातु मां प्रीत्या भक्तञ्च भक्तवत्सलः ॥ १३४ ॥
इति ते कथितं वत्स कवचं परमाद्भुतम्।
दशलक्षजपेनैव सिद्धिर्भवति निश्चितम् ॥ १३५ ॥
यदि स्यात् सिद्धकवचो रुद्रतुल्यो भवेत् ध्रुवम्।
तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित् ॥ १३६ ॥
कवचं काण्वशाखोक्तमतिगोप्यं सुदुर्लभम्।
अश्वमेधसहस्राणि राजसूयशतानि च ॥ १३७ ॥
सर्वाणि कवचस्यास्य कलां नार्हन्ति षोड़शीम्।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ १३८ ॥
सर्वज्ञः सर्वसिद्धीशो मनोयायी भवेत् ध्रुवम्।
इदं कवचमज्ञात्वा भजेद् यः शङ्करं प्रभुम्।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ १३९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे शङ्करकवचप्रकथनं नाम पञ्चविंशोऽध्यायः।

# षट्त्रिंशत्तमोऽध्यायः ।

नारायण उवाच ।

मत्स्यराजे निपतिते राजा युद्धविशारदः ।
राजेन्द्रान् प्रेषयामास युद्धशास्त्रविशारदान् ॥ १ ॥
बृहद्बलं सोमदत्तं विदर्भं मिथिलेश्वरम् ।
निषधाधिपतिश्चैव मगधाधिपतिस्तथा ॥ २ ॥
आययुः समरे योद्धुं परशुरामं महारथाः ।
त्रिभिरक्षौहिणीभिश्च सेनाभिः सह नारद ॥ ३ ॥
रामस्य भ्रातरः सर्वे वीरास्तीक्ष्णास्त्रपाणयः ।
वारयामासुरस्त्रैश्च तानेव रणमूर्द्धनि ॥ ४ ॥
ते वीराः शरजालेन दिव्यास्त्रेण प्रयत्नतः ।
वारयामासुरेकैकं भ्रातृवर्गान् भृगोस्तथा ॥ ५ ॥
आययौ समरे शीघ्रं दृष्ट्वा तांश्च पराजितान् ।
पिनाकहस्तः सभृगुर्ज्ज्वलदग्निशिखोपमः ॥ ६ ॥
चिक्षेप नागपाशञ्च परशुरामो महाबलः ।
चिच्छेद तं गारुड़ेन सोमदत्तो महाबलः ॥ ७ ॥
भृगुः शङ्करशूलेन सोमदत्तं जघान ह ।
बृहद्बलञ्च गदया विदर्भं मुष्टिभिस्तथा ॥ ८ ॥
मैथिलं मुद्गरेणैव शक्त्या च नैषधं तथा ।
मागधं चरणाघातैरस्त्रजालेन सैनिकान् ॥ ९ ॥
निहत्य निखिलान् भूपान् संहाराग्निसमो रणे ।

दुद्राव कार्त्तवीर्य्यञ्च परशुरामो महाबलः ॥ १० ॥
दृष्ट्वा तं योद्धुमायान्तं राजानश्च महारथाः ।
आययुः समरं कर्त्तुं कार्त्तवीर्य्यं निवार्य्य च ॥ ११ ॥
कान्यकुब्जाश्च शतशः सौराष्ट्राः शतशस्तथा ।
राढीया शतशश्चैव वारेन्द्राः शतशस्तथा ॥ १२ ॥
सौम्या वाङ्गाश्च शतशो महाराष्ट्रास्तथा दश ।
कतिधा गुर्जजातीयाः कालिङ्गाः शतशस्तथा ॥ १३ ॥
कृत्वा तु शरजालञ्च भृगुश्चिच्छेद तत्क्षणम् ।
तं छित्त्वाभ्युत्थितो रामो नीहारमिव भास्करः ॥ १४ ॥
त्रिरात्रं युयुधे रामस्तैः सार्द्धं समराजिरे ।
द्वादशाक्षौहिणीं सेनां ततश्चिच्छेद परशुना ॥ १५ ॥
रम्भास्तम्भसमूहञ्च यथा खड्गेन लीलया ।
छित्त्वा सेनां भूपवर्गं जघान शिवशूलतः ॥ १६ ॥
सर्वांस्तान्निहतान् दृष्ट्वा सूर्य्यवंशसमुद्भवः ।
आजगाम सुचन्द्रश्च लक्षराजेन्द्रसंयुतः ॥ १७ ॥
द्वादशाक्षौहिणीभिश्च सेनाभिः सह संयुगे ।
कोपेन युयुधे रामं सिंहं सिंहो यथा रणे ॥ १८ ॥
भृगुः शङ्करशूलेन नृपलक्षं निहत्य च ।
द्वादशाक्षौहिणीं सेनां जघान परशुना बली ॥ १९ ॥
निहत्य सर्वाः सेनाश्च सुचन्द्रं युयुधे बली ।
नागास्त्रं प्रेरयामास निर्हन्तं तं भृगुः स्वयम् ॥ २० ॥
नागपाशञ्च चिच्छेद गारुड़ेन नृपेश्वरः ।
जहास च भृगुं राजा समरे च पुनः पुनः ॥ २१ ॥
भृगुर्नारायणास्त्रञ्च चिक्षेप रणमूर्द्धनि ।

अस्त्रं ययौ तं निहन्तुं शतसूर्य्यसमप्रभम्॥ २२॥
दृष्ट्वास्त्रं नृपशार्दूलश्चावरुह्य रथात् क्षणात्।
न्यस्तशस्त्रः प्रणनाम स्तुत्वा नारायणं शिवम्॥ २३॥
तमेव प्रणतं त्यक्त्वा ययौ नारायणान्तिकम्।
अस्त्रराजो भगवतो रामः संप्राप विस्मयम्॥ २४॥
भृगुः शक्तिञ्च मुषलं तोमरं पट्टिशं तथा।
गदां परशुञ्च कोपेन चिक्षेप नृपहिंसया॥ २५॥
जग्राह काली तान् सर्वान् सुचन्द्रस्यन्दनस्थिता।
चिक्षेप शिवशूलं स नृपमाल्यं बभूव तत्॥ २६॥
ददर्श पुरतो रामो भद्रकालीं जगत्प्रसूम्।
वहन्तीं मुण्डमालाञ्च विकटास्यां भयङ्करीम्॥ २७॥
विहाय शस्त्रमस्त्रञ्च पिनाकञ्च भृगुस्तदा।
तुष्टाव तां महामायां भक्तिनम्रात्मकन्धरः॥ २८॥

परशुराम उवाच।

नमः शङ्करकान्तायै सारायै ते नमो नमः।
नमो दुर्गतिनाशिन्यै मायायै ते नमो नमः॥ २९॥
नमो नमो जगद्धात्र्यै जगत्कर्त्र्यै नमो नमः।
नमोऽस्तु ते जगन्मात्रे कारणायै नमो नमः॥ ३०॥
प्रसीद जगतां मातः सृष्टिसंहारकारिणि।
त्वत्पादे शरणं यामि प्रतिज्ञां सार्थकं कुरु॥ ३१॥
त्वयि मे विमुखायाञ्च को मां रक्षितुमीश्वरः।
त्वं प्रसन्ना भव शुभे मां भक्तं भक्तवत्सले॥ ३२॥
युष्माभिः शिवलोके च मह्यं दत्तो वरः पुरा।
तं वरं सफलं कर्त्तुं त्वमर्हसि वरानने॥ ३३॥

पर्शुरामस्तवं श्रुत्वा प्रसन्नाभवदम्बिका ।
माभैरित्येवमुक्त्वा तु तत्रैवान्तरधीयत ॥ ३४ ॥
एतद् भृगुकृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ।
महाभयात्समुत्तीर्णः स भवेदवलीलया ॥ ३५ ॥
स पूजितश्च त्रैलोक्ये त्रैलोक्यविजयी भवेत् ।
ज्ञानिश्रेष्ठो भवेच्चैव वैरिपक्षविमर्दकः ॥ ३६ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे भृगुकृतं कालीस्तोत्रम् ।
एतस्मिन्नन्तरे ब्रह्मा भृगुं धर्म्मभृतां वरम् ।
आगत्य कथयामास रहस्यं राममेव च ॥ ३७ ॥

ब्रह्मोवाच ।

शृणु राम महाभाग रहस्यं पूर्वमेव च ।
सुचन्द्रजयहेतुश्च प्रतिज्ञासाधकाय च ॥ ३८ ॥
दशाक्षरी महाविद्या दत्ता दुर्वाससा पुरा ।
सुचन्द्रायैव कवचं भद्रकाल्याः सुदुर्लभम् ॥ ३९ ॥
कवचं भद्रकाल्याश्च देवानाञ्च सुदुर्लभम् ।
कवचं तद्गले यस्य सर्वशत्रुविमर्दकम् ॥ ४० ॥
अतीव पूज्यं प्रशस्तञ्च त्रैलोक्यजयकारणम् ।
तस्मिन् स्थिते च कवचे कस्त्वं जेतुमलं भुवि ॥ ४१ ॥
भृगो गच्छतु भिक्षार्थं करोतु प्रार्थनां नृप ।
सूर्य्यवंशोद्भवो राजा दाता परमधार्मिकः ॥ ४२ ॥
प्राणांश्च कवचं मन्त्रं सर्वं दास्यति निश्चितम् ॥ ४३ ॥
भृगुः सन्न्यासिवेशेन गत्वा राजान्तिकं मुने ।
भिक्षाञ्चकार मन्त्रञ्च कवचं परमाद्भुतम् ॥ ४४ ॥
राजा ददौ च मन्त्रञ्च कवचं परमादरात् ।

ततः शङ्करशूलेन जघान तं नृपं भृगुः । ४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे षट्‌त्रिंशत्तमोऽध्यायः ।

---

## सप्तत्रिंशत्तमोऽध्यायः ।

---

नारद उवाच ।

कवचं श्रोतुमिच्छामि ताञ्च विद्यां दशाक्षरीम् ।
नाथ त्वत्तो हि सर्वज्ञ भद्रकाल्याश्च साम्प्रतम् ॥ १ ॥

नारायण उवाच ।

शृणु नारद वक्ष्यामि महाविद्यां दशाक्षरीम् ।
गोपनीयञ्च कवचं त्रिषु लोकेषु दुर्लभम् ॥ २ ॥
ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहेति च महामन्त्रम् ।
दुर्वासा हि ददौ राज्ञे पुष्करे सूर्य्यपर्वणि ॥ ३ ॥
दशलक्षजपेनैव मन्त्रसिद्धिः कृता पुरा ।
पञ्चलक्षजपेनैव राज्ञा कवचमुत्तमम् ॥ ४ ॥
बभूव सिद्धकवचोऽप्ययोध्यामाजगाम सः ।
कृत्स्नां हि पृथिवीं जिग्ये कवचस्य प्रसादतः ॥ ५ ॥

नारद उवाच ।

श्रुता दशाक्षरी विद्या त्रिषु लोकेषु दुर्लभा ।
अधुना श्रोतुमिच्छामि कवचं ब्रूहि मे प्रभो ॥ ६ ॥

नारायण उवाच ।

शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतम् ।
नारायणेन यद्दत्तं कृपया शूलिने पुरा ॥ ७ ॥
त्रिपुरस्य बधे घोरे शिवस्य विजयाय च ।
तदेव शूलिना दत्तं पुरा दुर्वाससे मुने ॥ ८ ॥
दुर्वाससा च यद्दत्तं सुचन्द्राय महात्मने ।
अतिगुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् ॥ ९ ॥
ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहा मे पातु मस्तकम् ।
क्लीं कपालं सदा पातु ह्रीं ह्रीं ह्रीं इति लोचने ॥ १० ॥
ओं ह्रीं त्रिलोचने स्वाहा नासिकां मे सदावतु ।
क्रीं कालिके रक्ष रक्ष स्वाहा दन्तं सदावतु ॥ ११ ॥
ह्रीं भद्रकालिके स्वाहा पातु मेऽधरयुग्मकम् ।
ओं ह्रीं ह्रीं क्लीं कालिकायै स्वाहा कण्ठं सदावतु ॥१२॥
ओं ह्रीं कालिकायै स्वाहा कर्णयुग्मं सदावतु ।
ओं क्रीं क्रीं काल्यै स्वाहा स्कन्धं पातु सदावतु ॥ १३ ॥
ओं क्रीं भद्रकाल्यै स्वाहा मम वक्षः सदावतु ।
ओं क्रीं कालिकायै स्वाहा मम नाभिं सदावतु ॥१४॥
ओं ह्रीं कालिकायै स्वाहा मम पृष्ठं सदावतु ।
रक्तबीजविनाशिन्यै स्वाहा हस्तौ सदावतु ॥ १५ ॥
ओं ह्रीं क्लीं मुण्डमालिन्यै स्वाहा पादौ सदावतु ।
ओं ह्रीं चामुण्डायै स्वाहा सर्वाङ्गं मे सदावतु ॥ १६ ॥
प्राच्यां पातु महाकाली आग्नेय्यां रक्तदन्तिका ।
दक्षिणे पातु चामुण्डा नैर्ऋत्यां पातु कालिका ॥ १७ ॥
श्यामा च वारुणे पातु वायव्यां पातु चण्डिका ।

उत्तरे विकटास्या च ऐशान्यां साट्टहासिनी ॥ १८ ॥
ऊर्द्ध्वं पातु लोलजिह्वा मायाद्या पात्वधः सदा।
जले स्थले चान्तरीक्षे पातु विश्वप्रसूः सदा ॥ १९ ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्।
सर्व्वेषां कवचानाञ्च सारभूतं परात्परम् ॥ २० ॥
सप्तद्वीपेश्वरो राजा सुचन्द्रोऽस्य प्रसादतः।
कवचस्य प्रसादेन मान्धाता पृथिवीपतिः ॥ २१ ॥
प्रचेता लोमशश्चैव यतः सिद्धो बभूव ह।
यतो हि योगिनां श्रेष्ठः सौभरि पिप्पलायनः ॥ २२ ॥
यदि स्यात् सिद्धकवचः सर्वसिद्धीश्वरो भवेत्।
महादानानि सर्वाणि तपांसि च व्रतानि च।
निश्चितं कवचस्यास्य कलां नार्हन्ति षोड़शीम् ॥ २३ ॥
इदं कवचमज्ञात्वा भजेत् कालीं जगत्प्रसूम्।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ २४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे सप्तविंशत्तमोऽध्यायः।

———

## अष्टविंशत्तमोऽध्यायः।



नारायण उवाच।

सुचन्द्रे पतिते ब्रह्मन् राजेन्द्राणां शिरोमणौ।
आजगाम पुष्कराक्षः सेनाशक्षौहिणीयुतः ॥ १ ॥

सूर्य्यवंशोद्भवो राजा सुचन्द्रतनयो महान् ।
महालक्ष्मीसेवकश्च लक्ष्मीमान् सूर्य्यसन्निभः ॥ २ ॥
महालक्ष्म्याश्च कवचं गले यस्य मनोहरम् ।
परमैश्वर्य्यसंयुक्तस्त्रैलोक्यविजयी ततः ॥ ३ ॥
तं दृष्ट्वा भ्रातरः सर्वे पर्शुरामस्य धीमतः ।
आययुः समरं कर्त्तुं नानाशस्त्रास्त्रपाणयः ॥ ४ ॥
राजेन्द्रः शरजालेन छेदयामास लीलया ।
चिच्छिदुः शरजालञ्च ते वीराश्चावलीलया ॥ ५ ॥
चिच्छिदुः स्यन्दनं राज्ञस्ते वीराः पञ्चबाणतः ।
सारथिं पञ्चबाणेन रथाश्वं दशबाणतः ॥ ६ ॥
तद्धनुः सप्तबाणेन तूणञ्च पञ्चबाणतः ।
चिच्छिदुस्तद्भ्रातृवर्गान् विप्राः शङ्करशूलतः ॥ ७ ॥
ते च लक्षाक्षौहिणीं सेनां निजघ्नुश्चावलीलया ।
हन्तुं नृपेन्द्रं ते वीराः शिवशूलं निचिक्षिपुः ।
गले बभूव तत् शूलं राज्ञः पुष्करमालिका ॥ ८ ॥
शक्तिञ्च परिघञ्चैव भुषुण्डीं मुद्गरन्तथा ।
गदाञ्च चिक्षिपुर्विप्राः कोपेन ज्वलदग्नयः ॥ ९ ॥
तानि शस्त्राणि चूर्णानि नृपेन्द्रदेहयोगतः ।
विस्मिता भ्रातरः सर्वे भृगोरेव महामुने ॥ १० ॥
रथं धनुश्च शस्त्राणि चास्त्राणि विविधानि च ।
सेनां प्रस्थापयामास कार्त्तवीर्य्यार्जुनः स्वयम् ॥ ११ ॥
राजा स्यन्दनमारुह्य पुष्कराक्षो महाबलः ।
चकार शरजालञ्च महाघोरतरं मुने ॥ १२ ॥
चिच्छिदुः शरजालञ्च ते वीराः शस्त्रपाणयः ।

राजा प्रस्वापनेनैव निद्रितांस्तांश्चकार ह ॥ १३ ॥
भ्रातृंश्च निद्रितान्दृष्ट्वा परशुरामो महाबलः।
चतविचतसर्वाङ्गान् बोधयामास तत्त्वतः ॥ १४ ॥
बोधयित्वा तान्निवार्य्य जगाम रणमूर्द्धनि।
चिक्षेप परशुं कोपेन शीघ्रं राजजिघांसया ॥ १५ ॥
छित्त्वा राज्ञः किरीटञ्च परशुर्भूमौ पपात ह।
जग्राह परशुं शीघ्रं परशुरामो महाबलः ॥ १६ ॥
तदा शङ्करशूलञ्च चिक्षेप मन्त्रपूर्वकम्।
नृपस्य कुण्डलं छित्त्वा जगाम शिवसन्निधिम् ॥ १७ ॥
राजा निहन्तुं तं रामं शरजालञ्चकार ह।
चिच्छेद शरजालञ्च परशुरामश्च लीलया ॥ १८ ॥
क्रमेण राजा नानास्त्रं चिक्षेप मन्त्रपूर्वकम्।
तच्चिच्छेद क्रमेणैव भृगुः शस्त्रभृतां वरः ॥ १९ ॥
भृगुश्चिक्षेप नानास्त्रं महासन्धानपूर्वकम्।
तच्चिच्छेद महाराजः सन्धानेनावलीलया ॥ २० ॥
रामश्चिक्षेप ब्रह्मास्त्रं सन्धानमन्त्रपूर्वकम्।
राजा निर्वापणञ्चक्रे सन्धानेनावलीलया ॥ २१ ॥
सर्वाण्यस्त्राणि शस्त्राणि रामः पाशुपतं विना।
चिक्षेप कोपविभ्रान्तो भूपश्चिच्छेद तानि च ॥ २२ ॥
रामः स्तुत्वा शिवं नत्वा ददे पाशुपतं मुने।
नारायणश्च भगवानुवाच विप्ररूपधृक् ॥ २३ ॥

ब्राह्मण उवाच।

किङ्करोषि भृगो वत्स त्वमेव ज्ञानिनां वरः।
नरं हन्तुं पाशुपतं कोपात् किं क्षिपसि भ्रमात् ॥२४॥

विश्वं पाशुपतेनैव भवेद्भस्म च सत्वरम्।
सर्वघ्नञ्च ग्रस्तमिदं विना श्रीकृष्णमीश्वरम् ॥ २५ ॥
अहो पाशुपतं जेतुमलमेव सुदर्शनम्।
हरिः सुदर्शनश्चैव सर्वास्त्रपरिमर्दकम् ॥ २६ ॥
पाशुपतं पशुपतेर्हरेरेव सुदर्शनम्।
एते प्रधाने सर्वेषामस्त्राणाञ्च जगत्त्रये ॥ २७ ॥
त्यज पाशुपतं ब्रह्मन् मदीयं वचनं शृणु।
यथा जेष्यसि राजानं पुष्कराक्षं महाबलम् ॥ २८ ॥
कार्त्तवीर्य्यमजेतारं यथा जेष्यति साम्प्रतम्।
श्रूयतां सावधानेन तत् सर्वं कथयामि ते ॥ २९ ॥
महालक्ष्म्याश्च कवचं त्रिषु लोकेषु दुर्लभम्।
भक्त्या च पुष्कराक्षेण धृतं कण्ठे विधानतः ॥ ३० ॥
परं दुर्गतिनाशिन्याः कवचं परमाद्भुतम्।
धृतञ्च दक्षिणे बाहौ पुष्कराक्षसुतेन च ॥ ३१ ॥
कवचस्य प्रसादेन विश्वं जेतुं क्षमौ च तौ।
को जेता च त्रिभुवने देहे च कवचे स्थिते ॥ ३२ ॥
अहं यास्यामि भिक्षार्थं सन्निधाने तयोर्मुने।
करिष्यामि च तद्भिक्षां प्रतिज्ञासफलाय ते ॥ ३३ ॥
ब्राह्मणस्य वचः श्रुत्वा रामः संत्रस्तमानसः।
उवाच ब्राह्मणं वृद्धं हृदयेन विदूयता ॥ ३४ ॥

परशुराम उवाच।

न जानामि महाप्राज्ञ कस्त्वं ब्राह्मणरूपधृक्।
शीघ्रञ्च ब्रूहि मां मूढं तदा गच्छ नृपान्तिकम् ॥ ३५ ॥
परशुरामवचः श्रुत्वा प्रहस्य ब्राह्मणः स्वयम्।

अहं विष्णुरेव मुक्ता ययौ भिक्षितुमीश्वरः ॥ ३६ ॥
गत्वा तयोः सन्निधानं ययाचे कवचञ्च तौ ।
ददतुः स्तौ च कवचे विष्णवे विष्णुमायया ।
गृहीत्वा कवचे विष्णुर्वैकुण्ठं प्रजगाम सः ॥ ३७ ॥

नारद उवाच ।

महालक्ष्म्याश्च कवचं केन दत्तं महामुने ।
पुष्कराक्षाय भूपाय श्रोतुं कौतूहलं मम ॥ ३८ ॥
कवचञ्चापि दुर्गायाः पुष्कराक्षसुताय च ।
दुर्लभं केन वा दत्तं तद्भवान् वक्तुमर्हसि ॥ ३९ ॥
कवचञ्चापि किम्भूतं तयोश्च तस्य किं फलम् ।
मन्त्रौ च किं प्रकारौ तन्मे ब्रूहि जगद्गुरो ॥ ४० ॥

नारायण उवाच ।

दत्तं सनत्कुमारेण पुष्कराक्षाय धीमते ।
महालक्ष्म्याश्च कवचं मन्त्रश्चापि दशाक्षरः ॥ ४१ ॥
स्तवनञ्चापि गोप्यञ्च वोक्तं तच्चरितञ्च यत् ।
ध्यानञ्च सामवेदोक्तं पूजाविधिमनोहरम् ॥ ४२ ॥
दुर्गायाश्चापि कवचं दत्तं दुर्वाससा पुरा ।
स्तवनञ्चापि गोप्यञ्च मन्त्रश्चापि दशाक्षरः ॥ ४३ ॥
पश्चात् श्रोष्यसि तत् सर्वं देव्याश्च परमाद्भुतम् ।
महायुद्धसमारम्भे दत्तं प्रार्थनया च यत् ॥ ४४ ॥
महालक्ष्म्याश्च मन्त्रञ्च शृणु तं कथयामि ते ।
श्रीं श्रीं कमलवासिन्यै स्वाहेति परमाद्भुतम् ॥ ४५ ॥
ध्यानञ्च सामवेदोक्तं शृणु पूजाविधिं मुने ।
दत्तं तस्मै कुमारेण पुष्कराक्षाय धीमते ॥ ४६ ॥

सहस्रदलपद्मस्थां पद्मनाभप्रियां सतीम् ।
पद्मालयां पद्मवक्त्रां पद्मपत्राभलोचनाम् ॥ ४७ ॥
पद्मपुष्पप्रियां पद्मपुष्पतल्पविशायिनीम् ।
पद्मिनीं पद्महस्ताञ्च पद्ममालाविभूषिताम् ॥ ४८ ॥
पद्मभूषणभूषाढ्यां पद्मशोभाविवर्द्धनीम् ।
पद्मकाननं पश्यन्तीं सस्मितां तां भजे मुदा ॥ ४९ ॥
चन्दनाष्टदले पद्मे पद्मपुष्पेण पूजयेत् ।
गणं सम्पूज्य दत्वाचैवोपचाराणि षोड़श ॥ ५० ॥
ततस्तुत्वा च प्रणमेत् साधको भक्तिपूर्वकम् ।
कवचं श्रूयतां ब्रह्मन् सर्वसारं वदामि ते ॥ ५१ ॥

नारायण उवाच ।

शृणु विप्रेन्द्र पद्मायाः कवचं परमं शुभम् ।
पद्मनाभेन यद्दत्तं नाभिपद्मे च ब्रह्मणे ॥ ५२ ॥
सम्प्राप्य कवचं ब्रह्मा तत् पद्मे ससृजे जगत् ।
पद्मालयाप्रसादेन सलक्ष्मीको बभूव सः ॥ ५३ ॥
पद्मालयावरं प्राप्य पाद्मश्च जगतां प्रभुः ।
पाद्मेन पद्मकल्पे च कवचं परमाद्भुतम् ॥ ५४ ॥
दत्तं सनत्कुमाराय प्रियपुत्राय धीमते ।
कुमारेण च यद्दत्तं पुष्कराय च नारद ॥ ५५ ॥
यद्धृत्वा पठनाद्ब्रह्मा सर्वसिद्धेश्वरो महान् ।
परमैश्वर्य्यसंयुक्तः सर्वसम्पत्समन्वितः ॥ ५६ ॥
यद्धृत्वा च धनाध्यक्षः कुवेरश्च धनाधिपः ।
[illegible]यम्भुवो मनुः श्रीमान् पठनाद्धारणाद् यतः ॥ ५७ ॥
[illegible]प्रियव्रतोत्तानपादौ लक्ष्मीवन्तौ यतो मुने ।

पृथुः पृथ्वीपतिः सद्यो बभूव धारणाद् यतः ॥ ५८ ॥
कवचस्य प्रसादेन स्वयं दक्षः प्रजापतिः ।
धर्म्मश्च कर्म्मणां साक्षी पाता यस्य प्रसादतः ॥ ५९ ॥
यद्धृत्वा दक्षिणे बाहौ विष्णुः क्षीरोदशायिकः ।
भक्त्या विधत्ते कण्ठे च शेषो नारायणांशकः ॥ ६० ॥
यद्धृत्वा वामनं लेभे कश्यपश्च प्रजापतिः ।
सर्वदेवाधिपः श्रीमान्महेन्द्रो धारणाद् यतः ॥ ६१ ॥
राजा मरुत्तो भगवान् बभूव धारणाद् यतः ।
त्रैलोक्याधिपतिः श्रीमान्नहुषो यस्य धारणात् ॥ ६२ ॥
विश्वं विजिग्ये खट्टाङ्गः पठनाद्धारणाद् यतः ।
मुचुकुन्दो यतः श्रीमान्मान्धातृतनयो महान् ॥ ६३ ॥
सर्वसम्पत्प्रदस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च बृहती देवी पद्मालया स्वयम् ॥ ६४ ॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ।
पुण्यबीजञ्च महतां कवचं परमाद्भुतम् ॥ ६५ ॥
ओं ह्रीं कमलवासिन्यै स्वाहा मे पातु मस्तकम् ।
श्रीं मे पातु कपालञ्च लोचने श्रीं श्रियै नमः ॥ ६६ ॥
ओं श्रीं श्रियै स्वाहेति च कर्णयुग्मं सदावतु ।
ओं श्रीं ह्रीं क्लीं महालक्ष्म्यै स्वाहा मे पातु नासिकाम्६७
ओं श्रीं पद्मालयायै च स्वाहा दन्तं सदावतु ।
ओं श्रीं कृष्णप्रियायै च दन्तरन्ध्रं सदावतु ॥ ६८ ॥
ओं श्रीं नारायणेशायै मम कण्ठं सदावतु ।
ओं श्रीं केशवकान्तायै मम स्कन्धं सदावतु ॥ ६९ ॥
ओं श्रीं पद्मनिवासिन्यै स्वाहा नाभिं सदावतु ।

ओं ह्रीं श्रीं संसारमात्रे मम वक्षः सदावतु ॥ ७० ॥
ओं श्रीं श्रीं कृष्णकान्तायै स्वाहा पृष्ठं सदावतु ।
ओं ह्रीं श्रीं श्रियै स्वाहा मम हस्तौ सदावतु ॥ ७१ ॥
ओं श्रीं निवासकान्तायै मम पादौ सदावतु ।
ओं ह्रीं श्रीं क्लीं श्रियै स्वाहा सर्वाङ्गं मे सदावतु ॥७२॥
प्राच्यां पातु महालक्ष्मी राग्नेय्यां कमलालया ।
पद्मा मां दक्षिणे पातु नैर्ऋत्यां श्रीहरिप्रिया ॥ ७३ ॥
पद्मालया पश्चिमे मां वायव्यां पातु श्रीः स्वयम् ।
उत्तरे कमला पातु ऐशान्यां सिन्धुकन्यका ॥ ७४ ॥
नारायणेशी पातूर्द्ध्वमधो विष्णुप्रियाऽवतु ।
सन्ततं सर्वतः पातु विष्णुप्राणाधिका मम ॥ ७५ ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
सर्वैश्वर्य्यप्रदं नाम कवचं परमाद्भुतम् ॥ ७६ ॥
सुवर्णपर्वतं दत्त्वा मेरुतुल्यं द्विजातये ।
यत् फलं लभते धर्मी कवचेन ततोऽधिकम् ॥ ७७ ॥
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः ।
कण्ठे वा दक्षिणे वाहौ स श्रीमान् प्रतिजन्मनि ॥७८॥
अस्ति लक्ष्मीर्गृहे तस्य निश्चला शतपूरुषम् ।
देवेन्द्रैश्चा सुरेन्द्रैश्च सोऽवध्यो निश्चितं भवेत् ॥ ७९ ॥
स सर्वपुण्यवान्धीमान् सर्वयज्ञेषु दीक्षितः ।
सस्नातः सर्वतीर्थेषु यस्येदं कवचं गले ॥ ८० ॥
यस्मै कस्मै न दातव्यं लोभमोह भयैरपि ।
गुरु भक्ताय शिष्याय शरणाय प्रकाशयेत् ॥ ८१ ॥
इदं कवच मज्ञात्वा जपेल्लक्ष्मीं जगत्प्रसूम् ।

कोटि संख्य प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ८२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे अष्टात्रिंशत्तमोऽध्यायः ।

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

---

नारद उवाच ।

कवचं कथितं ब्रह्मन् पद्मायाश्च मनोहरम् ।
परं दुर्गतिनाशिन्याः कवचं कथय प्रभो ॥ १ ॥
पद्माचप्राणतुल्यञ्च जीवनं बलकारणम् ।
कवचानाञ्च यत् सारं दुर्गासेवनकारणम् ॥ २ ॥

नारायण उवाच ।

शृण नारद वक्ष्यामि दुर्गायाः कवचं शुभम् ।
श्रीकृष्णेनैव यद्दत्तं गोलोके ब्रह्मणे पुरा ॥ ३ ॥
ब्रह्मा त्रिपुरसंग्रामे शङ्कराय ददौ पुरा ।
जघान त्रिपुरं रुद्रो यद्धृत्वा भक्तिपूर्वकम् ॥ ४ ॥
हरो ददौ गौतमाय पद्माचाय च गौतमः ।
यतो बभूव पद्माचः सप्तद्वीपेश्वरो जयी ॥ ५ ॥
यद्धृत्वा पठनाद् ब्रह्मा ज्ञानवान् शक्तिमान् भुवि ।
शिवो बभूव सर्वज्ञो योगीनाञ्च गुरुर्यतः ।
शिवतुल्यो गौतमश्च बभूव मुनिसत्तमः ॥ ६ ॥

ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवो दुर्गतिनाशिनी ॥ ७ ॥
ब्रह्माण्डविजये चैव विनियोगः प्रकीर्त्तितः ।
पुण्यतीर्थञ्च महतां कवचं परमाद्भुतम् ॥ ८ ॥
ओं ह्रीं दुर्गतिनाशिन्यै स्वाहा मे पातु मस्तकम् ।
ओं ह्रीं मे पातु कपालञ्च ओं ह्रीं श्रीमिति लोचने ॥९॥
पातु मे कर्णयुग्मञ्च ओं दुर्गायै नमः सदा ।
ओं ह्रीं श्रीमिति नासां मे सदा पातु च सर्वतः ॥१०॥
ह्रीं श्रीं ह्रूमिति दन्तानि पातु क्लीमोष्ठयुग्मकम् ।
क्रीं क्रीं क्रीं पातु कण्ठञ्च दुर्गे रक्षतु गण्डकम् ॥ ११ ॥
स्कन्धं दुर्गविनाशिन्यै स्वाहा पातु निरन्तरम् ।
वक्षो विपद्विनाशिन्यै स्वाहा मे पातु सर्वतः ॥ १२ ॥
दुर्गे दुर्गे रक्षणीति स्वाहा नाभिं सदावतु ।
दुर्गे दुर्गे रक्ष रक्ष पृष्ठं मे पातु सर्वतः ॥ १३ ॥
ओं ह्रीं दुर्गायै स्वाहा च हस्तौ पादौ सदावतु ।
ओं ह्रीं दुर्गायै स्वाहा च सर्वाङ्गं मे सदावतु ॥ १४ ॥
प्राच्यां पातु महामाया आग्नेय्यां पातु कालिका ।
दक्षिणे दक्षकन्या च नैऋर्त्यां शिवसुन्दरी ॥ १५ ॥
पश्चिमे पार्वती पातु वाराही वारुणे सदा ।
कुवेरमाता कौवेर्य्यां ऐशान्यामीश्वरी सदा ॥ १६ ॥
ऊर्द्धे नारायणी पातु अम्बिकाधः सदावतु ।
ज्ञाने ज्ञानप्रदा पातु स्वप्ने निद्रा सदावतु ॥ १७ ॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
ब्रह्माण्डविजयं नाम कवचं परमाद्भुतम् ॥ १८ ॥

सुस्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु यत् फलम् ।
सर्व्वव्रतोपवासे च तत् फलं लभते नरः ॥ १८ ॥
गुरु मभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः ।
कण्ठे वा दक्षिणे वाहौ कवचं धारयेत्तु यः ॥ २० ॥
स च त्रैलोक्यविजयी सर्व्वशत्रुप्रमर्द्दकः ।
इदं कवच मज्ञात्वा भजेद् गतिनाशिनीम् ॥ २१ ॥
शत लक्ष प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ २२ ॥
कवचं काण्वशाखोक्त मुक्तं नारद सुन्दरम् ।
यस्मै कस्मै न दातव्यं गोपनीयं सुदुर्ल्लभम् ॥ २७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे एकोनचत्वा-
रिंशत्तमोऽध्यायः ।

---

## चत्वारिंशत्तमोऽध्यायः ।

---

नारायण उवाच ।

तं गृहीत्वा तदा विप्रे वैकुण्ठञ्च गते सति ।
सपुत्रञ्च सहस्राक्षं जघान भृगुनन्दनः ॥ १ ॥
कृत्वा युद्धन्तु सप्ताहं ब्रह्मास्त्रेण प्रयत्नतः ।
राजा कवचहीनोऽपि सपुत्रश्च पपातह ॥ २ ॥
पतिते तु सहस्राक्षे कार्त्तवीर्य्यार्ज्जुनः स्वयम् ।
आजगाम महावीरो द्विलक्षाक्षौहिणीयुतः ॥ ३ ॥

सुवर्णरथमारुह्य रत्नसारपरिच्छदम् ।
नानास्त्रं परितः कृत्वा तस्थौ समरमूर्द्धनि ॥ ४ ॥
परशुरामश्च समरे तं राजेन्द्रं ददर्श ह ।
रत्नालङ्कारभूषाढ्यै राजेन्द्रकोटिभिः सह ॥ ५ ॥
रत्नातपत्रभूषाढ्यं रत्नालङ्कारभूषितम् ।
चन्दनोचितसर्वाङ्गं सस्मितं सुमनोहरम् ॥ ६ ॥
राजा दृष्ट्वा मुनीन्द्रं तमवरुह्य रथाद्द्रुतो ।
प्रणम्य रथमारुह्य तस्थौ नृपगणैः सह ॥ ७ ॥
ददौ शुभाशिषं तस्मै रामश्च समयोचितम् ।
प्रोवाच च गतार्थञ्च स्वर्गं गच्छेति सानुगः ॥ ८ ॥
उभयोः सेनयोर्युद्धं बभूव तत्र नारद ।
पलायिता रामशिष्या भ्रातरश्च महाबलाः ।
क्षतविक्षतसर्वाङ्गाः कार्त्तवीर्य्यप्रपीड़िताः ॥ ९ ॥
नृपस्य शरजालेन रामः शस्त्रभृतां वरः ।
न ददर्श स्वसैन्यञ्च राजसैन्यं स्वमेव च ॥ १० ॥
चिक्षेप वह्निं रामश्च बभूवाग्निमयं रणे ।
निर्वापयामास राजा वारुणेनावलीलया ॥ ११ ॥
चिक्षेप रामो गान्धर्वं शैलसर्पसमन्वितम् ।
वायव्येन महाराजः प्रेरयामास लीलया ॥ १२ ॥
चिक्षेप रामो नागास्त्रं दुर्निवार्य्यं भयङ्करम् ।
गारुड़ेन महाराजः प्रेरयामास लीलया ॥ १३ ॥
माहेश्वरञ्च भगवांश्चिक्षेप भृगुनन्दनः ।
निर्वापयामास राजा वैष्णवास्त्रेण लीलया ॥ १४ ॥
भृगुश्चिक्षेप ब्रह्मास्त्रं नृपनाशाय नारद ।

ब्रह्मास्त्रेण च भूपस्य प्राप निर्वापणं रणे॥ १५॥
दत्तदत्तञ्च यच्छूलमव्यर्थं मन्त्रपूर्वकम्।
जग्राह राजा समरे परशुरामबधाय च॥ १६॥
शूलं ददर्श रामश्च शतसूर्य्यसमप्रभम्।
प्रलयाग्निशिखोद्रिक्तं दुर्निवार्य्यं सुरैरपि॥ १७॥
पपात शूलं समरे रामस्योपरि नारद।
मूर्च्छामवाप स भृगुः पपात च हरिं स्मरन्॥ १८॥
पतिते परशुरामे च सर्वे देवा भयाकुलाः।
आजग्मुः समरं तत्र ब्रह्मविष्णुमहेश्वराः॥ १९॥
शङ्करश्च महाज्ञानी महाज्ञानेन लीलया।
ब्राह्मणं जीवयामास तूर्णं नारायणाज्ञया॥ २०॥
भृगुश्च चेतनां प्राप्य ददर्श पुरतः सुरान्।
प्रणनाम परं भक्त्या लज्जा नम्रात्मकन्धरः॥ २१॥
राजा दृष्ट्वा सुरेशांश्च भक्तिनम्रात्मकन्धरः।
प्रणम्य शिरसा मूर्ध्ना तुष्टाव परमेश्वरान्॥ २२॥
तत्राजगाम भगवान् दत्तात्रेयो रणस्थलम्।
शिष्यरक्षानिमित्तेन कृपालुर्भक्तवत्सलः॥ २३॥
भृगुः पाशुपतास्त्रञ्च जग्राह कोपसंयुतः।
दत्तदत्तेन दृष्टेन बभूव स्तम्भितो रणे॥ २४॥
ददर्श स्तम्भितो रामो राजानं रणमूर्द्धनि।
नानापार्षदयुक्तेन कृष्णेन रक्षितं रणे॥ २५॥
सुदर्शनं प्रज्वलन्तं भ्रमणं कुर्वता सदा।
सस्मितेन स्तुतेनैव ब्रह्मविष्णुमहेश्वरैः॥ २६॥
गोपालशतयुक्तेन गोपवेशविधारिणा।

नवीनजलदाभेन वंशीहस्तेन वादयन् ॥ २७ ॥
एतस्मिन्नन्तरे तत्र वाग्बभूवाशरीरिणी ।
दत्तेन दत्तं कवचं कृष्णस्य परमात्मनः ॥ २८ ॥
राज्ञोऽस्ति दक्षिणे बाहौ सद्रत्नगुटिकान्वितम् ।
गृहीतकवचे शम्भौ भिक्षया योगिनां गुरौ ॥ २९ ॥
तदा हन्तुं नृपं शक्तो भृगुश्चेति च नारद ।
श्रुत्वाऽशरीरिणीं वाणीं शङ्करो द्विजरूपधृक् ॥ ३० ॥
भिक्षां कृत्वा तु कवचमानीय च नृपस्य च ।
शम्भुना भृगवे दत्तं कृष्णस्य कवचञ्च यत् ॥ ३१ ॥
एतस्मिन्नन्तरे देवा जग्मुः स्वस्थानमुत्तमम् ।
उवाच पर्शुरामश्च राजानं समरं प्रति ॥ ३२ ॥

परशुराम उवाच ।

राजेन्द्रोत्तिष्ठ समरं कुरु साहसपूर्वकम् ।
कालभेदे जयो नृणां कालभेदे पराजयः ॥ ३३ ॥
अधीतं विधिवद्दत्तं कृत्स्ना पृथ्वी सुशासिता ।
यशः कृतञ्च संग्रामो त्वयाहं मूर्च्छितोऽधुना ॥ ३४ ॥
जिताः सर्वे च राजेन्द्रा लीलया रावणोजितः ।
जितोऽहं दत्तशूलेन शम्भुना जीवितः पुनः ॥ ३५ ॥
रामस्य वचनं श्रुत्वा राजा परमधार्म्मिकः ।
मूर्द्ध्ना प्रणम्य तं भक्त्या यथार्थोक्तिमुवाच ह ॥ ३६ ॥

राजोवाच ।

किमधीतं किं वा दत्तं कावा पृथ्वी सुशासिता ।
गताः कतिविधा भूपा मादृशा धरणीतले ॥ ३७ ॥
बुद्धिस्तेजो विक्रमश्च विविधा रणमन्त्रणा ।

श्रीरैश्वर्य्यं तथा ज्ञानं दान शक्तिश्च लौकिकम् ॥ ३८ ॥
आचारो विनयो विद्या प्रतिष्ठा परमं तपः ।
सर्वं मनोरमासङ्गे गतमेव मम प्रभो ॥ ३९ ॥
सा च स्त्री प्राणतुल्या मे साध्वी पद्मांशसम्भवा ।
यत्नेषु पत्नी मातेव स्नेहे क्रीड़ति सङ्गिनी ॥ ४० ॥
आबाल्यात् सङ्गिनी शश्वत् शयने भोजने रणे ।
तां विना प्राणहीनोऽहं विषहीनो यथोरगः ॥ ४१ ॥
त्वया न दृष्टं युद्धं मे पुरेयं शोचना स्थिता ।
द्वितीयशोचना विप्र हतोऽहं ब्राह्मणेन च ॥ ४२ ॥
काले सिंहः शृगालश्च शृगालः सिंह मेवच ।
काले व्याघ्रं हन्ति मृगो गजेन्द्रं हरिण स्तथा ।
मक्षिपं मक्षिका काले गरुड़श्च तथोरगः ।
किङ्करः स्तौति राजेन्द्रं काले राजा च किङ्करम् ॥४४॥
इन्द्रश्च मानवः काले काले ब्रह्मा मरिष्यति ।
तिरोभूत्वा च प्रकृतिः काले श्रीकृष्णविग्रहे ॥ ४५ ॥
मरिष्यन्ति सुराः सर्वे त्रिलोकस्थाश्चराचराः ।
सर्वे काले लयं यान्ति कालोहि दुरतिक्रमः ॥ ४६ ॥
कालस्य कालः श्रीकृष्णः स्रष्टुः स्रष्टा यथेच्छया ।
संहर्त्ताचैव संहर्त्तुः पातुः पाता परात्परः ॥ ४७ ॥
महान् स्थूलतमः सूक्ष्मात्सूक्ष्मतमः कृशः ।
परमाणुपरः कालः कालश्च कालभेदकः ॥ ४८ ॥
यस्य लोमानि विश्वानि स पुमांश्च महाविराट् ।
तेजसा षोड़शांशश्च कृष्णस्य परमात्मनः ॥ ४९ ॥
ततः क्षुद्र विराड़् जातः सर्वेषां कारणं परम् ।

यः स्रष्टा च स्वयं ब्रह्मा यन्नाभिकमलोद्भवः ॥ ५० ॥
नाभेः कमलदण्डस्य योऽन्तं न प्राप यत्नतः ।
भ्रमणाल्लक्षवर्षञ्च ततः स्वस्थानसंस्थितिः ॥ ५१ ॥
तपश्चक्रे तत स्तत्र लक्षवर्षञ्च वायुभुक् ।
ततो ददर्श गोलकं श्रीकृष्णञ्च सपार्षदम् ॥ २५ ॥
गोपगोपीपरिवृतं द्विभुजं मुरलीकरम् ।
रत्नसिंहासनस्थञ्च राधावक्षःस्थलस्थितम् ॥ ५३ ॥
दृष्टानुज्ञां गृहीत्वा च प्रणम्य च पुनः पुनः ।
ईश्वरेच्छाञ्च विज्ञाय स्रष्टुं सृष्टिं मनो दधे ॥ ५४ ॥
यः शिवः सृष्टिसंहर्त्ता स च स्रष्टुर्ललाटजः ।
विष्णुः पाता क्षुद्रविराट् श्वेतद्वीपनिवासकृत् ॥ ५५ ॥
सृष्टिकारण भूताश्च ब्रह्मविष्णुमहेश्वराः ।
सन्ति विश्वेषु सर्वेषु श्रीकृष्णस्य कलोद्भवाः ॥ ५६ ॥
तेऽपि देवाः प्राकृतिकाः प्राकृतश्च महाविराट् ।
सर्वप्रसूतिः प्रकृतिः श्रीकृष्णः प्रकृतेः परः ॥ ५७ ॥
न शक्तः परमेशोऽपि तां शक्तिं प्रकृतिं विना ।
सृष्टिं विधातुं मायेशो न सृष्टिर्मायया विना ॥ ५८ ॥
सा च कृष्णे तिरोभूत्वा सृष्टिसंहारपालके ।
साविर्भूता सृष्टिकाले सा च नित्या महेश्वरी ॥ ५९ ॥
कुलालश्च घटं कर्त्तुं यथा शक्तो मृदं विना ।
स्वर्णं विना स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ॥ ६० ॥
सा च शक्तिः सृष्टिकाले पञ्चधा चेश्वरेच्छया ।
राधापद्मा च सावित्री दुर्गा देवी सरस्वती ॥ ६१ ॥
प्राणाधिष्ठात्री या देवी कृष्णस्य परमात्मनः ।

प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥ ६२ ॥
ऐश्वर्य्याधिष्ठात्रीदेवी सर्वमङ्गलकारिणी ।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥ ६३ ॥
विद्याधिष्ठात्रीदेवी या परमेशस्य दुर्लभा ।
वेदशास्त्र योगमाता सा सावित्री प्रकीर्त्तिता ॥ ६४ ॥
बुद्ध्यधिष्ठात्री या देवी सर्वशक्तिस्वरूपिणी ।
सर्वज्ञानात्मिका सर्वा सा दुर्गा दुर्गनाशिनी ॥ ६५ ॥
वागधिष्ठात्री या देवी शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा सा च या च देवी सरस्वती ॥ ६६ ॥
पञ्चधाद्दौ स्वयं देवी मूलप्रकृतिरीश्वरी ।
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ॥ ६७ ॥
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च ।
मायया सृष्टिकाले च तद्विना न भवेद्भवः ॥ ६८ ॥
सृष्टिश्च प्रतिविश्वेषु ब्रह्मन् ब्रह्मोद्भवा सदा ।
पाता विष्णुश्च संहर्त्ता शिवः शश्वत् शिवप्रदः ॥ ६९ ॥
दत्तदत्तं ज्ञानमिदं राम मह्यञ्च पुष्करे ।
दीक्षाकाले च माघ्याञ्च मुनिप्रवरसन्निधौ ॥ ७० ॥
इत्युक्त्वा कार्त्तवीर्य्यश्च रामं नत्वा च सस्मितः ।
आरुरोह रथं शीघ्रं गृहीत्वा सशरं धनुः ॥ ७१ ॥
रामस्ततो राजसैन्यं ब्रह्मास्त्रेण जघान ह ।
नृपं पाशुपतेनैव लीलया श्रीहरिं स्मरन् ॥ ७२ ॥
एवं त्रिःसप्तकृत्वश्च क्रमेण च वसुन्धराम् ।
रामश्चकार निर्भूपां लीलया च शिवं स्मरन् ॥ ७३ ॥
गर्भस्थं मातृक्रोड़स्थं शिशुं वृद्धञ्च मध्यमम् ।

जघान क्षत्रियं रामः प्रतिज्ञापालनाय वै ॥ ७४ ॥
कार्त्तवीर्य्यश्च गोलोकं जगाम कृष्णसन्निधिम् ।
जगाम परशुरामश्च स्वालयं श्रीहरिं स्मरन् ॥ ७५ ॥
त्रिःसप्त कृत्वो निर्भूपां मही दृष्ट्वा महेश्वरः ।
परशुना रमणं दृष्ट्वा परशुरामञ्चकार तम् ॥ ७६ ॥
देवाश्च मुनयो देव्यः सिद्धगन्धर्वकिन्नराः ।
सर्वे चक्रुः पुष्पवृष्टिं राममूर्ध्नि च नारद ॥ ७७ ॥
स्वर्गे दुन्दुभयो नेदुर्हरिशब्दो बभूव ह ।
परशुरामस्य यशसा शुभ्रेण पूरितं जगत् ॥ ७८ ॥
ब्रह्मा भृगुश्च शुक्रश्च च्यवनो वाल्मीकिस्तथा ।
जमदग्निर्ब्रह्मलोकादाजगाम प्रहर्षितः ॥ ७९ ॥
पुलकाञ्चितसर्वाङ्गाः सानन्दाश्रुसमन्विताः ।
दूर्वापुष्पकराः सर्वे कुर्वन्तो मङ्गलाशिषम् ॥ ८० ॥
प्रणनाम च तान् रामो दण्डवत् पतितो भुवि ।
क्रोड़े चकार ब्रह्मादी क्रमात्तातेति संवदन् ॥ ८१ ॥
तमुवाच स्वयं ब्रह्मा परशुरामं जगद्गुरुः ।
हितं नीतिं वेदसारं परिणामसुखावहम् ॥ ८२ ॥

ब्रह्मोवाच ।

शृणु राम प्रवक्ष्यामि सर्वसम्पत्करं परम् ।
काण्वशाखोक्तवचनं सत्यञ्च सर्वसम्मतम् ॥ ८३ ॥
पूज्यानामेव सर्वेषामिष्टः पूज्यतमः परः ।
जनको जन्मदानत्वात् पालनाच्च पिता स्मृतः ॥ ८४ ॥
गरीयान् जन्मदातुश्च सोऽन्नदाता पिता मुने ।
विनश्वं नश्वरो देहो नित्यञ्च पितुरन्नवः ॥ ८५

तयोः शतगुणे माता पूज्या मान्या च वन्दिता ।
गर्भधारणपोषाभ्यां सा च ताभ्यां गरीयसी ॥ ८६ ॥
तेभ्यः शतगुणे पूज्योऽभीष्टदेवः श्रुतौ श्रुतः ।
ज्ञानविद्यामन्त्रदाताऽभीष्टदेवात् परो गुरुः ॥ ८७ ॥
गुरुवद् गुरुपुत्त्रश्च गुरुपत्नी ततोऽधिका ।
देवे रुष्टे गुरू रचेद् गुरौ रुष्टे न कश्चन ॥ ८८ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म ब्राह्मणेभ्यः प्रियः परः ॥ ८९ ॥
गुरुर्ज्ञानं ददात्येव ज्ञानञ्च हरिभक्तिदम् ।
हरिभक्तिप्रदाता यः को वा बन्धुस्ततः परः ॥ ९० ॥
अज्ञानतिमिराच्छन्नो ज्ञानदीपं यतो लभेत् ।
लब्ध्वा च निर्मलं पश्येत् को वा बन्धुस्ततः परम् ॥ ९१ ॥
गुरुदत्तञ्च मन्त्रञ्च जप्त्वा ज्ञानं ततो लभेत् ।
सर्वज्ञत्वञ्च सिद्धिञ्च को वा बन्धुस्ततोऽधिकः ॥ ९२ ॥
सुखं जयति सर्वत्र विद्यया गुरुदत्तया ।
यया पूज्योऽपि जगति को वा बन्धुस्ततोऽधिकः ॥ ९३ ॥
विद्यान्धो वा धनान्धो वा यो मूढो न भजेद् गुरुम् ।
ब्रह्महत्याधिकं पापं लभते नात्र संशयः ॥ ९४ ॥
दरिद्रं पतितं क्षुद्रं नरबुद्ध्या चरेत् गुरुम् ।
सोऽशुचिस्तीर्थस्नातोऽपि नाधिकारी च कर्मसु ॥ ९५ ॥
अभीष्टदेवः श्रीकृष्णो गुरुस्ते शङ्करः स्वयम् ।
शरणं गच्छ हे पुत्र देवात् पूज्यतमं गुरुम् ॥ ९६ ॥
त्रिःसप्त कृत्वो निर्भूपा त्वया पृथ्वी कृता यतः ।
प्राप्ता त्वया हरेर्भक्तिस्तं शिवं शरणं व्रज ॥ ९७ ॥

शिवञ्च शिवरूपञ्च शिवदं शिवकारणम् ।
शिवाराध्यं शिवं शान्तं गुरुं त्वं शरणं व्रज ॥ ९८ ॥
गोलोकनाथो भगवानंशेन शिवरूपधृक् ।
य इष्टदेवः स गुरुस्तमेव शरणं व्रज ॥ ९९ ॥
आत्माकृष्णः शिवो ज्ञानं मनोऽहं सर्वजीविषु ।
प्राणा विष्णोश्च प्रकृतिः सर्वशक्तियुता सुत ॥ १०० ॥
ज्ञानदं ज्ञानरूपञ्च ज्ञानवीजं सनातनम् ।
मृत्युञ्जयं कालकालं तं गुरुं शरणं व्रज ॥ १०१ ॥
ब्रह्मज्योतिः स्वरूपं तं भक्तानुग्रहविग्रहम् ।
शरणं व्रज सर्वज्ञं भगवन्तं सनातनम् ॥ १०२ ॥
प्रकृतिर्लक्षवर्षञ्च तपस्तप्ता यमीश्वरम् ।
कान्तं प्रियपतिं लेभे तं गुरुं शरणं व्रज ॥ १०३ ॥
इत्युक्त्वा मुनिभिः सार्द्धं जगाम कमलोद्भवः ।
रामश्च गन्तुं कैलासं मनश्चक्रे च नारद ॥ १०४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारदसंवादे
गणपतिखण्डे चत्वारिंशत्तमोऽध्यायः ।

---

## एकचत्वारिंशत्तमोऽध्यायः ।

नारायण उवाच ।

हरेश्च कवचं धृत्वा कृत्वा निःक्षत्रियां महीम् ।
रामो जगाम कैलासं नमस्कर्त्तुं शिवं गुरुम् ॥ १ ॥

गुरुं पत्नीं शिवामम्बां द्रष्टुं गुरुसुतौ च तौ।
गुणैर्नारायणसमौ कार्त्तिकेयगणेश्वरौ ॥ २ ॥
मनोयायी महात्मा च शीघ्रं संप्राप्य तत्क्षणम्।
ददर्श नगरं रम्यमतीव सुमनोहरम् ॥ ३ ॥
शुद्धस्फटिकसङ्काशैर्मणिभिः सुमनोहरैः।
सुवर्णभूमिसदृशैः राजमार्गैर्विराजितम् ॥ ४ ॥
सिन्दुराकारवर्णैश्च वेष्टितं मणिवेदिभिः।
संयुक्तं मुक्तानिकरैः पूरितं मणिमण्डपैः ॥ ५ ॥
यक्षाणामालयैर्दिव्यैः संयुक्तं शतकोटिभिः।
कपाटस्तम्भसोपानैः शोभितैर्मणिनिर्मितैः ॥ ६ ॥
सुवर्णकलसैर्दिव्यैः राजितैः श्वेतचामरैः।
रत्नकाञ्चनपूर्णैश्च यक्षेन्द्रगणवेष्टितैः ॥ ७ ॥
रत्नभूषणभूषाढ्यैर्दीपितैः सुन्दरीगणैः।
बालिकाभिर्बालकैश्च चित्रपुत्तलिकाकरैः ॥ ८ ॥
क्रीड़द्भिः सस्मितैः शश्वत् स्वच्छन्दञ्च विराजितैः।
पारिजात द्रुमगणैः स्वर्णदीतीर नीरजैः ॥ ९ ॥
आकीर्णं पुष्पजालैश्च पुष्पितैश्च सुगन्धिभिः।
कल्पवृक्षाश्रितैः सिद्धैः कामधेनुपुरस्कृतैः ॥ १० ॥
सिद्धविद्यातिनिपुणैः पुण्यवद्भिर्निषेवितम्।
वटवृक्षे रचयैश्च विलक्षयोजनाङ्कितैः ॥ ११ ॥
शतयोजनविस्तीर्णैः शतस्कन्धसमन्वितैः।
असंख्यशाखानिकरैरसंख्यफलसंयुतैः ॥ १२ ॥
नानापक्षिगणाकीर्णैः सुमनोहरशब्दितैः।
कम्पितैः शीतवातेन मण्डितञ्च सुगन्धिना ॥ १३ ॥

पुष्पोद्यानसहस्रेण सरसाञ्च शतेन च ।
सिद्धेन्द्रालयलक्षैश्च मणिरत्नविकारजैः ॥ १४ ॥
रामश्च दृष्ट्वा नगरमतीव हृष्टमानसः ।
ददर्श पुरतो रम्यं श्रीयुक्तं शङ्कराश्रमम् ॥ १५ ॥
सुवर्णमूल्यशतकैर्मणिभिः स्वर्णवर्णकैः ।
खचितं रत्नसारेण रचितं विश्वकर्मणा ॥ १६ ॥
चतुर्योजनविस्तीर्णं त्रिपञ्चयोजनस्थितम् ।
चतुरस्रं चतुष्कोणं प्राकारं सुमनोहरम् ॥ १७ ॥
द्वारं रत्नकपाटेन नानाचित्रान्वितेन च ।
युक्तं मणीन्द्रवेदिभिर्मणिस्तम्भविराजितैः ॥ १८ ॥
तद्दक्षिणे वृषेन्द्रञ्च वामे सिंहञ्च नारद ।
नन्दीश्वरं महाकालं पिङ्गलाक्षं भयङ्करम् ॥ १९ ॥
विशालाक्षञ्च बाणञ्च विरूपाक्षं महाबलम् ।
विकटाक्षं भास्कराक्षं रक्ताक्षं विकटोदरम् ॥ २० ॥
संहारभैरवं कालभैरवञ्च भयङ्करम् ।
रुरुभैरवमीशाभं महाभैरवमेवच ॥ २१ ॥
कृष्णाङ्गभैरवञ्चैव क्रोधभैरवमुल्बणम् ।
कपालभैरवञ्चैव रुद्रभैरवमेव च ॥ २२ ॥
सिद्धेन्द्रांश्च रुद्रगणान् विद्याधरांश्च गुह्यकान् ।
भूतान् प्रेतान् पिशाचांश्च कुष्माण्डान् ब्रह्मराक्षसान्॥२३
वेतालान्दानवांश्चैव योगीन्द्रांश्च जटाधरान् ।
यक्षान् किम्पुरुषांश्चैव किन्नरांश्च ददर्श ह ॥ २४ ॥
तान्दृष्ट्वा नन्दीकेशाज्ञां गृहीत्वा भृगुनन्दनः ।
तां सम्भाष्याभ्यन्तरञ्च जगामानन्दमानसः ॥ २५ ॥

रत्नेन्द्रसार निर्म्माणं ददर्श शतमन्दिरम् ।
अमूल्यरत्नकलसैर्ज्ज्वलद्भिश्च विराजितम् ॥ २६ ॥
अमूल्यरत्नरचितैर्मुक्तानिर्म्मलदर्पणैः ।
हरीसारविकारैश्च कपाटैश्च विराजितम् ॥ २७ ॥
गोरोचनाभिर्म्मणिभिर्युतं स्तम्भसहस्रकैः ।
मणिसार विकारैश्च सोपानैः परिसेवितम् ॥ २८ ॥
ददर्शाभ्यन्तरं द्वारं नानाचित्रेण चित्रितम् ।
मुक्तामाणिक्य ग्रथितैर्मालाजालैर्विराजितम् ॥ २९ ॥
ददर्श कार्त्तिकं वामे दक्षिणे च गणेश्वरम् ।
वीरभद्रं महाकायं शिवतुल्यपराक्रमम् ॥ ३० ॥
प्रधानपार्षदगणान् क्षेत्रपालांश्च नारद ।
रत्नसिंहासनस्थांश्च रत्नभूषणभूषितान् ॥ ३१ ॥
तान् सम्भाष्य भृगुः शीघ्रं महाबलपराक्रमः ।
पर्शुहस्तः पर्शुरामो गमनङ्कर्त्तुमुद्यतः ॥ ३२ ॥
गच्छन्तं तं गणेशश्च क्षणं तिष्ठेत्युवाच ह ।
निद्रितो निद्रया युक्तो महादेवोऽधुनेति च ॥ ३३ ॥
ईश्वराज्ञां गृहीत्वाह मत्वागत्य क्षणान्तरे ।
त्वया सार्द्धं गमिष्यामि भ्रातस्तिष्ठेति साम्प्रतम् ॥ ३४ ॥
श्रुत्वा गणेशवचनं पर्शुरामो महाबलः ।
बृहस्पति समो वक्ता प्रवक्तुमुपचक्रमे ॥ ३५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे गणपतिखण्डे कैलासवर्णनं नामैक-
चत्वारिंशत्तमोऽध्यायः ।

— —

# द्विचत्वारिंशत्तमोऽध्यायः ।

---

परशुराम उवाच ।

यास्याम्यन्तःपुरं भ्रातः प्रणामं कर्त्तुमीश्वरम् ।
प्रणम्य मातरं भक्त्या यास्यामि त्वरितं गृहम् ॥ १ ॥
त्रिःसप्त कृत्वो निर्भूपा कृता पृथ्वी च लीलया ।
कार्त्तवीर्य्यः सुचन्द्रश्च हतो यस्य प्रसादतः ॥ २ ॥
नानाविद्या यतो लब्धा नाना शास्त्रं सुदुर्लभम् ।
तं गुरुं जगतां नाथं द्रष्टुमिच्छामि साम्प्रतम् ॥ ३ ॥
सगुणं निर्गुणञ्चैव भक्तानुग्रहविग्रहम् ।
सत्यं सत्यस्वरूपञ्च ब्रह्मज्योतिः सनातनम् ॥ ४ ॥
स्वेच्छामयं दयासिन्धुं दीनबन्धुं मुनीश्वरम् ।
आत्मारामं पूर्णकामं व्यक्ताव्यक्तं परात्परम् ॥ ५ ॥
परापराणां स्रष्टारं पुरुहुतं पुरस्कृतम् ।
पुराणं परमात्मान मीशान मादिमव्ययम् ॥ ६ ॥
सर्वमङ्गलमङ्गल्यं सर्वमङ्गलकारणम् ।
सर्वमङ्गलदं शान्तं सर्वैश्वर्य्यप्रदं वरम् ॥ ७ ॥
आशुतोषं प्रसन्नास्यं शरणागतवत्सलम् ।
भक्ताभयप्रदं भक्तवत्सलं समदर्शनम् ॥ ८ ॥
इत्युक्त्वा परशुरामश्च तस्थौ गणपतेः पुरः ।
वाचा मधुरया तत्र तमुवाच गणेश्वरः ॥ ९ ॥

श्रीगणेश्वर उवाच ।

चणं तिष्ठ चणं तिष्ठ शृणु भ्रातरिदं वचः ।
रहःस्थलनियुक्तो न द्रष्टव्यः स्त्रीयुतः पुमान् ॥ १० ॥
स्त्रीसंयुक्तं पुरुषं यः पश्यति नराधमः ।
करोति रसभङ्गं वा कालसूत्रं व्रजेत् ध्रुवम् ॥ ११ ॥
तत्र तिष्ठति पापीयान् यावच्चन्द्रदिवाकरौ ।
विशेषतश्च पितरं गुरुं भूतपतिं द्विज ॥ १२ ॥
रहः सुरतसंसक्तं न हि पश्येद्विचक्षणः ।
कामतः कोपतो वापि यः पश्येत् सुरतोन्मुखम् ॥१३॥
स्त्रीविच्छेदो भवेत्तस्य ध्रुवं सप्तसु जन्मसु ।
श्रोणीवचःस्थलं वक्त्रं यः पश्यति परस्त्रियाः ।
कामतोऽपि विमूढश्च सोऽन्धो भवति निश्चितम् ॥१४॥
गणेशस्य वचः श्रुत्वा प्रहस्य भृगुनन्दनः ।
तमुवाच महाकोपान्निष्ठुरं वचनं मुने ॥ १५ ॥

परशुराम उवाच ।

अहो श्रुतं किं वचन मपूर्वनीति मुत्तमम् ।
इदमेवमथो नैवं श्रुतमीश्वरवक्त्रतः ॥ १६ ॥
श्रुतं श्रुतौ वाक्यमिदं कामिनाञ्च विकारिणाम् ।
निर्विकारस्य च शिशो न दोषः कश्चिदेवहि ।
यास्याम्यन्तःपुरं भ्रातस्तव किं तिष्ठ बालक ॥ १७ ॥
यथा दृष्टिं करिष्यामि कार्य्यञ्च समयोचितम् ।
तवैव तातो माता च एवं नैव निरूपितम् ॥ १८ ॥
जगतां पितरौ तौ च पार्व्वतीपरमेश्वरौ ।
पार्वती स्त्री पुमान् शम्भुरितिकेन निरूपितः ॥ १९ ॥

सर्वरूपः शङ्करश्च सर्वारूपा च पार्वती ।
गुणातीतस्य का क्रीड़ा तद्भङ्गो वा कुतो विभो ॥ २० ॥
क्रीड़ा लज्जा भीतिभङ्गो ग्राम्यस्य नेश्वरस्य च ।
स्तनान्धं बालकं दृष्ट्वा पित्रोर्लज्जा कुतो भवेत् ॥ २१ ॥
लज्जायाश्च कुतो लज्जा लज्जेशस्य च तत्कुतः ।
लज्जा लज्जामवाप्नोति तापं किंवा हुताशनः ॥ २२ ॥
शीतं शीतमहो भ्रातर्निदाघो दाहमेव च ।
भीतिर्भीति मवाप्नोति मृत्योर्मृत्युर्बिभेति किम् ॥२३॥
कुतो ज्वरो ज्वरं हन्ति व्याधिं व्याधिश्च जीर्य्यति ।
संहर्त्तानाञ्च संहर्त्ता कालः कालाद्बिभेति च ॥ २४ ॥
स्रष्टा सृजति स्रष्टारं पाता स्वं पाति त्वन्मते ।
क्षुत् क्षुधं समवाप्नोति तृष्णा तृष्णां प्रयाति किम् ॥२
निद्रा निद्राञ्च श्रीः शोभां शान्तिः शान्तिञ्च तन्मते ।
पुष्टिः पुष्टि मवाप्नोति तुष्टिस्तुष्टिं क्षमा क्षमाम् ।
आत्मनः परमात्मास्ति शक्तिः शक्त्या बिभेति किम् ॥२
लोभमोहकामक्रोधाः स्वात्मना नहि बाधिताः ।
दया न वद्धा दयया नेच्छा बद्धेच्छया प्रभो ॥ २७ ॥
ज्ञानबुद्ध्योः को विकारो जरामाबाधते जरा ।
चिन्ता न चिन्तया ग्रस्ता चक्षुः स्वञ्च न पश्यति ॥२८
हर्षो मुदं किं प्राप्नोति शोकं शोको न बाधते ।
का विपत्तिर्विपत्तेश्च सम्पत्तिः सम्पदः कुतः ॥ २६ ॥
मेधाया धारणा शक्तिः स्मृतेर्वा स्मरणं कुतः ।
न दग्धः स्वप्रतापेन विवस्वानिव सम्मतः ॥ ३० ॥
विपरीत मतो भ्रातस्त्वयैवाचरितोऽधुना ।

न श्रुतोऽयं गुरुमुखान्न दृष्टो न श्रुतौ श्रुतः ॥ ३१ ॥
इत्युक्त्वा परशुरामश्च प्रहस्य च पुनः पुनः।
शीघ्रं गन्तुं मनश्चक्रे गुरोरभ्यन्तरं मुदा ॥ ३२ ॥
परशुरामवचः श्रुत्वा जितक्रोधो गणेश्वरः।
शुद्धसत्वस्वरूपश्च प्रहस्य तमुवाच ह ॥ ३३ ॥

गणपतिरुवाच।

अज्ञानतिमिराच्छन्नो ज्ञानं प्राप्नोति ज्ञानिनः।
पितुर्भ्रातुर्मुखाज् ज्ञानं दुर्लभं भाग्यवान् लभेत् ॥३४॥
श्रुतं ज्ञानं विशिष्टञ्च ज्ञानिनामपि दुर्लभम्।
किञ्चिन्मम मन्दबुद्धेः शृणु भ्रातर्निवेदनम् ॥ ३५ ॥
यो निर्गुणः स निर्लिप्तः शक्तिभ्यो न हि संयुतः।
सिसृक्षुराश्रितो शक्तौ निर्गुणः सगुणो भवेत् ॥ ३६ ॥
यावन्ति च शरीराणि भोगार्हाणि महामुने।
प्राकृतानि च सर्वाणि श्रीकृष्णविग्रहं विना ॥ ३७ ॥
ध्यायन्ते योगिन स्तञ्च शुद्ध ज्योतिःस्वरूपिणम्।
हस्तपादादिरहितं निर्गुणं प्रकृतेः परम् ॥ ३८ ॥
वैष्णवास्तं नमस्यन्ति भक्तानुग्रहकारकम्।
कुतो बभूव तद्ज्योतिरहो तेजस्विनां विना ॥ ३९ ॥
ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम्।
द्विभुजं मुरलीहस्तं सस्मितं पीतवाससम् ॥ ४० ॥
अतीवामूल्यसद्रत्नभूषणेन विभूषितम्।
ज्योतिरभ्यन्तरे मूर्त्तिं पश्यन्ति कृपया विभो ॥ ४१ ॥
तदा दास्ये नियुक्तास्ते भवन्त्येवेश्वरेच्छया।
योग स्तपो वा दास्यस्य कलां नार्हन्ति षोड़शीम् ॥४२॥

यदा सृष्ट्युन्मुखः कृष्णः ससृजे प्रकृतिं मुदा ।
तद्योनौ ह्यर्पितं वीर्य्यं वीर्य्याड्डिम्बो बभूव ह ॥ ४३ ॥
दिव्येन लक्षवर्षेण गर्भाड्डिम्बो विनिर्गतः ।
तदा चकार निश्वासं ततो वायुर्बभूव ह ॥ ४४ ॥
निश्वासेन समं भ्रातर्मुखविन्दुर्विनिर्गतः ।
ततो बभूव सहसा जलराशिर्हरेः पुरः ॥ ४५ ॥
तज्जले च स्थितो डिम्बो दिव्यवर्षञ्च लक्षकम् ।
ततो बभूव सहसा विश्वाधारो महाविराट् । ४६ ॥
यावन्ति गात्रलोमानि तस्य सन्ति महात्मनः ।
ब्रह्माण्डानि च तावन्ति विद्यमानानि निश्चितम् ॥४७॥
तत्रैव प्रति ब्रह्माण्डे ब्रह्मविष्णुमहेश्वराः ।
देवाश्च मुनयश्चैव विद्यमानाश्चराचरा ॥ ४८ ॥
महाविराड़ाश्रयश्च सर्वस्य च जनस्य च ।
निश्वासवायुर्भगवान् बभूव श्रीहरेर्मुने ॥ ४९ ॥
महान् विष्णुः कलया ततः क्षुद्रविराडभूत् ।
तन्नाभि कमले ब्रह्मा शङ्कर स्तल्ललाटजः ॥ ५० ॥
विष्णुस्तदंशः पाता यः श्वेतद्वीपनिवासकृत् ।
एवन्ते प्रति ब्रह्माण्डे ब्रह्मविष्णुमहेश्वराः ॥ ५१ ॥
स्वयञ्च स्वांशकलया नाना मूर्त्तिधरो हरिः ।
तदाभवच्च सगुणः सर्वशक्तियुतस्तदा ॥ ५२ ॥
कथं लज्जादिरहितः स च स्वेच्छामयो महान् ।
सर्वदा सर्वभोगार्हः सर्वशक्तिसमन्वितः ॥ ५३ ॥
लज्जा नास्त्येव लज्जाया मतोऽयं सर्वसम्मतः ।
या च लज्जावती देवी तस्य लज्जा कुतो गता ॥ ॥५४ ।

सर्वशक्तिमती दुर्गा प्रकृत्या साच शैलजा ।
तस्या लज्जादयः सन्ति सर्वदा सर्व सम्मता ॥ ५५ ॥
पञ्चधा याच प्रकृतिः श्रीकृष्णस्य बभूवह ।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥ ५६ ॥
प्राणाधिष्ठात्री या देवी कृष्णस्य परमात्मनः ।
प्राणाधिका प्रिया साच राधास्ति तस्य वचसि ॥५७॥
विद्याधिष्ठात्री या देवी सावित्री ब्रह्मणः प्रिया ।
लक्ष्मीर्नारायणस्यैव सर्वसम्पत्स्वरूपिणी ॥ ५८ ॥
सरस्वती द्विधा भूत्वा कृष्णस्य मुखनिर्गता ।
सावित्री ब्रह्मणः कान्ता स्वयं नारायणस्य च ॥ ५९ ॥
बुद्ध्यधिष्ठात्री या देवी ज्ञानसूः शक्तिसंयुता ।
सा दुर्गा शूलिनः कान्ता तस्या लज्जा कुतो गता ॥६०॥
प्रकृतिः पञ्चधा भ्रातर्गोलोके च बभूवह ।
इमाः प्रधानाः कलया बभूवानेकधापि सा ॥ ६१ ॥
विप्रेन्द्र नित्यं वैकुण्ठं ब्रह्माण्डात्परमुच्यते ।
अविनाशी स्थलं शश्वत् लये प्राकृतिके ध्रुवम् ॥ ६२ ॥
तत्र नारायणो देवः कृष्णार्द्धांशश्चतुर्भुजः ।
वनमाली पीतवासाः शक्त्या च पद्मया सह ॥ ६३ ॥
स्वयं कृष्णश्च गोलोके द्विभुजः श्यामसुन्दरः ।
सस्मितो मुरलीहस्तो राधावक्षःस्थलस्थितः ॥ ६४ ॥
गोगोपगोपीभिः शश्वत् संयुक्तो गोपरूपधृक् ।
परिपूर्णतमः श्रीमान् निर्गुणः प्रकृतेःपरः ॥ ६५ ॥
स्वेच्छामयः स्वतन्त्रस्तु परमानन्द रूपधृक् ।
सुराः कलोद्भवा यस्य षोड़शांशो महाविराट् ॥ ६६ ॥

यतो भवन्ति विश्वानि स्थूलसूक्ष्मादिकानि च।
पुनस्तत्र प्रलीयन्ते एवमेव मुहुर्मुहुः ॥ ६७ ॥
गोलोक मूर्द्ध वैकुण्ठात् पञ्चाशत्कोटियोजनम्।
नास्ति लोकस्तदूर्द्धे च नास्ति कृष्णात्परः प्रभुः ॥६८॥
इदं श्रुतं शम्भुवक्त्रान्मया ते कथितं द्विज।
क्षणं तिष्ठाधुना भ्रात रीश्वरः सुरतोन्मुखः ॥ ६९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे परशुराम संवादे ज्ञाननिरूपणं नाम द्विचत्वारिंशत्तमोऽध्यायः।

---

## त्रिचत्वारिंशत्तमोऽध्यायः।

नारायण उवाच।

गणेशवचनं श्रुत्वा स तदा रागतः सुधीः।
परशुहस्तः परशुरामो निर्भयो गन्तु मुद्यतः ॥ १ ॥
गणेश्वर स्तदा दृष्ट्वा शीघ्र मुत्थाय यत्नतः।
वारयामास संप्रीत्या चकार विनयं पुनः ॥ २ ॥
राम स्तं प्रेरयामास हुं कृत्वा तु पुनः पुनः।
बभूव च ततस्तत्र वाग्युद्धं हस्तकर्षणम् ॥ ३ ॥
परशुनिक्षेपणं कर्त्तुं मनश्चक्रे भृगुस्तदा।
हाहा कृत्वा कार्त्तिकेयो बोधयामास संसदि ॥ ४ ॥
भ्रात्रे मत्तं हि भ्रातर्गुरुपुत्रे कथं क्षिप।

गुरुवद् गुरुपुत्त्रञ्च मा भवान् हन्तु मर्हति ॥ ५ ॥
परशुं चिपन्तं कुपितं रक्तपद्मदलेक्षणम्।
गणेशो रोधयामास निवर्त्तस्वेत्युवाच तम् ॥ ६ ॥
पुनर्गणेशं रामश्च प्रेरयामास कोपतः।
पपात पूरतो वेगाच्छिन्नमानो गजाननः ॥ ७ ॥
गजाननः समुत्थाय धर्मं कृत्वा गु साक्षिणम्।
पुनस्तं बोधयामास जितक्रोधः शिवात्मजः ॥ ८ ॥
निवर्त्त स्व निवर्त्तस्वेत्युच्चार्य्य च पुनः पुनः।
प्रवेशने ते का शक्तिरीश्वराज्ञां विना प्रभो ॥ ९ ॥
मम भ्राता त्वमतिथिर्विद्यासम्बन्धतो ध्रुवम्।
ईश्वरप्रियशिष्यस्य सहामि तेन हेतुना ॥ १० ॥
नह्यहं कार्त्तवीर्य्यश्च भूपास्ते क्षुद्रजन्तवः।
अतो विप्र न जानासि माञ्च विश्वेश्वरात्मजम् ॥ ११ ॥
क्षणं तिष्ठ निवर्त्तस्व समरे ब्राह्मणातिथे।
क्षणान्तरे त्वया सार्द्धं यास्यामीश्वरसन्निधिम् ॥ १२ ॥

नारायण उवाच।

हेरम्बवचनं श्रुत्वा प्रजहास पुनः पुनः।
परशुं चेप्तुं मनश्चक्रे प्रणम्य शङ्करं हरिम् ॥ १३ ॥
परशुं चिपन्तं कोपेन परशुरामं गजाननः।
दृष्ट्वा मुमूर्षुं देवेशो धर्मं कृत्वा तु साक्षिणम् ॥ १४ ॥
चकार हस्तं योगेन स तदा कोटियोजनम्।
योगीन्द्र स्तत्र सन्तिष्ठन् भ्रामयित्वा पुनः पुनः ॥ १५ ॥
शतधा वेष्टयित्वा तु भ्रामयित्वा तु तत्र वै।
ऊर्द्ध मुत्तोल्य वेगेन क्षुद्राहिं गरुड़ो यथा ॥ १६ ॥

सप्तद्वीपांश्च शैलांश्च काञ्चनीं सप्त सागरान् ।
क्षणेन दर्शयामास रामं योगेन स्तम्भितम् ॥ १७ ॥
हस्तपादाद्यनाथं तं जड़ं सर्वाङ्गकम्पितम् ।
पुनस्तं भ्रामयामास दर्पितं दर्पनाशनः ॥ १८ ॥
भूर्लोकञ्च भुवो लोकं स्वर्लोकञ्च सुरेश्वरः ।
जनलोकं तपोलोकं ध्रुवलोकञ्च तत्परम् ॥ १९ ॥
गौरीलोकं शम्भुलोकं दर्शयामास नारद ।
दर्शयित्वा तु ब्रह्माण्डं स पपौ सप्त सागरान् ॥ २० ॥
पुनश्चक्रीरणं चक्रे सनक्रसागरोदकम् ।
तत्र तमर्पयामास गभीरे सागरोदके ॥ २१ ॥
मुमूर्षुं तं सन्तरन्तं पुनर्जग्राह लीलया ।
पुनस्तत्र भ्रामयित्वा ब्रह्माण्डादूर्द्ध मुत्तमम् ॥ २२ ॥
वैकुण्ठं दर्शयामास सलक्ष्मीकं चतुर्भुजम् ।
क्षणं तत्र भ्रामयित्वा योगीन्द्रो योगमायया ॥ २३ ॥
पुनः करञ्च योगेन वर्द्धयामास लीलया ।
गोलोकं दर्शयामास विरजाञ्च नदीश्वरीम् ॥ २४ ॥
वृन्दावनं शतशृङ्गं शैलेन्द्रं रासमण्डलम् ।
गोपीगोपादिभिः सार्द्धं श्रीकृष्णं श्यामसुन्दरम् ॥ २५ ॥
द्विभुजं मुरलीहस्तं सस्मितं सुमनोहरम् ।
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ २६ ॥
तेजसा कोटिसूर्य्याभं राधावक्षःस्थलस्थितम् ।
एवं कृष्णं दर्शयित्वा प्रणमय्य पुनः पुनः ॥ २७ ॥
क्षणेन लम्बमानस्य भ्रामयित्वा पुनः पुनः ।
दृष्ट्वा कृष्ण मिष्टदेवं सर्वपाप प्रणाशनम् ।

भ्रूणहत्यादिकं पापं भृगोर्दूरं चकार ह ॥ २८ ॥
न भवेद् यातना नष्टा विना भोगेन पापजा।
तस्याश्च बुभुजे रामो गतान्या कृष्णदर्शनात् ॥ २९ ॥
क्षणेन चेतनां प्राप्य पपात वेगतो भुवि।
बभूव दूरीभूतञ्च गणेशस्तम्भनं भृगोः ॥ ३० ॥
सस्मार कवचं स्तोत्रं गुरुदत्तं सुदुर्लभम्।
अभीष्टदेवं श्रीकृष्णं गुरुं शम्भुं जगद्गुरुम् ॥ ३१ ॥
चिक्षेप पर्शुमव्यर्थं शिवतुल्यञ्च तेजसा।
ग्रीष्ममध्याह्नमार्त्तण्डप्रभाशतगुणं मुने ॥ ३२ ॥
पितुरव्यर्थमस्त्रञ्च दृष्ट्वा गणपतिः स्वयम्।
जग्राह वामदन्तेन नास्त्रं व्यर्थञ्चकार ह ॥ ३३ ॥
निपत्य पर्शुर्वेगेन छित्वा दन्तं समूलकम्।
जगाम रामहस्तञ्च महादेवबलेन च ॥ ३४ ॥
हाहेति शब्दमाकाशे देवाश्चक्रुर्महाभिया।
वीरभद्रः कार्त्तिकेयः क्षेत्रपालाश्च पार्षदाः ॥ ३५ ॥
पपात भूमौ दन्तश्च सरक्तः शब्दमुच्चरन्।
पपात गैरिकयुक्तश्च महास्फाटिकपर्वतः ॥ ३६ ॥
शब्देन महता विप्र चकम्पे पृथिवी भिया।
कैलासस्था जनाः सर्वे मूर्च्छामापुः क्षणं भिया ॥ ३७ ॥
निद्रा बभञ्ज निद्राया निद्रेशस्य जगत्प्रभोः।
आजगाम बहिः शम्भुः पार्वत्या सह सम्भ्रमात् ॥ ३८ ॥
पुरो ददर्श हेरम्बं लोहितास्यं क्षतं नतम्।
भग्नदन्तं छिन्नकोपं सस्मितं लज्जितं मुने ॥ ३९ ॥
पप्रच्छ पार्वती शीघ्रं स्कन्दं किमिति पुत्रक।

स च तां कथयामास वार्त्तां पौर्वापरीं भिया ॥ ४० ॥
चुकोप दुर्गा कृपया रुरोदच मुहुर्मुहुः ।
उवाच शम्भोः पुरतः पुत्रं कृत्वा स्ववक्षसि ॥ ४१ ॥
सम्बोध्य शम्भुं शोकेन भिया विनयपूर्वकम् ।
उवाच प्रणता साध्वी प्रणतार्त्तिहरं पतिम् ॥ ४२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे गणेशदन्तभङ्गो नाम त्रिचत्वारिंशत्तमोऽध्यायः ।

---

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

पार्वत्युवाच ।

सर्वे जानन्ति जगति दुर्गां शङ्करकिङ्करीम् ।
अपेचारहिता दासी तस्याश्च जीवनं वृथा ॥ १ ॥
ईश्वरस्य समाः सर्वास्तृणपर्वतजातयः ।
दासीपुत्रस्य शिष्यस्य कस्य दोष इति प्रभो ॥ २ ॥
विचारं कर्त्तुमुचितं त्वञ्च धर्मविदांवरः ।
वीरभद्रः कार्त्तिकेयः पार्षदाः सन्ति साक्षिणः ॥ ३ ॥
साक्ष्ये मिथ्यां को वदेद्वा द्वावेषां भ्रातरौ समौ ।
साक्ष्ये समे शत्रुमित्रे सतां धर्मनिरूपणे ॥ ४ ॥
साक्षी सभायां यत् साक्ष्यं जानन्नप्यन्यथा वदेत् ।
कामतः क्रोधतो वापि लोभेन च भयेन च ॥५ ॥

स याति कुम्भीपाकञ्च निपात्य शतपुरुषम् ।
तैश्च सार्द्धं वसेत्तत्र यावच्चन्द्रदिवाकरौ ॥ ६ ॥
अहं विबोधितुं शक्ता निर्णेत्री च द्वयोरपि ।
तथापि तव साक्षात्तु ममाज्ञा निन्दिता श्रुतौ ॥ ७ ॥
किङ्कराणां प्रभा कुत्र नृपे वसति संसदि ।
उदिते भास्करे पृथ्व्यां खद्योतोहि यथा प्रभो ॥ ८ ॥
सुचिरं तपसा प्राप्तं त्वदीयं चरणाम्बुजम् ।
परित्यागभयेनैव सन्ततं भीतया मया ॥ ९ ॥
यत्किञ्चित् कोपशोकाभ्यां युक्तं मोहेन तत्परम् ।
तत् क्षमस्व जगन्नाथ पुत्रस्नेहाच्च दारुणात् ॥ १० ॥
त्वया यदि परित्यक्ता तदा पुत्त्रेण तेन किम् ।
साध्व्याः सद्वंशजायाश्च शतपुत्राधिकः पतिः ॥ ११ ॥
असद्वंशप्रसूता या दुःशीला ज्ञानवर्जिता ।
स्वामिनं मन्यते नासौ पित्रोर्दोषेण कुत्सिता ॥ १२ ॥
कुत्सितं पतितं मूढ़ं दरिद्रं रोगिणं जड़म् ।
कुलजा विष्णुतुल्यञ्च कान्तं पश्यति सन्ततम् ॥ १३ ॥
हुताशनो वा सूर्य्यो वा सर्वतेजस्विनां परः ।
पतिव्रतातेजसश्च कलां नार्हन्ति षोड़शीम् ॥ १४ ॥
महादानानि पुण्यानि व्रतान्यनशनानि च ।
तपांसि पतिसेवायाः कलां नार्हन्ति षोड़शीम् ॥१५॥
पुत्त्रो वापि पिता वापि बान्धवोऽथ सहोदरः ।
योषितां कुलजातानां न कश्चित् स्वामिनः समः ॥१६॥
इत्युक्त्वा स्वामिनं दुर्गा ददर्श पुरतो भृगुम् ।
शम्भोः पदाब्जं सेवन्तं निर्भयं तमुवाच ह ॥ १७ ॥

पार्वत्युवाच ।

अये राम महाभाग ब्रह्मवंशोऽसि पण्डितः ।
पुत्रोऽसि जमदग्नेश्च शिष्योऽस्य योगिनां गुरोः ॥१८॥
माता ते रेणुका साध्वी पद्मांशा सत्कुलोद्भवा ।
मातामहो वैष्णवश्च मातुलश्च ततोऽधिकः ॥ १९ ॥
त्वञ्च रेणुक भूपस्य मनुवंशोद्भवस्य च ।
दौहित्रो मातुलः साधुः शूरो विष्णुयशा नृपः ॥ २० ॥
कस्य दोषेण दुर्द्धर्षं त्वं न जानेऽथाशुद्धतः ।
येषां दोषैर्जनो दुष्टस्तव ते शुद्धमानसाः ॥ २१ ॥
अमोघं प्राप्य पर्शुञ्च गुरुञ्च करुणानिधिम् ।
परीक्षां क्षत्रिये कृत्वा बभूवास्य सुते पुनः ॥ २२ ॥
गुरवे दक्षिणां दातुमुचितञ्च श्रुतौ श्रुतम् ।
भग्नोदन्तस्तत्सुतस्य छेदयस्व च मस्तकम् ॥ २३ ॥
गणेश्वरं रणे जित्वा स्थितश्चेदावयोः पुरः ।
मा त्वं लब्ध्वा शिवो भूत्वा पूजितोऽभूर्जगत्त्रये ॥२४॥
पर्शुनाऽमोघवीर्य्येण शङ्करस्य वरेण च ।
हन्तुं शक्तः शृगालश्च सिंहं शार्दूलमाखुभुक् ॥ २५ ॥
त्वद्विधं लक्षकोटिञ्च हन्तुं शक्तो गणेश्वरः ।
जितेन्द्रियाणां प्रवरो नहि हन्ति च मक्षिकाम् ॥ २६ ॥
तेजसा कृष्णतुल्योऽयं कृष्णांशश्च गणेश्वरः ।
देवाश्चान्ये कृष्णकलाः पूजास्य पुरतस्ततः ॥ २७ ॥
व्रतप्रभावतः प्राप्तः शङ्करस्य वरेण च ।
शीघ्रेणातिकठोरेण नहि सम्यग्विघ्नदिना ॥ २८॥
इत्युक्त्वा पार्वती रोषात्तं रामं हन्तुमुद्यता ।

रामः सस्मार तं कृष्णं प्रणम्य मनसा गुरुम् ॥ २९ ॥
एतस्मिन्नन्तरे दुर्गा ददर्श पुरतो द्विजम् ।
अतीव वामनं बालं सूर्य्यकोटिसमप्रभम् ॥ ३० ॥
शुक्लदन्तं शुक्लवस्त्रं शुक्लयज्ञोपवीतिनम् ।
दण्डिनं छत्रिणञ्चैव दधतं तिलकोज्ज्वलम् ॥ ३१ ॥
दधतं तुलसीमालां सस्मितं सुमनोहरम् ।
रत्नकेयूरवलयं रत्नमालाविभूषितम् ॥ ३२ ॥
रत्ननूपुरपादञ्च सद्रत्नमुकुटोज्ज्वलम् ।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ॥ ३३ ॥
स्थिरमुद्रां दर्शयन्तं भक्तं वामकरेण च ।
दक्षिणेऽभय मुद्राञ्च भक्तेशं भक्तवत्सलम् ॥ ३४ ॥
बालिकाबालकगणैर्नागरैः सस्मितैर्युतम् ।
कैलासवासिभिः सर्वैराहृतैरीक्षितं मुदा ॥ ३५ ॥
तं दृष्ट्वा सम्भ्रमात् शम्भुः सभृत्यः सहपुत्रकः ।
मूर्द्ध्ना भक्त्या प्रणनाम दुर्गा च दण्डवद्भुवि ॥ ३६ ॥
आशिषं प्रददौ बालः सर्वेभ्यो वाञ्छितप्रदम् ।
तं दृष्ट्वा बालकाः सर्वे महाश्चर्य्यं ययुर्भिया ॥ ३७ ॥
दत्त्वा तस्मै शिवो भक्त्या चोपचाराणि षोड़श ।
पूजाञ्चकार श्रुत्युक्तां परिपूर्णतमस्य च ॥ ३८ ॥
तुष्टाव काण्वशाखोक्तस्तोत्रेण नतकन्धरः ।
पुलकाङ्कितसर्वाङ्गो भगवन्तं सनातनम् ॥ ३९ ॥
रत्नसिंहासनस्थञ्च प्रोवाच शङ्करः स्वयम् ।
पतीवतेजसा सर्वं प्रच्छन्नीकृतमेव च ॥ ४० ॥

शङ्कर उवाच ।

आत्मारामेषु कुशलप्रश्नोऽतीवविड़म्बनम् ।
ते शश्वत् कुशलाधाराः कुशलाकुशलप्रदाः ॥ ४१ ॥
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ।
प्राप्त स्त्व मतिथिर्ब्रह्मन् कृष्णसेवाफलोदयात् ॥ ४२ ॥
परिपूर्णतमः कृष्णो लोकनिस्तारहेतवे ।
कलया पुण्य चेत्रे हि भारते च कृपा निधिः ॥ ४३ ॥
अतिथिः पूजितो येन पूजिताः सर्व्वदेवताः ।
अतिथिर्यस्य सन्तुष्टस्तस्य तुष्टो हरिः स्वयम् ॥ ४४ ॥
स्नानेन सर्व्वतीर्थानां सर्व्वदानेन यत् फलम् ।
सर्व्वव्रतोपवासाभ्यां सर्व्वयज्ञेषु दीक्षया ॥ ४५ ॥
सर्व्वैस्तपोभिर्व्विविधैर्न्नित्यै र्नैमित्तिकादिभिः ।
तदेवातिथिसेवायाः कलां नार्हन्ति षोड़शीम् ॥ ४६ ॥
अतिथिर्यस्य भग्नाशो याति रुष्टश्च मन्दिरात् ।
कोटिजन्मार्जितं पुण्यं तस्य नश्यन्ति निश्चितम् ॥ ४७ ॥
स्त्रीगोघ्नश्च कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः ।
पितृमातृगुरूणाञ्च निन्दको नरघातकः ॥ ४८ ॥
सन्ध्याहीनो स्त्रघाती च सत्यघ्नो हरिनिन्दकः ।
ब्रह्मस्वस्याप्यहारी च मिथ्यासाक्ष्यप्रदायकः ॥ ४९ ॥
मित्रद्रोही कृतघ्नश्च वृषवाहश्च सूपकृत् ।
शवदाही ग्रामयाजी ब्राह्मणो वृषलीपतिः ॥ ५० ॥
शूद्रश्राद्धान्नभोजी च शूद्रश्राद्धेषु भोजकः ।
कन्या विक्रयकारी च श्रीहरेर्न्नाम विक्रयी ॥ ५१ ॥
लाक्षा मांस लोह रस तिलानां लवणस्य च ।

विक्रेता ब्राह्मणश्चैव तुरगाणां गवां तथा ॥ ५२ ॥
एकादशीकृष्णसेवाहीनो विप्रश्च भारते ।
एते महापातकिन स्त्रिषु लोकेषु निन्दिताः ॥ ५३ ॥
कालसूत्रे च नरके पतन्ति ब्रह्मणः शतम् ।
एतेभ्योऽप्यधिकः सोऽपि यश्चातिथिपराङ्मुखः ॥ ५४ ॥

नारायण उवाच ।

शङ्करस्य वचः श्रुत्वा सन्तुष्टः श्रीहरिः स्वयम् ।
मेघगम्भीरया वाचा तमुवाच जगत्पतिः ॥ ५५ ॥

विष्णुरुवाच ।

श्वेतद्वीपादागतोऽहं ज्ञात्वा कोलाहलञ्च वः ।
परशुरामस्य रक्षार्थं कृष्णभक्तस्य साम्प्रतम् ॥ ५६ ॥
नैतेषां कृष्णभक्तानामशुभं विद्यते क्वचित् ।
रक्षामि तां चक्रहस्तो गुरु मन्युं विना शिव ॥ ५७ ॥
नाहं पातां गुरौ रुष्टे बलवद् गुरुहेलनम् ।
तत्परः पातकी नास्ति सेवाहीनो गुरोश्च यः ॥ ५८ ॥
मान्यः पूज्यश्च सर्वेभ्यः सर्वेषां जनको भवेत् ।
यद्दो यस्य प्रसादेन सर्वान् पश्यति मानवः ॥ ५९ ॥
जनको जन्मदानाच्च रक्षणाच्च पिता नृणाम् ।
ततो विस्तीर्ण करणात् कलया स प्रजापतिः ॥ ६० ॥
पितुः शतगुणैर्माता पोषणाद्गर्भधारणात् ।
वन्द्या पूज्या च मान्या च प्रसूरूपा वसुन्धरा ॥ ६१ ॥
मातुः शतगुणैर्वन्द्यः पूज्यो मान्योऽन्नदायकः ।
यद्विना नश्वरो देहो विष्णुश्च कलयान्नदः ॥ ६२ ॥
अन्नदातुः शतगुणोऽभीष्टदेवः परः स्मृतः ।

गुरुस्तस्माच्छतगुणो विद्यामन्त्रप्रदायकः ॥ ६३ ॥
अज्ञान तिमिराच्छन्नं ज्ञानदीपेन चक्षुषा ।
यः सर्वार्थं दर्शयति तत्परः कोऽपि बान्धवः ॥ ६४ ॥
गुरुदत्तेन मन्त्रेण तपसेष्टसुखं लभेत् ।
सर्वज्ञत्वं सर्वसिद्धिं तत्परः कोऽपि बान्धवः ॥ ६५ ॥
सर्वं जयति सर्वत्र विद्यया गुरुदत्तया ।
तस्मात् पूज्योहि जगति कोवा बन्धुस्ततोऽधिकः ॥६६॥
विद्याढ्यो वा धनाढ्यो वा यो मूढ़ो न भजेद्गुरुम् ।
ब्रह्महत्यादिभिः पापैः स लिप्तो नात्र संशयः ॥ ६७ ॥
दरिद्रं पतितं क्षुद्रं नरबुद्ध्याचरेत् गुरुम् ।
सोऽशुचि स्तीर्थस्नातोऽपि नाधिकारी च कर्म्मसु ॥६८॥
पितरं मातरं भार्य्यां गुरुपत्नीं गुरुं परम् ।
यो न पुष्णाति कापट्यात् स महापातकी शिव ॥६९॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म गुरुर्भास्कररूपकः ॥ ७० ॥
गुरुश्चन्द्र स्तथेन्द्रश्च वायुश्च वरुणोऽनलः ।
सर्वरूपोहि भगवान् परमात्मा स्वयं गुरुः ॥ ७१ ॥
नास्ति वेदात् परं शास्त्रं नहि कृष्णात् परः सुरः ।
नास्ति गङ्गासमं तीर्थं न पुष्पं तुलसीपरम् ॥ ७२ ॥
नास्ति क्षमावती भूमेः पुत्रान्नास्त्यपरः प्रियः ।
न च दैवात् परा शक्तिर्न्न तं नैकादशीं विना ॥ ७३ ॥
शालग्रामात् परो यन्त्रो न क्षेत्रं भारतात्परम् ।
परं पुण्यस्थलानाञ्च पुण्यं वृन्दावनं यथा ॥ ७४ ॥
मोक्षदानां यथा काशी वैष्णवानां यथा शिवः ।

न पार्वतीपरा साध्वी न गणेशात् परो वशी ॥ ७५ ॥
न च विद्यासमोबन्धुर्नास्ति कश्चिद्गुरोः परः ।
विद्यादातुः पुत्रदारौ तत्समौ नात्र संशयः ॥ ७६ ॥
गुरुस्त्रियाश्च पुत्रे च बभूव रामहेलनम् ।
परं सम्भाञ्जनां कर्त्तुं मागतोऽहं तवालयम् ॥ ७७ ॥

नारायण उवाच ।

इत्येव मुक्त्वा शम्भुश्च दुर्गां सम्बोध्य नारद ।
उवाच भगवान् तत्र सत्यसारं परं वचः ॥ ७८ ॥

विष्णुरुवाच ।

शृणु देवि प्रवक्ष्यामि मदीयं वचनं शुभम् ।
नीतियुक्तं वेदसारं परिणामसुखावहम् ॥ ७९ ॥
यथा ते गजवक्त्रश्च कार्त्तिकेयश्च पार्वति ।
तथा परशुरामश्च भार्गवो नात्र संशयः ॥ ८० ॥
नास्त्येषु स्नेहभेदश्च तव वा शङ्करस्य च ।
विचार्य्य सर्वं सर्वज्ञे कुरु मातर्यथोचितम् ॥ ८१ ॥
पुत्रेण सार्द्धं पुत्रस्य विवादो दैवदोषतः ।
दैवं हन्तुं कोहि शक्तो दैवश्च बलवत् परम् ॥ ८२ ॥
पुत्राभिधानं वेदेषु पश्य वत्से वरानने ।
एकदन्त इति ख्यातं सर्वदेवनमस्कृतम् ॥ ८३ ॥
पुत्रनामाष्टकं स्तोत्रं सामवेदोक्तमीश्वरि ।
शृणुष्वावहितं मातः सर्वविघ्नहरं परम् ॥ ८४ ॥

विष्णुरुवाच ।

गणेशमेकदन्तञ्च हेरम्बं विघ्ननायकम् ।
लम्बोदरं शूर्पकर्णं गजवक्त्रं गुहाग्रजम् ॥ ८५ ॥

नामाष्टार्थञ्च पुत्त्रस्य शृणु मातर्हरप्रिये ।
स्तोत्राणां सारभूतञ्च सर्व्वविघ्नहरं परम् ॥ ८६ ॥
ज्ञानार्थवाचको गश्च णश्च निर्व्वाणवाचकः ।
तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ॥ ८७ ॥
एकशब्दः प्रधानार्थो दन्तश्च बलवाचकः ।
बलं प्रधानं सर्व्वस्मादेकदन्तं नमाम्यहम् ॥ ८८ ॥
दीनार्थवाचको हेश्च रम्बः पालकवाचकः ।
दीनानां परिपालकं हेरम्बं प्रणमाम्यहम् ॥ ८९ ॥
विपत्तिवाचको विघ्नो नायकः खण्डनार्थकः ।
विपत्खण्डनकारकं नमामि विघ्ननायकम् ॥ ९० ॥
विष्णुदत्तैश्च नैवेद्यैर्यस्य लम्बोदरं पुरा ।
पित्रा दत्तैश्च विविधैर्व्वन्दे लम्बोदरञ्च तम् ॥ ९१ ॥
शूर्पाकारौ च यत्कर्णौ विघ्नवारणकारणौ ।
सम्पदौ ज्ञानरूपौ च शूर्पकर्णं नमाम्यहम् ॥ ९२ ॥
विष्णुप्रसादपुष्पञ्च यन्मूर्द्ध्नि मुनिदत्तकम् ।
तद्गजेन्द्रवक्त्रयुक्तं गजवक्त्रं नमाम्यहम् ॥ ९३ ॥
गुहस्याग्रे च जातोऽयमाविर्भूतो हरालये ।
वन्दे गुहाग्रजं देवं सर्व्वदेवाग्रपूजितम् ॥ ९४ ॥
एतन्नामाष्टकं दुर्गे नामभिः संयुतं परम् ।
पुत्त्रस्य पश्य वेदे च तदा कोपं यथा कुरु ॥ ९५ ॥
एतन्नामाष्टकं स्तोत्रं नानार्थसंयुतं शुभम् ।
त्रिसन्ध्यं यः पठेन्नित्यं स सुखी सर्व्वतो जयी ॥ ९६ ॥
ततो विघ्नाः पलायन्ते वैनतेयाद् यथोरगाः ।
गणेश्वरप्रसादेन महाज्ञानी भवेत् ध्रुवम् ॥ ९७ ॥

पुत्रार्थी लभते पुत्रं भार्य्यार्थी विपुलां स्त्रियम्।
महाजड़ः कवीन्द्रश्च विद्यायाश्च भवेद् ध्रुवम्॥ ९८॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद संवादे
गणपतिखण्डे गणेश स्तोत्रकथनं नाम चतु-
श्चत्वारिंशत्तमोऽध्यायः।

---

## पञ्चचत्वारिंशत्तमोऽध्यायः।

---

नारायण उवाच।

पार्वतीं बोधयित्वा तु विष्णू राम मुवाचह।
हितं सारं नीतिसारं परिणामसुखावहम्॥ १॥

विष्णुरुवाच।

राम त्व मधुना सत्य मपराधी श्रुतेर्म्मते।
कोपात् कृत्वा दन्तभग्नं गणेशस्य स्थितोऽशिवे॥ २॥
मयोक्तेनैव स्तोत्रेण स्तुत्वा गणपतिं परम्।
काण्वशाखोक्त स्तोत्रेण स्तौहि दुर्गां जगत्प्रसूम्॥३॥
श्रीकृष्णस्य परा शक्ति बुद्धिरूपा जगत्प्रभोः।
अस्याश्च तव रुष्टायां हता बुद्धिर्भविष्यति॥ ४॥
सर्वशक्तिस्वरूपेय मनया शक्तिमज्जगत्।
अनया शक्तिमान् कृष्णो निर्गुणः प्रकृतेः परः॥ ५॥
सृष्टिं कर्त्तुं न शक्तश्च ब्रह्मा शक्त्याऽनया विना।
वयमस्यां प्रसूताश्च ब्रह्मविष्णुमहेश्वराः॥ ६॥

सुरसङ्घेऽसुरग्रस्ते काले घोरतरे द्विज ।
तेजःसु सर्वदेवानामाविर्भूता पुरा सती ॥ ७ ॥
कृष्णाज्ञयाऽसुरान् हत्वा दत्त्वा तेभ्यः पदन्ततः ।
दक्षपत्न्यां जनिं लेभे दक्षस्य तपसा पुरा ॥ ८ ॥
भार्य्या भूत्वा शङ्करस्य पुनः पत्युश्च निन्दया ।
देहं त्यक्त्वा शैलपत्न्यां जनिं लेभे पुरा सती ॥ ९ ॥
शङ्कर स्तपसा लब्धो योगीन्द्राणां गुरोर्गुरुः ।
लब्धो गणपतिः पुत्रः कृष्णांशः कृष्णसेवया ॥ १० ॥
य मेव ध्यायसे नित्यं तं न जानासि वालक ।
स एव भगवान् कृष्णश्चांशेन पार्वतीसुतः ॥ ११ ॥
पुटाञ्जलिर्नतो भूत्वा स्तौहि दुर्गां शिवप्रियाम् ।
शिवां शिवप्रदां शैवां शिववीजां शिवेश्वरीम् ॥ १२ ॥
शिवायाः स्तोत्रराजेन कृतेन शूलिना पुरा ।
त्रिपुरस्य वधे घोरे ब्रह्मणा प्रेरितेन च ॥ १३ ॥
इत्युक्त्वा श्रीपदं शीघ्रं जगाम श्रीनिकेतनम् ।
गते हरौ हरिं स्मृत्वा रामस्तां स्तोतुमुद्यतः ॥ १४ ॥
विष्णुदत्तेन स्तोत्रेण सर्वविघ्नहरेण च ।
धर्म्मार्थकाममोक्षाणां कारणेन च नारद ॥ १५ ॥
पुटाञ्जलियुतो भूत्वा स्नात्वा गङ्गोदके शुभे ।
गुरुं प्रणम्य भक्तेशं धृत्वा धौते च वाससी ॥ १६ ॥
आचम्य नत्वा मूर्द्ध्ना तां भक्तिनम्रात्मकन्धरः ।
पुलकाञ्चितसर्वाङ्गश्चानन्दाश्रुसमन्वितः ॥ १७ ॥

परशुराम उवाच ।

श्रीकृष्णस्य च गोलोके परिपूर्णतमस्य च ।

आविर्भूता विग्रहतः पुरा सृष्ट्युन्मुखस्य च ॥ १८ ॥
सूर्य्यकोटिप्रभायुक्ता वस्त्रालङ्कारभूषिता।
वह्निशुद्धांशुकाधाना सुस्मिता सुमनोहरा॥ १९ ॥
नवयौवनसम्पन्ना सिन्दूरविन्दुशोभिता।
ललितं कवरीभारं मालतीमाल्यमण्डितम् ॥ २० ॥
अहोऽनिर्वचनीया त्वं चार्वीं मूर्त्तिञ्च बिभ्रती।
मोक्षप्रदा मुमुक्षाणां महद्विष्णोर्विधिः स्वयम् ॥ २१ ॥
मुमोह क्षणमात्रेण दृष्ट्वा त्वां सर्वमोहिनीम्।
बाले संभूय सहसा सस्मिता धाविता पुरा॥ २२ ॥
सद्भिः ख्याता तेन राधा मूलप्रकृतिरीश्वरी।
कृष्ण स्त्वां सहसाहूय वीर्य्याधानञ्चकारह ॥ २३ ॥
ततो डिम्बं महद् जज्ञे ततो भूतो महाविराट्।
यस्यैव लोमकूपेषु ब्रह्माण्डान्यखिलानि च॥ २४ ॥
तत् शृङ्गारक्रमेणैव त्वन्निःश्वासो बभूवह।
स निःश्वासो महावायुः स विराड् विश्वधारकः ॥२५॥
तव घर्म्मजलेनैव पुप्लाव विश्व गोलोकम्।
स विराड्विश्वनिलयोजलराशिर्बभूवह ॥ २६ ॥
तत स्त्वं पञ्चधाभूय पञ्चमूर्त्तिश्च बिभ्रती।
प्राणाधिष्ठात्री या मूर्त्तिः कृष्णस्य परमात्मनः।
कृष्णप्राणाधिकां राधां तां वदन्ति पुराविदः ॥२७॥
वेदाधिष्ठात्री या मूर्त्ति र्वेदशास्त्रप्रसूरपि।
तां सावित्रीं शुद्धरूपां प्रवदन्ति मनीषिणः॥ २८ ॥
ऐश्वर्य्याधिष्ठात्री मूर्त्तिः शान्तिश्च शान्तरूपिणी।
लक्ष्मीं वदन्ति सन्त स्तां शुद्धां सत्वस्वरूपिणीम् ॥२९॥

रागाधिष्ठात्री या देवी शुक्लमूर्त्तिः सतां प्रसूः ।
सरस्वतीं तां शास्त्रज्ञां शास्त्रज्ञाः प्रवदन्त्यहो ॥ ३० ॥
बुद्धिर्विद्यासर्वशक्तेर्या मूर्त्तिरधिदेवता ।
सर्वमङ्गलमङ्गल्या सर्वमङ्गलरूपिणी ॥ ३१ ॥
सर्वमङ्गलबीजस्य शिवस्य मन्दिरेऽधुना ॥ ३२ ॥
शिवे शिवस्वरूपा त्वं लक्ष्मीर्नारायणान्तिके ।
सरस्वती च सावित्री वेदसूर्ब्रह्मणः प्रिया ॥ ३३ ॥
राधा रासेश्वरस्यैव परिपूर्णतमस्य च ।
परमानन्दरूपस्य परमानन्दरूपिणी ॥ ३४ ॥
त्वत्कलांशांशकलया देवानामपि योषितः ॥ ३५ ॥
त्वद्विद्यायोषितः सर्वा स्त्वं सर्वबीजरूपिणी ।
छाया सूर्य्यस्य चन्द्रस्य रोहिणी सर्वमोहिनी ॥ ३६ ॥
शची शक्रस्य कामस्य कामिनी रतिरीश्वरी ।
वरुणानी जलेशस्य वायोः स्त्री प्राणवल्लभा ॥ ३७ ॥
वह्नेः प्रिया हि स्वाहा च कुवेरस्य च सुन्दरी ।
यमस्य तु सुशीला च नैर्ऋतस्य च कैटभी ॥ ३८ ॥
ईशानस्य शशिकला शतरूपा मनोःप्रिया ।
देवहूती कर्दमस्य वशिष्ठस्याप्यरुन्धती ॥ ३९ ॥
अदिति र्देवमाता या मुद्रागस्त्यमुनेः प्रिया ।
अहल्या गौतमस्यापि सर्वाधारा वसुन्धरा ॥ ४० ॥
गङ्गा च तुलसी चापि पृथिव्यां या सरिद्वरा ।
एताः सर्वाश्च या ह्यन्याः सर्वास्त्वत्कलयाम्बिके ॥ ४१ ॥
गृहलक्ष्मी र्गृहे नृणां राजलक्ष्मीश्च राजसु ।
तपस्विनां तपस्या त्वं गायत्री ब्राह्मणस्य च ॥ ४२ ॥

सतां सत्वस्वरूपा त्वमसतां कलहाङ्कुरा ।
ज्योतीरूपा निर्गुणस्य शक्ति स्त्वं सगुणस्य च ॥ ४३ ॥
सूर्य्ये प्रभास्वरूपा त्वं दाहिका च हुताशने ।
जले शैत्यस्वरूपा च शोभारूपा निशाकरे ॥ ४४ ॥
त्वं भूमौ गन्धरूपा च आकाशे शब्दरूपिणी ।
क्षुत्पिपासादय स्त्वञ्च जीविनां सर्व्वशक्तयः ॥ ४५ ॥
सर्व्वबीजस्वरूपा त्वं संसारे साररूपिणी ।
स्मृतिर्मेधा च बुद्धिर्वा ज्ञानशक्तिर्विपश्चिताम् ॥ ४६ ॥
कृष्णेन विद्या या दत्ता सर्व्वज्ञानप्रसूः शुभा ।
शूलिने कृपया सा त्वं यतो मृत्युञ्जयः शिवः ॥ ४७ ॥
सृष्टिपालनसंहारशक्तय स्त्रिविधाश्च याः ।
ब्रह्मविष्णुमहेशानां सा त्वमेव नमोऽस्तु ते ॥ ४८ ॥
मधुकैटभभीत्या च त्रस्तो धाता प्रकम्पितः ।
स्तुत्वा मुमोच यां देवीं तां मूर्द्ध्ना प्रणमाम्यहम् ॥ ४९ ॥
मधुकैटभयोर्युद्धे त्राताऽसौ विष्णुरीश्वरीम् ।
बभूव शक्तिमान् स्तुत्वा त्वां दुर्गां प्रणमाम्यहम् ॥ ५० ॥
त्रिपुरस्य महायुद्धे सरथे पतिते शिवे ।
यां तुष्टुवुः सुराः सर्व्वे तां दुर्गां प्रणमाम्यहम् ॥ ५१ ॥
विष्णुना वृषरूपेण स्वयं शम्भुः समुत्थितः ।
जघान त्रिपुरं स्तुत्वा तां दुर्गां प्रणमाम्यहम् ॥ ५२ ॥
यदाज्ञया वाति वातः सूर्य्यस्तपति सन्ततम् ।
वर्षतीन्द्रो दहत्यग्नि स्तां दुर्गां प्रणमाम्यहम् ॥ ५३ ॥
यदाज्ञया हि कालश्च शश्वद् भ्रमति वेगतः ।
मृत्युश्चरति जन्त्वोघे तां दुर्गां प्रणमाम्यहम् ॥ ५४ ॥

स्रष्टा सृजति सृष्टिञ्च पाता पाति यदाज्ञया ।
संहर्त्ता संहरेत् काले तां दुर्गां प्रणमाम्यहम् ॥ ५५ ॥
ज्योतिः स्वरूपो भगवान् श्रीकृष्णो निर्गुणः स्वयम् ।
यया विना न शक्तश्च सृष्टिं कर्त्तुं नमामि ताम् ॥५६॥
रक्ष रक्ष जगन्मात रपराधं क्षमस्व मे ।
शिशूनामपराधेन कुतो माता हि कुप्यति ॥ ५७ ॥
इत्युक्त्वा पर्शुरामश्च प्रणम्य तां रुरोदह ।
तुष्टा दुर्गा सम्भ्रमेण चाभयञ्च वरं ददौ ॥ ५८ ॥
अमरो भव हे पुत्र वत्स सुस्थिरतां व्रज ।
सर्वप्रसादात् सर्वत्र जयोऽस्तु तव सन्ततम् ॥ ५९ ॥
सर्वान्तरात्मा भगवां स्तुष्टोऽस्तु सन्ततं हरिः ।
भक्तिर्भवतु ते कृष्णे शिवदे च शिवे गुरौ ॥ ६० ॥
इष्टदेवे गुरौ यस्य भक्तिर्भवति शाश्वती ।
तं हन्तुं नहि शक्ताश्च रुष्टाश्च सर्वदेवताः ॥ ६१ ॥
श्रीकृष्णस्य च भक्त स्त्वं शिष्योहि शङ्करस्य च ।
गुरुपत्नीं स्तौसि यस्मात् कस्त्वां हन्तु मिहेश्वरः ॥ ६२
अहो न कृष्णभक्तानामशुभं विद्यते क्वचित् ।
अन्यदेवेषु ये भक्ता न भक्ता वा निरङ्कुशाः ॥ ६३ ॥
चन्द्रमा बलवां स्तुष्टो येषां भाग्यवतां भृगो ।
तेषां तारागणा रुष्टाः किं कुर्वन्ति च दुर्बलाः ॥ ६४ ॥
यस्य तुष्टः सभायाञ्चेन्नरदेवो महान् सुखी ।
तस्य किं वा करिष्यन्ति रुष्टा भृत्याश्च दुर्बलाः ॥ ६५ ॥
इत्युक्त्वा पार्वती तुष्टा दत्त्वा रामं शुभाशिषम् ।
जगामान्तःपुरं तूर्णं हरिशब्दो बभूवह ॥ ६६ ॥

कान्तस्याद्योक्तस्तोत्रस्य पूजाकाले च यः पठेत् ।
यात्राकाले च प्रातर्वा वाञ्छितार्थं लभेद् ध्रुवम् ॥ ६७ ॥
पुत्त्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत् ।
विद्यार्थी लभते विद्यां प्रजार्थी चाप्नुयात् प्रजाम् ।
भ्रष्टराज्यो लभेद्राज्यं धननष्टो धनं लभेत् ॥ ६८ ॥
यस्य रुष्टो गुरुर्देवो राजा वा बान्धवोऽथवा ।
तस्य तुष्टश्च वरदः स्तोत्रराजप्रसादतः ॥ ६९ ॥
दस्युग्रस्तोऽहिग्रस्तश्च शत्रुग्रस्तो भयानकः ।
व्याधिग्रस्तो भवेन्मुक्तः स्तोत्रस्मरणमात्रतः ॥ ७० ॥
राजद्वारे श्मशाने च कारागारे च बन्धने ।
जलराशौ निमग्नश्च मुक्तो भवति स्तोत्रतः ॥ ७१ ॥
स्वामिभेदे पुत्त्रभेदे मित्रभेदे च दारुणे ।
स्तोत्रस्मरणमात्रेण वाञ्छितार्थं लभेद् ध्रुवम् ॥ ७२ ॥
कृत्वा हविष्यं वर्षञ्च स्तोत्रराजं शृणोति या ।
भक्त्या दुर्गाञ्च सम्पूज्य महावन्ध्या प्रसूयते ॥ ७३ ॥
लभते सा दिव्यपुत्रं ज्ञानिनं चिरजीविनम् ।
असौभाग्या च सौभाग्यं षण्मासश्रवणाल्लभेत् ॥ ७४ ॥
नवमासं काकवन्ध्या मृतवत्सा च भक्तितः ।
स्तोत्रराजं या शृणोति सा पुत्त्रं लभते ध्रुवम् ॥७५॥
कन्यामाता पुत्त्रहीना पञ्चमासं शृणोति या ।
घटे सम्पूज्य दुर्गाञ्च सा पुत्त्रं लभते ध्रुवम् ॥ ७६ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
गणपतिखण्डे दुर्गास्तोत्रं नाम पञ्चचत्वा-
रिंशत्तमोऽध्यायः ।

# षट्चत्वारिंशत्तमोऽध्यायः ।

---

नारायण उवाच ।

स्तुत्वा दुर्गां पर्शुरामो हर्षविह्वलमानसः ।
हरिणोक्तेन स्तोत्रेण प्रतुष्टाव गणेश्वरम् ॥ १ ॥
पूजाञ्चकार भक्त्या च नैवेद्यैर्विविधैरपि ।
धूपैर्दीपैश्च गन्धैश्च पुष्पैश्च तुलसीं विना ॥ २ ॥
सम्पूज्य भ्रातरं भक्त्या स रामः शङ्कराज्ञया ।
गुरुपत्नीं गुरुं नत्वा गमनं कर्त्तुमुद्यतः ॥ ३ ॥

नारद उवाच ।

पूजां भगवतश्चक्रे रामो गणपतेर्यदा ।
नैवेद्यैर्विविधैः पुष्पैस्तुलसीञ्च विना कथम् ॥ ४ ॥
तुलसी सर्वपुष्पाणां मान्या धन्या मनोहरा ।
कथं पूजां सारभूतां न गृह्णाति गणेश्वरः ॥ ५ ॥

नारायण उवाच ।

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् ।
ब्रह्मकल्पस्य वृत्तान्तं निगूढञ्च मनोहरम् ॥ ६ ॥
एकदा तुलसी देवी प्रोद्भिन्ननवयौवना ।
तीर्थं भ्रमन्ती तपसा नारायणपरायणा ॥ ७ ॥
ददर्श गङ्गातीरे सा गणेशं यौवनान्वितम् ।
अतीव सुन्दरं शुद्धं सस्मितं पीतवाससम् ॥ ८ ॥

चन्दनोचित सर्वाङ्गं रत्नभूषणभूषितम्।
ध्यायन्तं कृष्णपादाब्जं जन्ममृत्युजरापहम्॥ ९॥
जितेन्द्रियाणां प्रवरं योगीन्द्राणां गुरोर्गुरुम्।
सुरूपहार्थ्यं निष्कामं सकामा तमुवाच ह॥ १०॥

तुलस्युवाच।

अये किं ध्यायसे देव शान्तरूप गजानन।
कथं लम्बोदरो देहो गजवक्त्रं कथं तव॥ ११॥
एकदन्तः कथं वक्त्रे वदास्य च कारणम्।
त्यज ध्यानं महाभाग सायङ्काल उपस्थितः॥ १२॥
इत्युक्त्वा तुलसी देवी प्रजहास पुनः पुनः।
परं चेतसि दग्धा सा कामवाणैः सुदारुणैः॥ १३॥
गणेशस्य प्रधानाङ्गे दत्त्वा किञ्चिज्जलं मुने।
जघान तर्जन्यग्रेण निष्पन्दं [illegible]मानसम्॥ १४॥
बभूव ध्यानभङ्गश्च तस्य [illegible]रद चेतनम्।
दुःखञ्च ध्यानभेदेन [illegible]द्विच्छेदोहि शोकदः॥ १५॥
ध्यानं त्यक्त्वा हरिं स्मृत्वा ददर्श कामिनीं पुरः।
नवयौवनसम्पन्नां सस्मितां कामपीड़िताम्॥ १६॥
लम्बोदरश्च तां दृष्ट्वा परं विनयपूर्वकम्।
उवाच सस्मितः शान्तः शान्तां कामातुरां वशी॥१७॥

गणेश्वर उवाच।

का त्वं वत्से कस्य कन्ये मातर्मां ब्रूहि किं शुभे।
पापदोऽशुभदः शश्वद्यानभङ्ग स्तपस्विनाम्॥ १८॥
कृष्णः करोतु कल्याणं हन्तु विघ्नं कृपानिधिः।
मद्ध्यानभङ्गजो दोषो नाशु भवतु ते शुभे॥ १९॥

गणेशवचनं श्रुत्वा तमुवाच स्मरातुरा।
सस्मितं सकटाक्षञ्च देवं मधुरया गिरा ॥ २० ॥

तुलस्युवाच।

धर्मात्मजस्य कन्याहं मप्रौढ़ा च तपस्विनी।
तपस्या मे स्वामिनोऽर्थं त्वं स्वामी भव मे प्रभो ॥२१॥
तुलसीवचनं श्रुत्वा गणेशः श्रीहरिं स्मरन्।
तामुवाच महाप्राज्ञः प्राज्ञीं मधुरया गिरा ॥ २२ ॥

गणेश उवाच।

हे मातर्नास्ति मे वाञ्छा घोरे दारपरिग्रहे।
दारग्रहोहि दुःखाय न सुखाय कदाचन ॥ २३ ॥
हरिभक्तेर्व्यवायस्य तपस्यानाशहेतुकः।
मोक्षद्वारकपाटञ्च भवबन्धनपाशकः ॥ २४ ॥
गर्भवासकरः शश्वत् तत्व[illegible]निवृत्तगः।
संशयानां समारम्भो यस्त्याज्यो[illegible]षभैरपि ॥ २५ ॥
गेहोऽयं करणानाञ्च सर्वमायाकर[illegible]ः।
साहसानां समूहश्च दोषाणाञ्च विशेषतः ॥ २६ ॥
निवर्त्तस्व महाभागे पश्यान्यं कामुकं प[illegible]म्।
कामुकेनैव कामुक्या सङ्गमो गुणवान् भवेत् ॥ २७ ॥
इत्येवं वचनं श्रुत्वा कोपात्तु सा शशापह।
दारग्रह स्ते भविता सा साध्वीति गणेश्वरम् ॥ २८ ॥
इत्याकर्ण्य सुरश्रेष्ठ स्तां शशाप शिवात्मजः।
देवि त्वमसुरग्रस्ता भविष्यति न संशयः ॥ २९ ॥
तत्पश्चान्महतां शापाद्वृक्षत्वं भवितेति च।
महातपस्वीत्युक्त्वैव विरराम च नारद ॥ ३० ॥

शापं श्रुत्वा तु तुलसी प्ररुरोद पुनः पुनः ।
तुष्टाव च सुरश्रेष्ठं स प्रसन्न उवाच ताम् ॥ ३१ ॥

गणेश्वर उवाच ।

पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे ।
कलांशेन महाभागे स्वयं नारायणप्रिया ॥ ३२ ॥
प्रिया त्वं सर्वदेवानां श्रीकृष्णस्य विशेषतः ।
पूजाविमुक्तिदा नृणां मम त्याज्या च सर्वदा ॥ ३३ ॥
इत्युक्त्वा तां सुरश्रेष्ठो जगाम तपसे पुनः ।
हरेराराधनव्यग्रो बदरीसन्निधिं ययौ ॥ ३४ ॥
जगाम तुलसीदेवी हृदयेन विदूयता ।
निराहारा तपश्चक्रे पुष्करे [illegible] ॥ ३५ ॥
पश्चान्मुनीन्द्र श[illegible] च नारद ।
सा प्रिया श[illegible] चिरं मुने ॥ ३६ ॥
ततः शङ्कर[illegible] समारासुरेश्वरः ।
सा कलां[illegible]त्वं ययौ नारायणप्रिया ॥ ३७ ॥
कथितस्[illegible]सस्ते श्रुतो धर्ममुखात् पुरा ।
मोक्षप्र[illegible]सारश्च पुराणे न प्रकीर्त्तितः ॥ ३८ ॥
पश्[illegible] सा महाभागो जगाम तपसे वनम् ।
प्रण[illegible] शङ्करं दुर्गां संपूज्य च गणेश्वरम् ॥ ३९ ॥
पूजितो वन्दितः सर्वैः सुरेन्द्रमुनिपुङ्गवैः ।
पार्वती शिवसान्निध्ये तत्र तस्थौ गणेश्वरः ॥ ४० ॥
इदं गणपतेः खण्डं यः शृणोति समाहितः ।
स राजसूययज्ञस्य फलमाप्नोति निश्चितम् ॥ ४१ ॥
अपुत्रो लभते पुत्रं श्रीगणेशप्रसादतः ।

धीरं वीरञ्च धनिनं गुणिनं चिरजीविनम् ॥ ४२ ॥
यशस्विनं पुत्त्रिणञ्च विद्वांसं सुकवीश्वरम् ।
जितेन्द्रियाणां प्रवरं दातारं सर्वसम्पदाम् ॥ ४३ ॥
सुपवित्रं सदाचारं प्रशंस्यं वैष्णवं लभेत् ।
अहिंसकं दयालुञ्च तत्त्वज्ञानविशारदम् ॥ ४४ ॥
भक्त्या गणेशं संपूज्य वस्त्रालङ्कारचन्दनैः ।
श्रुत्वा गणपतेः खण्डं महाबन्ध्या प्रसूयते ॥ ४५ ॥
मृतवत्सा काकबन्ध्या ब्रह्मन् पुत्त्रं लभेद् ध्रुवम् ।
अदूषितं दूषितापि शुद्धा चैव लभेत् सुतम् ॥४६॥
संपूर्णं ब्रह्मवैवर्त्तं श्रुत्वा यल्लभते फलम् ।
तत् फलं लभते मर्त्यः श्रुत्वेदं खण्डमुत्तमम् ॥ ४७ ॥
वाञ्छाङ्कृत्वा तु मनाबन्धनपाशि परमास्थितः ।
तस्मै ददाति सर्वेत [illegible] निद्र [illegible]ः ॥ ४८ ॥
श्रुत्वा गणपतेः खण्डं विघ्न[illegible] [illegible]भैरा[illegible]तः ।
स्वर्णयज्ञोपवीतञ्च श्वेतछत्रा[illegible] [illegible]ः [illegible]म् ॥ ४९ ॥
प्रदीयते वाचकाय स्वस्तिकं तिल[illegible]ः [illegible]म् ।
परिपक्कफलान्येव देशकालोद्भवानि [illegible]म् ५० ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण[illegible] [illegible]संवादे
गणपतिखण्डे षट्चत्वारिंशत्तमोऽध्या[illegible] ।

---

इति गणपतिखण्डं समाप्तम् ।

